॥ श्रीः ॥

विद्याभवन संस्कृत ग्रन्थमाला
२०



महाकविश्रीजयदेवविरचितं



# प्रसन्नराघवम्

'चन्द्रकला' संस्कृत-हिन्दीव्याख्योपेतम्



व्याख्याकारः
साहित्यसुधाकर-काव्यतीर्थ-प्राध्यापक—
पण्डितश्रीशेषराजशर्मा शास्त्री








चौखम्बा विद्याभवन, बनारस—१

सं० २०१२ ] [ ई० १९५६

# उदाहारः

अयि गीर्वाणवाणीपरिचरणपरायणाः सत्साहित्यपरिशीलनयापितक्षणा वैचक्षण्य-चणा विलक्षणभावाऽवगाहनपूतधिषणा महाऽनुभावाः ! तत्रभवतां भवतां श्रीमताम-विरोहित एवोऽर्थो यद्वाङ्मये नाटकस्य कीदृशं स्थानमिति ।

नाटकं नाम काव्यविशेषः । काव्यं खलु कविकर्म । कविशब्दस्य कोऽर्थ इति विचिकित्सायां प्रकाशितायां कवते कौति कुवते=शब्दायत इति कविरिति वैयाकरणी निरुक्तिः । 'कुङ् शब्दे' इति भौवादिकात्तौदादिकाद्वा 'कुशब्द' इत्यादादिकाद्धातोः 'अच इ'रिति सूत्रेण इप्रत्यये कृते कविपदसिद्धिः । अत्र शब्दकर्तरि वर्णनकर्तरि वा यत्र कुत्रापि कविव्यपदेशस्याऽतिप्रसक्तौ योगरूढ्या कलापूर्णशैलीमवलम्ब्य यः शब्दायते वर्णयति वा स कविरिति लक्षणं कर्तुं पार्यते । उपनिषदि च परमात्मनः कृते 'कविर्मनीषी परिभूः स्वयम्भू'रिति वर्णनं दृश्यते । युक्तं चैतल्लोकोत्तरप्रतिभाऽन्वितस्य वेदरूपस्य शब्दराशेः सम्पादकत्वेन जगदीश्वर एवाऽस्मिन्ननादौ संसारे पुरातनतमोऽनुपमः कविः ।

तच्च कविकर्मरूपं काव्यं द्विविधं दृश्यं श्रव्यं चेति । तस्य चाऽभिनीयमानस्य दृश्यकाव्यस्य पुना रूपकोपरूपकभेदेन द्वैविध्यं विलोक्यते । तत्र रूपकं नाटकादिभेदेन दशविधमुपरूपकं च नाटिकादिभेदेनाऽष्टादशविधम् ।

अलौकिकसारस्वतप्रभारते सकलभूखण्डलवुधसम्मते पुरातनभारते स्मरणा-ऽतीतकालादेव नाटकं लब्धप्रचारमित्यर्थे केऽपि बुधवरा द्वापरपरा न भविष्यन्ती-त्याशासेऽहम् ।

'जग्राह पाठ्यमृग्वेदात्सामभ्यो गीतमेव च । यजुर्वेदादभिनयान् रसानाथर्वणादपि ॥'

इत्थं नाट्यशास्त्रे भरतमुनिर्वेदचतुष्टयान्नाटकोपकरणनिर्माणं स्फुटीचकार । तत्रैव—शिवस्ताण्डवनृत्यं भवानी लास्यं विष्णुश्च नाट्यरीतिं प्रददौ, भरतमुनिश्च नाट्यशास्त्रं प्रणीय नरलोकेऽस्य प्रचारमचीकरदिति वर्णितं वर्तते । इत्थमन्यान्य-प्रमाणनिकरपर्यालोचनयाऽपि नाटके भरतस्याऽधमर्णत्वं यवनदेशस्य चोत्तमर्णत्वं यत्सिषाधयिषितं तदज्ञानविजृम्भितमिति पक्षपातरहितानां तत्त्वग्रहणप्रवणानां विचक्ष-णानां पुरतो भासमानमेव । अतोऽत्राऽर्थे नाऽस्माभिर्बहु प्रयत्यते ।

प्रकारद्वयसमन्विते काव्ये नाटक एवाऽभिनीयमानत्वेन गद्यपद्यमयत्वेन संगीतसमन्वितत्वेन च काव्यहृदयस्यैवाऽऽस्वादोऽनुभूयते। तत्राऽप्यभिनेयाऽर्थस्य लोचनगोचरत्वेन केवलश्रव्याऽर्थमयाच्छ्रव्यकाव्यान्नाटकस्यैव प्रमाणे प्रत्यक्षस्येव प्रभावविशेषोत्पादकत्वम्। एतद्वैपरीत्येन श्रव्यकाव्ये तु श्रुतिमात्रविषयत्वेनाऽनुमानस्येव न तथाविधप्रभावाऽतिशयव्यञ्जकत्वमास्वाद्यते। अत एवोक्तं लोकविश्रुतैरभियुक्तैः—'काव्येषु नाटकं रम्य'मिति।

संस्कृतवाङ्मये मर्यादापुरुषोत्तमस्याऽनुपमस्य जननायकस्य भगवतः श्रीरामचन्द्रस्य लोकोत्तरं पवित्रं चरित्रमवलम्ब्य सन्ति भूयांसि नाटकानि। तानि यथा—महावीरचरितमुत्तररामचरितं, कुन्दमालाऽनर्घराघवं, बालरामायणं चेत्यादीनि। तेष्वेवाऽस्य प्रसन्नराघवाऽभिधानस्य नाटकस्याऽन्यतमं स्थानम्। अत्र कमनीयकल्पनाकौशलमसमानं रसनिवेशनं च कस्य सहृदयस्य हृदयं नाऽऽवर्जयति। यथोत्तररामचरिते चित्रदर्शनद्वारा रामवनवासचरितं प्रदर्शितं तथैवाऽत्राऽपि वालिसुग्रीवकथा गङ्गायमुनासरयूसंवादतो निबद्धा, रामचन्द्रकर्तृकं हिरण्यहरिणाऽनुसरणं हंसवर्णनतो निदर्शितम्। एवं च गोदावरीसागरसंलापप्रसङ्गतो जानकीहरणं जटायुहननमृष्यमूकपर्वते मैथिलीकृतं भूषणमोचनं च सूचितम्।

अस्य नाटकस्य भावकलाऽभिख्ययोरुभयोरपि पक्षयोः परमरमणीयत्वेनोत्तरकालोद्भूतैः कलाकारैरालङ्कारिकैश्चाऽनुकरणोद्धरणकरणैः स्वस्वकृतयः समलङ्कृता इत्ययं विषयः साहित्यपरिशीलनविमलप्रतिभावतां धीमतामतिरोहितः। तथाऽपि द्वित्रैरुदाहरणैरस्याऽसाधारणताऽत्र स्फुटीक्रियते।

लोकोत्तरप्रतिभाप्रकाशेन रामचरितमानसकारेण तुलसीदासेन बहुषु स्थलेष्वस्याऽनुकरणं व्यधायि। तद्यथा—पुष्पवाटिकायां सीतारामयोर्मिथः साक्षात्कारो भार्गवलक्ष्मणयोश्चापि प्रत्युक्तयः। एवमेव पद्येऽपि द्वयोर्ग्रन्थयोरुपजीव्योपजीवकभावः कुत्रचिद् दृश्यते।

यथा प्रसन्नराघवे—

> 'चन्द्रहास! हर मे परितापं, रामचन्द्रविरहाऽनलजातम्।
> त्वं हि कान्तिजितमौक्तिकचूर्णं, धारया वहसि शीतलमम्भः॥ ६–३२॥'

रामचरितमानसे—

> चन्द्रहास! हरु मम तापं, रघुपतिविरह अनल संजातम्।
> शीत निशा तव असिवरधारा, कह सीता हरु मम दुखभारा॥

प्रसन्नराघवे—

'उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका' ॥ ७–१ ।

रामचरितमानसे—

'सो परनारि लिलार गोसाईं, तजहु चौथ चन्दा की नाईं ।'

एतच्च दिग्दर्शनमात्रं, बहुषु काव्येष्वस्य प्रभावो व्यापकरूपेण विततः परं समुचिताऽवकाशाभावेनाऽत्र बाहुल्येन न प्रतन्यते । साहित्यदर्पणकारेण विश्वनाथकविराजेनाऽर्थान्तरसंक्रमितवाच्यस्य ध्वनेरुदाहरणत्वेन प्रसन्नराघवस्य—

'कदली कदली करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरुयुगं न चमूरुदृशः ॥' १–३७ ।

श्लोकोऽयमुदाहृतः । इत्थमेव शार्ङ्गधरपद्धतौ रसाऽर्णवसुधाकरे चाऽस्य बहूनि पद्यान्युद्धृतानि । अत एतैरुदाहरणैरस्य महाकवेर्लोकप्रियकृतौ संशयलवोऽपि नाऽऽसाद्यते । तदस्य प्रथिततमस्य प्रतिभाप्रभोद्भासितस्य नाटकस्य प्रणेता किमभिधानः कस्मिन्समये प्रादुरभूत्कतमं च जनपदं स्वजनुषा समलंचकारेति संशीतौ संक्षेपेण यथोपलब्धं किञ्चित्समाधिराधीयते ।

प्रसन्नराघवस्य प्रणेता सुगृहीतनामधेयो जयदेवकविः । सुरगवीसमुपासकानामन्येषां बहूनां विदुषामिवाऽस्याऽपि सविस्तरः संस्तवोऽनवबोधगह्वरगर्भपतित एव संलक्ष्यते । तत्र संस्कृतसाहित्ये जयदेवनामधेयभाजो बहवो विपश्चितः संजाताः । तत्रैकस्तावद्गीतगोविन्दकारो जयदेवः, स चोत्कलदेशीय आसीत् । अयं काव्यकारः सेनवंशाऽवतंसस्य लक्ष्मणसेनस्य सभास्तार आसीदित्ययं विषयो निम्नस्थपद्याद्वसीयते—

'गोवर्द्धनश्च शरणो जयदेव उमापतिः ।
कविराजश्च रत्नानि समितौ लक्ष्मणस्य च ॥' इति ।

बहूनां लब्धवर्णानां संलपनेन विश्रुतोऽयं लक्ष्मणसेनो बङ्गाऽधिप आसीत् । अयं विक्रमस्य द्वादशशतकेऽभूदिति प्रज्ञतत्त्वविचक्षणानां परामर्शः । एतेन गीतगोविन्दकारस्य जयदेवस्याऽप्ययमेव काल आपतति । अस्य माता रामादेवी–पिता च भोजदेवाऽभिधेय आसीदित्यस्य निम्नपद्यादवबुध्यते—

'श्रीभोजदेवप्रभवस्य [1]रामादेवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥' इति ।

द्वितीयो जयदेवः शृङ्गारमाधवीयचम्पूप्रणेताऽज्ञातपितृनामकः कृष्णदासेत्युपपदविभूषितः । तृतीयो जयदेवश्चन्द्रालोककर्ता । चतुर्थश्च प्रस्तुतनाटकस्य प्रसन्नराघवस्य कारकः । तत्र च चन्द्रालोककर्ता जयदेवो महादेवपुत्रः सुमित्रागर्भज आसीदित्ययं विषयश्चन्द्रालोकस्याऽधस्तनपद्यादवगम्यते—

'महादेवः सत्रप्रमुखमखविद्यैकचतुरः
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ ।
अनेनाऽसावाद्यः सुकविजयदेवेन रचिते
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥' १-१६ ।

इत्थमेव प्रसन्नराघवस्याऽपि कर्तुः पिता महादेवो माता च सुमित्राऽऽसीदिति वृत्तं निम्नस्थितपद्यद्वितयादवसीयते—

'विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाऽधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः' ॥ १-१४ ॥
'लक्ष्मणस्येव यस्याऽस्य सुमित्राकुक्षिजन्मनः ।
रामचन्द्रपदाऽम्भोजे भ्रमद्भृङ्गायते मनः' ॥ १-१५ ॥

पद्यद्वितयमपीदं प्रस्तावनायां प्रसन्नराघवकविविषयके नटाऽनुयोगे सूत्रधारपठितमस्ति । एतेन कवेर्मातापितृपरिचयो रामचन्द्रभक्तत्वं कौण्डिन्यगोत्रप्रसूतत्वं चाऽवगम्यते । इत्थञ्च च चन्द्रालोककारस्य प्रसन्नराघवनिर्मातुश्चोभयोरपि कविवरयोर्मातापित्रोर्नामधेय-साहश्येनैक्यं प्रतीयते । अत्र च द्वयोर्ग्रन्थकारयोः पद्यशैल्याः सदृशत्वमपीमं विषयं निर्विशयं प्रतिपादयति । एवं च प्रसन्नराघवकारस्य कवितार्किकत्वमप्यधस्तनेन पद्येनाऽवगम्यते । तद्यथा—

'येषां कोमलकाव्यकौशलकलालीलावती भारती''''इत्यादि ( पृ. २६ )

इत्थमेव चन्द्रालोककारेणाऽप्यप्रतीतदोषलक्षणोदाहरणाऽवसरे—

'स्यादप्रतीतं शास्त्रैकगम्यं वीताऽनुमाऽऽदिवत्' ।

इत्यप्रतीतदोषोदाहरणे तर्कशास्त्रमात्रप्रयुक्तं वीताऽनुमानादिपदं निदर्शितम् ।

---

१. 'राधादेवी' इति पाठान्तरम् ।

एतेनाऽस्य चन्द्रालोककारस्याऽपि तार्किकत्वं मतिपथोपारूढं भवतीत्येतावद्भिः प्रमाणैरलङ्कारनाटककारयोर्जयदेवयोस्तादात्म्ये नो संशयलेशस्याऽपि प्रवेशः। अथाऽसौ कविवरस्य समये सन्देहः समुपतिष्ठते।

अनेन कविवरेण चन्द्रालोके काव्यलक्षणप्रस्तावे—

'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती' ॥ १-८।

पद्येनैतेन खोल्लुण्ठनं काव्यप्रकाशकृतो मम्मटभट्टस्य मतं खण्डितम्। स च मम्मटभट्ट उदात्तलक्षणोदाहरणे—

'मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाऽङ्घ्रिलाक्षाऽरुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥'

पद्येऽस्मिन्धारानगरीशं भोजनरेशमस्मरत्। भोजस्य च प्रादुर्भावकालो वैक्रमद्वादशशतकम्। एवं च मम्मटभट्टस्य वैक्रमद्वादशशतकसमनन्तरवर्तित्वं प्रतीयते। जयदेवस्य च मम्मटभट्टाऽनन्तरभावित्वं निश्चीयते।

साहित्यदर्पणकारस्य च पूर्वोदाहृतप्रसन्नराघवपद्यसमुद्धरणात् जयदेवपश्चाद्भावित्वमवसीयते। साहित्यदर्पणकारस्य समयस्तु विक्रमपञ्चदशशतकमितः परिगणितः। अतो विक्रमपञ्चदशशतकपूर्ववर्तित्वं जयदेवस्य समर्थितं भवति।

शार्ङ्गधरपद्धतावपि प्रसन्नराघवस्य बहूनि पद्यान्युदङ्कितानि। स च ग्रन्थो विक्रमस्य त्रिंशत्यधिके चतुर्दशशतके गुम्फितः।

एवं च जयदेवेनाऽलङ्कारसर्वस्वकर्त्रा रुय्यकेन कल्पितस्य विकल्पाऽलङ्कारस्य चन्द्रालोके शब्दश उल्लेखोऽकारीत्यतो वैक्रमात्सप्तदशाऽधिकद्वादशशतकादस्य पूर्ववर्तित्वं न संभाव्यते।

एवमेव वैक्रमे सप्ताशीत्यधिकत्रयोदशशतके विद्यमानेन शिङ्गभूपालेन स्वकीये रसार्णवसुधाकरे प्रसन्नराघवपद्यानि समुल्लिखितानि।

एतावता प्रमाणनिकरेण विक्रमस्य त्रयोदशस्य चतुर्दशस्य च शतकस्य मध्येऽयं कविवर आविर्बभूवेत्युन्नीयते।

अयं जयदेवो मैथिलब्राह्मण आसीदिति बहूनां मैथिलविपश्चितां परामर्शः। परे त्वयं विदर्भस्य कुण्डिनपुरे वासमकरोदिति ब्रुवन्ति। तस्य चाऽस्य जयदेवस्य महाकवेः 'पीयूषवर्ष' इत्यपराऽप्यभिख्या समभूदिति निम्नस्थेन—

'चन्द्रालोकमयं स्वयं वितनुते पीयूषवर्षः कृती ।'

पद्यांशेन स्फुटमवगम्यते । केचित्त्वयमेव जयदेवः 'पक्षधरः' इति नामधेयमपि दधारेति वर्णयन्ति । परं तार्किकप्रवरः स पक्षधरस्तु बङ्गीयविदुषो वासुदेवसार्वभौमस्य गुरुत्वेन विक्रमस्य षोडशशतक आसीदित्यत एतयोः पीयूषवर्षपक्षधरयोरेकभूयत्व-साधनप्रयासो भ्रान्तिप्रकाश एवेत्यैतिहासिकानां वाग्विलासः ।

साम्प्रतमस्य नाटकरत्नस्य महाकवेश्च किमपि वैशिष्ट्यं संक्षेपतः प्रदर्श्यते । अस्य महाकवेश्चित्रकाव्येऽपि कृतित्वमासीदिति प्रथमाङ्कस्य समालोचनाद् अवगम्यते । निम्न-लिखितपद्ये कवित्वे द्रुमत्वमारोप्य कीदृशमसाधारणं कल्पनाकौशलमाकलितम्—

'बीजं यस्य चिरार्जितं सुचरितं, प्रज्ञा नवीनोऽङ्कुरः''''' इत्यादि ( पृ. २१ )

कवीनां गुणग्राहकत्वं कीदृशेन चमत्काराधायकेन प्रयासेन वर्णितम्—

'अपि मुदमुपयान्तो,वाग्विलासैः स्वकीयैः''''' इत्यादि ( पृ. २८ )

कवितायां कामिनीत्वमारोप्य कीदृशः कमनीयो वाग्विलासः प्रकाशमासादितो जयदेवेन—

'यस्याश्चोरश्चिकुरनिकरः, कर्णपूरो मयूरः''''' इत्यादि ( पृ. ३१ )

एवमेव प्रथमाऽङ्के स्वयंवरस्य वर्णनं बन्दिरावणयोः संलापो बाणरावणयोः समरसंरम्भश्च कस्य सचेतसश्चेतश्चमत्कारचित्रितं नो विदधाति ।

निम्नस्थपद्ये कीदृशा कौशलेन लङ्केशे स्वसम्बोधनभ्रममुत्पाद्य महाकविना वाग्वि-भ्रमः प्रदर्शितः—

'अये लङ्केश विहस्तशेखरालोकनेन ते''''' इत्यादि ( पृ. ६० )

सीतायां रावणाऽङ्कशायिनीत्वमाशङ्क्य मञ्जीरकस्य बन्दिनो विषादप्रदर्शने कीदृशं लोकोत्तरं वैदग्ध्यमित्यत्र न कस्याऽपि विवादः—

'यस्याः स्वयं कुलगुरुः किल याज्ञवल्क्य''''' इत्यादि ( पृ. ६८ )

सीताग्रहणप्रवणचेतसो रावणस्योद्यमे मारीचाक्रन्देनान्तरायपाते कविना कीदृशं मतिपाटवं व्यदर्शीति सहृदेतत्प्रमोदनपदम् । द्वितीयाङ्के भिक्षुतापसवेषयोर्निशाचरयोः संलापः समानकार्यत्वं च चेतश्चमत्करोतितराम् ।

सीतावर्णनपरं रामपठितं पद्यमिदमुक्तिपाटवेनाऽनुप्रासप्रकर्षेण च मानसं प्रमद्-पद्यायां निदधाति—

'बन्धूकबन्धुरधरः सितकेतकाभम्''''' इत्यादि ( पृ. १०१ )

सूर्याऽस्तमनवर्णनं कीदृशं हर्षं जनयति । तद्यथा—

'कृत्वा प्रबुद्धकमलामखिलां त्रिलोकीम्''''' इत्यादि ( पृ. १२७ )

अत्र नाटके महाकविना जयदेवेनोत्तररामचरितमेवोपजीव्यत्वेन कवित्वशैल्यामवलम्ब्य लेखनी प्रयोजितेति सूक्ष्मेक्षिकया पर्यालोचनेन स्फुटं प्रतीयते । पद्येष्वपि बहुषु स्थलेषूत्तररामचरितस्येव चमत्कारप्रकारः प्रदर्शितः । यथा तत्र विदूषकस्योद्भावनं न तथैवाऽत्राऽपि । यथा तत्र यज्ञियाऽश्वस्य वर्णनप्रसङ्गेन हास्यरसस्योन्मेषस्तथैवाऽत्राऽपि तृतीयेऽङ्के वामनककुब्जकसंलापावसरे हास्यरसः स्फुटीकृत इत्यपि वर्णनीयो विषयः । रामे जनकमनोरमणं कीदृश्या रमणीयया विधया कविनोपस्थापितं—

'यथाऽहं निस्सीमोत्सवसुभगभोगे भवकया''''' इत्यादि ( पृ. १६० )

चतुर्थाङ्के हरधनुर्भञ्जने परशुरामभ्रमः, परशुरामलक्ष्मणयोरुक्तिप्रत्युक्तय उत्तरोत्तरं मानसमुत्कलिकाऽऽकुलं विदधति । रामप्रतिपादितं कुलक्रमागतं ब्राह्मणेष्वदण्डनं कीदृशेन वाग्विलासेन प्रसाधितं—

'हारः कण्ठं विशतु, यदि वा तीक्ष्णधारः कुठारः''''' इत्यादि ( पृ. २१४ )

परशुरामस्य शान्त्याधानाऽर्थं रामस्यैतद्वचनं कीदृशं वाक्पटिमानं प्रथयति—

'क्व परशुरशुभस्ते क्वत्र गोत्रं पवित्रम्''''' इत्यादि ( पृ. २२६ )

पञ्चमाऽङ्के अयोध्यावृत्तानि वृत्तानि संवादप्रसङ्गेन पाटवाऽतिशयेन प्रकाशितानि । सरयूमुखान्महाकविर्दशरथस्य सुरपतेरतिथित्वं कथंविधेन सुन्दरप्रकारेण वर्णयति—

'नरेन्द्रः कैकेयीवचनपरिपाटीविगलितः''''' इत्यादि ( पृ. २६२ )

निम्नलिखितपद्ये सरयूमुखान्मातुलकुलगतस्य भरतस्य मात्रा सह संवादे तातभ्रातृविषयकाऽनुयोगः कीदृश्या चमत्कारकारिण्या शैल्या समुपवर्णितः—

'मातस्तातः क्व यातः ? सुरपतिभवनं, हा ! कुतः ? पुत्रशोकात्
कोऽसौ पुत्रश्चतुर्णां ? त्वमवरजतया यस्य जातः, किमस्य ?
प्राप्तोऽसौ काननाऽन्तं, किमिति ? नृपगिरा, किं तथाऽसौ बभाषे ?
मद्वाग्बद्धः, फलं ते किमिह ? तव धराऽधीशता, हा ! हतोऽस्मि' ॥ ५–१८ ।

कीदृशीयं जानकीकरुणापरायणता वर्णिता—

'भीतं विलोक्य हरिणं करुणार्द्रचित्ता''''' इत्यादि ( पृ. २६८ )

गङ्गामुखेन कविवरेण पथिकप्रयाणरीतिः कीदृशेन वचनकौशलेन प्रतिपादिता—

'यावत्कर्णं तपति तपनस्तावदेव प्रयाणम्''''' इत्यादि ( पृ. २७० )

षष्ठेऽङ्के तावद्दिव्यस्याप्यदिव्यत्वाऽभिमानिनो जानकीजानेः स्वदयितामनूद्य परिदेवनप्रकारो हृदि करुणाऽतिशयं समुत्पादयति। तत्रैवैन्द्रजालिकव्यापाराऽऽशङ्काभवो वृत्तान्तश्चित्रमिव हृदये चित्रं जनयति।

उपालम्भप्रसङ्गाद्रामकर्तृकं जानकीजनन्याः सर्वंसहात्वसमर्थनं सचेतसश्चेतसि चमत्काराऽतिशयमुत्पादयति—

'यां वै गर्भे त्रिजगदवलारत्नभूतां दधाना''''' इत्यादि (पृ. ३२०)

तत्रैव त्रिजटाकृतं सीतासमाश्वासनं रावणकर्तृकं सीताऽनुनयनं सीताकृतं रावणप्रत्याख्यानं च कवेरनुपमां वाग्वैदग्धीमाख्याति। एवमेव कोपाकुलस्य दशग्रीवस्य करतले पवनतनयसमर्पितमक्षकुमारकपालमपि कवेरनुपमां प्रतिभां प्रदर्शयति। सीताऽर्थं सन्देशरूपेण रामप्रेषितं निम्नलिखितं श्लोकद्वयमपि कालिदासस्य मेघसन्देशं स्पर्धमानं साहित्यजगत्यनुपमानं गौरवं बिभर्ति—

'हिमांऽशुश्चण्डांऽशुर्नवजलधरो दावदहनः, सरिद्वीचीवातः कुपितफणिनिश्वासपवनः।
नवा मल्ली भल्ली, कुवलयवनं कुन्तगहनं, मम त्वद्विश्लेषात्सुमुखि! विपरीतं जगदिदम्'॥
'कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं को जानीते निभृतमुभयोरावयोः स्नेहसारम्।
जानात्येकं शशधरमुखि! प्रेमतत्त्वं मनो मे त्वामेवैतच्चिरमनुगतं तत्प्रिये! किं करोमि॥'

तत्रैव प्रकान्तो विक्रान्तवरेण्यस्य हनूमतो विक्रमोऽपि चित्ते महान्तं विस्मयक्रममाधत्ते।

सप्तमाङ्के पुलस्त्यशिष्यस्य माल्यवत्परिचारकस्य करालकस्य च संवादप्रसङ्गेन विभीषणकृतं रावणप्रबोधनं धर्मनीतिपरिपूरितं वर्तते। एवमेव प्रहस्तहस्ततो रावणकृतं रामशौर्यचरित्रस्य चित्रे दर्शनं कस्य चित्तं नाकर्षति।

चित्रे वानरानीकिनीदर्शनसमनन्तरं रावणस्याऽस्यामुक्तौ कीदृशस्याऽखर्वगर्वस्य श्लेषोपमयोराश्लेषस्य च प्रकर्षो चरीवर्ति—

'इयं लीलालोलाऽङ्गदभुजलता नीलचिकुरा''''' इत्यादि (पृ. ३७५)

अन्योक्तिरूपेण रावणप्रबोधनाऽर्थं मन्दोदर्या अस्यामुक्तौ कीदृशीं चातुर्यचारुतामाविष्करोति—

'मा होहि णाअवहणो परिहवमेत्तेण गव्वणिव्वूढो''''' इत्यादि (पृ. ३७७)

नाटके युद्धदर्शनस्य निषिद्धत्वाद्विद्याधरदम्पत्योः संलापमुखाऽऽशङ्कासमरवृत्तान्तः कविकुञ्जरेण रमणीयप्रकारेण वर्णितः। दशवदननिधनोदन्तो विद्याधरवदनात्कविवरेण कीदृश्या मञ्जुलया प्राञ्जलया च शैल्या स्फुटीकृतः—

'विकचकुसुमस्तोमाकीर्णे परागविभूषितः''' इत्यादि ( पृ. ४०८ )

अन्ते च रामलक्ष्मणसुग्रीवविभीषणकृतानि चन्द्रोदयादिवर्णनानि परममधुरया विधया चेतः समाकर्षन्ति ।

नाटकरत्नस्याऽस्य तत्तत्स्थलेषु स्थितानां वैशिष्ट्यानां वर्णनमिदमापाततो दर्शनेनैव बोद्धव्यम् । अतोऽत्र वर्णने संक्षेपस्य समाश्रयणमवगन्तव्यम् ।

महाकवेर्जयदेवस्य वाणी प्रसादगम्भीरतापरिपूरिता वर्तते । अस्य नाटकरत्नस्याऽवगाहनेन दृश्यस्य श्रव्यस्य चोभयोरपि काव्ययो रसः समास्वाद्यते । समुचिताऽवकाशस्याऽभावाद्वर्णनविस्तरभीरुत्वाच्च साम्प्रतमेतावतैव विरम्यते ।

अस्य नाटकस्य व्याख्यायामस्माभिः पुस्तकद्वयमेवोपलब्धं, तत्रैकं श्रीपण्डितरामचन्द्रमिश्रकृतप्रकाशव्याख्ययोपेतम्, अपरं च सुगृहीतनामधेयपण्डितयज्ञनायव्याख्यारूपं मूलरहितम् । भूमिकालेखने च दिवंगतयोः पण्डितबटुकनाथोपाध्यायनन्दकिशोरयोर्निबन्धद्वयासाहाय्यमासादितम् । अन्याऽन्यग्रन्थेभ्यश्च यत्र तत्राऽस्माभिः स्वकृतावुपयोगो विहितः । अतस्तेषां समेषामपि विपश्चितां कृतज्ञताज्ञापनेन विरमामि बहुविस्तरादिति शम् ।

एवमेव लेखनकर्मणि साहाय्यमाचरन्तमायुष्मन्तं श्रीदिनेशचन्द्रशर्माणं शुभाशीराशिभिः समलङ्करोमि ।

'विद्वत्प्रवेकजयदेवकवेः कृतिः क, वैदग्ध्यबोधरहिता विवृतिः क चेयम् ।
विद्याविलासकविकासककृष्णदासश्रेष्ठिप्रकृष्टप्रणयेन मम प्रयासः' ॥
कार्यान्तराऽऽपतनरूपमहान्तरायात् प्रारब्धकार्यमभवन्न सहाऽवसानम् ।
एवं समाद्वयमितः समयोऽपि यातः दैवान्मदभ्युपगतः समयो न जातः ॥
अन्तेऽपलापमयदुर्नयमापतन्तं हर्तुं मयाऽऽचरितमत्र ससम्भ्रमत्वम् ।
दोषो भवेद्यदि, तमाशु निरस्य विद्वद्भिः सोपमैर्गुणगणग्रहणं विधेयम् ॥ (युग्मम्)

पाशुपतक्षेत्रम् ( नेपालः )
सं० २०१२ पौष कृ. ९

विद्वद्विधेयः—
**शेषराजशर्मा**

# उपोद्घात

कविके मस्तिष्कमें अभिव्यक्त चमत्कारपूर्ण भावको 'काव्य' कहते हैं। वह भाव दो प्रकारका होता है—गद्यात्मक और पद्यात्मक; अतः काव्यके भी दो भेद होते हैं गद्यकाव्य और पद्यकाव्य। अंग्रेजी भाषाका पोएट्री ( Poetry ) शब्द केवल पद्यका वाचक है—गद्यका नहीं। ईशावास्योपनिषत्में 'कविर्मनीषी परिभूः स्वयम्भूः' इस मन्त्रमें कविपद परमात्माके अर्थमें प्रयुक्त हुआ है। भाष्यकार भगवत्पाद शङ्कराचार्यने कविपदका विवरण 'क्रान्तदर्शी' पदसे किया है। इसका तात्पर्य हुआ—व्यतीत वृत्तका दर्शक अर्थात् सर्वज्ञ। 'धाता यथापूर्वमकल्पयत्' अर्थात् परमात्माने पूर्वकल्पके अनुसार इस विश्वकी रचना की, इस वेदवाक्य के अनुसार यह बात युक्तिसंगत प्रतीत होती है।

संसारमें सर्वप्राचीन ग्रन्थ वेद ही हिन्दूजातिके विश्वासके अनुसार परमात्मा-की रचना आदि काव्य है। वेदोंको अपौरुषेय न मानकर भिन्न भिन्न ऋषियोंसे भिन्न भिन्न कालमें सङ्कलित प्राचीन ग्रन्थ माननेपर भी उनको आदिकाव्य कहनेमें भी कुछ बाधा प्रतीत नहीं होती है। वेदोंमें स्थल स्थलपर कमनीय कल्पना-कौशलके साथ सरसता, प्रसाद गुण, स्वभावोक्ति, उपमा और रूपक अलङ्कारादि अनेक विषयोंका सन्निवेश पाया जाता है, जो सत्काव्यके आवश्यक अङ्ग माने गये हैं।

नारदीयसूक्त ( ऋ० मं० १० सू० १२९ ) आदि कतिपय वेदमन्त्र तो आधुनिक समयके रहस्यवाद ( Mistioism ) के पद्योंसे टक्कर लेते हैं। फलतः वेदोंको आदिकाव्य और आर्यसंस्कृतिके अनुसार उनके रचयिताको आदि कवि माननेमें कुछ भी अड़चन नहीं पड़ती है। इस स्थितिमें पहले की गई काव्यपदकी परिभाषाके अनुकूल कविपदकी व्युत्पत्ति प्रदर्शित करनेकी आवश्यकता प्रतीत होती है। 'कवते कौति कुवते = शब्दायते इति कविः' इस व्युत्पत्तिके अनुसार जो शब्द करता है अर्थात् वर्णन करता है वह कवि है यह व्युत्पत्तिलभ्य अर्थ हुआ। इस अर्थमें शब्द वा वर्णन करने वाले जिस किसीमें भी कविपदकी अतिव्याप्तिकी आशङ्का होती है अतः उसके निरसनके लिए कलापूर्ण शैलीका अवलम्बन कर जो चमत्कारजनक प्रकारसे शब्द वा वर्णन करता है वह कवि कहलाता है। यह पारिभाषिक प्रकारसे कविपदका अर्थ हुआ। इस अर्थमें कविपद योगरूढ माना जा सकता है।

संसारके सर्वश्रेष्ठ वैयाकरण पाणिनिके मतमें भाषाके दो भेद हैं—वेदभाषा और लोकभाषा। यद्यपि संस्कृतभाषा के अतिरिक्त वेदभाषा और लोकभाषाकी पृथक्

सत्ता नहीं है, तथापि कतिपय शब्दोंके प्रयोगमें विशेष भेद होनेसे व्यवहार-सौकर्यके लिए उन्होंने ऐसा भेदमूलक परिगणन किया है। वेदके अनन्तर लोक-भाषा अर्थात् व्यावहारिक संस्कृत भाषामें आदिकाव्यके रूपमें वाल्मीकिरामायण और उसके कर्ता वाल्मीकि मुनि आदिकवि माने गये हैं। संस्कृतके प्राचीन साहित्यग्रन्थोंमें वाल्मीकिरामायण और महाभारत अपने असाधारण गौरवके कारण ऐतिहासिक महाकाव्य और उनके रचयिता वाल्मीकि और कृष्णद्वैपायन (वेदव्यास) महर्षि, महाकवि माने गये हैं। इसी बातको संस्कृतके एक कविने कविराज दण्डीकी प्रशंसाके प्रकरणमें इस प्रकारसे द्योतित किया है:—

'जाते जगति वाल्मीकौ कविरित्यभिधाऽभवत्।
कवी इति ततो व्यासे कवयस्त्वयि दण्डिनि॥'

जगत्में वाल्मीकिकी उत्पत्तिके अनन्तर उनकी 'कवि' ऐसी संज्ञा हुई। पीछे व्यासके उत्पन्न होनेपर उनका भी 'कवि' ऐसा नाम पड़ा। तदनन्तर हे दण्डिन्! आपका प्रादुर्भाव हुआ और 'कवि' संज्ञासे परिगणित कुल तीन पुरुष प्रख्यात हो गये हैं।

कतिपय पुरुषोंकी धारणा है कि काव्यकी वास्तविक उत्पत्ति नवयुगमें ही हुई है, पूर्वकालकी एक भी रचना 'काव्य' पदसे व्यवहार करनेके योग्य नहीं है। वास्तवमें यह धारणा भ्रान्तिमूलक है। इस समय नवयुगके मानदण्डसे देखनेपर पौर्वकालिक रचना पूर्णरूपसे काव्य भले ही न कही जा सके पर उसे 'यह काव्य ही नहीं है' ऐसा कहना धृष्टता ही मानी जायगी।

अनादि कालसे प्रचलित विश्वप्रवाहमें देश, काल और अवस्थाके भेदसे मनुष्यों-की रुचिमें भी भेद होना स्वाभाविक ही प्रतीत होता है। इसी कारणसे मध्ययुगके विद्वानोंको इतिहास, पुराण आदि विषयोंसे काव्यको निर्लिप्त करनेकी आवश्यकता प्रतीत हुई। अतः विक्रमकी पञ्चदशी शताब्दीके विश्वनाथ कविराजने अपने सुप्रसिद्ध अलङ्कारग्रन्थ साहित्यदर्पणमें काव्यके लक्षणप्रसङ्गमें—'न हि कवेरितिवृत्त-मात्रनिर्वाहेणात्मपदलाभः इतिहासादेरेव तत्सिद्धेः' अर्थात् इतिवृत्तमात्रके वर्णनसे 'कवि' पदकी उपलब्धि नहीं होती है, इतिवृत्तका वर्णन तो इतिहास, पुराण आदिसे भी उपलब्ध हो जाता है।'—ऐसा लिखा है। भारतवर्ष धर्मप्रधान राष्ट्र होनेसे रामायण और महाभारतमें ग्रन्थकारोंका लक्ष्य काव्यकलाप्रदर्शनकी अपेक्षा ऐतिहासिक, धार्मिक और दार्शनिक तत्त्वनिरूपणमें अधिक होनेसे दोनों ग्रन्थ इतिहास एवम् पञ्चम वेदके रूपमें माने गये हैं। वेदार्थका स्मरण कर रचे जानेके कारण भगवत्पाद शङ्कराचार्यके मतमें ये स्मृतिके रूपमें माने गये हैं। तो भी तत्तत्स्थलोंमें चमत्कारपूर्ण मनोहर रचना होनेसे इनमें भावरूपसे

काव्यपदका व्यवहार किया जा सकता है। यही बात यद्यपि पुराणोंमें भी लागू हो सकती है परन्तु उनमें कहीं भी काव्यपदका व्यवहार नहीं देखा जाता है।

काव्यमें पूर्णरूपसे मौलिकता हो ही नहीं सकती। पिछली रचनामें पूर्वरचनाकी कुछ न कुछ छाप पड़ी ही रहती है। आदिकवि परमात्माकी रचनामें भी 'धाता यथापूर्वमकल्पयत्' इस उक्तिके अनुसार पूर्वरचनाकी सापेक्षता होती है तो अर्वाचीन कवियोंकी रचनाओंकी क्या बात है? इसीसे वेदके कई मन्त्रोंका लौकिक आदि कवि वाल्मीकि मुनिने स्वकीय रामायणमें भावाऽपहरण किया है। इसी प्रकार कृष्णद्वैपायनने अपने महाभारतमें रामायणका, भासकविने रामायण और महाभारतका और महाकवि कालिदासने रामायण, महाभारत और भासकी रचनाका कई स्थलोंमें भावाऽपहरण किया है। इसी प्रकार कालिदासकी रचनाका कविवर भवभूति, जर्मनीके दार्शनिक कवि गेटे और शीलरने भावाऽपहरण किया है। इसी बातको महाकवि क्षेमेन्द्रने इस प्रकार व्यक्त किया है:—

'छायोपजीवी पदकोपजीवी पादोपजीवी सकलोपजीवी।
भवेदथ प्राप्तकवित्वजीवी स्वोन्मेषतो वा भुवनोपजीव्यः' ॥

इस बातका संक्षिप्त रूपसे यहां निदर्शन करना अप्रासङ्गिक नहीं होगा। संस्कृतसुभाषितमें एक श्लोक इस प्रकारका है:—

'सुखस्याऽनन्तरं दुःखं दुःखस्याऽनन्तरं सुखम्। चक्रवत्परिवर्तन्ते दुःखानि च सुखानि च' ॥

सुखके अनन्तर दुःख और दुःखके अनन्तर सुख, इस प्रकार चक्रके समान दुःख और सुख परिवर्तित होते रहते हैं।

बात साधारण सी है, पर इसी बातको कविशिरोमणि भासने अपने 'स्वप्नवासवदत्त' नाटकमें कमनीय कौशलसे प्रदर्शित किया है:—

'कालक्रमेण जगतः परिवर्तमाना चक्रारपङ्क्तिरिव गच्छति भाग्यपङ्क्तिः।'

कालके क्रमसे जगत्की परिवर्तित होती हुई भाग्यपङ्क्ति पहियेके आरोंकी पङ्क्तिके समान नीचे और ऊपर जाती रहती है।

इसी बातको कविकुलगुरु कालिदासने विशेष चमत्कारपूर्ण ढंगसे मेघदूतमें उपस्थित किया है:—

'कस्याऽत्यन्तं सुखमुपनतं दुःखमेकान्ततो वा। नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥'

किसे लगातार सुख अथवा दुःख प्राप्त होता रहता है। अवस्था चक्रकी नेमिके क्रमसे कभी नीचे और कभी ऊपर जाती रहती है।

इस प्रकार पूर्ववर्ती कविके भावका उत्तरवर्ती कवि अपहरण करते रहते हैं, पर उसमें कुछ विशेषताका आधान अभीष्ट है, नहीं तो निरा पिष्टपेषण करनेके समान ही होगा।

भावाऽपहरणसे ही नहीं, अपितु अर्वाचीन कवियोंने कथानकमें भी प्राचीन कृतियोंका अनुसरण किया है। अधिकांशमें भारतीय रचनाओंके कथानक रामायण, महाभारत, पुराण और कथासरित्सागरसे लिये गये हैं। किं बहुना पाश्चात्य देशमें भी कविवर होमर और नाट्यकलाधुरन्धर शेक्सपीयर आदि कवियोंने भी यूनानी ऐतिहासिक ग्रन्थोंके आधारपर अपनी अपनी रचनाओंका कथानक प्रस्तुत किया है। इस स्थितिमें मेरी रचना पूर्णतया मौलिक है ऐसा कहना सरासर साहस और आत्मप्रतारणामात्र प्रदर्शित करना है। वास्तविक बात तो यह है कि दूसरी कृतिसे भाव वा कथानक लेकर भी कवि यदि चमत्कारपूर्ण कौशल प्रदर्शित कर सके तो उसकी कृति मौलिक ही समझी जायगी। काव्य वा नाटकमें शृङ्गार, हास्य, करुण, रौद्र, वीर, भयानक, बीभत्स, अद्भुत, शान्त और वात्सल्य इन रसोंको यथास्थान सन्निविष्ट करना चाहिए, परन्तु अङ्गी (प्रधान) के रूपमें शृङ्गार, वीर वा शान्त रसको रखना चाहिए, इसी बातको निम्नलिखित श्लोकमें उपलक्षणके तौर पर निदर्शित किया है :—

'अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथेदं रोचते विश्वं तथेदं परिवर्तते॥
शृङ्गारी चेत्कविः काव्ये जातं रसमयं जगत्। स चेत्कविर्वीतरागो नीरसं व्यक्तमेव तत्॥'

अपार काव्यसंसारमें कवि ही एक मात्र प्रजापति (सृष्टिकर्त्ता) माने गये हैं। कविकी रुचिके अनुसार संसारका परिवर्तन होता रहता है। कवि शृङ्गारी हो तो संसार ही रसमय हो जाता है, वही कवि निर्वेदपूर्ण अर्थात् शान्तरसवाला हो तो सारा संसार ही नीरस हो जाता है।

च्यवनऋषिने जैसे देववैद्य अश्विनीकुमारोंको यज्ञका हिस्सेदार बनाया था उसी तरह महाकवि भवभूतिने अपने अनुपम नाटक उत्तररामचरितमें करुणरसको भी शृङ्गार और शान्त रसके समान अङ्गीके रूपमें स्थापित किया है। यहाँ तक कि शृङ्गारमें जो स्थान महाकवि कालिदासका है करुणामें वही स्थान महाकवि भवभूतिका माना गया है। इसीलिए 'उत्तरे रामचरिते भवभूतिर्विशिष्यते।' इस उक्तिकी नितान्त ही सार्थकता देखी जाती है। भवभूतिने करुणरसकी प्रधानताका इस प्रकारसे समर्थन किया है :—

'एको रसः करुण एव निमित्तभेदाद्भिन्नः पृथक्पृथगिव श्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान्विकारानम्भो यथा सलिलमेव हि तत्समस्तम्॥' (३-४७)

एक करुणरस ही आलम्बन आदि निमित्तके भेदसे भिन्न होता हुआ पृथक् पृथक् शृङ्गार आदि परिणामोंको आश्रय करता है। ऐसा मालूम पड़ता है—जैसे एक जल ही भँवर, बुद्बुद और तरङ्गरूप विकारोंका आश्रय करता है; यह सब वास्तवमें जल ही है।

परन्तु सामाजिक कुप्रथाओंको हटानेके लिए प्रहसनमें व्यङ्ग्यके रूपमें हास्य-रसकी भी प्रधानरूपसे स्थिति आवश्यक है। अभिज्ञानशाकुन्तल, रत्नावली और मालतीमाधव आदिमें शृङ्गार, वेणीसंहारमें वीर, महाभारतमें शान्त और लटक-मेलक, हास्यार्णव आदिमें हास्यरस प्रधानरसके रूपमें माने गये हैं।

साधारणतः कविके दो भेद होते हैं—प्रतिनिधिकवि और विश्वकवि। किसी देश, काल और अवस्थाको लक्ष्यकर चरित्रचित्रण करनेवाले कविको प्रतिनिधि कवि कहते हैं। जिस कविकी रचना देश, काल और अवस्थाकी सीमाको पारकर सर्वप्रिय होती है, उसे विश्वकवि कहते हैं। पूर्वश्रेणीके कवि अश्वघोष आदि माने जा सकते हैं और दूसरी श्रेणीके कवियोंमें कालिदास, भवभूति और पाश्चात्य देशके शेक्सपीयर आदि कवि परिगणित हो सकते हैं। परन्तु विश्वकवि भी किसी अंशमें स्वसमयका प्रतिनिधित्व भी अवश्य करते हैं। क्योंकि अपने समयके वातावरणकी छाप जिस किसी भी व्यक्तिमें अवश्य ही पड़ती है। महाकवि कालिदासने अपने महाकाव्य रघुवंशमें अग्निवर्णका जो चरित्र-चित्रण किया है वह उन्हींके समसामयिक मगधदेशके राजाका है ऐसा भी कोई विद्वान् मानते हैं।

सिद्धान्तकी दृष्टिसे विचार करनेपर कविके और भी दो भेद माने जा सकते हैं—यथार्थवादी (Realistic) और आदर्शवादी (Idealistic)। अपनी अनुभूति या किसी विषयको यथार्थरूपसे चित्रण करनेवाले कविको यथार्थवादी और किसी आदर्शके लक्ष्यमें रचना करनेवाले कविको आदर्शवादी कहते हैं।

मैंने यहां पर आदर्शवादके अविरुद्ध यथार्थवादीको आदर्शवादी और आदर्शवाद-की अपेक्षा न रखकर केवल यथार्थवादका चित्रण करनेवाले कविको यथार्थवादी माना है। कहनेकी आवश्यकता नहीं है कि वास्तवमें ये दोनों कवि कलाके पुजारी हैं। परन्तु यथार्थवादीकी दृष्टिमें 'कला कलाके निमित्त है' इसके विपरीत एक आदर्शवादीकी दृष्टिमें कला जीवनके और जीवन आदर्शके निमित्त है।

विवेचककी दृष्टिमें जिस प्रकार केवल यथार्थवादिताका राग अलापनेसे काव्यमें अश्लीलता और अनैतिकता प्रभृति आपत्तिकी संभावना आ सकती है, उसी प्रकार केवल आदर्शवादिताकी पखावज बजानेसे भी रचना शुष्क धर्मशास्त्र या नीतिशास्त्रका रूप धारण कर सकती है। इसी तरह कवि केवल कल्पनासृष्टिमें ही (Utopian) विचरण करनेवाला समझा जायगा। इसलिए प्रगतिशील विचारवाले कविका लक्ष्य दोनों बातोंमें तुल्यरूपसे रहना आवश्यक है।

यथार्थवाद और आदर्शवाद ये दोनों कवित्वलाभके लिए साध्य नहीं हैं प्रत्युत साधन हैं। अतः इन दोनोंका यथास्थान और यथासंभव पूर्वोक्त प्रकारसे उपयोग करना विचारशील कविका कर्त्तव्य है।

वेषाके अनुसार भारतीय लेखक अधिकांशमें आदर्शवादी और यूरोपके लेखक यथार्थवादी पाये जाते हैं। प्राच्य और पाश्चात्य लेखकोंमें इस अन्तरका हेतु अपनी अपनी संस्कृतिकी विभिन्नता ही मानी जाती है।

भारतीय लेखक यथार्थवादी और यूरोपीय लेखक आदर्शवादी हैं ही नहीं यह मेरा मत नहीं है। भारतमें भी चौरपञ्चाशिकाके रचयिता के सदृश यथार्थवादी और यूरोपमें मिल्टन, विक्टर ह्यूगो और टाल्स्टायके समान आदर्शवादी भी देखे गये हैं, इसी लिए मैंने 'अधिकांश' शब्दका उल्लेख किया है।

अतिप्राचीन समयसे ही भारतवर्षके एक धर्मप्राण राष्ट्र होनेके कारण यहांके विद्वद्वर्ग 'सत्यं शिवं सुन्दरम्' में ही कलाका पूर्ण स्वारस्य देखते हैं। इसीसे यहांके कवि भी अधिकांशमें आदर्शवादी ही होते हैं। नाटकके अन्तमें भी प्राच्य और पाश्चात्य साहित्यमें मतभेद परिलक्षित होता है। संस्कृतके नाटक संयोगान्त और यूरोपीय नाटक अधिकांशमें वियोगान्त देखे जाते हैं। आदर्शवादिताके अनुसार ही माङ्गलिक भारतीय कवि संयोगान्त रचना करते हैं।

यहाँ धर्मकी प्रधानता होनेके कारण स्मृति ग्रन्थोंमें मङ्गलचर्चामें बहुत जोर दिया गया है। यहाँ तक कि स्नातकधर्मके प्रकरणमें पारस्कर-गृह्यसूत्रमें—

'गर्भिणीं विजन्येति ब्रूयात्। सकुल इति नकुलम्।
भगालमिति कपालम्। मणिधनुरितीन्द्रधनुः॥

ऐसा लिखा गया है। अर्थात् गर्भिणीको 'विजन्या', नकुल ( न्यौले ) को 'सकुल', कपाल ( कपार ) को भगाल और इन्द्रधनुको 'मणिधनु' कहना चाहिए। इस स्थितिमें भारतीय नाटककार अमङ्गलपरिहारके लिए अपनी रचनाको जो मङ्गलपूर्ण संयोगान्त बनाते हैं, इसमें आश्चर्य माननेकी क्या बात है?

आजकल कतिपय विद्वान् कहते हैं कि वियोगान्त नाटकका अधिक प्रभाव पड़ता है। अर्थात् कविकी रचनाका जो लक्ष्य है उसमें वियोगान्त होनेसे गहरा असर पड़ जाता है। कुछ अंशमें यह ठीक हो भी जाय पर ऐकान्तिक रूपसे यह बात नहीं मानी जा सकती है। क्योंकि संयोगान्त रचनामें भी वियोग आदि घटना बीचमें आ पड़ती ही है उससे भी सामाजिक पुरुषमें प्रभाव पड़े बिना नहीं रहता है।

संस्कृति ( Culture ) की विभिन्नतासे ही प्राच्य और पाश्चात्य साहित्यमें स्थान स्थानपर मतभेद दिखाई देता है। जहाँ भारतमें हरिश्चन्द्र आदि पात्र सत्यव्रतके पालन करनेके लिए उद्यत होकर पगपगपर ठोकर खाकर चूडान्त विपत्तिमें ग्रस्त होकर भी आत्महत्यासे विरत होकर धैर्यसे विचलित नहीं होते हैं वहीं पाश्चात्य देशमें नायक और नायिका अपने प्रणयमें साफल्यप्राप्तिमें प्रतिबन्ध देखकर एक या दोनों प्रणयी आत्महत्या कर अपने जीवनको तिरोहित कर देते हैं। इस विषयमें

बहुत कुछ कहना था पर स्थान और समयके अभावके कारण दो चार बातें लिखकर मैं अपना वक्तव्य समाप्त करता हूँ।

साहित्यमें नाटकका बहुत ही उच्चस्थान है। यद्यपि काव्यके दो भेदोंमें इसको दृश्यकाव्य कहते हैं परन्तु पात्रोंके परस्पर संवादके श्रवण किये जानेके कारण यह एक प्रकारसे श्रव्यकाव्य भी माना जा सकता है। चार प्रकारके अभिनयोंके द्वारा चरित्रका प्रदर्शन किये जानेसे श्रव्यकाव्यकी अपेक्षा इसका अत्यधिक प्रभाव दर्शकोंपर पड़ सकता है। इसी प्रकारसे गद्य और पद्य दोनोंका समावेश हो जानेसे यह चम्पूकी तरह अत्यधिक मनोहर एवम् स्थलविशेषोंमें संगीतका भी समावेश होनेपर यह क्या विद्वान् और क्या मूर्ख, क्या वृद्ध और क्या बालक, क्या स्त्री और क्या पुरुष सभी लोगोंको अत्यधिक रूपसे आकर्षक बन जाता है। अतएव अपने यहाँ कहा भी जाता है कि 'काव्येषु नाटकं रम्यम्' अर्थात् काव्योंमें नाटक रमणीय होता है।

अतएव संसारके बहुतेरे साहित्यकार नाटकके द्वारा ही विश्वविश्रुत हो गये हैं। भारतके कालिदास, भवभूति, श्रीहर्ष, जयदेव आदि और यूरोपके शेक्सपीयर जान गाल्सवर्दी, इब्सन और बर्नार्डशा प्रभृति कलाकार अपने अपने नाटकोंके द्वारा ही विपुल कीर्तिके भाजन हुए हैं। इस कारण नाटक क्या पूर्व और क्या पश्चिम सर्वत्र आदरणीय माना जा रहा है। भारतीय नाट्यशास्त्रके कर्त्ता भरतमुनिने इसी कारण कहा है:—

> 'न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
> न स योगो न तत्कर्म नाटके यन्न दृश्यते ॥'

अर्थात् वह ज्ञान नहीं है, वह शिल्प ( क्रियाकौशल ) नहीं है, वह विद्या नहीं है, वह कला नहीं है, वह योग नहीं है और वह कर्म नहीं है जो नाटकमें नहीं देखा जाता। तात्पर्य यह है कि नाटकमें ज्ञान, शिल्प, विद्या, कला, योग और कर्म सबका यथास्थान समावेश किया जाता है। किं बहुना नाटक अपने यहाँ पञ्चम वेद के रूपमें माना गया है, इससे बढ़कर इसका अधिक और क्या उत्कर्ष हो सकता है।

प्रकृत नाटक प्रसन्नराघवका संस्कृतसाहित्यमें अनुपम स्थान है। यद्यपि मर्यादा-पुरुषोत्तम भगवान् श्रीरामचन्द्रजीके पवित्र चरित्रका आश्रय कर रचे गये महावीर-चरित, उत्तररामचरित, कुन्दमाला, बालरामायण प्रभृति अनेक नाटक हैं, पर इसकी उन सभीमें विलक्षणता है। इसमें पहलेके चार अङ्कोंमें सीता-स्वयंवर और परशुराम-मानमर्दन आदि कथाएँ विलक्षण प्रकारसे वर्णित हैं, रावणके साथ बाणासुरका भी धनुर्भङ्गमें वर्णन किया गया है। पञ्चम अङ्कमें वाली और सुग्रीवकी

कथा गङ्गा, यमुना और सरयूके संवादके रूपपर बतलाई गई है। रामचन्द्रकृत काञ्चनमृगरूपी मारीचका अनुसरण हंसके द्वारा प्रकाशित किया गया है। गोदावरी और सागरकी बातचीतमें सीताहरण, जटायुकी मृत्यु और ऋष्यमूक पर्वतमें सीताजीका अलङ्कारत्याग बतलाया गया है। षष्ठ अङ्कमें रामविलाप प्रकाशित किया गया है। सप्तम अङ्कमें युद्धकाण्डकी कथा और रामचन्द्रजीका अयोध्याप्रत्यावर्तन वर्णित है। इस नाटककी भाषा अतिशय प्राञ्जल, मञ्जुल, अलङ्कृत और सरस है। संस्कृतभाषापर इसके रचयिताका असाधारण अधिकार था यह बात पाठकमहोदयको निश्चित रूपसे प्रतीत होता है। इसके कर्ता महाकवि जयदेव हैं इनकी माताका नाम सुमित्रा और पिताका नाम महादेव था। यह बात उनके प्रस्तुत नाटकके द्वारा ही जानी जाती है। जयदेवकी दूसरी कृति चन्द्रालोकनामक सुप्रसिद्ध अलङ्कारग्रन्थ है। महाकवि जयदेव नाटककार, अलङ्कारशास्त्रप्रणेता एवम् तर्कशास्त्रके धुरन्धर विद्वान् थे यह बात भी उनके नाटक द्वारा ही जानी गई है। उनकी उपाधि वा दूसरा नाम पीयूषवर्ष था यह बात चन्द्रालोकके द्वारा अवगत होती है। उनका आविर्भावकाल विक्रम की तेरहवीं और चौदहवीं सदीका मध्यभाग माना गया है।

गीतगोविन्दकर्ता जयदेव इनसे भिन्न हैं एवम् उनका आविर्भावसमय विक्रमकी बारहवीं सदी है।

विक्रमकी सोलहवीं सदीमें 'पक्षधर' द्वितीय नामवाले मैथिल जयदेव भी इनसे भिन्न हैं। प्रसन्नराघवकार जयदेव कहांके रहनेवाले थे इसका अभीतक निश्चय नहीं हो पाया है। महामहोपाध्याय मैथिल पण्डित परमेश्वर झा जीने अपने 'मिथिलातत्त्वविमर्श' नामक पुस्तकमें प्रसन्नराघवकार जयदेवको अनेकानेक प्रमाणोंसे मैथिल सिद्ध किया है, परन्तु कुछ लोग इन्हें विदर्भके कुण्डिनपुर निवासी दाक्षिणात्य ब्राह्मण कहते हैं।

विशेष बातें संस्कृतके उदाहारमें वर्णित हैं, पिष्टपेषणके भयसे यहीं अवसान करता हूँ।

—टीकाकार

# कथासार

## प्रथम अङ्क

नान्दीके अन्तमें सूत्रधार रङ्गभूमिमें अपने सहकारी रङ्गतरङ्गके साथ बातचीत करता हुआ प्रसन्नराघव नाटककी प्रशंसा करता है। उसी प्रसङ्गमें वह वाल्मीकिका वर्णन कर बहुतेरे कवियोंका रामचन्द्रका वर्णन करनेमें हेतु दिखलाता है। प्रस्तुत-नाटककार 'पीयूषवर्ष' पदवीवाले जयदेवजीके कविताकिकत्वका दृष्टान्त दिखलाकर वर्णन कर सूत्रधार प्रसन्नराघवका प्रसादगुणगुम्फितत्व और व्यङ्ग्यार्थप्रकाशकत्वका भी प्रकाशन करता है। इसी प्रकारसे वह महर्षि याज्ञवल्क्यके शिष्य शाम्यायनके आगमनकी सूचना करता है।

इति प्रस्तावना

शाम्यायनने राजर्षि जनककी सीताके विवाहके लिए आकुलताके कारण ब्रह्मविद्यामें और कुलक्रमागत राजलक्ष्मीमें भी शिथिलताका प्रदर्शन किया। तब वे आकाशमें अवलम्बन करनेवाले दो भ्रमरोंके समान दो स्तुतिपाठकोंके संलापके प्रसङ्गसे—'शङ्करजीसे प्रदत्त और कैलास पर्वतसे भी अधिक सारवाला त्रिपुरदाहक धनुष जनकके पास है, यह जानकर उसे देखनेके लिए बाणासुर मिथिलाको चला, उसी प्रकार 'रावणकी शिवपूजा करनेके पहले ही नन्दनवनका समस्त पुष्पसमूह कैसे तोड़ा गया, रावनके अनुचरोंसे ऐसा पूछे जानेपर उपवनरक्षकोंने 'क्षमा करें ? आज सीताका स्वयंवर देखनेके लिए उत्सुक समस्त देवजनोंके विमानोंको भूषित करनेके लिए ही समूचे फूलोंका उपयोग हुआ है' ऐसा उत्तर दिया। ऐसे वचनोंको सुनकर सीतास्वयंवरमें बाणासुर और रावणके आगमनकी सम्भावना और अनिष्टकी आशङ्का कर यह समाचार गुरुको सुनानेके लिए चले गये।

इति विष्कम्भक।

मञ्जरीक और नूपुरक नामके दो स्तुतिपाठकोंने सीताके स्वयंवरमें अनेक देशोंसे आये हुए राजाओंके वेश, भूषा और आचरण आदिका तथा शिवधनुषके आरोपणमें अशक्तिका भी वर्णन किया। तब मनुष्यका वेष धारणकर रावणने वहां प्रवेश किया और उसके साथ मञ्जीरककी वक्रोक्तिपूर्ण बातचीत चलपड़ी। रावणने दूसरे महलकी अटारीमें अवस्थित सीताको देखकर उनके लोकोत्तर सौन्दर्यकी प्रशंसा की। जब रावण धनुषको उठानेमें असमर्थ हुआ तब उसने पराक्रमपूर्वक सीताको अपने पास लानेकी इच्छा जताई, पर मञ्जीरकने उसकी बहुत ही भर्त्सना की। जिससे

वह कुपित होकर दशमुखों और बीस बाहुओंसे युक्त अपने स्वरूपसे प्रादुर्भूत हुआ। उसको देखकर नूपुरकके विस्मित होनेपर मञ्जीरकने उसे 'यह राक्षसराज रावण है' ऐसा कहकर समझाया। उसके बाद उन दोनोंके साथ रावणकी वक्रोक्तिमय बातचीत होने लगी। रावणने उसके बीचमें विकट वचनके आडम्बरसे लोकोत्तर अपने पराक्रमको स्फुट किया। इसी समय बाणासुरने वहां प्रवेश किया और उसके साथ रावणकी बातचीत भी होने लगी। सुरविरोधी वे दोनों, परस्पर अपना उत्कर्ष और दूसरेका अपकर्ष दिखलाने लगे। बाणासुर भी शिवधनुष उठानेमें विफलप्रयास हुआ। जब रावणने उसके भुजभारकी निन्दा की, तब बाणासुरने भी उसकी भर्त्सना की। तदनन्तर दोनोंका वाग्विवाद होने लगा और अन्तमें नन्दनवनका उन्मूलन करनेके लिए बाणासुर वहाँसे चल पड़ा तथा रावण भी जब सीताहरणके लिए तत्पर हुआ तब मारीचके रोदनशब्दका श्रवण कर उसे आश्वासन देनेके लिए निकल पड़ा। दोनों स्तुतिपाठक भी महाराज जनकको यह हाल सुनानेके लिए चले गये।

## द्वितीय अङ्क

यज्ञरक्षणके लिए अयोध्यापति दशरथने जब कौशिकमुनिके पास अपने पुत्र राम और लक्ष्मणको सौंपा, तब प्रसन्न होकर उन्होंने भी वीरमाताके कर्णभूषण ताटङ्कयुग्म कौशल्याके लिए उनको समर्पित किया। 'यह भूषण रावणकी माता निकषाके लिए योग्य है' ऐसा विचार कर बुद्धिमान् माल्यवान् नामके रावणके मन्त्रीने उसे लानेके लिए ताटकाके पास भिक्षुरूपवाले एक राक्षसको पहले भेजा। कुछ समयके अनन्तर 'अभीतक ताटका उस भूषणको ले चुकी होगी' ऐसा विचार कर उसने तापसका रूप बनाकर दूसरे राक्षसको भी भेजा। जब दोनों राक्षसोंका मिथिला के उपवनमें मिलन हुआ, तब संलापके प्रसङ्गमें दोनोंमें एक ने दूसरेको पहचाना। तब तापसने कहा—'लङ्केश्वर मिथिलामें पधारे हैं' ऐसा सुनकर मैं यहाँ आया हूँ' और इस समय ताटकाका वृत्तान्त जानना चाहता हूँ, यह सुनकर भिक्षुने 'ताटका रामके बाणसे ताडित होकर यमलोक पहुंच गई, उसका एक पुत्र सुबाहु भी वैसी ही गति को प्राप्त हुआ और दूसरा पुत्र मारीच रामके नाराचसे दूर फेंका गया। पर इस दुःखद वृत्तान्तको रोकर मारीचके निवेदन करनेपर भी सीतामें आसक्त रावणके चित्तमें कोपका परिताप आरूढ नहीं हुआ' ऐसा कहा। इसी बीचमें सामने आते हुए राम और लक्ष्मणको देखकर दोनों राक्षस डरसे दूर हट गये।

इति विष्कम्भक।

राम और लक्ष्मण मिथिलामें बगीचेका सौन्दर्य और चैत्रमासकी मनोहरताका परस्पर वर्णन करने लगे वहींपर चण्डिकामन्दिर देखकर रामने चण्डिकाको

प्रणाम किया। इसी बीचमें सीताने भी सखीके साथ वहाँ प्रवेश कर चण्डिकाको अभिवादन किया। उस समय राम सीताका अलौकिक सौन्दर्य देखकर विस्मित हो गये। रामको देखकर अन्यमनस्क होकर सीताने लक्ष्मणमें वात्सल्यरसका अनुभव किया। सखीने सीताके मनमें रामकी आसक्तिको भाँप लिया। उसके बाद किसी चेटीने आकर सीताजीसे निवेदन किया 'माताओंने अलङ्करणके लिए आपको बुलाया है' निवेदन सुनने के अनन्तर ही सीताजी चली गईं। और राम-लक्ष्मण दोनों भाई भी विश्वामित्रके समीप चले गये।

## तृतीय अङ्क

महाराज जनकके अन्तःपुर ( रनिवासा ) में वामनक ( बौना ) और कुब्जक ( कुबड़ा ) ने हास्यरसोत्पादक बातचीत की। वामनकने 'शिवधनुषको देखनेके लिए दो क्षत्रियकुमारोंके साथ महर्षि विश्वामित्र आयेंगे' ऐसा कहा। इस बीचमें 'ताड़काको मारनेवाले राम और उनके भाई लक्ष्मणको साथमें लेकर महर्षि विश्वामित्र आरहे हैं' ऐसा वाक्य नेपथ्यसे सुनकर वे दोनों राममें शिवधनुष उठानेकी शक्तिकी संभावना कर इस वृत्तान्तको महारानियोंको निवेदन करनेके लिए चले गये।

इति प्रवेशक।

विश्वामित्र, राम और लक्ष्मणके साथ मिथिलामें प्रवेश कर सीताके साथ रामके विवाहमें उत्कण्ठासे आकुल हुए। उन्होंने रामके प्रश्न करनेपर योगीश्वर याज्ञवल्क्यके शिष्य मिथिलेश्वर जनकके उत्कृष्ट प्रभावोंका प्रतिपादन किया। इसी बीचमें आकर शतानन्दने विश्वामित्रको अभिवादन किया और जनकने विश्वामित्रको प्रणाम किया। अनन्तर विश्वामित्रने आशीर्वाद देकर जनकवंशमें उत्पन्न राजाओंके लोकोत्तरवैभवका और जनकने अतिशय विनयका प्रदर्शन कर विश्वामित्रके उत्कृष्ट सामर्थ्यका वर्णन किया। तत्पश्चात् विश्वामित्रने शतानन्द और जनकको राम और लक्ष्मणका परिचय दिया। राजा जनकको उन दोनोंके ऊपर अपनी अनिर्वचनीय प्रीतिका प्रतिपादन करते देख विश्वामित्रने जनकसे अनुरोध किया कि 'शिवधनुष लानेके लिए आप रामको आज्ञा दें'। यह सुनकर जनकने उस कर्ममें रामके असामर्थ्यकी संभावना कर उस धनुषकी असाधारणताका वर्णन किया। विश्वामित्रने भी रामके पराक्रमवर्णनका उपक्रम कर फिर भी धनुष लानेके लिए रामको आज्ञा दी। इस बीचमें परशुरामके परशुका सन्देश सुनानेके लिए किसी मुनिने प्रवेश कर जनकसे कहा—'राजाओंको मारकर शिवपरिचारक यह परशु ( फर्सा ) ऐसा

सन्देश देता है—'महाराज ! किसी राजकुमारको कन्यादान कर शिवधनुष उठानेके पापसे विरत हो जायँ, नहीं तो मैं आपको दण्ड दूँगा'। ऐसा सुनकर जनकने भी—'हे परशो ! प्रतिज्ञाके अनुसार मैं कन्यादान करता हूँ। तुम मेरे दामादके सामने धाराजलका त्याग करो' ऐसा प्रतिसन्देश दिया। 'ऐसा ही हो' कहकर मुनि भी निकल पड़े। तदनन्तर शिवधनुष उठानेमें विफल मनोरथवाले हजारों राजाओं-को विश्वामित्रने देखा। अन्तमें रामने प्रत्यञ्चाको चढ़ानेके प्रसङ्गमें आयासके बिना ही धनुषको ही तोड़ दिया। तब प्रसन्न होकर विश्वामित्रने माण्डवीसे भरतका, ऊर्मिला-से लक्ष्मणका और श्रुतकीर्तिसे शत्रुघ्नका भी विवाह करनेके लिए इच्छा प्रकट की। जनकने भी सहर्ष उस प्रस्तावको स्वीकार किया।

## चतुर्थ अङ्क

नेपथ्यसे भृगुवागी तिका प्रादुर्भाव हुआ। क्रुद्ध होकर भार्गवने प्रवेश किया। वे परशुके प्रतिसन्देशमें जनकका अतिशय अविनय विचार कर जगत्को जनकरहित करनेके लिए तत्पर हो गये। तब शतानन्दके शिष्य ताण्ड्या-यनने प्रवेश कर उन्हें अभिवादन किया और कथाप्रसङ्गमें शिवधनुषके टूटनेकी सूचना दी। 'इस धनुषको किसने तोड़ा ?' भार्गवके इस प्रश्नके उत्तरमें ताण्ड्यायनके 'कौशिकके यज्ञको विध्वस्त करनेवाले सुबाहु और मारीच आदि राक्षस जिसके वशमें थे' इतने ही खण्डवाक्यमें भार्गव 'रावणने धनु तोड़ा है' ऐसी संभावना कर उसे दण्ड देनेके लिए चल पड़े और कुछ क्षणके अनन्तर अपनी सम्भावनाको गलत समझकर फिर लौट आये तब उन्होंने प्रतारणाका आरोप कर ताण्ड्यायनको उलाहना दिया। उन्होंने भी 'मेरा इसमें अपराध नहीं है' कहकर '(वैसे राक्षस भी) जिसके बाणके अग्रभागमें रहनेवाले प्रतापके लेशके वशवर्ती होकर पराभवको प्राप्त हो गये' इस प्रकार वाक्यशेषको पूर्ण किया। 'मारीचको दण्ड देनेवाला यह कौन है ?' ऐसा भार्गवके फिर प्रश्न करनेपर उन्होंने भी 'श्रीरामचन्द्रजी हैं' ऐसी सूचना दी। तब राम और लक्ष्मणको देखकर भार्गवने रामके अतिशय उत्कर्षसे 'क्या ये मूर्तिमान् शृङ्गार वीर और अद्भुत रससे बनाये गये हैं ?' ऐसी उत्प्रेक्षा की। तब दोनों भाइयोंके साथ जामदग्न्यकी वक्रोक्ति और श्लेषसे संयुक्त बातचीत होने लगी। जामदग्न्य उसके बीचमें अपने उत्कृष्ट प्रभावको प्रकाशित करने लगे। लक्ष्मणने भी संभाषणमें उपहासके प्रसङ्गसे कुछ औद्धत्य भी दिखलाया। मर्यादापुरुषोत्तम रामने उसका निषेध किया। इस बीचमें नेपथ्यसे 'अरे जामदग्न्य ! क्यों ढिठाई कर रहे हैं? इस समय आपको शासन करनेके लिए धनु लाया जाता है' ऐसी जनककी वाणी सुनाई पड़ी। जामदग्न्यने भी योगाभ्यासी होनेके कारण जनकमें वीरता न होनेकी

संभावना कर उपहास किया। फिर नेपथ्यसे 'अरे जामदग्न्य! शान्तिरूप धनसे समृद्ध जमदग्निके पुत्र होकर भी तुम शान्तिमें दरिद्र हो गये हो' इस प्रकारका शतानन्दका वाक्य सुनाई पड़ा। जामदग्न्यने अहल्याका पुत्र होनेसे शतानन्दका अतिशय उपहास किया। रामने दोनों महर्षियोंकी कुलीनताका प्रतिपादन कर सामवाक्यका प्रयोग किया। जामदग्न्यने कुपित होनेसे अपने उत्कर्षको दिखानेके प्रसङ्ग में भगवान् कौशिकका भी अनादर किया। रामने गुरुके अनादरसे कुछ क्रुद्ध होकर पराक्रमद्योतक वाक्य कहनेका उपक्रम किया। तब जामदग्न्यके 'विष्णुके करकमलस्थित इस धनुषको ले लो वा युद्ध करो' ऐसा कहनेपर और रामचन्द्रके भी स्वीकार करनेपर क्रुद्ध होकर वे दोनों युद्धके लिये उपयुक्त भूमिमें उतर पड़े। तब लक्ष्मणने रामचन्द्रके विष्णुधनुष उठानेकी सूचना दी और जामदग्न्यने अतिशय नम्रतासे अवनत होकर राममें ईश्वरत्वकी उत्प्रेक्षा की। तब रामने विजेता होकर भी स्वाभाविक नम्रताके कारण जामदग्न्यके चरणोंमें प्रणाम किया और वे भी शुभ आशीर्वादोंसे उन्हें अलङ्कृत कर जानेके लिए आज्ञा मांगकर निकल पड़े। तब भार्गवके आँखोंसे ओट होनेपर बन्धुजनोंको देखनेके लिए दोनों भाई वहाँसे चले गये।

## पञ्चम अङ्क

अनन्तर गङ्गा और यमुनाने प्रवेश किया और दोनोंमें बात होने लगी। गङ्गाने कहा 'तुम क्यों इन दिनों खिन्न हो रही हो' इसके उत्तरमें यमुनाने कहा 'मेरे भाई सुग्रीव अपने बड़े भाई वालीके दौर्जन्यसे इस समय पीड़ित हो रहे हैं।' खेदका प्रथम कारण यह है और दूसरा यह भी है कि 'किसी दिन जब तपस्याका ग्रहण करनेवाले कामदेव और वसन्तके समान जटाधारी दो तरुण पुरुष और एक सुन्दरीने मुझे पार कर दक्षिण दिशाकी ओर चलनेका उपक्रम किया, उस समय सुन्दरीने कहा, 'देवि यमुने! फिर भी अपने कुटुम्बको दर्शन देनेका अनुग्रह कीजिये' और हाथ जोड़कर मुझसे प्रार्थना की'। यह सुनकर गङ्गा यमुनाको साथमें लेकर सन्देह हटानेके लिए सरयूके पास चली गई। तब बातचीत होनेपर सरयूने अयोध्यावासियोंके अतिशय शोकार्त होनेका प्रतिपादन किया। गङ्गा भी इन्दुमतीनन्दन प्रख्यात भूपाल दशरथको उद्देश्य कर बहुत विलाप कर मूर्च्छित हो गई। सरयूने भी गङ्गाके अनुरोधसे इस वृत्तान्तको सविस्तर कहनेके लिए उपक्रम किया—'कैकेयीने महाराज दशरथसे पूर्वप्रतिश्रुत दो वरोंकी याचना की। उनमें एक वरसे चौदह वर्षोंतक रामका वनवास और दूसरे वरसे भरतका यौवराज्याऽभिषेक प्रार्थित था। कैकेयीका वाक्य सुननेके अनन्तर ही रामचन्द्रजी पिताजीका अभिवादन कर वनको चले गये।' तब गङ्गाने यमुनासे पूर्वकथित वाक्यका समर्थन किया। तत्पश्चात् सीता और लक्ष्मणके विषयमें

प्रश्न करनेपर सरयूने कहा—जब रामने 'सीते ! मेरे वनवासके समयमें तुम अयोध्यामें रहो' ऐसा कहा, तब सीता मूर्च्छित हुईं और अनेक शीतोपचारसे भी जगी नहीं। जब रामने उनके वनगमनका अनुमोदन किया तब होशमें आकर उन्होंने उनका अनुसरण किया। इसी प्रकारसे रामके 'भाई लक्ष्मण ! तुम अयोध्यामें ही रहो' ऐसा समझाने पर लक्ष्मणके—'आर्य ! आपके साथ मुझे चार युग भी चार प्रहरोंके समान और आपके वियोगमें चौदह वर्ष भी चौदह मन्वन्तरोंके बराबर प्रतीत होते हैं' ऐसा कहनेपर सीता और लक्ष्मण दोनोंने रामका ही अनुगमन किया। इसी तरह सरयूने कथाप्रसङ्गमें दशरथका स्वर्गवास और ननिहालसे लौटे हुए भरतजी पिताकी विपत्ति और रामवियोगसे असह्य सन्तापको प्राप्त कर नन्दिग्राममें ही सुखभोगसे पराङ्मुख होकर रामकी प्रतीक्षा करते हुए प्रजापालन कर रहे हैं। ऐसा बतलाया। वाक्यकी समाप्तिमें उन्होंने—'इसके बाद जो हुआ उसे जाननेके लिए मैंने एक कलहंसको भेजा है' ऐसा कहा। तब उस कलहंसने वहां उपस्थित होकर लक्ष्मण और सीताजी दोनों सेवापूर्वक रामचन्द्रजीका जिस प्रकार अनुसरण कर रहे हैं वह बतलाया। इसी प्रकार उसने उनकी वनयात्राकी पद्धति और तीन चार दिनोंमें ही अयोध्याराज्यका अतिक्रमण कर शीघ्र ही यमुनाको भी पार कर गोदावरीके पास जाना तथा वहांपर लक्ष्मणका शूर्पणखाका नासाकर्तन और उसके सहायक राक्षसोंको युद्धमें रामजीका मारना यह सब कहा। फिर उसने वहाँपर सुनहले मृगका आगमन रामका उसका अनुसरण करना इसी बीचमें लक्ष्मणका भी रामके पास जाना और किसी भिक्षुकका सीताके समीप आना, इतना बतलाकर वह चुप हो गया।

इसके बाद वे सभी 'तब क्या हुआ' ? यह जाननेके लिए आकुल होकर उस समाचारको बतलानेके लिए समुद्रके पास चली गईं। उसी चरित्रको गोदावरी समुद्रको कह रही थीं। जैसे कि—रामके बाणोंसे ताडित वह सुनहला मृग, मारीच नामक राक्षसके रूपमें परिणत होकर यमलोकको पहुंच गया। वह भिक्षुक भी सीताके समीपमें रावणके रूपमें परिणत होकर सीताका हरण कर मार्गमें विघ्नके रूपमें उपस्थित और युद्धके लिए तत्पर जटायुके साथ कुछ समय तक लड़कर तीक्ष्ण खड्गके प्रहारसे उन्हें आहत कर लङ्काको चला गया।' अतिकरुण इस वृत्तान्तको सुनकर दयालु समुद्र मूर्च्छित हो गये। तब गङ्गाजी वस्त्राञ्चलसे पंखा झलकर उन्हें होशमें ले आईं। तब तुङ्गभद्रा नामकी नदीने 'रामके बाणोंके प्रहारसे वालिमरण, सुग्रीवका चक्रवर्तिपदलाभ और सीताका अन्वेषण करनेके लिए यत्र तत्र सुग्रीवका वीर वानरोंको भेजना इत्यादि वृत्तान्तका वर्णन किया। समुद्र ने भी रामचन्द्रजीमें सभीका बिना कारणके पक्षपातका प्रतिपादन किया।

करना चाहिए और उसका प्रतिकार करना उचित है' ऐसा प्रबोधन किया। रावणने 'वानरोंका कोलाहल मन्दोदरीके भूषणशब्दके समान मेरे मनमें हर्ष ही उत्पन्न कर रहा है' ऐसा कहा। उसी अवसरपर आकर मन्दोदरी अधोमुखी होकर रावणके समीप बैठ गई। रावणने उसके विषादका कारण पूछा और प्रहस्तने वानरसेनाके कोलाहलसे उत्पन्न चिन्ताको ही कारण बतलाया। तब रावणने 'वानरसेना मेरे सामने युवतीके समान कामको ही उद्दीप्त करनेमें समर्थ होती है।' ऐसा कहा। मन्दोदरीने दूसरे कारणसे भी शत्रुसे उत्पन्न भयको बतलाया। प्रहस्तने भी उसका समर्थन किया। इसी बीच नेपथ्यसे क्रमसे राक्षसों और वानरोंकी सेनाओंका उत्कर्ष सुनाई पड़ा। तब रावणने कुम्भकर्णको जगाकर रामसे और मेघनादको लक्ष्मणसे लड़नेकी आज्ञा दी। कुछ समयके बाद कुम्भकर्ण और मेघनादके वधवृत्तान्तको सुनकर मन्दोदरी और रावण दोनों मूर्च्छित हो गए। होशमें आकर रावण प्रहस्तको लेकर रामके पास गया और मन्दोदरीने कुलदेवता-की पूजाके लिए प्रस्थान किया। तदुत्तर विद्याधरदम्पति राम और रावणकी युद्धचर्चा करने लगे। विद्याधरने कहा जब 'रावणसे छोड़े गए शक्तिबाण लगनेसे लक्ष्मण बेहोश होगये और राम विलाप करने लगे' तब 'हनूमान् औषधोंके आधार गन्धमादन पर्वतको ले आये और औषधोंके सूँघने मात्रसे लक्ष्मण होशमें आगये'। इसी समय नेपथ्यसे वानरों और राक्षसोंके अपने स्वामीके उत्कर्षसूचक वाक्य प्रकट होने लगे। वहींसे राम और लक्ष्मणके साथ रावणकी उक्ति और प्रत्युक्ति सुनाई पड़ी। तब विद्याधर रामबाणताड़ित रावणके बेहोश होकर जमीनपर गिरनेका समाचार सुन आनन्दित होकर इस शुभ-समाचारको पुलोमजासे निवेदन करनेके लिए चले गये। तदुपरान्त सीता, राम, लक्ष्मण, सुग्रीव और विभीषणमें परस्पर बातचीत होने लगी। सुग्रीव और विभीषणने उज्ज्वल रामयशका वर्णन किया। सीताके पूछनेपर लक्ष्मणने 'हनूमान्‌जी अयोध्या भेजे गये हैं' ऐसा बतलाया और सभी अयोध्या जानेके लिए पुष्पक विमानपर आरूढ होकर रास्तेमें सभी लोग यथामति यमुना, भरद्वाजाश्रम तथा सूर्योदयका वर्णन करने लगे। इसी समय सूर्यमण्डलसे रामका अभिनन्दन करनेवाले वाक्य उच्चरित हुए और अयोध्यामें विमान पहुँच गया। तब रामचन्द्रजीने साथियोंके साथ पुष्पकसे उतरकर गुरुजन, बन्धुजन और नगरवासियोंको अतिशय आनन्दित किया।

इति शुभम्।

---

# पात्र-परिचयः

## पुरुषाः

| | |
|---|---|
| सूत्रधारः | प्रधाननटः। |
| नटः | सूत्रधारसहकारी। |
| रामः | अयोध्यापतेर्दशरथस्य पुत्रः, नाटकनायकः। |
| लक्ष्मणः | दशरथसूनुः रामाऽनुजः। |
| विश्वामित्रः | महर्षिः। |
| जनकः | मिथिलाऽधीशो रामश्वशुरः। |
| शतानन्दः | जनकपुरोहितः। |
| दाक्ष्यायणः | याज्ञवल्क्यशिष्यः। |
| शाण्डायनः | शतानन्दशिष्यः। |
| परशुरामः | महर्षिः, जमदग्निपुत्रः। |
| मञ्जीरकः, नूपुरकः | स्तुतिपाठकौ। |
| रावणः | लङ्केश्वरो राक्षसाऽधीशः। |
| बाणाऽसुरः | बलिपुत्रो दैत्याऽधीशः। |
| सागरः | नदीपतिः। |
| रत्नशेखरः | ऐन्द्रजालिकः। |
| सुग्रीवः | वानरेश्वरो रामसुहृत्, पीठमर्दः। |
| हनूमान् | सुग्रीवमन्त्री। |
| माल्यवान् | रावणमन्त्री राक्षसः। |

| | |
|---|---|
| विभीषणः | रावणाऽनुजः । |
| करालकः | माल्यवतः परिचारकः । |
| प्रहस्तः | रावणसचिवः । |
| विद्याधरः | देवयोनिविशेषः । |
| तापस-भिक्षुकः | कुम्भकर्ण-मनादयः । |

**स्त्रियः**

| | |
|---|---|
| सीता | जनकतनया, रामपत्नी, नाटकनायिका । |
| गङ्गा | नदी । |
| यमुना | नदी, सूर्यतनया । |
| सरयूः | नदी । |
| गोदावरी | नदी । |
| तुङ्गभद्रा | नदी । |
| त्रिजटा | राक्षसी, सीतासखी । |
| मन्दोदरी | रावणपत्नी । |
| विद्याधरी | विद्याधरपत्नी । |
| | ( सखीचेट्यादयः ) |



॥ श्रीः ॥

# प्रसन्नराघवम्

'चन्द्रकला' टीकोपेतम् ।

## प्रथमोऽङ्कः

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः,

---

अन्तरायसमुदायहारको ऐहिकार्थपरमार्थकारकः ।
शम्भुसूनुरगजाननिः प्रभुर्मङ्गलाय स भवेद्विनायकः ॥ १ ॥
भक्तवर्गवरपूरणशीलः शान्तिभूषितमतिः सुशीलः ।
सर्वदैव स दयामनाः शम्भुः सम्भवाय भवतात्सुरसभ्यः ॥ २ ॥
सङ्गीतशास्त्रगहनार्णवपारदर्शी वीणाप्रवादनपटुर्नयमार्गदक्षः ।
विद्यावदातधिषणः सुकृती द्विजेन्द्रो श्रीमान्मदग्रजवरो गुरुकृष्णचन्द्रः ॥ ३ ॥
प्रसूजनकयोर्द्वयोरपि कृपाद्दिनं यात्वयोर्यदीयदयया मयाऽप्यधिगतोऽस्ति विद्यालयः ।
मदिष्टकरणेऽधुनाऽप्यवहितः सदा वर्तते प्रतीक्ष्यचरणेऽग्रजे खलु समर्पयेऽहं कृतिम् ॥४॥
याती यदीयकृपया मम बोधवैशद्यं तद्द्वारतस्तदनु शास्त्रपथप्रवेशः ।
तांस्ताद्गुरूनघरजनानसकृत्प्रणम्य वन्दे च तानपि यतोऽत्र कृतौ कृतित्वम् ॥ ५ ॥

अथ तार्किकमूर्धन्यः सुरभारतीपरिचरणधन्यो महाकविर्जयदेवः प्रसन्नराघवाऽभिधाने नाटके शिष्टाचारज्ञापितस्मृत्यनुमितश्रुतिबोधितकर्तव्यताकं द्वादशपदात्मकं नान्दीरूपं मङ्गलं समाचरति—चत्वार इति । विद्रुमलतारक्ताङ्गुलिश्रेणयः शोणसरोजकोरकरुचः शार्ङ्गिणस्ते चत्वारः पाणयः श्रेयः प्रथयन्तु । येऽब्जभुवो भालेषु पुण्यवर्णाऽऽवलीः श्रियः पयोधरयुगे गण्डयुगे च कस्तूरीमकरीयुगमलिखन्तीत्यन्वयः । विद्रुमलतारक्ताङ्गुलिश्रेणयः = विद्रुमलता इव (प्रवाललता इव)

---

प्रवालोंके समान लाल अंगुलियोंसे युक्त रक्त कमलोंके कोरकों की कान्तिसे सम्पन्न

श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।
भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ १ ॥

अपि च—

आकर्ण्य मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी-

---

रक्ताः ( लोहिताः ) अङ्गुलिश्रेणयः ( करशाखाऽऽवलयः ) येषां ते । तादृशा अत एव शोणसरोजकोरकरुचः = शोणसरोजानां ( रक्तकमलानाम् ) ये कोरकाः ( कलिकाः ) तेषामिव रुचः ( कान्तयः ) येषां ते, 'सप्तमी विशेषणे बहुव्रीहौ' इत्यत्र सप्तमीतिपदज्ञापितो व्यधिकरणबहुव्रीहिः । शार्ङ्गिणः = विष्णोः, 'पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दन' इत्यमरः । ते = प्रख्याताः, चत्वारः = चतुःसंख्यकाः, पाणयः = कराः, श्रेयः = कल्याणं, सभ्यानामिति शेषः । प्रथयन्तु = विस्तारयन्तु । शार्ङ्गिणस्ते पाणयः पुनः कीदृशा इत्याकाङ्क्षायामाह—भालेष्विति । ये = शार्ङ्गिणः पाणयः अब्जभुवः = ब्रह्मणः, भालेषु = ललाटेषु, ब्रह्मणश्चतुर्वदनत्वाच्चतुःसंख्यकेष्विति शेषः । पुण्यवर्णावलीः = पुण्याः ( पवित्राः, पुण्यफलद्योतिका इति भावः ) वर्णावलीः ( अक्षरपङ्क्तीः ) श्रियः = लक्ष्म्याः, पयोधरयुगे = कुचयुग्मे, तथैव गण्डद्वये च = कपोलयुगे च, कस्तूरीमकरीः = मृगमदरचिता मकरिकाकाराः पत्ररचनाः, युगपत् = समकालं, लिखन्ति = विन्यस्यन्ति । अत्र सकलजीवानां शुभाऽशुभसूचकभालाक्षरलेखकस्य ब्रह्मणोऽपि समुत्पादकत्वेन विष्णुकर्तृकं भालाऽक्षरलेखनं सङ्गच्छते । तथा च भगवतो विष्णोश्चतुर्भुजत्वेन ब्रह्मभालचतुष्टये लक्ष्म्याः पयोधरद्वितये कपोलफलकयुगले च यौगपद्येनाऽक्षराणां कस्तूरीमकरीणां च लेखनं सम्भवतीति बोद्धव्यम् । अत्र विद्रुमलतारक्ताऽङ्गुलिश्रेणय इत्यत्र शोणसरोजकोरकरुच इत्यत्र चोपमाद्वयम् । अनेकलेखनक्रियासु पाणीनां कारकत्वाद्दीपकाऽलङ्कारश्च, तथा चैतेषां मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं यथा—'सूर्याऽश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति ॥ १ ॥

आकर्ण्यमिति । मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी धीरोदात्तमनोहरः पाञ्चजन्यध्वनिस्त्वाम् आकर्ण्यं सुखयतु । लीलाऽलङ्घितमेघनादविभवो दानवदन्तिनां

---

भगवान् विष्णुके वे चार हाथ कल्याण का विस्तार करें। जो हाथ ब्रह्माजीके ललाटोंमें पुण्य फलद्योतक वर्णावलियोंको और लक्ष्मीके दो दो पयोधरों और कपोलोंपर एक बार ही कस्तूरीसे मकरिकाके आकारकी पत्ररेखाओं को लिखते हैं ॥ १ ॥

और भी—भगवान् विष्णुके मुखचन्द्रसे मनोहरभावसे प्रकट वायुकी मधुरतासे

धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ २ ॥

कुम्भकर्णव्यथादायी यो दशमुखं दिक्चक्रम् आक्रामतीत्यन्वयः । शङ्खवर्णनेनाऽऽङ्कि-वैशिष्ट्यं द्योतयति—मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी धीरोदात्तमनोहरः= मुरजितः=( मुरारेः, श्रीविष्णोरिति भावः ) मुखेन्दोः ( मुखचन्द्रस्य, मुखमिन्दु-रिव, तस्य, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः ) मधुरम् ( मनोहरं यथास्यात्तथेति क्रियाविशेषणम् ) उन्मीलन् ( उद्गच्छन् ) यो मरुत् ( वायुः ) तस्य या माधुरी ( माधुर्यम् , मधुरस्य भावः कर्म वा 'गुणवचनब्राह्म-णादिभ्यः कर्मणि चे'ति ष्यञ् , 'हलस्तद्धितस्ये'ति यलोपः 'षिद्गौरादिभ्यश्चेति ङीष् ) तया धीरः ( गम्भीरः ) उदात्तः ( उत्कृष्टः ) मनोहरः ( चित्ताकर्षकः, मनो हरतीति 'हरतेरनुद्यमनेऽच्' इत्यच्प्रत्ययः ) । तादृशः पाञ्चजन्यध्वनिः=विष्णुशङ्खध्वानः, त्वां=सामाजिकं जनम् , आकल्पं=ब्रह्मदिनपर्यन्तं, कल्पात् आ 'आङ्मर्यादाऽभि-विध्योः' इति अव्ययीभावसमासः । 'कल्पः शास्त्रे विधौ न्याये संवर्ते ब्रह्मणो दिने ।' इति कोशः । 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।' इति वचनाद्ब्रह्मदिनं च चतु-र्युगसहस्रपरिमितं बोध्यम् । सुखयतु=आनन्दयतु ।

पाञ्चजन्यध्वनिं वर्णयति—लीलेति । लीलालङ्घितमेघनादविभवः = लीलया ( अनायासेन ) लङ्घितः=( अतिक्रान्तः ) मेघनादस्य ( अभ्रगर्जितस्य, पक्षान्तरे इन्द्रजिदपरपर्यायस्य मेघनादनामकस्य रावणात्मजस्य राक्षसस्येत्यर्थः ) विभवः ( प्रभावः ) येन सः 'अनेकमन्यपदार्थे' इति बहुव्रीहिसमासः । दानवदन्तिनां= दानवगजानां, दनोरपत्यानि पुमांसो दानवाः, 'तस्याऽपत्यम्' इत्यण् , 'तद्धितेष्व-चामादे'रित्यादिवृद्धिश्च । अत्र दानवपदं सुरविरोधित्वेन दैत्यराक्षसादीनामप्युपलक्ष-कम् । दानवा एव दन्तिनस्तेषां, 'मयूरव्यंसकादयश्चे'ति रूपकसमासः । कुम्भकर्ण-व्यथादायी=कुम्भेषु ( शिरः पिण्डेषु, 'कुम्भौ तु पिण्डौ शिरस' इत्यमरः । ) कर्णेषु ( श्रोत्रेषु च, पक्षान्तरे=कुम्भकर्णस्य=तन्नामकस्य रावणाऽनुजस्य राक्षसस्य ।

गम्भीर, उत्कृष्ट और चित्ताकर्षक पाञ्चजन्य शङ्खकी ध्वनि, सामाजिक सज्जन को कल्प पर्यन्त सुखी करे । अनायास मेघके गर्जनको अथवा मेघनाद राक्षसके प्रभावको अतिक्रमण करनेवाली और दानवरूप हाथियोंके मस्तकपिण्ड और कानोंको अथवा कुम्भ-कर्ण राक्षसको पीडा देने वाली जो पाञ्चजन्यध्वनि, दश दिशाओंको अथवा रावणको आक्रमण कर रहती है ॥ २ ॥

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन-
प्रोन्मीलत्कमनीय-लोचनकलाखेलन्मुखेन्दुद्युतिः ।

व्यथादायी=( पीडादायकः ) तीक्ष्णशब्दस्य मस्तकश्रोत्रपीडादायकत्वमनुभव-सिद्धमेव । व्यथां ददातीति तच्छीलः, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः, 'आतो युक् चिण्कृतो'रिति युगागमश्च । यः=पाञ्चजन्यध्वनिः, दशमुखं=दि-क्चक्रं=दशसंख्यकं दिङ्मण्डलं, पक्षान्तरे दशाननं रावणमित्यर्थः । आक्रामति=आक्रम्य वर्तते । अत्र भगवच्छङ्खस्य मेघगर्जिताऽतिशायित्वमसुराणां शिरः=श्रोत्रो-द्वेजकत्वं दिक्चक्राक्रामकत्वं च द्योत्यते । एवं च श्लेषमहिम्नाऽत्र नाटके मेघनाद-प्रमापलक्षणं कुम्भकर्णव्यथनं दशवदनप्रमथनं च धीरोदात्तनायकस्य भगवतः श्रीरामस्य नान्दीरूपेण सूच्यते । तदुक्तं नाट्यप्रदीपे नान्दीलक्षणप्रस्तावे—'आशी-र्नमस्क्रियावस्तुनिर्देशाऽन्यतमा मता ।' इति । शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

पुनरपि विष्णुं वर्णयति—नाभीति । नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाऽऽकर्ण-नप्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः मधुकैटभौ सक्रोधम् अम्बुधेः सुतां सकरुणस्नेहं सरोजवसतिं सोत्प्रासप्रणयं पश्यन् हरिः वः पायादित्यन्वयः ।

नाभीपद्मेत्यादिः=नाभ्यां ( तुन्दकूप्यां, 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ॥' इति मेदिनी । स्त्रीत्वविव-क्षायां 'कृदिकारादक्तिनः' इति ङीष् ) यत् पद्मं ( कमलम् ) तत्र वसन् ( वासं कुर्वन् ) यश्चतुर्मुखः ब्रह्मा तस्य मुखैः आननैः उद्गीतः ( गान्धारग्रामेण कृतगानः ) यः स्तवः ( स्तोत्रम् ) तस्याऽऽकर्णनेन ( श्रवणेन ) प्रोन्मीलन्ती ( विकसती ) कमनीये ( सुन्दरे ) ये लोचने ( नेत्रे ) तयोर्या कला ( कान्तिः ) तया खेलन्ती ( क्रीडन्ती ) मुखेन्दोः ( मुखचन्द्रस्य ) द्युतिः ( कान्तिः ) यस्य सः । वक्ष्यमाणस्य हरिशब्दस्य विशेषणमेतत् । मधुकैटभौ=मधुकैटभनामानावसुरौ । सक्रोधं=सकोपं, क्रोधेन सहितं यथा स्यात्तथेति 'पश्यन्निति क्रियापदस्य विशेषणमेवमग्रेऽपि । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्ये'ति सहस्य स भावः । अम्बुधेः=समुद्रस्य, अम्बूनि धीयन्तेऽत्रेति अम्बुधिस्तस्य, 'कर्मण्यधिकरणे चे'ति किप्रत्ययः । सुतां=पुत्रीं, लक्ष्मीमित्यर्थः । सकरुणस्नेहं=दयाप्रणयसहितं यथा स्यात्तथा पश्यन्=तथा सरोजवसतिं=कमलवासिनं, ब्रह्माणमित्यर्थः । सरोजे वसतिर्यस्य स सरोजवसतिस्तम् । 'सप्तमी विशेषणे बहुव्रीहौ' इत्यत्र सप्तमीति पदज्ञापितो

नाभि कमलमें रहनेवाले ब्रह्माजीके मुखोंसे उद्गीत स्तुतिके श्रवणसे विकसित सुन्दर नेत्रोंकी कान्तिसे क्रीडा करने वाली मुखचन्द्रकी कान्तिसे सम्पन्न हरि, मधु और कैटभको

सक्रोधं मधु-कैटभौ सकरुणस्नेहं सुतामम्बुधेः
सोल्लासप्रणयं सरोजवसतिं पश्यन् हरिः पातु वः ॥ २ ॥

( नान्द्यन्ते )

**सूत्रधारः**—( परितो विलोक्य। सहर्षम् ) अये, कथममी निजवदनशार-

---

व्यधिकरणबहुव्रीहिः। सोल्लासप्रणयम् = अधिकहास्यप्रेमसहितं यथास्यात्तथा। पश्यन् = विलोकयन्, हरिः = भगवान्विष्णुः वः = युष्मान्, सामाजिकजनानिति भावः। पातु = रक्षतु। अत्र पात्रभेदेन भगवद्दर्शनभेदस्यौचित्यं समाधीयते। पुरा क्षीरसागरशायिनो हरेः कर्णमलान्मधुकैटभनामानावसुरौ समजायेताम्। तौ च हरेर्नाभिकमलस्थितं चतुर्वदनं हन्तुं यदा प्रारभेतां तदा स हरिं प्रबोधयितुं योगनिद्रां तुष्टाव। ततः प्रबुद्धो हरिस्तौ जघानेति मार्कण्डेयपुराणस्थं वृत्तमिहाऽनुसन्धेयम्। अत्र मुखेन्दुद्युतिरित्यत्रोपमाऽलङ्कारः। अत्र पद्यद्वितयेन द्वादशपदात्मिका नान्दी प्रतिपादिता। नान्दी लक्षणं यथा—साहित्यदर्पणे—

'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥'
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी। पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥'

इति। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

नान्द्यन्त इति। नान्द्या अन्ते = अवसाने।

सूत्रधार इति। नाटकस्य सूत्रं = व्यवस्थां धारयतीति सूत्रधारः, 'कर्मण्यण्' इत्यण्। यथाऽऽह तल्लक्षणं भरतमुनिः—

'नाट्यस्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम्।
रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः ॥' इति।
'सूत्रधारः पठेन्नान्दीं मध्यमस्वरमास्थितः।'

इति भरतमुनिवचनान्नान्दीपाठकर्ताऽपि सूत्रधार एव प्रतीयते।

परित इति। सहर्षं = हर्षेण सहितं यथा तथेति क्रियाविशेषणं सानन्दमित्यर्थः। 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्ये'ति सहस्य स भावः।

---

क्रोधके साथ, समुद्रकी पुत्री लक्ष्मीको करुणा और प्रेमके साथ और कमलासन ब्रह्माजीको अधिक हास्य और प्रेमके साथ देखते हुए हरि आप लोगोंकी रक्षा करें ॥ २ ॥

( नान्दीके अन्तमें )

**सूत्रधार**—( चारों ओर देखकर। हर्ष पूर्वक ) अरे! शरद ऋतुके कमलके सदृश

दारविन्दनर्त्तितगिरिनन्दिनीनयनखञ्जनस्य निखिलमुनिजनहृदयरञ्जनस्य विकटजटापटलोत्सङ्गताण्डवितगङ्गातरङ्गनिकरस्य मन्दाकिनीचन्दनल-लाटिकायमानमुकुटोपनीतनूतनसुधाकरस्य त्रिभुवननलिननिर्माणनूतनवि-

---

निजवदनेत्यादिः। निजम् ( आत्मीयम् ) यद्वदनं = ( मुखम् ) तदेव शारदार-विन्दं = ( शरदृतुकमलम् ) तेन नर्तिते ( भ्रामिते ) गिरिनन्दिन्याः = ( पार्वत्याः ) नयने = ( नेत्रे ) एव खञ्जनौ = ( खञ्जरीटौ पक्षिविशेषौ ) येन तस्य शङ्करस्य विशेषणमेतत्। एवमग्रेऽपि। पार्वत्या सप्रणयं निरीक्षितस्येति भावः। 'खञ्जरीटस्तु खञ्जन' इत्यमरः। नयनयोः खञ्जनारोपाद्रूपकालङ्कारः। निखिलमुनिजन-हृदयरञ्जनस्य = निखिलाः ( समस्ताः ) ये मुनिजनाः ( ऋषिजनाः ) तेषां हृदय-रञ्जनस्य ( चित्ताह्लादकस्य ), समाधिविषयत्वादिति भावः। विकटेत्यादिः = विकटं ( भीतिजनकम् ) यत् जटापटलं ( सटासमूहः ) तस्योत्सङ्गे ( अङ्के, लक्षणया मध्य-भाग इत्यर्थः। ताण्डवितः ( नर्तितः ) गङ्गातरङ्गनिकरः ( भागीरथीवीचिसमूहः ) येन तस्य। मन्दाकिनीत्यादिः = मन्दाकिन्याः ( सुरदीर्घिकायाः ) चन्दनललाटि-कायमानः = ललाटभवोऽलङ्कारो ललाटिका, 'कर्णललाटात्कनलङ्कारे' इति कन्, स्त्री-त्वं लोकात्। टापि 'प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः' इतीत्वम्। 'पत्रपाश्या ललाटिके'त्यमरः। चन्दनरचिता ललाटिका चन्दनललाटिका, 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्' इति मध्यमपदलोपी समासः। चन्दनलला-टिकावदाचरन् चन्दनललाटिकायमानः ( चन्दननिर्मितललाटभूषणवदाचरन् ) 'कर्तुः क्यङ् सलोपश्चे'ति क्यङन्ताल्लटः शानच्। चन्दनललाटिकायमानो मुकुटे ( किरीटे ) उपनीतः ( प्रापितः ) नूतनः ( नवीनः बाल इति भावः ) सुधाकरः ( चन्द्रः ) येन, तस्य। त्रिभुवननलिननिर्माणनूतनविसाऽङ्कुरस्य = त्रयाणां भुवनानां समाहारस्त्रिभुवनं, लोकत्रयम्।

'तद्धितार्थोत्तरपदसमाहारे चे'ति समासस्तस्य 'संख्यापूर्वो द्विगुः' इति द्विगु-संज्ञा ततः 'पात्राद्यन्तस्य ने'ति स्त्रीत्वाऽभावः। त्रिभुवनमेव नलिनं ( कमलम् ) त्रिभुवननलिनं, 'मयूरव्यंसकादयश्चे'ति रूपकसमासः। त्रिभुवननलिनस्य निर्माणे ( रचनायाम् ) नूतनविसाङ्कुरस्य ( नवीनमृणालाऽङ्कुरस्य ) एतेन भग-

---

अपने मुखसे खञ्जन पक्षियोंके तुल्य पार्वतीके नेत्रोंको नृत्य करानेवाले, समस्त मुनिजनोंके हृदयके आह्लादक, भीतिजनक अपने जटासमूहके मध्य भागमें गङ्गातरङ्गके समूहका ताण्डव नृत्य कराने वाले, गङ्गाजीके चन्दन निर्मित ललाटभूषणके सदृश आचरण करने वाले बालचन्द्रको मुकुटमें रखनेवाले और त्रिभुवन रूप कमलकी रचनामें नवीन मृणालके

साङ्कुरस्य भगवतः शङ्करस्य यात्रायां परिमिलिता एव पारिषदाः । तदे-तानुपगम्य निजकलाविलोकनप्रसादाय तावदभ्यर्थयामि । (विमृश्य) अथवा किमभ्यर्थनया । यतः—

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् ।

---

यच्छङ्करस्य जगत्कर्तृत्वं शुक्लवर्णत्वं प्रतिपाद्यते । भगवतः = षड्विधैश्वर्यसम्पन्नस्य भगमस्ति यस्य स भगवान्, तस्य 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुप् 'मादुप-धायाश्च मतोर्वोऽयवादिभ्य' इति मस्य वः ।

'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥'

इति विष्णुपुराणम् । 'भगं श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु ।' इत्यमरः ।

यद्वा—उत्पत्तिं च स्थितिं चैव लोकानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इति भगवच्छब्दनिर्वचनाच्छ्लोकोत्पत्त्यादिवेदितुरित्यर्थः ।

शङ्करस्य = शिवस्य, यात्रायां = पूजनोत्सवे, 'यात्रा देवार्चनोत्सव' इति विश्वः । पारिषदाः = सभ्याः, परिषदि (समायाम्) साधवः 'परिषदोण्य' इत्यत्र 'परिषद' इति योगविभागाण्ण्योऽपि । परिमिलिता एव = सम्मिलिता एव । तत् = तस्मात् (हेतोः) तच्छब्दप्रतिरूपकमव्ययमेतत् । एतान् = पारिषदान् । निजकला-विलोकनप्रसादाय = निजस्य (स्वस्य) या कला (शिल्पम्, हस्ताद्यैरर्थसूचनारूपोऽभिनयव्यापार इति प्रकृतार्थः) तस्या विलोकने (दर्शने) प्रसादाय (अनु-ग्रहाय) । 'कला शिल्पे कालभेदेऽपी'त्यमरः । तावदिति वाक्यालङ्कारे । अभ्यर्थ-यामि = संप्रार्थये । 'अर्थ उपयाच्ञायाम्' इति चौरादिकधातोरात्मनेपदित्वेनाऽभ्य-र्थनमभ्यर्थं इति 'भावे' इति घञ् । अभ्यर्थं करोमीति 'तत्करोति तदाचष्ट' इति णिजन्ताल्लट् परस्मैपदम् । विमृश्य = विचिन्त्य । अभ्यर्थनया = प्रार्थनया । 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिका' इति किं योगे तृतीया यतः = यस्मात् (हेतोः), 'पञ्चम्यास्तसिल्' इति तसिल् ।

आकारेणेति । षट्पदा आमोदेन गर्भस्थं केतकीपुष्पम् इव चतुरा आकारेणैव

---

साङ्कुर रूप भगवान् शङ्करकी यात्रामें बैठे ये सभासद सम्मिलित ही होगये । इसलिये इन लोगोंके पास जाकर अपनी अभिनयकलाके दर्शनमें अनुग्रह करनेके लिए मैं प्रार्थना करता हूं । (विचार कर) अथवा प्रार्थनाकी क्या आवश्यकता है ? क्योंकि—

जैसे भ्रमर सुगंधिसे ही अभ्यन्तरस्थित केतकी पुष्पको जानते हैं उसी तरह निपुण

गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥ ५ ॥

(विलोक्य । सहर्षम्) नूनमेतदभिसन्धानादेव सामाजिक-समाजादितोऽभिवर्त्तते सखा मे रङ्गतरङ्गः ।

(प्रविश्य)

नटः—भाव ! इदं मन्मुखेनैव भवन्तमुदीरयन्ति सामाजिकाः । यत्

परेङ्गितं तर्कयन्तीत्यन्वयः । षट्पदाः = भ्रमराः षट् पदानि येषां ते, 'द्विरेफपुष्पलिङ्भृङ्गषट्पदभ्रमराऽलयः ।' इत्यमरः । आमोदेन = सौरभेण, गर्भस्थम् = अभ्यन्तरस्थं, लोचनाऽगोचरभूतमिति भावः । केतकीपुष्पमिव = केतकीकुसुममिव, चतुराः = निपुणा जनाः, आकारेणैव = आकृत्यैव कथनं विनैवेति भावः । परेङ्गितम् = परस्य (अन्यस्य) इङ्गितं (हृदयस्थमभिप्रायम्) तर्कयन्ति = ऊहन्ते । यथा भ्रमरा दर्शनं विनाऽभ्यन्तरस्थं केतकीपुष्पं जानन्त्येवमेव विदग्धा जना अनभिधानेऽप्याकृत्यैव पराऽभिप्रायमूहन्त इति भावः । अत्र दृष्टान्ताऽलङ्कारः । तल्लक्षणं यथा साहित्यदर्पणे—'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।' इति अनुष्टुब्वृत्तम् ॥ ५ ॥

नूनमिति । नूनं = निश्चयेन, 'नूनं तर्केऽर्थनिश्चये' इत्यमरः । एतदभिसन्धानात् = एतस्य (पूर्वोक्तश्लोकाऽर्थस्य) अभिसन्धानात् (अभिज्ञानात्) । सामाजिकसमाजात् = समाजं समवयन्तीति सामाजिकाः, 'समवायान्समवेती'ति ठक्, 'ठस्येकः' इतीकः 'किति चे'त्यादिवृद्धिः, यद्वा समाजं रक्षन्तीति सामाजिकाः 'रक्षती'ति ठक् । 'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते ।' इत्यमरः । सामाजिकानां (सभ्यानाम्) समाजात् (सङ्घात्) । इतः = अस्मिन् स्थाने, 'आद्यादिभ्य उपसंख्यानम्' इति सार्वविभक्तिकस्तसिः । मे = मम, 'ते मयावेकवचनस्य' इति ममादेशः । सखा = मित्रम्, अभिवर्त्तते = सम्मुखमागच्छति ।

नट इति । नटः = शैलूषः, 'रङ्गाऽवतारी शैलूषो नटो भरतभारती ।' इत्यमरः । भाव = विद्वन् 'भावो विद्वान्' इत्यमरः. नटस्य सूत्रधारं प्रत्युक्तिरियम् । इदम् = एतत् 'अये भरताधिराजे' इत्याकारकं वाक्यमिति भावः । मन्मुखेन = मदाननेन, मद्द्वारेति भावः । सामाजिकाः = सभ्याः । उदीरयन्ति = कथयन्ति । उदीरितं प्रति-

जन आकारसे ही दूसरेके अभिप्रायकी तर्कना करते हैं ॥ ५ ॥

(देखकर । हर्षके साथ) निश्चय इस बातको जानकर ही मेरे मित्र रङ्गतरङ्ग सभ्योंके समाजसे इस ओर आ रहे हैं ।

(प्रवेश कर)

नट—विद्वन् ! सभ्यलोग मेरे द्वारा ही आपको यह कहते हैं । जो कि—'अरे नट

किल 'अये भरताधिराज—' ( इत्यर्धोक्ते । )

सूत्रधारः—( कर्णौ पिधाय ) अहह । असमञ्जसम् असमञ्जसम् । भवतु । कार्यं तावदाकर्णयामि ।

नटः—भाव ! अधुना मयैव भवत्सकाशादाकर्णनीयं किमिदमसमञ्जसमिति ।

सूत्रधारः—नन्विदमेव । यत् किल नन्दति ज्यायसि कनीयसि राज-

---

पादयति—अये इत्यादि । अये=सम्बोधनद्योतकमव्ययमिदम् । भरताऽधिराज=हे नटेन्द्र । अधिको राजाऽधिराजः, 'कुगतिप्रादयः' इति समासः 'राजाऽहःसखिभ्यष्टच्' इति समासाऽन्तष्टच् । भरतानामधिराजस्तत्सम्बुद्धौ । 'भरता इत्यपि नटाः' इत्यमरः ।

स्वस्तुतिमसहमानः सूत्रधारो वाक्यमसंपूर्णमेवाऽऽक्षिपति कर्णौ पिधायेति । कर्णौ=श्रोत्रे, पिधाय=आच्छाद्य अश्रवणमभिनीयेति भावः । पिधायेत्यत्र 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो'रिति भागुरिमतेनाऽल्लोपः । अहहेति खेदद्योतकमव्ययम् , 'अहहेत्यद्भुते खेदे' इत्यमरः । असमञ्जसम्=अनुचितम् , सम्भ्रमे द्विरुक्तिः । सम्यगञ्जोऽस्मिन्निति समञ्जसम् , 'अच्प्रत्यन्ववपूर्वात्सामलोम्नः' इत्यत्र योगविभागादच् । यद्वा संगतमञ्जसा तत्त्वमस्मिन्निति 'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति ह्रस्वत्वम् । 'अभ्रेषन्यायकल्पास्तु देशरूपं समञ्जसम् । 'इत्यमरः । न समञ्जसमसमञ्जसम् । स्वस्य कृतस्तुति प्रतिपादनेनाऽलं, कार्यं श्रोतव्यमिति भावः ।

नट इति । भवत्सकाशात्=भवत्समीपात् ।

सूत्रधार इति । ननु=अवधारणाऽर्थकमव्ययमिदं, 'प्रश्नाऽवधारणाऽनुज्ञाऽनुनयामन्त्रणे ननु ।' इत्यमरः । ज्यायसि=अतिशयेन प्रशस्यो वृद्धो वा ज्यायान् , तस्मिन् । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुनि 'ज्य च' इति 'वृद्धस्य चेति वा ज्यादेशः 'ज्यादादीयसः' इत्यात्वम् । 'वृद्धप्रशस्ययोर्ज्यायान्' इत्यमरः । नन्दति=समृद्धिं भजति सति, विद्यमान इति भावः । 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । कनीयसि=अतिशयेन यून्यल्पे वा, मयीति शेषः । ईय-

---

राज' ( ऐसा आधा कहने पर )

सूत्रधार—( कानोंको मूंदकर ) अहह ! अनुचित है, अनुचित है । अच्छा पहले कार्य सुनाता हूँ ।

नट—विद्वन् ! इस समय मुझे ही आपसे सुनना है कि यह क्या अनुचित हुआ ?

सूत्रधार—अरे ! यही कि जो ज्येष्ठकी उपस्थितिमें कनिष्ठ ( मुझ ) में राज्यपदका

पदमुपन्यस्यते । अहं हि भरतमात्रक एव । मम पुनरग्रजन्मा गुणाराम-नामा राजपदभाजनम् ।

नटः—कीदृग्गुणस्ते गुणारामः ? ।

सूत्रधारः—ननु नाम्नैव दत्तोत्तरम् ।

नटः—( विहस्य ) कथं नाम्नैव गुणावगमः ?

सूत्रधारः—अथ किम् ।

गुणग्रामाविसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ५ ॥

---

सुन्प्रत्यये 'सुवाऽऽप्ययोः कनन्यतरस्याम्' इति कनादेशः । राजपदं = भरताऽधिराज-पदम् , उपन्यस्यते = प्रयुज्यते । मयि भरतराजपदं यत्प्रयुज्यते तदेवाऽसमञ्जसमिति भावः । तत्र कारणमाह—अहमिति । अहं = सूत्रधार इति । भरतमात्रक एव = केवलं नट एव । तर्हि को भरताऽधिराज इति चेत्तत्राऽऽह—ममेति । अग्रजन्मा = ज्येष्ठः । राजपदभाजनं = भरताऽधिराजेतिपदपात्रं भाजनपदस्याऽजहल्लिङ्गत्वेन नपुंसकलिङ्गत्वम् । नट इति । कीदृग्गुणः = कीदृक् ( कीदृशः ) गुणो यस्य सः । सूत्रधार इति । नामाऽन्वर्थतां निदर्शयति—गुणेति । हि महात्मनां नामाऽपि गुणग्रामाऽविसंवादि, यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ।

हि = यस्मात्कारणात् , 'हि हेताववधारणे' इत्यमरः । महात्मनां = महानुभावानां, महान् आत्मा येषां, तेषाम् । नामाऽपि = अभिधानमपि, गुणग्रामाऽविसंवादि = गुणानां ( दयादाक्षिण्यादीनाम् ) ग्रामः ( समूहः ), तस्य अविसंवादि ( अव्यभिचारि ), भवतीति शेषः । अस्तिर्भवन्तीत्यपरः प्रयुज्यमानोऽप्यस्ति' इति महाभाष्यम् । न विसंवदतीति तच्छीलं, 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छील्ये णिनिः । उक्तमर्थं दृष्टान्तोपन्यासेन साधयति—यथेति । यथा = येन प्रकारेण, 'प्रकारवचने थाल्' इति थाल्प्रत्ययः । सुवर्ण–श्रीखण्ड–रत्नाकर–सुधा-

---

उपन्यास किया जाता है । क्योंकि मैं केवल नट हूं । गुणाराम नाम वाले मेरे बड़े भाई 'भरताऽधिराज' पदके पात्र हैं ।

नट—आपके गुणाराम कैसे गुणवाले हैं ?

सूत्रधार—नामने ही उत्तर दे दिया है ।

नट—( हंसकर ) क्या नामसे ही गुणका ज्ञान होता है ?

सूत्रधार—और क्या ?

सुवर्ण (सोना), श्रीखण्ड (चन्दन), रत्नाकर ( समुद्र ) और सुधाकर ( चन्द्र ) इनके समान महानुभावोंका नाम भी गुणसमुदायसे व्यभिचरित (विरुद्धार्थवाला) नहीं होता है ॥

अपि च। किमिदं गुणारम्भे कथं नाम्नैव गुणाभिराम इत्युच्यते? यः खलु रतिजनकस्य राज्ञः सदसि हरचापारोपणं नाम रूपकमभिनीय परितुष्टेन राज्ञा समर्पितां रङ्गविद्याधरख्यातिं प्रियामिव समासादितवान्।

नटः—स पुनः सम्प्रति कं देशमभिनन्दयति?

सूत्रधारः—केनापि दाक्षिणात्येन नटापसदेन ममैवेदं गुणारामेति नामेति वदता रङ्गविद्याधरख्यातिरपहृता। तदाकर्ण्य गुणारामस्तामेव

---

कराः=स्वर्ण-चन्दनसमुद्र-चन्द्राः' सुवर्णं च श्रीखण्डश्च रत्नाकरश्च सुधाकरश्चेति विग्रहे 'चार्थे द्वन्द्व' इतीतरेतरयोगद्वन्द्वः। एतदुक्तं भवति शोभनो वर्णो यस्य तत् सुवर्णमिति व्युत्पत्त्या सुवर्णेतिनाम स्वर्णस्य कृते न विसंवादि एवं श्रियः (कान्तेः) खण्डः (अंशः) इति व्युत्पत्त्या श्रीखण्डेति नाम चन्दनस्य, रत्नानाम् (मणीनाम्) आकरः (खनिः, आश्रम इति भावः) इति व्युत्पत्त्या रत्नाकरेति नाम समुद्रस्य, सुधायुक्ताः (अमृतयुक्ताः) कराः (किरणाः) यस्य स इति व्युत्पत्त्या सुधाकरेति नाम चन्द्रमसः कृते न विसंवादि। इत्थमेव मदग्रजन्मनो गुणारामस्य नामाऽर्थवत्त्वाद्गुणग्रामाऽविसंवाद्येवेति भावः। विद्याशिल्पादिगुणानामारामरूपत्वात् मदग्रजे गुणारामे नामधेयमन्वर्थं वर्तत इति भावः॥ ५॥

नाम्नोऽन्वर्थत्वं प्रतिपादयति—य इति। यः=गुणारामः, रतिजनकस्य=तन्नामधेयस्य। सदसि—सभायाम्। रूपकं=दृश्यकाव्यविशेषम्। अभिनीय=अभिनयं विधाय। समर्पितां=प्रदत्तां, रङ्गविद्याधरख्यातिं='रङ्गविद्याधरे' त्याकारिकां प्रसिद्धिं। प्रियामिव=स्ववल्लभामिव। समासादितवान्=प्राप्तवान्। नट इति। सः=गुणारामः। अभिनन्दयति=आनन्दयति।

सूत्रधार इति। केनाऽपि=अनिर्दिष्टनामधेयेनाऽपि। दाक्षिणात्येन=दक्षिणदिग्भवेन, दक्षिणा भवो दाक्षिणात्यस्तेन, 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक् 'किति चे' त्यादिवृद्धिश्च। नटाऽपसदेन=शैलूषाऽधमेन, अपकृष्टमपकृष्टे वा सीदतीत्यपसदः। अपोपसर्गपूर्वकात् 'षद्लृ विशरणगत्यवसादनेषु' इति धातोः नन्दि-

---

और भी—गुणके आरम्भमें कैसे नामसे ही गुणका ज्ञान होता है यह क्या कहते हो? जिन्होंने रतिजनक नामके राजाकी सभामें 'हरचापारोपण' नामक रूपक (दृश्य काव्य) का अभिनय कर सन्तुष्ट राजासे समर्पित 'रङ्गविद्याधर' ऐसी पदवी प्रियाकी तरह पाई है।

नट—इस समय वे किस देशको आनन्दित कर रहे हैं?

सूत्रधार—'यह गुणाराम नाम मेरा ही है' ऐसा कहनेवाले किसी दाक्षिणात्य अधम नटने रङ्गविद्याधर की ख्याति (प्रसिद्धि) का अपहरण किया। यह सुनकर गुणारा-

दिशं प्रचलितः । अधुना च श्रुतमस्माभिः यत् किल सुकण्ठनाम्ना गायकेन सह मैत्रीं विधाय दाक्षिणात्यानां भूभुजां सदसि तेन सह रङ्गसङ्गरमुपसङ्क्रान्तवानिति ।

नटः—अहो ! महानुपक्रमः ।

सूत्रधारः—उचितमिदम् । यतः—

कीर्त्तिं मृणालकमनीयभुजामनिद्र-
चन्द्राननां स्मितसरोरुहचारुनेत्राम् ।

---

प्रदिपचादिभ्योऽस्युणिन्यथ 'इत्यच् । निहीनोऽपसदो जाल्मः क्षुल्लकश्चेतरश्च सः । इत्यमरः । गायकेन = 'सह' तिपदेन योगे 'सहयुक्तेऽप्रधान' इति तृतीया । मैत्रीं = सख्यं, मित्रस्य भावः । कर्म वा मैत्री' ताम् । गुणवचनब्राह्मणादिभ्यः कर्मणि'तिष्यञ्' 'षिद्गौरादिभ्यश्चेति ङीष् 'हलस्तद्धितस्ये'ति यलोपः । रङ्गसङ्गरं = रङ्गे (नृत्ये) सङ्गरं (युद्धम्) स्वोत्कर्षख्यापनार्थं स्पर्द्धात्मकं विवादमिति भावः । 'रङ्गो नृत्ये रणक्षिता' विति विश्वः । अत्र गुणारामपदेन रामः, रतिजनकपदेन जनकः दाक्षिणात्यपदेन रावणः, ख्यातिपदेन सीता सुकण्ठपदेन सुग्रीवः सूच्यते इति यथायथं बोद्धव्यम् । तथा चैतैः पदैरभिनीयमानकथासंसूचनं भवतीत्यपि ध्येयम् ।

नट इति । अहो=विस्मयद्योतकमव्ययमिदम् । 'अहो ही च विस्मय 'इत्यमरः । महान् = विशालः उपक्रमः = कार्यारम्भः ।

गुणारामकर्तृकमुपक्रममभिनन्दयति—कीर्तिमिति । मृणालकमनीयभुजाम् अनिद्रचन्द्राननां स्मितसरोरुहचारुनेत्रां स्वां दयितामिव परैः अपहृतां कीर्तिं लब्धुं कः परम् उपक्रमं नाऽऽतनोतीत्यन्वयः ।

मृणालकमनीयभुजां=कमलदण्डसुन्दरबाहुं मृणाले इव कमनीयौ 'मृणालकमनीयौ 'उपमानानि सामान्यवचनैरिति समासः । मृणालकमनीयौ भुजौ यस्याः सा मृणालकमनीयभुजा तां दयिताविशेषणमेवं परत्राऽपि । तथा चैतानि विशेषणानि कीर्तिपक्षेऽपि योज्यानि । अनिद्रचन्द्राननाम् = अनिद्रः (प्रकाशमानः) चन्द्र इवाऽऽननं (मुखम्) यस्याः सा तां, पूर्णचन्द्रमुखीमिति भावः स्मितसरोरुहचारु-

---

चली दिशाको चले गये हैं । इस समय हमने सुना है कि उन्होंने सुकण्ठ नामके गवैयेके साथ मित्रता कर दाक्षिणात्य राजाओंकी सभामें उसके साथ रङ्गयुद्धका आरम्भ किया है ।

नट—आश्चर्य है । महान् आरम्भ किया है ।

सूत्रधार—यह उचित है । क्योंकि—

कमलदण्डोंके सदृश बाहुओंसे युक्त, पूर्ण चन्द्रतुल्य मुखवाली, विकसित कमलोंके

ज्योत्स्नास्मितामपहृतां दयितामिव स्वां,
लब्धुं न कः परमुपक्रममातनोति ॥ ६ ॥

तत्कथय कार्यम् ।

नटः—इदमेव । यत् किल त्वयाभिनीयमानमवलोकयाम इति ।

प्रत्यङ्कमङ्कुरितसर्वरसावतार-
नव्योल्लसत्-कुसुमराजिविराजिबन्धम् ।

---

नेत्रां=स्मिते (विकसिते) ये सरोरुहे (कमले) ते इव चारुणी (सुन्दरे) नेत्रे (नयने) यस्याः सा ताम् । एतादृशीं स्वाम्=आत्मीयां दयितामिव=कान्तामिव परैः=अन्यैः अपहृताम्=अन्यत्र नीतां कीर्तिं=समज्ञां 'यशः कीर्तिः समज्ञा चे'त्यमरः । लब्धुं=पुनः=प्राप्तुं कः=जनः 'परं महान्तम् उपक्रमं=कार्यारम्भं' न आतनोति=नो विदधाति सर्वोऽपि करोत्येवेति भावः । परैरपहृतायाः कान्ताया इव कीर्तेः प्रत्युद्धाराय सर्वोऽपि जनः प्रयतत एवेति तात्पर्यम् । अत्रोपमाऽलङ्कारः । वसन्ततिलका वृत्तं तल्लक्षणं यथा—

'उक्ता वसन्ततिलका तभजा जगौ गः ।' इति । अत्र उपमानभूताया दयितायाः अपहारोपन्यासेन भाविजानकीहरणं जानकीप्रत्यावर्तनार्थं च परमो रामोपक्रमश्च सूच्यते ॥ ६ ॥

नट इति । अभिनीयमानं=क्रियमाणाऽभिनयं, रूपकविशेषमिति भावः ।

प्रत्यङ्कमिति । प्रत्यङ्कम् अङ्कुरितसर्वरसाऽवतारं नव्योल्लसत्कुसुमराजिविराजिबन्धं घर्मेतरांशुम् इव वक्रतया अतिरम्यम् अतिमञ्जुलसंविधानं नाट्यप्रबन्धम् (अवलोकयामः) इत्यन्वयः । प्रत्यङ्कम्=अङ्कमङ्कं प्रति वीप्साऽर्थेऽव्ययीभावः । अङ्कुरितसर्वरसाऽवतारम्=अङ्कुरितः (उत्पन्नः) सर्वरसानाम् (सम्पूर्णरसानां शृङ्गारादीनामिति भावः) अवतारः (आविर्भावः) यस्मिंस्तं, 'नाट्यप्रबन्धमित्यस्य विशेषणम्, एवं परत्राऽपि । 'अभिरामम्' इति पाठान्तरे—अङ्कुरितसर्वरसैरभिरामम् (मनोहरम्) इति योजना । नव्योल्लसत्कुसुमराजिविराजिबन्धं=नव्यानि (नूतनानि) उल्लसन्ति (प्रफुल्लन्ति) यानि कुसुमानि (पुष्पाणि) तेषां राजिः

---

समान नेत्रोंसे सम्पन्न-अपनी प्रियाके सदृश, दूसरोंसे अपहृत कीर्तिको पानेके लिए कौन उद्यम आरम्भ नहीं करता है ? ॥ ६ ॥

इसलिए कार्य बतलाओ ।

नट—यही है । आपसे अभिनय किये जानेवाले जिसे हम लोग देख लेंगे ।

प्रत्येक अङ्कमें सब (शृङ्गार आदि) रसोंसे युक्त, नवीन और विकसित होने वाले

घर्मेतरांशुमिव वक्रतयातिरम्यं
नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥ ७ ॥

सूत्रधारः—तत् कथं पुनरवधारणीयं किन्नामधेयं नाटकमिति । ( विमृश्य । सहर्षम् ) अये, कथमहं निजशिरः शेखरशयाल्वपि नीलोत्पलं रत्नाकरचपलवीचिमालापरिसरे विचारयामि । नन्विहैव श्लोकेऽष्टपङ्क्ति-

( पङ्क्तिः ) सेव विराजी ( शोभमानः ) बन्धः ( रङ्गरचना ) यस्मिंस्तम् । घर्मेतरांशुम् इव = चन्द्रमसम् इव, घर्मादितरो घर्मेतरः, अनुष्णः शीत इत्यर्थः । 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमी' ततः कैयटमते 'पञ्चमी भयेने'त्यत्र 'पञ्चमी'ति योगविभागात्समासः । भाष्यकारमते तु 'सह सुपे'ति समासः । घर्मेतरोंऽशुः ( किरणः ) यस्य सः' तम् । वक्रतया = चन्द्रपक्षे कुटिलतया नाट्यप्रबन्धपक्षे दुरूहतया, व्यञ्जनाबाहुल्येति भावः । अतिरम्यम् = अतिशयमनोहरम्' अतिमञ्जुलसंविधानम् = अतिमञ्जुलम् ( अतिशयमनोरमम् ) संविधानं ( रचना ) यस्मिंस्तम् । तादृशं नाट्यप्रबन्धं = नाट्यसूचितं काव्यम् , नाटकमिति भावः । 'अवलोकयामः' इति पूर्वस्य पदेन सम्बन्धः । पश्याम इत्यर्थः । प्ररोचनेयं तल्लक्षणं यथा—'अर्थोन्मुखीकारः प्रशंसातः प्ररोचना' उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७ ॥

सूत्रधार इति । नाट्यप्रबन्धस्य नामधेयनिर्देशाऽभावादूहते तदिति । अवधारणीयं = निश्चेयम् । किन्नामधेयं = किंनामकम् । किं नामधेयं यस्य तत् । विमृश्य = विचिन्त्य निजशिरःशेखरशयालु = निजशिरसः ( स्वमस्तकस्य ) यः शेखरः ( शिरोभूषणम् ) तत्र शयालु ( शयनशीलं, विद्यमानमिति भावः ) । 'शीङश्च' स्यालुच् । नीलोत्पलं = नीलकमलं, नीलं च तदुत्पलं 'विशेषणं विशेष्येण बहुलम्' इति समासस्तस्य 'तत्पुरुषः समानाऽधिकरणः कर्मधारय' इति कर्मधारयसंज्ञा । रत्नाकरचपलवीचिमालापरिसरे = रत्नाकरस्य ( समुद्रस्य ) चपला ( चञ्चला ) या वीचिमाला ( तरङ्गपङ्क्तिः ) तस्याः परिसरे ( प्रान्तभूमौ ) 'पर्यन्तभूः परिसर इत्यमरः । स्वसमीपस्थितं पदार्थमविभाव्य स्थानाऽन्तरेऽन्विष्यामीति कीदृशं मे मौढ्य-

पुष्पों की पङ्क्तिके तुल्य शोभित रङ्गरचनासे सम्पन्न, चन्द्रके सदृश कुटिलतासे अतिशय मनोहर और अतिसुन्दर रचनासे मनोरम नाटकको आपसे अभिनीत देख लेंगे ॥ ७ ॥

सूत्रधार—तो नाटकका क्या नाम है ? यह कैसे जानें ? ( गौर कर । हर्षके साथ ) अरे ! कैसे मैं अपने शिरके भूषणमें विद्यमान नीलकमलको भी समुद्रकी चञ्चलतरङ्ग पङ्क्तिके निकटमें है, ऐसा विचार कर रहा हूं । आठपङ्क्तिक्रमसे लिखित इसी श्लोकमें

क्रमाल्लिखिते स्फुटमस्ति, 'प्रसन्नराघवं नाम' इति।

**नटः**—( तमेव श्लोकं पठित्वा। सहर्षम् ) अहो, देव्याः कविकुलकुमुदविकासचन्द्रिकायाः प्रसादमहिमा सरस्वत्याः, यत्प्रसादादेवंविधाः कवीनां विचित्रमधुराः सूक्तयः समुल्लसन्ति।

**सूत्रधारः**—एवमेतत्। नन्वनेनैव कविनोक्तम्—

वाणि ! त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां

---

मिति भावः। नन्वित्यवधारणे। इहैव श्लोके=अस्मिन्नेव पद्ये। प्रसन्नराघवं=प्रसन्नः ( सीताप्रत्यानयनात्प्रसादयुक्तः ) राघवः ( रामः ) यस्मिन्निति प्रसन्नराघवपदं प्रकृतनाटकाऽभिधानं बोद्धव्यम्। तस्याऽभिधानं 'नामकार्यं नाटकस्य गर्भिताऽर्थप्रकाशकम्' साहित्यदर्पणकारस्येत्युक्तेरनुगुणं वेदनीयम्।

नट इति। कविकुलकुमुदविकासचन्द्रिकायाः=कवीनां ( कवयितॄणाम् ) कुलं ( समूहः 'सजातीयैः कुलम्' इत्यमरः ) तदेव कुमुदं ( कैरवम् ) तस्य विकासे ( प्रफुल्लत्वापादने ) चन्द्रिकायाः (कौमुदी तुल्यायाः इति भावः)। प्रसादमहिमा=अनुग्रहमहत्त्वम्। महतो भावो महिमा, 'पृथ्वादिभ्य इमनिज्वा' इतीमनिच्प्रत्ययः। एवं विधाः=एतादृशाः, एवं विधा ( प्रकारः ) यासां ताः। विचित्रमधुराः=विचित्राः ( वैचित्र्योपेताः चित्रकाव्यत्वेनेति भावः ) मधुराः ( मनोहराः )। समुल्लसन्ति=आविर्भवन्ति।

वाणीति। हे वाणि ! या त्वत्पदपद्मरेणुकणिका सतां स्वान्तभूमिं सम्प्राप्ता, सा एव इयं कविताऽऽख्या परिणता उज्जृम्भते। सूक्ताऽपदेशं यस्यास्तस्याः शिरःकम्पभ्रंशितपारिजातकलिकागुच्छे स्वकर्णेऽपि चिराय पदं धत्त इत्यन्वयः। हे वाणि=हे सरस्वति ! या त्वत्पदपद्मरेणुकणिका=त्वच्चरणकमलपरागमात्रा, पदे एव पद्मे पदपद्मे, रूपकसमासः, पदे पद्मत्वारोपाद्रूपकाऽलङ्कारः। तयोः पदपद्मयोः या रेणुकणिका कणतीति कणः, 'कण गतौ'विति धातोः पचाद्यच्, ततः स्वार्थे कन्। सतां=सहृदयानां, स्वान्तभूमिं=अन्तःकरणप्रदेशं, 'चित्तं तु चेतो हृदयं स्वान्तं

---

*प्रसन्नराघव 'नाम स्पष्ट आभासता है।

**नट**—( उसी श्लोकको पढ़कर। हर्षके साथ ) अहो ! कविकुलरूप कुमुदोंके विकासमें चन्द्रिका ( चांदनी ) के सदृश सरस्वतीका यह अनुग्रहमहत्त्व है। जिनके अनुग्रहसे कवियोंकी विचित्र और माधुर्यपूर्ण ऐसी सूक्तियां प्रकाशित होती हैं।

**सूत्रधार**—यह ठीक है। इसी कविने कहा है—हे सरस्वति ! आपके चरणकमलोंकी धूलिका जो लेश सज्जनोंकी चित्तभूमिमें प्राप्त होता है, वही कविताकलाके रूपमें परिणत

सम्प्राप्ता, कवितालता परिणता सैवेयमुज्जृम्भते।
त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरः-
कम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥ ८ ॥

( पुनर्विभाव्य ) मम पुनः कविकमलसद्मनि मुनौ वल्मीकजन्मनि मनः

हृन्मानसं मनः। 'इत्यमरः। सम्प्राप्ता = सङ्गता। सा एव प्राक्तनी = त्वत्पदपद्म-रेणुकणिका एव, इयं = साम्प्रतं विद्यमाना, कवितालता = काव्यवल्ली, परिणता = रूपान्तरं प्राप्ता सती, उज्जृम्भते = समुल्लसति, भारतीचरणकमलरेणुकणिकैव कवितालतोत्पादनं प्रति मूलकारणमिति भावः। सूक्ताऽपदेशं = सूक्तम् ( सुभाषि-तम् ) एव अपदेशः ( व्याजः ) यस्य तत्, एतादृशं यत्किसलयं = यस्याः ( कविता-लतायाः ) किसलयम् ( पल्लवम् ), 'पल्लवोऽस्त्री किसलयम्' इत्यमरः। शिरः-कम्पभ्रंशितपारिजातकलिकागुच्छे = शिरसः ( मस्तकस्य ) यः कम्पः ( वेपथुः सत्का-व्याकर्णनोत्तरमभिनन्दनाऽर्थं क्रियमाणः शिरः कम्प इति भावः ), तेन भ्रंशितः ( अवध्वंसितः ) पारिजातकलिकायाः ( कल्पवृक्षकोरकस्य ) गुच्छः ( स्तबकः ) यस्मात्तस्मिन्। एतादृशे त्वत्कर्णेऽपि = त्वच्छ्रवणेऽपि, चिराय = बहुकालं यावत्, अव्ययमिदं, 'चिराय चिररात्राय चिरस्याद्याश्चिराऽर्थकाः। 'इत्यमरः। पदं = स्थानं, 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु। 'इत्यमरः। धत्ते = धारयति। हे देवि! त्वच्चरणरेणुः सहृदयहृदयमाप्तः सन् कवितालतारूपेण परिणतो भवति। तस्याः कवितालतायाः पल्लवं च सूक्तपदभाजनं भूत्वा त्वदीयकर्णे पदं विधत्त इति भावः विचित्रं कविसूक्तं भगवती वाग्देव्यपि शृणोति शिरः कम्पेन अभिनन्दति चेति हृद-यम्। अत्र परिणामाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

पुनरिति। विभाव्य = विचार्य। कविकमलसद्मनि = कविप्रजापतौ, कमलं ( पद्मम् ) सद्म ( वासस्थानम् ) यस्य स कमलसद्मा ब्रह्मेति भावः। 'विरञ्चिः कम-लाऽऽसनः' इत्यमरः। कवीनां कमलसद्मा, तस्मिन्। वल्मीकजन्मनि = वाल्मीका-ज्जन्म यस्य स वल्मीकजन्मा, तस्मिन्। 'अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तर-पद' इति वामनाऽनुशासनाद्व्यधिकरणबहुव्रीहिः। कौतुकितं = सञ्जातकौतुकम-स्तीति शेषः। कुतुकमेव कौतुकं, तस्मिन्। 'प्रज्ञादिभ्यश्चे'ति स्वार्थेऽण्। कौतुकं

होकर प्रादुर्भूत होता है। सूक्तके छलसे जिस कविताकलाका पल्लव शिरके कम्पसे जहांसे पारिजातका कलिकागुच्छ गिर पड़ता है ऐसे आपके कानमें भी बहुत समय तक स्थान प्राप्त कर लेता है ॥ ८ ॥

( फिर विचार कर ) मेरा मन कवियों के ब्रह्मा वाल्मीकि मुनिमें कौतुकयुक्त है,

कौतुकितं यस्यैकमपि वदनारविन्दमासाद्य चतुर्मुखकमलवनविहारविनोद-मनुभवति भारती नाम राजहंसी।

नटः—एवमेतत्। त्रिभुवनाभोगेऽपि हि—

भास्वद्वंशावतंस-कीर्त्तिरमणी-रङ्गप्रसङ्गस्वनद्-
वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-

---

सञ्जातमस्येति कौतुकितं, 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः। यस्य = वाल्मीकेर्मुनेः। वदनारविन्दं = मुखकमलम्। भारती = सरस्वती। चतुर्मुखकमलवनविहारविनोदं = चत्वारि मुखानि (आननानि) एव कमलानि (पद्मानि) तेषां वनम् (उपवनम्) तस्मिन् विहारः (क्रीडा) तेन विनोदम् (कौतूहलम्)। एतेन चतुर्मुखादपि वाल्मीकेरुत्कर्षोऽतिशयो व्यज्यते।

नट इति। त्रिभुवनाऽऽभोगे = त्रिभुवनस्य (त्रिलोक्याः, स्वर्गमर्त्यपातालरूपाया इति भावः) आभोगे (परिपूर्णतायाम्)।

भास्वद्वंशेति। भास्वद्वंशावतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्वादित्रप्रथमध्वनिर्वल्मीकजन्मा मुनिर्विजयते। यद्वदनेन्दुमण्डलगलत्काव्याऽमृताऽब्धेः किमपि पीत्वा कविनूतनाऽम्बुदमयी कादम्बिनी आकल्पं वर्षतीत्यन्वयः।

भास्वद्वंशेत्यादिः = भास्वतः (सूर्यस्य) वंशे (कुले) वतंसः (अवतंसः, भूषणभूतः श्रीरामचन्द्र इति भावः। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इति भागुरिमतेनाऽल्लोपः) तस्य या कीर्तिः (समज्ञा) सैव रमणी (ललना, नटीति भावः) तस्या यो रङ्गप्रसङ्गः (नृत्याऽवसरः) तस्मिन् स्वनत् (शब्दायमानम्) यत् वादित्रं (वाद्यम्) तस्य प्रथमध्वनिः (आदिशब्दभूतः, लाक्षणिकोऽयमर्थः)। वल्मीकजन्मा = वल्मीकसम्भूतः, वाल्मीकिरिति भावः। वल्मीकात् (वामलूरात्) जन्म (उत्पत्तिः) यस्य सः। मुनिः = ऋषिः। विजयते = सर्वोत्कर्षेण वर्तते, विपूर्वात् 'जि जये' इति धातोः 'विपराभ्यां जे'रित्यात्मनेपदम्। वाल्मीकेरुत्कर्षं प्रदर्शयति—पीत्वेति। यद्वदनेन्दुमण्डलगलत्काव्याऽमृताऽब्धेः = यस्य (वाल्मीकेः) वदनम्

---

सरस्वती राजहंसी जिनके एक ही मुख कमलको पाकर ब्रह्माजीके चार मुखकमलरूप वनमें क्रीडाके विनोदका अनुभव करती है।

नट—यह ठीक है। तीन लोकों की परिपूर्णता में भी सूर्यकुलके भूषणभूत श्रीरामचन्द्रजीकी कीर्ति-नटीके नृत्यके अवसरमें शब्द करनेवाले बाजेके प्रथम शब्दके सदृश वाल्मीकि मुनि अतिशय उत्कर्षको प्राप्त करते हैं। जिनके मुखरूप चन्द्रमण्डलसे गिरते

ऽयाकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥ ९ ॥

( विमृश्य ) मम तु रामचन्द्र एव निर्भरमानन्दितोऽयं चित्तचकोरः यत् कीर्त्तिचन्द्रिकाचुम्बितोऽयं वाल्मीकेरपि सारस्वतसागरः समुल्लास ।

सूत्रधारः—इत्थमिदम् ।

चन्द्रे च रामचन्द्रे च नारीणां च दृगञ्चले ।

( मुखम् ) एव यत् इन्दुमण्डलम् ( चन्द्रमण्डलम् ) तस्मात् गलत् ( प्रस्रवत् ) यत् काव्यम् ( कवित्वम् ) एव अमृतं ( पीयूषम् ) तदेव योऽब्धिः ( समुद्रः ), तस्य । किमपि = पृषत् , बिन्दुमित्यर्थः । पीत्वा = आचम्य, कविनूतनाऽम्बुदमयी= कवयः ( काव्यकर्तारः ) एव नूतनाः ( नवीनाः ) ये अम्बुदाः ( मेघाः ) तन्मयी ( तत्स्वरूपा ) । कादम्बिनी = मेघमाला, आकल्पं = प्रलयकालपर्यन्तम्, कल्पात् आ इति 'आङ्मर्यादाऽभिविध्योः' इत्यव्ययीभावः । 'संवर्तः प्रलयः कल्पः क्षयः कल्पान्त इत्यपि । इत्यमरः । वर्षति = वृष्टिं करोति ।

सूर्यवंशाऽवतंसस्य भगवतः श्रीरामचन्द्रस्य चरित्रप्रबन्धोद्भावयिता महाकविर्वाल्मीकिः सर्वोत्कर्षेण वर्तते । यत्काव्यामृतसागरस्य कमपि बिन्दुं पीत्वा नूतनाः कवयितार आकल्पं वर्षाति प्राप्नुवन्तीति भावः । अत्र रूपकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

विमृश्येति । रामचन्द्रे = राघवे चन्द्ररूप इति भावः । चित्तचकोरः = मानसचकोरः, चित्तमेव चकोरः । निर्भरं = दृढं यथा तथेति क्रियाविशेषणम् । यथा चकोरश्चन्द्रे तथैव मदीयं चित्तमपि श्रीरामचन्द्रे हर्षमनुभवतीति भावः । यत्कीर्त्तिचन्द्रिकाचुम्बितः = यस्य ( रामस्य ) कीर्त्तिः ( समज्ञा ) एव चन्द्रिका ( कौमुदी ) तया चुम्बितः (कृतचुम्बनः) । सारस्वतसागरः=वाङ्मयसमुद्रः, सरस्वत्या इदं सारस्वतं, तदेव सागरः । समुल्लास=समुल्लासं प्राप, वृद्धिं प्राप्तवानिति भावः । चन्द्रिकया समुद्र इव रामकीर्त्या वाल्मीकिवाङ्मयसमुद्रोऽपि वृद्धिं प्राप्नोतीति भावः ।

चन्द्रे चेति । नीलोत्पलसुन्दरकान्तौ चन्द्रे, रामचन्द्रे नारीणां दृगञ्चले च कस्य

हुए काव्यामृतरूप समुद्रकी कुछ बिन्दुको पीकर भी कविरूप नवीन मेघोंकी पङ्क्ति प्रलय काल तक वृष्टि करती रहती है ॥ ९ ॥

( विचारकर ) यह मेरा चित्तचकोर तो रामचन्द्रजीमें ही दृढरूपसे आनन्दित है जिन ( रामचन्द्रजी ) की कीर्ति चन्द्रिकासे सम्बन्ध होनेसे वाल्मीकि मुनि का वाङ्मय समुद्र वृद्धिको प्राप्त हो गया ।

सूत्रधार—यह ऐसा ही है ।

सूर्यसे प्रकाश पानेवाले चन्द्रमें, नीलकमलके सदृश कान्तिसे सम्पन्न रामचन्द्रजीमें

नीलोत्पलसुहृत्कान्तौ कस्य नाऽऽमोदते मनः ॥ १० ॥

अपि च—

झटिति जगतीमागच्छन्त्याः पितामहविष्टपात्–
महति पथि यो देव्या वाचः श्रमः समजायत।

मनो न आमोदत इत्यन्वयः।

अत्र मध्यमणिन्यायेन 'नीलोत्पलसुहृत्कान्ता'विति पदस्य त्रिष्वपि विशेष्येषु विशेषणत्वं बोद्धव्यम्। नीलोत्पलसुहृत्कान्तौ = नीलोत्पलस्य (श्यामकमलस्य) सुहृत् (मित्रं, मित्र इत्यर्थः। विकासकत्वादिति भावः) तस्मात्कान्तिः (शोभा) यस्य सः तस्मिन्। तादृशे चन्द्रे = इन्दौ। सूर्याच्चन्द्रः प्रकाशत इत्यर्थे 'आदित्येन चन्द्रमा भाती'ति श्रुतिः। 'अथाऽप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमो भवती'ति निरुक्तं च मानम्। नव्यपाश्चात्य-वैज्ञानिकानामप्यत्राऽर्थे सुसंवादिता। रामचन्द्रपक्षे—नीलोत्पलसुहृत् (नीलकमल-सदृशी) कान्तिः (शोभा) यस्य सः तस्मिन्। श्रीरामचन्द्रस्य नीलकान्तिः प्रसिद्धैव। रामचन्द्रे = रामे। नारीणां = स्त्रीणां, दृगञ्चले च—कटाक्षे च। एवमेव नारीकटाक्षोऽपि नीलवर्णो विश्रुतः। कस्य = सहृदयस्य जनस्य, मनः = चित्तं, न आमोदते = आह्लादं नाऽनुभवति।

अत्राऽप्रस्तुतयोश्चन्द्रनारीदृगञ्चलयोः प्रस्तुतस्य श्रीरामचन्द्रस्य चाऽऽमोदकत्वधर्म-सम्बन्धाद्दीपकाऽलङ्कारः। तल्लक्षणं यथा साहित्यदर्पणे—

'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।' इति। अनुष्टुब्वृत्तम् ॥ १० ॥

झटितीति। पितामहविष्टपात् झटिति जगतीम् आगच्छन्त्या वाचो देव्या महति पथि यः श्रमः समजायत। असौ रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकां नाऽवगा-हते चेत् एनं कथं मुञ्चेदित्यन्वयः।

पितामहविष्टपात् = पितामहस्य (ब्रह्मणः) विष्टपात् (लोकात्) 'अथो जगती लोको विष्टपं भुवनं जगत्' इत्यमरः। झटिति—सपदि, 'द्राग्झटित्यञ्जसाऽह्नाय-द्राङ्मक्षुसपदि द्रुते।' इत्यमरः। जगतीं = नरलोकम्, आगच्छन्त्याः = आगा-न्त्याः, वाचो देव्याः = सरस्वत्या इत्यर्थः। महति = विस्तीर्णे, पथि = मार्गे, यः श्रमः = आयासः, समजायत = समभवत्। असौ = वाग्देवी, रघुपतिगुणग्रामश्लाघा-सुधामयदीर्घिकां = रघुपतेः (रामचन्द्रस्य, रघूणां = रघुवंशोत्पन्नानां राज्ञां, श्रेष्ठ-

और स्त्रियोंके कटाक्षमें भी किसका चित्त हर्षको नहीं पाता है? ॥ १० ॥

और भी—ब्रह्मलोकसे शीघ्र पृथ्वीको आती हुई सरस्वती देवीको विस्तीर्णमार्गमें जो

अपि कथमसौ मुञ्चेदेनं न चेदवगाहते
रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम् ॥ ११ ॥

नटः—कथं पुनरमी कवयः सर्वे रामचन्द्रमेव वर्णयन्ति ।

सूत्रधारः—नाऽयं कवीनां दोषः । यतः—

स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोषः ? स तु गुणगणानामवगुणः ।

---

वेत्योऽर्थः । पत्युः श्रेष्ठस्य ) गुणानां ( दाक्षिण्यसौजन्यादीनाम् ) ग्रामः ( समूहः ) तस्य श्लाघा ( प्रशंसा ) एव सुधामयदीर्घिका ( अमृतरूपा वापी ) ताम् । नाऽवगाहते चेत् = न प्रविशति यदि । तर्हीति शेषः । एनं = श्रमं, दूरमार्गगमनजनितमिति शेषः । कथं = केन प्रकारेण, मुञ्चेत् = अपहरेत्, 'मुच्लृमोक्षणे' इति धातोर्लिङ् । 'शेमुचादीनाम्' इति नुम् । यथाऽन्यो जनो दीर्घाऽध्वगमनजनितं परिश्रमं दीर्घिकाऽवगाहनेन परिहरति तथैव वाग्देव्यपि चतुराननसदनात्क्षितिलोकागमनकाले दीर्घाऽध्वसन्तरणरूपं प्रयासं श्रीरामगुणसमूहप्रशंसारूपसुधावापीमवगाह्याऽपनयतीति भावः । अत्र रूपकालङ्कारः । हरिणी वृत्तं, तल्लक्षणं यथा—'रसयुगहयैर्न्सौम्रौस्लौगो यदा हरिणी मता ।' इति ॥ ११ ॥

स्वसूक्तीनामिति । स्वसूक्तीनां पात्रम् एकं रघुतिलकं कलयतां कवीनां को दोषः ? स तु अवगुणः गुणगणानाम् । यत् जगति निःशेषैः एतैः अपरगुणलुब्धैरिव एकः असौ सततसुखसंवासवसतिः चक्रे इत्यन्वयः ।

स्वसूक्तीनाम् = आत्मसुभाषितानां, काव्यरूपाणामिति शेषः । पात्रं = भाजनं, वर्णनीयं विषयमिति भावः । एकम् = एकमात्रं, रघुतिलकं=रघुवंशश्रेष्ठं, श्रीरामचन्द्रमित्यर्थः । कलयतां कुर्वताम् कवीनां = कवयितॄणां को दोषः = किं दूषणं, न किमपीति भावः । अत्र न कवीनां दोषो यदि तर्हि कस्येत्यत्राह—सत्विति । सः=पूर्वोक्तः

---

श्रम उत्पन्न हुआ । वे ( सरस्वती ) रामचन्द्रजीके गुणसमूहकी प्रशंसारूप अमृतमय बावलीमें स्नान नहीं करतीं तो उस श्रमको कैसे हटातीं ॥ ११ ॥

नट—ये सब कवि रामचन्द्रजी का ही क्यों वर्णन करते हैं ?

सूत्रधार—यह कवियोंका दोष नहीं है । क्योंकि—

अपने सुभाषितोंका पात्र एकमात्र रामचन्द्रजीको करनेवाले कवियों का क्या दोष है ? वह दोष तो गुणगणोंका है । जो कि जगत्में समस्त इन गुणोंने अन्य गुणोंमें लुब्धोंके

यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग-
त्यसावेकश्चक्रे सततसुखसंवासवसतिः ॥ १२ ॥

अपि च । भोः,

बीजं यस्य चिरार्जितं सुचरितं, प्रज्ञा नवीनोऽङ्कुरः
काण्डः पण्डितमण्डलीपरिचयः, काव्यं नवः पल्लवः ।

---

अवगुणस्तु = दोषस्तु, गुणगणानां = दाक्षिण्यसौजन्यादिगुणसमूहानाम् । यत् = यस्मात्कारणात्, जगति = लोके, निःशेषैः = समस्तैः, एतैः = एभिः, गुणगणैरित्यर्थः । अपरगुणलुब्धैरिव = अपरेषु ( अन्येषु, स्वस्मादिति शेषः ) गुणेषु लुब्धैरिव ( लोलुपैरिव ) स्वेतरगुणसंवासलोलुपैरिवेत्यर्थः । एकः = अद्वितीयः, असौ = श्रीरामचन्द्रः, सततसुखसंवासवसतिः = सततं ( निरन्तरम् ) सुखम् ( आनन्दपूर्वकं यथा स्यात्तथा ) यः संवासः ( सहवासः ) तस्य वसतिः ( आधारः ), चक्रे = कृतः, कर्मवाच्यप्रयोगः । श्रीरामः सकलगुणगणाऽऽधारः, गुणाश्चैकैकशो गुणान्तरेण सहवासं वाञ्छन्तः कार्त्स्न्येन श्रीराममेवाश्रयन्ति कवयश्च तादृशगुणगणशालिनं तमेव वर्णयन्त्यतो न कवीनां दोषः प्रत्युत गुणगणानामेवेति भावः । अत्रोत्प्रेक्षाऽलङ्कारः । शिखरिणीवृत्तं, तल्लक्षणं यथा—

'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी ।' इति ॥ १२ ॥

पूर्वोक्तमेव द्रढयति—बीजमिति । चिराऽर्जितं सुचरितं यस्य बीजं प्रज्ञा यस्य नवीनोऽङ्कुरः, पण्डितमण्डलीपरिचयो यस्य काण्डः, काव्यं यस्य नवः पल्लवः, कीर्तिर्यस्य पुष्पपरम्परा; परिणतः सोऽयं कवित्वद्रुमो रघुकुलोत्तंसप्रशंसाफलं विना किं वन्ध्यः क्रियते ? इत्यन्वयः । चिराऽर्जितं = बहुकालोपार्जितं सुचरितं = शोभनं चरित्रं शोभनं चरितं सुचरितं 'कुगतिप्रादयः' इति समासः । यस्य = कवित्वद्रुमस्य, बीजम् = अङ्कुरकारणम् । प्रज्ञा = प्रतिभा, काव्यजननीति भावः, यां विना काव्यं न प्रसरेत्प्रसृतं वोपहसनीयं स्यादिति काव्यप्रकाशे मम्मटः । यस्य = कवित्वद्रुमस्य, नवीनः = नूतनः, अङ्कुरः = अभिनवोद्भित् । पण्डितमण्डलीपरिचयः = काव्यविद्वन्मण्डलीसंस्तवः, यस्य = कवित्वद्रुमस्य, काण्डः = तरुस्कन्धः । काव्यं = रसात्मकं वाक्यं, यस्य = कवित्वद्रुमस्य, नवः = नूतनः,

---

सदृश होकर इन्हीं रामचन्द्रजीको निरन्तर और आनन्दपूर्वक सहवासका आधार बनाया ॥
और भी । अरे !

बहुकालसे उपार्जित सुन्दर चरित्र जिसका बीज है प्रतिभा जिसका नवीन अङ्कुर है, पण्डितमण्डलीका परिचय, जिसका काण्ड है, काव्य जिसका नवीन पल्लव है और कीर्ति,

कीर्त्तिः पुष्पपरम्परा, परिणतः सोऽयं कवित्वद्रुमः
किं वन्ध्यः क्रियते विना रघुकुलोत्तंसप्रशंसाफलम् ॥ १३ ॥

नटः—कः पुनरस्य कविः ?

सूत्रधारः—( सप्रणयकोपम् )

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति ।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-

पल्लवः = किसलयं 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । कीर्तिः = प्रसिद्धिः, सत्काव्यरचनाजनितेति शेषः । यस्य = कवित्वद्रुमस्य, पुष्पपरम्परा—कुसुमपङ्क्तिः परिणतः = पक्वः, सः = तादृशः, अयम् = एषः कवित्वद्रुमः = काव्यवृक्षः, रघुकुलोत्तंसप्रशंसाफलं विना = रघुकुलोत्तंसस्य ( रघुवंशभूषणभूतस्य, श्रीरामचन्द्रस्येति भावः ) प्रशंसाफलं विना ( श्लाघारूपं सस्यमन्तरेण ) विनापदेन योगे 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति द्वितीया पक्षान्तरे तृतीया पञ्चमी च । किं = किमर्थं, वन्ध्यः = निष्फलः, क्रियते = विधीयते । समृद्धे कवित्वद्रुमे फलेन भाव्यं, तच्च फलं श्रीरामप्रशंसारूपं, तद्विना तस्य नैष्फल्यमिति भावः ।

अत्र रूपकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

नट इति । अस्य = नाटकस्य ।

सूत्रधार इति । सप्रणयकोपं = प्रणयेन ( प्रेम्णा ) कोपेन ( क्रोधेन, नाटककारविषयकाऽज्ञानजनितेनेति शेषः ) च सहितं यथा तथा ।

विलास इति । असमरसनिष्यन्दमधुरो यद्वाचां विलासः कुरङ्गाक्षी बिम्बाऽधरमधुरभावं गमयति । कवीन्द्रः कौण्डिन्यो महादेवतनयः स जयदेवः इह तव श्रवणयोः आतिथ्यं किं न अयासीत् ? इत्यन्वयः । असमरसनिष्यन्दमधुरः = असमाः ( अनुपमाः ) ये रसाः ( शृङ्गारादयः ) तेषां निष्यन्देन ( प्रवाहेण ) मधुरः ( स्वादुः ) 'स्वादुप्रियौ च मधुरौ' इत्यमरः । यद्वाचां = यस्य ( कवीन्द्र जयदेवस्य ) वाचाम्

जिसकी पुष्पपरम्परा है; ऐसा काव्य-वृक्ष रामचन्द्रजीकी प्रशंसारूप फलके बिना क्या निष्फल किया जाता है ॥ १३ ॥

नट—इस नाटकका कवि कौन है ?

सूत्रधार—( प्रणय और कोपके साथ )

अनुपम रसोंके प्रवाहसे स्वादु जिनकी वाणियोंका विलास, सुन्दरीके बिम्बफल सदृश ओठकी मधुरताको सूचित करता है । कवीन्द्र कौण्डिन्य महादेवपुत्र वे जयदेवजी यहाँ

रयासीदातिथ्यं न किमिह महादेवतनयः ॥ १४ ॥

अपि च—

लक्ष्मणस्येव यस्याऽस्य सुमित्राकुक्षिजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥ १५ ॥

( वाणीनाम् ) विलासः = लीला । कुरङ्गाक्षीबिम्बाऽधरमधुरभावं = कुरङ्गस्य ( मृगस्य ) इव अक्षिणी ( नेत्रे ) यस्याः सा कुरङ्गाक्षी ( सुन्दरी ) तस्या बिम्बम् ( बिम्बफलम् ) इव अधरः ( ओष्ठः ) तस्य मधुरभावम् ( माधुर्यम् )। गमयति = ज्ञापयति । णिजन्ताद्गम्लृधातोर्लट् । ये गत्यर्थास्ते ज्ञानार्था इति न्यायेनैषोऽर्थोऽवधेयः । 'कुरङ्गाऽक्षीबिम्बाधरमधरभावम्' इति पाठान्तरे तु—कुरङ्गाक्षीबिम्बाऽधरम् अधरभावं = न्यूनत्वं, गत्यर्थकधातोर्योगे 'गतिबुद्धिप्रत्यवसानार्थ शब्दकर्माऽकर्मकाणामणि कर्ता स णौ' इत्यणि कर्तुः कर्मत्वम् । गमयति = प्रापयति । कवीन्द्रजयदेवस्य वाग्विलासो बिम्बोष्ठीबिम्बाधररसमप्यधरीकरोतीति भावः । कवीन्द्रः = कविश्रेष्ठः कौण्डिन्यः = कुण्डिनगोत्रोत्पन्नः । महादेवतनयः = महादेवपुत्रः । सः=प्रसिद्धः, जयदेवः = जयदेवनामकः, कविताकिको विद्वानिति भावः । इह = अत्र विषये । तव = भवतः । श्रवणयोः = श्रोत्रयोः, 'श्रुतिः स्त्री श्रवणं श्रव' इत्यमरः । आतिथ्यम् = अतिथिभावम् । किं न आयासीत् = किं न प्राप्तवान् , अद्य यावत् किं त्वया कविताकिकस्य जयदेवसूरेरभिधानं नाकर्णितमिति भावः । अयासीदित्यत्र 'या प्रापणे' इति धातोर्लुङि सगिटौ । अत्र 'गोत्र नाम च बध्नीयादि'ति नाट्यशास्त्राऽनुशासनान्नाटककर्तुर्गोत्रनामनिबन्धनं बोद्धव्यम् । शिखरिणीवृत्तम् ॥ १४ ॥

लक्ष्मणस्येति । लक्ष्मणस्येव सुमित्राकुक्षिजन्मनो यस्य अस्य मनो रामचन्द्रपदाम्भोजे भ्रमत् भृङ्गायत इत्यन्वयः । लक्ष्मणस्येव = रामाऽनुजस्येव, सुमित्राकुक्षिजन्मनः = सुमित्रायाः ( दशरथमहिष्याः, कविपक्षे महादेवपत्न्याः ) कुक्षेः ( गर्भात् ) जन्म ( उत्पत्तिः ) यस्य, तस्य । यस्य = अस्य कवीन्द्रस्य, जयदेवस्य । मनः = चित्तम् । रामचन्द्रपदाऽम्भोजे = रामचन्द्रस्य ( राघवस्य ) पदम् ( चरणः ) एवाऽम्भोजं ( कमलम् ) तस्मिन् । भ्रमत् = भ्रमणं कुर्वत् सत् , भृङ्गायते = भ्रमरवदाचरति, 'कर्तुः क्यङ् सलोपश्चे'ति भृङ्गशब्दात्क्यङ् , ङित्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदम् । सुमित्रातनयो लक्ष्मणो यथा रामचरणपरिचरणपरायणस्तथै-

पर आपके कानोंके आतिथ्यको क्या प्राप्त नहीं हुए ? ॥ १४ ॥

और भी—लक्ष्मणके सदृश सुमित्राके गर्भसे उत्पन्न जिन जयदेवजीका मन रामचन्द्रजीके चरणकमलमें भ्रमण करता हुआ भौंरेकी नाईं आचरण करता है ॥ १५ ॥

नटः—कथमविदितचन्द्रमसश्चकोरकिशोरकस्य चरितमनुसृतोऽस्मि । तेन हि मम हस्ते निजनाटकमर्पयित्वेदमुक्तोऽस्मि—'रक्षणीयमिदं सूक्तिरत्नं चोरेभ्यः' इति । स च मया सविनयमिदमुक्तः—

कर्णे निधाय च पिधाय च कण्ठपीठे
धृत्वा च मूर्धनि नते हृदये च कृत्वा ।
चौरापहारचकितेन चिरं मयैष त्वत्सू-
क्तिमौक्तिकगणः परिरक्षणीयः ॥ १६ ॥

---

वाऽयं सुमित्रातनयो जयदेवोऽपीति भावः । उपमाऽलङ्कारः । अनुष्टुब्वृत्तम् ॥१५॥

कथमिति । यथा चकोरशावकः स्वहृदयाह्लादकं चन्द्रमसं न जानाति तथैवाऽहमपि स्वाऽभीष्टतमं कवीन्द्रं जयदेवं विस्मृतवानिति भावः । सूक्तिरत्नं = सुभाषितश्रेष्ठं, प्रसन्नराघवाऽभिधानं नाटकरूपमिति भावः ।

कर्णे इति चौराऽपहारचकितेन मया एष त्वत्सूक्तिमौक्तिकगणः कर्णे निधाय कण्ठपीठे पिधाय मूर्धनि धृत्वा नते हृदये च कृत्वा चिरं परिरक्षणीय इत्यन्वयः । चौराऽपहारचकितेन = चौराऽपहारात् ( स्तेनाऽपहरणात् ) चकितेन ( भीतेन ) मया = नटेन, एषः = स्वसमीपतरवर्ती, त्वत्सूक्तिमौक्तिकगणः = भवत्सुभाषितमुक्ताकलापः कर्णे = श्रोत्रे, निधाय = स्थापयित्वा, अवधानपूर्वकं श्रुत्वेति भावः । मौक्तिकपक्षे कर्णाभरणत्वेन धृत्वेति भावः । कण्ठपीठे = कण्ठस्थाने, पिधाय = सङ्गोप्य, भागुरिमतेनाऽल्लोपः । अरसिकजनेऽप्रकाश्येति भावः । मौक्तिकपक्षे कण्ठहाररूपेण धृत्वेति भावः । मूर्धनि = मूर्ध्नि, शिरसि, धृत्वा = स्थापयित्वा, शिरोधारणपूर्वकमादृत्येति भावः । मौक्तिकपक्षे शेखररूपेणाऽवस्थाप्येति भावः । एवं च—नते = अवनते, हृदये च = हृदि च, कृत्वा = विधाय, आदरेणाऽवनते चित्ते स्थापयित्वेति भावः । मौक्तिकपक्षे चौरादिभ्यो गोपनाय वक्षःस्थले संस्थाप्येति भावः । इत्थं चिरं = बहुकालपर्यन्तं, परिरक्षणीयः = परिपालनीयः । यथा कश्चिज्जनो मौक्तिकादिपदार्थं चौरात्परित्रातुं बहुस्थानेषु निदधाति तथैवाऽहमपि भवत्सूक्तिं परकृत्यपहारकाङ्क्ष-

---

नट—चन्द्रमाको न जाननेवाले चकोरशावकके चरित्रका मैंने कैसे अनुसरण किया । उन्होंने मेरे हाथमें अपना नाटक सौंपकर मुझे कहा है—'इस सुभाषित रत्नकी चोरोंसे रक्षा करना' । मैंने उन्हें नम्रताके साथ ऐसा कहा—चोरोंके अपहरणसे भीत होकर मैं आपके इस सुभाषितरूप मुक्ताकलापको कानमें रखकर, कण्ठस्थानमें छिपाकर, शिरमें धारण कर, और अवनत हृदयमें रखकर, भी बहुत समय तक रक्षा करूंगा ॥ १६ ॥

सूत्रधारः—केयमलीकशङ्का तस्य कवेः ?
सुललितवदनामुदारवृत्तां कृतिमथवा युवतिं परस्य हृत्वा।
तटमपि परमर्णवस्य गत्वा वद कतरः सुखभाजनं जनः स्यात् ॥१७॥

कवेः संरचितुमनेकस्थानेषु निदधामीति भावः। समासोक्तिरलङ्कारः। वसन्ततिलका-वृत्तं, तल्लक्षणं यथा—'उक्ता वसन्ततिलका तभजा जगौ गः।' इति ॥ १६ ॥

सूत्रधार इति। अलीकशङ्का = मिथ्यासन्देहः।

सुललितेति। सुललितवदनाम् उदारवृत्तां कृतिम् अथवा परस्य युवतिं हृत्वा अर्णवस्य परं तटं गत्वा अपि कतरो जनः सुखभाजनं स्यात्? वदेत्यन्वयः। सुललितम् ( अतिसुन्दरम् ) वदनं ( मुखम् ) यस्याः सा, ताम्। इदमपरं च विशेषणं काकाऽक्षिगोलकन्यायेन देहलीदीपन्यायेन वा कृतेः परयुवतेश्च बोद्धव्यम्। कृतिपक्षे—मनोहररूपां, परयुवतिपक्षे सुन्दरमुखीमित्यर्थः। 'सुललितवचना'मिति पाठे कृतिपक्षे मनोहरशब्दगुम्फितां, परयुवतिपक्षे-मधुरभाषिणीमित्यर्थः। उदारवृत्ताम् = कृतिपक्षे—उदारम् ( प्रसादादिगुणभूषितम् ) वृत्तं ( चरित्रम् ) यस्याः सा ताम्। परयुवतिपक्षे—उदारम् ( औदार्योपेतम् ) वृत्तं ( चरित्रम् ) यस्याः सा उदारवृत्ता, ताम्। 'वृत्तं पद्ये चरित्रे चे'त्यमरः। कृतिं= रचनां, परस्य रचनारूपां कृतिमिति भावः। अथवा = यद्वा, परस्य = अन्यस्य, युवतिं = तरुणीं, हृत्वा = अपहृत्य, अर्णवस्य = समुद्रस्य, तटं = तीरं, गत्वाऽपि = प्राप्याऽपि, कतरः = कः, जनः = नरः, सुखभाजनम् आनन्दपात्रं, स्यात् = भवेत्, तादृशं कुकृत्यं कृत्वा न कोऽपि जनः सुखभाजनं भवेदित्यर्थः। वद = ब्रूहि। पद्येनाऽनेन रावणकृतं सीताहरणरूपं रामायणवृत्तमाक्षिप्तमतोऽस्य पताकास्थानत्वं, तल्लक्षणं यथा—'प्रस्तुताऽऽगन्तु भावस्य भाविनोऽन्योक्तिसूचनम्।

पताकास्थानकं तुल्यसंविधानविशेषणम् ॥' इति ॥

रामरमणीं सीतामपहृत्य रावणोऽर्णवस्य पारं गत्वाऽपि यथा सुखं नाऽऽप तथैव परकृतिमपहृत्य न कोऽपि जन आनन्दं प्राप्स्यतीति भावः। श्लेषाऽलङ्कारः। पुष्पिताग्रा नामाऽर्द्धसमं वृत्तं, तल्लक्षणं यथा—'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा।' इति ॥ १७ ॥

सूत्रधार—उस कविका यह कैसा मिथ्यासन्देह है ?

सुन्दर रूपवाली और उदारचरित्रसे युक्त दूसरेकी रचनाको अथवा सुन्दर मुखसे युक्त और उदार चरित्रसे सम्पन्न दूसरेकी स्त्रीको चुराकर समुद्रके परवर्ती तटको प्राप्त करके भी कौन सा पुरुष सुखका पात्र होगा ? बताओ ॥ १७ ॥

**नटः**—एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि

**सूत्रधारः**—क इह विस्मयः ?

येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ? ।

---

नट इति । अयं = कवीन्द्रो जयदेवः । प्रमाणप्रवीणः = प्रमाणे (न्यायशास्त्रे) प्रवीणः (निपुणः) । तत् = तस्मात्कारणात् । इह = अस्मिन्, जयदेव इति भावः । चन्द्रिकाचण्डातपयोः = कौमुदीसूर्ययोः । चण्डः (तीक्ष्णः) आतपः (प्रकाशः) यस्य सः सूर्य इत्यर्थः । यौगिकोऽयं शब्दः । कवितातार्किकयोः = कवितानैयायिकयोः । एकाऽधिकरणताम् = एकाश्रयताम्, एकम् अधिकरणम् (आश्रयः) ययोस्तौ एकाऽधिकरणौ, तयोर्भाव एकाऽधिकरणता ताम् । यथैकस्मिन्नेव समये चन्द्रिकासूर्ययोरवस्थितिर्न भवति, मृदुलगुणायाश्चन्द्रिकाया रात्रौ कठोरगुणस्य सूर्यस्य दिवाऽऽविर्भावादितिः भावः । तथैव सुकुमारताप्रधानायाः कवितायाः कर्कशताप्रधानायास्तार्किकतायाश्चैकस्मिञ्जनेऽवस्थितिर्न दृश्यते परं विद्वत्प्रकाण्डेऽस्मिन् जयदेवे कवितायास्तार्किकतायाश्च समभावेनाऽवस्थितेर्विस्मयरसाविष्टोऽस्मीति भावः ।

येषामिति । येषां भारती कोमलकाव्यकौशलकलालीलावती, तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ? यैः कान्ताकुचमण्डले कररुहाः सानन्दम् आरोपिताः तैः मत्तकरीन्द्रकुम्भशिखरे शराः किं न आरोपणीयाः ? इत्यन्वयः । येषां=विदुषां, जयदेवसदृशानां कवितार्किकाणामिति भावः । भारती = वाणी, कोमलकाव्यकौशलकलालीलावती = कोमलं (मृदुलं, माधुर्यप्रसादादिगुणसमन्वितमिति भावः) यत् काव्यं (कवित्वम्) तस्मिन् या कौशलकला (नैपुण्यकला), तस्यां लीलावती (विलासवती), अस्तीति शेषः । तेषां = कोमलकान्तपदावलीविरचनप्रवीणानां महाकवीनां, कर्कशतर्कवक्रवचनोद्गारेऽपि = कर्कशः (कठोरः, अतिशयपरिपक्वबुद्धिविभवमात्रवेद्य इति भावः) यः तर्कः (न्यायशास्त्रम्) तेन वक्राणि (कुटिलानि, ऋजु-

---

नट—यह ठीक है । ये कविराज न्यायशास्त्रमें भी निपुण हैं ऐसा सुना जाता है । चाँदनी और सूर्यके सदृश कविता और तार्किकता (नैयायिकता) इन दोनोंका इनमें एकाऽधिकरणता (एकाश्रयता) देखकर मैं आश्चर्ययुक्त हूँ ।

**सूत्रधार**—इसमें क्या आश्चर्य है ?

जिन कवियोंकी वाणी कोमल काव्यमें नैपुण्यकलासे विलासवती है, उन लोगोंके कर्कश न्यायशास्त्रसे कुटिल वचनोंके प्रकाशनमें भी क्या हानि है ? जिन पुरुषोंने प्रियाके पयो-

यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥१८॥

नटः—अपि नाम स्वयमेव कविताकोविदाः पारिषदा अस्य सूक्तिभि-
र्विनोदयिष्यन्ते ?

---

बुद्धिभिरवेद्यानीति भावः ) यानि वचनानि ( वाक्यानि, 'रचने'ति पाठान्तरे वचा या रचना तस्या इति योजना कार्या ) तेषामुद्गारेऽपि ( प्रकाशनेऽपि ) । किं हीयते= किं हीनेन कर्मणा भूयते, कमनीयकवितानिर्माणपटूनां विदुषां कठोरतर्ककुटिल-वचनरचनायामपि का हानिरिति भावः । उक्तेऽर्थे दृष्टान्तं प्रतिपादयति—यैरिति । यैः=पुरुषैः, कान्ताकुचमण्डले=प्रियापयोधरमण्डले, 'कान्ताकुचकुड्मल' इति पाठान्तरे कान्तायाः कुचः कुड्मलः ( मुकुलः ) इव तस्मिन्निति योजना कार्या । कररुहाः=नखाः, करे रोहन्तीति' 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । 'पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियाम् ।' इत्यमरः । साऽऽनन्दम्=आनन्दपूर्वकं यथा स्यात्तथेति क्रियाविशेषणम् । आरोपिताः=विन्यस्ताः, तैः=पुरुषैः, मत्तकरीन्द्र-कुम्भशिखरे=मत्तः ( मदयुक्तः ) यः करीन्द्रः ( गजेन्द्रः, श्रेष्ठगज इति भावः ) तस्य यः कुम्भः ( मस्तकपिण्डः ) तस्य शिखरे ( अग्रभागे ) शराः=बाणाः, किं, न आरोपणीयाः=न प्रक्षेप्तव्याः, आरोपणीया एवेति काकुध्वनिः । विलासभवने विला-सिनी कुचकुड्मले नखक्षतकारका जना अपि यथा मत्तगजेन्द्रमस्तकपिण्डे शरमारो-पयन्ति तथैव सुकुमारकाव्यरचना निपुणा जना अपि कर्कशतर्कवाक्यमपि वाक्या-नि रचयन्तीति किमत्र चित्रमिति भावः । रघुनाथशिरोमणेः पक्षधरं गुरुवरं प्रति प्रतिपादित एतत्सदृशोऽयं श्लोकोऽपि जनश्रुत्यनुसारेण उपन्यस्यते—

'काव्येऽपि कोमलधियो वयमेव नाऽन्ये तर्केऽपि कर्कशधियो वयमेव नाऽन्ये ।
तन्त्रेऽपि यन्त्रितधियो वयमेव नाऽन्ये कृष्णेऽपि संनतधियो वयमेव नाऽन्ये ॥' इति ।

परमत्राऽनवीकृतदोषाऽऽपातः । दृष्टान्ताऽलङ्कारस्तल्लक्षणं यथा—

'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।' इति । शार्दूलविक्रीडितं वृत्तम् ॥

नट इति । अपि नाम=सन्देहद्योतकमव्ययद्वयम् । कविताकोविदाः=कवितायां ( कवित्वे ) कोविदाः ( विद्वांसः ) । पारिषदाः=सदस्याः ।

---

धरमण्डलमें नाखूनोंसे आनन्दके साथ क्षत किया, वे लोग मत्त हाथीके मस्तकपिण्डमें क्या बाण नहीं छोड़ते ? ॥ १८ ॥

नट—स्वयम् ही कविताके जानकार सभ्यलोग इनके सुभाषितोंसे क्या विनोद प्राप्त कर लेंगे ?

सूत्रधारः—नन्वनेनैवोक्तम्—

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघन-मकरन्द-स्यन्द-पूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ? ॥ १६ ॥

नटः—अहो अस्य कवेः सूक्तीनां सरलता कोमलता च ।

---

अपीति । स्वकीयैः वाग्विलासैः मुदम् उपयान्तोऽपि कियन्तः सन्तः परभणितिषु तोषं यान्ति । निजघनमकरन्दस्यन्दपूर्णाऽऽलवालो रसालः कलशसलिलसेकं किं न ईहते ? इत्यन्वयः । स्वकीयैः = आत्मीयैः, वाग्विलासैः = वचनलीलाभिः । मुदं = हर्षम् , उपयान्तोऽपि = लभमाना अपि, कियन्तः = कतिपये, सन्तः = सज्जनाः, परभणितिषु = अन्योक्तिषु, तोषं = प्रीतिं, यान्ति = प्राप्नुवन्ति । निजवाग्वैभवेन प्रमोदमनुभवन्तोऽपि कियन्तः सन्तः परसूक्तिभिरपि प्रसादमासादयन्तीति भावः । उक्तमर्थं दृष्टान्तेन द्रढयति—निजेति । निजघनमकरन्दस्यन्दपूर्णाऽऽलवालः = निजः ( स्वीयः ) घनः ( सान्द्रः ) यो मकरन्दः ( पुष्परसः ) तस्य यः स्यन्दः ( प्रस्रवणम् ) तेन पूर्णम् ( पूरितम् ) आलवालम् ( आवापः ) यस्य सः । एतादृशो रसालः = आम्रवृक्षः, 'आम्रश्चूतो रसालोऽसौ' इत्यमरः । कलशसलिलसेकं = कलशस्य ( घटस्य ) यत् सलिलं ( जलम् ) तस्य सेकम् ( सेचनम् ) किं न ईहते ? = किं न इच्छति ? इच्छत्येवेति काकुध्वनिः । प्रचुरपुष्परसप्रस्रवणपूरितालवालोऽपि चूतो यथा कलशजलसेचनं वाञ्छति तथैव स्वरचनया हर्षमनुभवन्तोऽपि केचित्सहृदयाः सज्जनाः परसुभाषितैरपि प्रमोदं प्राप्नुवन्तीति भावः । दृष्टान्ताऽलङ्कारः । मालिनि वृत्तम् । तल्लक्षणं यथा—'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति ॥ १९ ॥

नट इति । सरलता = प्राञ्जलता, प्रसादगुणशालितेति भावः । कोमलता = मृदुलता ।

---

सूत्रधार—इसी कविने कहा है—

अपनी वाणीकी लीलाओंसे हर्षको पाते हुए भी कतिपय सज्जन दूसरे कवियोंकी उक्तियोंमें सन्तोषका अनुभव करते हैं । अपने गाढ पुष्परसके प्रस्रवणसे पूर्ण आलवाल ( क्यारी ) वाला आम्रवृक्ष क्या कलशजलसे सेचन नहीं चाहता है ? ॥ १९ ॥

नट—अहो ! इस कविके सुभाषितोंमें सरलता और कोमलता भी है ।

सूत्रधारः—क्वचिद्वक्रता कठिनता च ।

नटः—कथमेते अपि रमणीये ? ।

सूत्रधारः—अथ किम्—

निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः ।
तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ २० ॥

---

सूत्रधार इति । वक्रता = कुटिलता, लक्ष्यार्थतेति भावः । कठिनता = कठोरता, व्यङ्ग्यार्थतेति भावः ।

नट इति । एते अपि = वक्रता-कठिनते अपि ।

निन्द्यन्त इति । मन्दमतिभिः वक्राः कवीनां गिरो निन्द्यन्ते यदि नाम । नीरसैः मृगदृशां वक्राः कटाक्षच्छटा न स्तूयन्ते यदि नाम । तत् वैदग्ध्यवतां सतां मनोऽपि वक्रतां किं न ईहते ? हरः किरीटशिखरे वक्राम् ऐन्दवीं कलां किं न धत्ते ? इत्यन्वयः ।

मन्दमतिभिः = मूढबुद्धिभिः, मूर्खैरिति भावः । वक्राः = कुटिलाः, कवीनां = काव्यकर्तॄणां, गिरः = वाण्यः, निन्द्यन्ते = विगीयन्ते, यदि नामेति सम्भावनायाम् । एवं नीरसैः = अविदग्धैः, रसाऽनुभवशक्तिशून्यैर्जनैरिति भावः । मृगदृशां = हरिणलोचनानां, हरिणस्येव दृशौ यासां, तासां, सुन्दरीणामिति भावः । वक्राः = कुटिलाः, कटाक्षच्छटाः = अपाङ्गदर्शनदीप्तयः, न स्तूयन्ते = नाऽभिनन्द्यन्ते, यदि नामेति सम्भावनायाम् । तत् = तथाऽपि, वैदग्ध्यवतां = रसिकत्वसम्पन्नानां, सतां = सज्जनानां, मनोऽपि = चित्तमपि, वक्रतां = कुटिलतां किं न ईहते = किं नेच्छति । एवं हरः = शङ्करः, किरीटशिखरे = मुकुटाऽग्रे, वक्रां = कुटिलाम् , ऐन्दवीं=चान्द्रमसीम्, इन्दोरियमैन्दवी, ताम् । 'तस्येदम्' इत्यण् , 'ओर्गुणः' इति गुणः 'तद्धितेष्वचामादेः' रित्यादिवृद्धिश्च । 'टिड्ढाणञ्'इत्यादिना ङीप् । कलां = रेखां, किं न धत्ते = किं न

---

सूत्रधार—कहीं कुटिलता और कठोरता भी है ।

नट—क्या वे ( कुटिलता और कठोरता ) भी मनोहर होती हैं ?

सूत्रधार—क्यों नहीं !

मन्द बुद्धिवाले जन, कवियोंकी वक्ररचनाओंकी भले ही निन्दा कर लें इसीतरह नीरस पुरुष, सुन्दरियोंकी कुटिल कटाक्षोंकी स्तुति ( तारीफ ) भले ही न कर लें। तो भी निपुण सज्जनोंका मन क्या कविताकी वक्रताको चाहता है ? इसीतरह महादेवजी मुकुटके अग्रभागमें वक्र चन्द्रकलाको क्या धारण नहीं करते हैं ? ॥ २० ॥

अपि च—

अमृतजलधेः पायंपायं पयांसि पयोधरः
किरति करकास्ताराकारा यदि स्फटिकावनौ ।
तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः
सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ २१ ॥

धारयति, धारयत्येवेति भावः । मूर्खैर्ज्ञानाऽभावाद्विदग्धवैद्याः कविगिरो निन्द्यन्ते यदि तर्हि किं रसिकशिरोमणयः सज्जना वैदग्ध्य गुम्फिता वाणीनेच्छन्त्येवेति भावः । निदर्शनाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

अमृतजलधेरिति । अमृतजलधेः पयांसि पायंपायं पयोधरः स्फटिकाऽवनौ ताराकाराः करकाः किरति यदि, तत् इह क्षणं कठिनाः पुनः सततम् अमृतस्यन्दोद्गाराः प्रतिभावतां गिरः तुलनाम् आनीयन्त इत्यन्वयः ।

अमृतजलधेः = सुधासागरस्य, पयांसि = जलानि, पायम्पायं = पुनः पुनः पीत्वा, 'पा पाने' इति धातोः 'आभीक्ष्ण्येणमुल्' इत्याभीक्ष्ण्ये णमुल् 'आतो युक्चिण्कृतो' रिति युगागमः, 'कृन्मेजन्त' इत्यव्ययत्वं च । पयोधरः = मेघः, स्फटिकाऽवनौ = स्फटिकभूमौ, ताराऽऽकाराः = नक्षत्राऽऽकृतीः, करकाः = वर्षोपलान् , किरति यदि = क्षिपति चेत् , तत् = तर्हि, इह = अस्मिन्विषये, क्षणं = कंचित्कालम् , आपाततः इति शेषः । कठिनाः = कठोराः, ध्वन्यर्थवशादिति भावः । पुनः = भूयः, सततं=निरन्तरम् अमृतस्यन्दोद्गाराः = अमृतस्यन्दः ( पीयूषस्रावी ) उद्गारः ( अभिप्रायः ) यासां ताः । प्रतिभावतां = नवनवोन्मेषशालिप्रज्ञासम्पन्नानां, सत्काव्यनिर्माणशक्तिमता-मिति भावः । गिरः = वाण्यः, तुलनाम् = उपमाम् , आनीयन्ते = संप्राप्यन्ते । प्राक्कठिना अपि वर्षोपलाः स्फटिकभूमिं प्राप्य यथा द्रवन्ति तथैव प्राक्कठोरा अपि प्रतिभावतां गिरः परिपक्वधियां सहृदयानां मतिपथं प्राप्य स्फुटाऽर्थतां प्राप्नुवन्तीति भावः । संभावनाऽलङ्कारस्तल्लक्षणमुदाहरणं यथास्यैव महाकवेश्चन्द्रालोके—

'संभावनं यदीत्थं स्यादित्यूहोऽन्यप्रसिद्धये ।
सिक्तं स्फटिककुम्भाऽन्तःस्थितिश्वेतीकृतैर्जलैः ॥
मौक्तिकं चेल्लतां सूते तत्पुष्पैस्ते समं यशः ।' इति ।

मतान्तरे त्वसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरलङ्कारस्तल्लक्षणं यथा साहि-

और भी—समुद्रका जल वारंवार पीकर मेघ स्फटिकभूमिमें तारांके सदृश ओलोंकी वृष्टि करें तो काव्यमें कुछ समयतक कठोर फिर निरन्तर अमृतकी वृष्टि करनेवाली आशयोंसे सम्पन्न प्रतिभापूर्ण कवियोंकी वाणी उपमाको प्राप्त कर लेंगी ॥ २१ ॥

नटः—नूनमस्य कवेः किमपि कौतुकप्रमोदमेदुरमन्तःकरणं यदेवंविधाः सरसशीतलाः सूक्तयः समुल्लसन्ति।

सूत्रधारः—उचितमिदम्।

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः, कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः

स्वदर्पणे—'सिद्धत्वेऽध्यवसायस्याऽतिशयोक्तिर्निगद्यते।
भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्यये॥
पौर्वापर्याऽत्ययः कार्यहेत्वोः सा पञ्चधा ततः॥' इति।

हरिणीवृत्तं, तल्लक्षणं यथा—'रसयुगहयैर्न्सौ म्रौ स्लौगो यदा हरिणी मता।' इति॥ २१॥

नट इति। नूनमिति निश्चये। कौतुकप्रमोदमेदुरं=कौतुकं (कुतूहलम्) प्रमोदः (हर्षः) ताभ्यां मेदुरम् (सान्द्रम्)। अन्तः करणं=हृदयम्। यत्=यस्माद्धेतोः। सरसशीतलाः=सरसाः (शृङ्गारादिरसोपेताः) शीतलाः (चित्तप्रसादकाः)।

यस्या इति। यस्याः चोरश्चिकुरनिकुरः मयूरः कर्णपूरः, भासो हासः, कविकुलगुरुः कालिदासो विलासः, हर्षो हर्षः, बाणो हृदयवसतिः पञ्चबाणः; एषा कविताकामिनी केषां कौतुकाय न? कथयेत्यन्वयः। यस्याः=कविताकामिन्याः, चोरः=चोरनामकः सुन्दरकाऽपरपर्यायः कविः, चौरपञ्चाशिकाऽऽख्यखण्डकाव्यकर्तेति भावः। चिकुरनिकुरः=केशकलापः, 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः।' इत्यमरः। मयूरः=मयूरकविः, सूर्यशतककर्ता, जनश्रुत्या बाणभट्टमहाकवेः श्याल इति भावः। कर्णपूरः=कर्णभूषणम्। भासः=भासनामको महाकविः, स्वप्नवासवदत्तादित्रयोदशरूपककर्ता कालिदासादपि प्राचीनतर इति भावः। हासः=हास्यस्थानीयः। कविकुलगुरुः=कविसमुदायाऽऽचार्यः, कालिदासः=कालिदासकविः, अभिज्ञानशाकुन्तलादिकर्ता जगत्प्रसिद्धो महाकविरिति भावः। विलासः=विभ्रमः, हर्षः=श्रीहर्षः, नैषधचरितमहाकाव्यकर्तेति भावः। हर्षः=आनन्दः, बाणः=

नट—निश्चय ही इस कविका अन्तः करण अनिर्वचनीय रूपसे कुतूहल और हर्षसे परिपूर्ण है जो कि इनके ऐसे सरस और चित्तप्रसादक सुभाषित प्रादुर्भूत होते हैं।

सूत्रधार—यह उचित है।

जिस (कविता कामिनी) का चोरनामक कवि केशकलाप, मयूर कर्णभूषण, भास हास्य, कविकुलगुरु कालिदास विलास, श्रीहर्ष हर्ष, बाणभट्ट हृदयवासी पञ्चबाण (कामदेव)

केषां नैषा कथय कविताकामिनी कौतुकाय ॥ २२ ॥

अपि च—

न ब्रह्मविद्या न च राजलक्ष्मी-
स्तथा यथेयं कविता कवीनाम् ।
लोकोत्तरे पुंसि निवेश्यमाना
पुत्रीव हर्षं हृदये करोति ॥ २३ ॥

---

बाणभट्टाख्योमहाकविः, कादम्बर्यादिकर्त्तेति भावः । हृदयवसतिः=हृदये ( मनसि ) वसतिः (स्थानम्) यस्य सः, पञ्चबाणः=कामः, पञ्च (पञ्चसंख्यकाः, अरविन्दादयः) बाणाः ( शराः ) यस्य सः । कामस्य पञ्चबाणा यथा—

'अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ॥' इति ।

एषा=एतादृशी, कविताकामिनी=कविता एव कामिनी ( ललना ) केषां= सहृदयानां जनानां, कौतुकाय=कौतूहलोत्पादनायेति भावः । न=न भवति, कथय=ब्रूहि, अपि तु सर्वेषामेव सहृदयानां कौतूहलोत्पादनाय भवतीति भावः । रूपकालङ्कारः । मन्दाक्रान्तावृत्तं, तल्लक्षणं यथा—

'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ तादुगुरू चेत्' । इति ॥ २२ ॥

न ब्रह्मविद्येति । कवीनाम् 'इयं कविता लोकोत्तरे पुंसि निवेश्यमाना यथा पुत्री इव हृदये हर्षं करोति तथा न ब्रह्मविद्या न च राजलक्ष्मीः ( हृदये हर्षं करोति ) इत्यन्वयः ।

कवीनां=कवयितॄणाम् , इयम्=एषा 'कविता=कृतिः' लोकोत्तरे=लोकश्रेष्ठे, वर्ण्यमानेऽसाधारणे रामादाविति शेषः, पुत्रीपक्षे—सत्पात्ररूपे यूनीति शेषः । निवेश्यमाना=नियुज्यमाना पुत्रीपक्षे प्रतिपाद्यमाना सती, यथा=येन प्रकारेण, पुत्री इव=कन्या इव, हृदये=चित्ते, हर्षम्=आनन्दं, करोति = विदधाति तथा= तेन प्रकारेण, न ब्रह्मविद्या=ब्रह्मप्रतिपादकशास्त्रम् , वेदान्तरूपमिति भावः । न च राजलक्ष्मीः=भूपाललक्ष्मीः हृदये हर्षं करोतीति शेषः । सत्पात्रप्रतिपादिता कुमारीव लोकोत्तरपुरुषवर्णनपरायणा कविता यथा हर्षप्रकर्षं जनयति तथा

---

है, ऐसी कविताकामिनी किसके हृदयमें कौतूहल उत्पन्न नहीं करेगी ? ॥ २२ ॥

और भी—श्रेष्ठपुरुषमें प्रतिपादित कुमारीके सदृश लोकोत्तर ( राम आदि ) पुरुषमें उपयुक्त यह कविता कवियोंके हृदयमें जिसप्रकार हर्षप्रदान करती है उस तरह न ब्रह्मविद्या ( वेदान्तशास्त्र ) और न राजलक्ष्मी ही हर्ष उत्पन्न करती हैं ॥ २३ ॥

( नेपथ्ये )

साधु भोः, कुशीलवोत्तंस, साधु ।

**सूत्रधारः**—कथमयं भगवतो याज्ञवल्क्यस्य प्रियोऽन्तेवासी दाल्भ्यायन इत एवाभिवर्तते । तदस्याऽनवलोकनीयचतुर्थवर्णस्य पुरतः स्थातुमनुचितमस्माकम् । तदेहि । परतो गच्छावः । ( इति निष्क्रान्तौ )

इति प्रस्तावना

---

वेदान्तविद्या राजलक्ष्मीश्च न जनयत इति भावः । अत्रोपमालङ्कारः । एतेन सीतास्वयंवरार्थं जनककृतो धनुर्यज्ञमहोत्सवः सूच्यते । अत्र प्रथमतृतीयचतुर्थचरणेष्विन्द्रवज्रावृत्तम् । 'स्यादिन्द्रवज्रा यदि तौ जगौ गः ।' इति तल्लक्षणम् । द्वितीयचरण उपेन्द्रवज्रावृत्तम् ।

'उपेन्द्रवज्रा जतजास्ततो गौ ।' इति तल्लक्षणम् तथा चेन्द्रवज्रोपेन्द्रवज्रयोर्मिथः सम्मिश्रणादुपजातिवृत्तम् । तल्लक्षणं यथा—'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ।' इति तल्लक्षणम् ॥ २३ ॥

नेपथ्ये = कुशीलववेशपरिवर्तनस्थाने ।

'रङ्गभूमेर्बहिः स्थानं यत्तन्नेपथ्यमुच्यते ।' इति भरतः ।

कुशीलवोत्तंस = नटशेखर ।

सूत्रधार इति । याज्ञवल्क्यस्य = तन्नामकस्य महर्षेः । यज्ञवल्कस्य गोत्राऽपत्यं पुमान् याज्ञवल्क्यस्तस्य । 'गर्गादिभ्यो यञ्' इति यञ् । अन्तेवासी = शिष्यः । अन्ते = गुर्वन्तिके वसतीति तच्छीलः' 'सुप्यजातौ णिनिस्ताच्छील्ये' इति ताच्छील्ये णिनिः । 'शयवासवासिष्वकालात्' इत्यलुक् । अनवलोकनीयचतुर्थवर्णस्य = अनवलोकनीयः ( दर्शनाऽनर्हः ) चतुर्थवर्णः ( शूद्रः ) यस्य, तस्य । ब्रह्मचारिण इति भावः । ब्रह्मचारिणः शूद्रदर्शननिषेधात् । प्रस्तावनालक्षणं यथा साहित्यदर्पणे—

'नटी विदूषको वाऽपि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥' इति ।

प्रस्तावनाऽऽमुखं चेत्यनर्थान्तरम् । सा च प्रस्तावना पञ्चविधा, यथाऽऽह

---

( नेपथ्यमें )

ये नटश्रेष्ठ ! शाबास शाबास ।

**सूत्रधार**—भगवान् याज्ञवल्क्यके प्रियशिष्य ये दाल्भ्यायन कैसे इसी ओर आरहे हैं । इसकारण शूद्रको न देखनेवाले इनके सामने हमलोगोंका रहना अनुचित है । अतः आओ । दूसरी ओर जायं । ( इसतरह दोनों निकलते हैं )

इति प्रस्तावना

( प्रविश्य )

दाल्भ्यायनः—( तमेव श्लोकं पठित्वा ) ( साकूतम् ) साधूक्तमनेन । तथाहि—भूपतिरयं जनकोऽपि सकललोकलोचनारविन्दे कचिदपि पुरुषप्रकाण्डे निजां कन्यां समर्पयितुकामोऽस्मद्गुरूपदिष्टायां ब्रह्मविद्यायां कुलक्रमागतायां राजलक्ष्म्यां च शिथिलादरः संवृत्तः । ( पुनः कर्णं दत्त्वा )

---

विश्वनाथकविराजः—

'उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥' इति ।

तत्र चेयं कथोद्घातरूपा द्वितीया प्रस्तावना, सूत्रधारवाक्यश्रवणसमनन्तरं पात्रप्रवेशात् । तल्लक्षणं यथा—

'सूत्रधारस्य वाक्यं वा समादायार्थमेव वा ।
भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यते ॥' इति ।

दाल्भ्यायन इति । तमेव श्लोकं=न ब्रह्मविद्येत्यादिश्लोकमित्यर्थः । साकूतं=साऽभिप्रायम् । सकललोकलोचनाऽरविन्दे=सकलाः समग्राः ये लोकाः ( जनाः, 'लोकस्तु भुवने जने' इत्यमरः ) तेषां लोचनानाम् ( नेत्राणाम् ) अरविन्दे ( कमले, कमलसदृश आह्लादजनक इति भावः )। 'सकललोकलोचनाऽरविन्दमार्तण्डे' इति पाठान्तरे सकललोकलोचनानि एव अरविन्दानि ( कमलानि ) तेषां मार्तण्डे ( सूर्ये, लोकोत्तरसौन्दर्येण लोकलोचनाऽरविन्दानां सूर्यवत्प्रकाशक इति भावः )। पुरुषप्रकाण्डे=पुरुषश्रेष्ठे, प्रकाण्डं चाऽसौ पुरुषः पुरुषप्रकाण्डस्तस्मिन् , 'प्रशंसावचनैश्चे'ति समासः । 'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि 'इत्यमरः । निजां = स्वीयां, कन्यां=कुमारीं, सीतामिति भावः । समर्पयितुकामः = समर्पयितुं ( प्रतिपादयितुम् ) कामः ( इच्छा ) यस्य सः, 'तुं काममनसोरपी'ति मलोपः । अस्मद्गुरूपदिष्टायाम् = अस्मद्गुरुणा ( अस्मदाचार्येण, याज्ञवल्क्येनेति भावः ) उपदिष्टायाम् ( कृतोपदेशायाम् ) । कुलक्रमागतायां = वंशपरिपाट्यायातायाम् । शिथिलादरः = शिथिलः ( श्लथः, मन्द इत्यर्थः ) आदरः ( आदृतिः ) यस्य सः । साम्प्रतं कन्योद्वाहसम्पादनकामो जनको ब्रह्मविद्यायां

---

( प्रवेशकर )

दाल्भ्यायन—( उसी श्लोकको पढ़कर ) ( अभिप्राय पूर्वक ) इसने ठीक कहा। जैसे कि—ये महाराज जनक भी सब लोगोंके नेत्रोंके कमलके तुल्य ( आह्लादक ) किसी श्रेष्ठ पुरुषमें अपनी कन्या ( सीता ) को समर्पण करनेकी इच्छा कर हमारे गुरु ( याज्ञवल्क्यजी ) से उपदिष्ट ब्रह्मविद्या और कुलक्रमसे आई हुई राजलक्ष्मीमें भी आदर शिथिल कर रहे हैं। ( फिर कान देकर )

कथमयमाकाशे वीणाध्वनिः श्रूयते। तन्नूनमस्मद्गुरुमभ्यागच्छता समीरसंघट्टनकलकणद्वल्लकीगुणेन देवर्षिणा नारदेन भवितव्यम्। (विलोक्य) कथं ध्वनिसादृश्येन प्रतारितोऽस्मि। नन्वयं गगनतलावलम्बिनोर्मधुकरयोरेव ध्वनिराकर्ण्यते। (पुनः कर्णं दत्त्वा, सहर्षविस्मयम्) अहो भगवतो योगीश्वरस्य प्रसादमहिमा, येनाऽहमेवंविधानामपि वचनावबोधमधुरां सिद्धिमासादितवानस्मि। तदाकर्णयामि—किमेतावालपतः? (कर्णं दत्त्वा) एकः किमाह—सखे कलालाप, कुत आगतोऽसि। अपरः किमाह—वयस्य, मधुरप्रिय, सन्ततविकस्वराचन्द्रमौलिमन्दाकिनीकुमुदकाननात्। अहो! अनयोश्चतुरालापपेशलता रुचिरनामधेयता च। (पुनः कर्णं दत्त्वा)

---

राजलक्ष्म्यां चौदासीन्यं भजतीति भावः। वीणाध्वनिः=वल्लकीशब्दः। समीरसंघट्टनकलकणद्वल्लकीगुणेन=समीरस्य (वायोः) संघट्टनम्(सङ्घर्षणम्) तेन कलम् (मधुराऽस्फुटं यथा तथा) कणन् (शब्दायमानः) वल्लकीगुणः (वीणासूत्रम्) यस्य, तेन, 'नारदेने'त्यस्य विशेषणमिदम्। भवितव्यं=भवनीयम्, भाववाच्यप्रयोगः। प्रतारितः=वञ्चितः। आलपतः=आभाषेते। सन्ततविकस्वरात्=सन्ततं (निरन्तरम्) विकस्वरात् (विकासशीलात्)। चन्द्रमौलिमन्दाकिनीकुमुदकाननात्=चन्द्रमौलेः (चन्द्रशेखरस्य, शिवस्येत्यर्थः) या मन्दाकिनी (स्वर्गङ्गा) तस्याः कुमुदकाननात् (कैरवोपवनात्), आगतोऽस्मीति शेषः। अत्र चन्द्रमौलेः सत्त्वेन कैरववनस्य सन्ततविकस्वरत्वं बोध्यम्, अत एव परिकराऽलङ्कारः। चतुरालापपेशलता चतुरः (चातुर्यपूर्णः) य आलापः (आभाषणम्) तस्य पेशलता (सुकुमारता)। रुचिरनामधेयता=मनोहराऽभिधानता। नामैव नामधेयं, 'था भागरूप·

---

कैसे आकाशमें यह वीणाकी ध्वनि सुनाई पड़ रही है। इसलिए निश्चय ही हमारे गुरुजीके पास आनेवाले तथा वायुके संघर्षसे जिनकी वीणाका तार मनोहर शब्द कर रहा है ऐसे नारदजी आ रहे हैं ऐसा मालूम होता है। (देखकर) कैसे ध्वनिके सादृश्यसे ठगा गया हूं। आकाशमें उड़नेवाले दो भौंरोंकी ही यह ध्वनि सुनी जा रही है। (फिर कान देकर हर्ष और आश्चर्यके साथ) अहो! भगवान् योगीश्वरकी कैसी प्रसादमहिमा है! जिससे मैंने ऐसे भ्रमरोंके भी वचनके ज्ञानकी मधुरसिद्धि प्राप्त कर ली है। इस कारण मैं सुनता हूं कि ये क्या बातचीत कर रहे हैं? (कान देकर) एक क्या कहता है—सखे कलालाप! तुम कहांसे आये हो? दूसरा क्या कहता है—वयस्य मधुरप्रिय! महादेवकी मन्दाकिनीके निरन्तर विकसित होनेवाले कुमुदवनसे आया हूं। अहो! इन दोनोंकी चातुर्यपूर्ण आलापकी सुकुमारता और नामकी भी सुन्दरता है।

किमाह—मधुरप्रियः—अस्ति नवीनः कोऽपि वृत्तान्तः ? किमाह कलालापः—अस्ति । अचिरमेव कदापि खलु बलिनन्दनो बाणासुरः कमलमालया भगवन्तमिन्दुमौलिमभ्यर्च्य सविनयमिदमूचिवान् । यत् किल भगवन्—

कैलासाधिकसारं किमस्ति वस्तु महीतले ।
यस्मिन्सफलतामेति मम दोर्दण्डमण्डलम्॥ २४ ॥

ततश्च विहस्येदमाह च भगवानिन्दुमौलिः—

अस्ति मे कार्मुकं दिव्यं न्यस्तं जनकभूभुजि ।

---

नामभ्योधेय' इति स्वाऽर्थे ( प्रकृत्यर्थे ) धेयप्रत्ययः । नामधेयस्य भावो नामधेयता, 'तस्य भावस्त्वतलौ' इति तल्प्रत्ययः, 'तलन्तं स्त्रियाम्' इति लिङ्गाऽनुशासनसूत्रात् स्त्रीत्वाट्टाप्प्रत्ययः । रुचिरा चाऽसौ नामधेयता । सविनयं = नम्रतापूर्वकम् ।

कैलासाऽधिकसारमिति । महीतले कैलासाऽधिकसारं वस्तु किम् अस्ति ? यस्मिन् मम दोर्दण्डमण्डलं सफलताम् एतीत्यन्वयः ।

महीतले = भूतले, कैलासाऽधिकसारं = कैलासात् ( भवन्निवासपर्वतात् , तस्य रावणेनोत्तोलितत्वादिति भावः ) अधिकसारम् ( अधिकबलम् ) वस्तु = पदार्थः । किमस्ति = किं विद्यते ? यस्मिन् = यत्र, मम = बाणाऽसुरस्य, समरसमये सहस्रबाहुसम्पन्नस्येति भावः । दोर्दण्डमण्डलं=दोषः ( बाहवः ) एव दण्डाः, तेषां, मण्डलम् ( समूहः ), बाहुषु दण्डसमधिरसारदाढर्य सत्त्वाद्दण्डारोपाद्रूपकाऽलङ्कारः । सफलतां = साफल्यम्, एति = प्राप्नोति । कैलासस्य पूर्वमेव रावणेनोत्तोलितत्वात्तत्र मद्दोर्दण्डविक्रमोऽनावश्यकः । अतः कैलासाऽधिकशक्तिसम्पन्नः पदाऽर्थो भूतले किमभिधानोऽस्ति यत्र मद्बाहुव्यूहः सफलो भवेदिति भावः । अनुष्टुब्वृत्तम् ॥ २४ ॥

अस्तीति । जनकभूभुजि न्यस्तं मे दिव्यं कार्मुकम् अस्ति, यस्य बाणाऽनले त्रिपुरः पतङ्गतां प्राप्ता इत्यन्वयः । जनकभूभुजि = जनके भूपाले, भुवं भुनक्तीति

---

( फिर कान देकर ) मधुर प्रियने क्या कहा है ? कुछ नया वृत्तान्त है ? कलालापने क्या कहा है ? अभी ही किसीसमय बलिके पुत्र बाणासुरने कमलोंकी मालासे भगवान् शङ्कर की पूजा कर नम्रताके साथ ऐसा कहा । जैसा कि—हे भगवन् !

भूतलमें कैलासपर्वतसे भी अधिक सारवाला पदार्थ कौन सा है ? जिसमें कि मेरा बाहुमण्डल सफलताको प्राप्त करे ॥ २४ ॥

तब हँसकर भगवान् महादेवने ऐसा कहा—

महाराज जनकके पास रक्खा गया मेरा दिव्य धनु है, जिसके बाणाग्निमें त्रिपुरासुरके

यस्य बाणानले तिस्रः पुरः प्राप्ताः पतङ्गताम्॥ २५॥

तदाकर्ण्य च तत्कार्मुकं विलोकयितुं स तत्र गतः। अहमिहागतः। कुतः पुनस्त्वमिह? कथय, कीदृशो वा तत्र नवीनो वृत्तान्तः? इति। किमाह मधुरप्रियः—अहमागतोऽस्मि नन्दनवनात्। अथ च तत्र मया लङ्केश्वरानुचरस्य गर्जितमाकर्णितम्—आः कथं रे, नन्दनवनस्य रक्षिणः! अनर्चितचन्द्रचूड एव निशाचरचक्रवर्त्तिनि लूनसकलप्रसूनं नन्दनवनमिति। ततस्तैरिदमुक्तो निशाचरः—'क्षन्तव्यमेतत्। अद्य हि जनकराज-

भूभुक्, जनकश्चाऽसौ भूभुक्, तस्मिन्। जनकसौध इति भावः। न्यस्तं=स्थापितं मे=मम, दिव्यं=लोकोत्तरं, दिवि भवं दिव्यं, 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत्प्रत्ययः। कार्मुकं=धनुः। कर्मणे प्रभवतीति, 'कर्मण उकञ्' इति उकञ्प्रत्ययः। 'अथाऽस्त्रियाम्। धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्।' इत्यमरः। अस्ति=वर्त्तते। यस्य=कार्मुकस्य, बाणाऽनले=शराऽग्नौ' बाण एवाऽनलस्तस्मिन्। रूपकसमासो रूपकाऽलङ्कारश्च। तिस्रः=त्रिसंख्यकाः, पुरः=नगराणि, त्रिपुराऽसुरस्येति भावः। पतङ्गतां=शलभतां, 'समौ पतङ्गशलभौ' इत्यमरः। प्राप्ताः=आसादिताः। त्रिपुरपुरदाहे मयोपयुक्तं धनू राज्ञो जनकस्य भवनस्थं, तदेव स्वहूर्वं खर्वं करिष्यतीति भावः अनुष्टुब्वृत्तम्॥ २५॥

तदाकर्ण्येति। सः=बाणाऽसुरः। नन्दनवनात्=इन्द्रोपवनात्। लङ्केश्वराऽनुचरस्य=रावणसेवकस्य। निशाचरचक्रवर्तिनि=राक्षससम्राजि, रावण इति भावः। अनर्चितचन्द्रचूडे=अनर्चितः (अपूजितः) चन्द्रचूडः (चन्द्रशेखरः) येन सः तस्मिन् 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। लूनसकलप्रसूनं=लूनानि (छिन्नानि, अवचितानीति भावः) सकलानि (समस्तानि) प्रसूनानि (पुष्पाणि) यस्मात्तत्। ततः=लङ्केश्वराऽनुचरवचनसमनन्तरमित्यर्थः। तैः=नन्दनवनरक्षिभिः। क्षन्तव्यं=मर्षणीयम्। जनकराजकन्यकेत्यादिः=जनकराजस्य (जनकभूभुजः)

तीनों शहर पतङ्गभावको प्राप्त हो गये॥ २५॥

यह सुनकर उस धनुको देखनेके लिए (बाणासुर) वहाँ गया। मैं यहां आया। तुम यहाँ कहाँसे आये हो? कहो, वहाँ कैसा नया वृत्तान्त है? मधुरप्रियने क्या कहा? मैं नन्दनवनसे आया हूँ और वहां मैंने रावणके अनुचरका गर्जन सुना कि—अरे! क्यों नन्दन वनके रखवारो? राक्षसोंके चक्रवर्ती रावणके शिवपूजा करनेके पहले ही—नन्दनवनके सब फूल तोड़े गये। तब उनलोगोंने राक्षसोंको ऐसा कहा—'क्षमा करनी चाहिए। आज जनकमहाराजकी कन्याका स्वयंवर देखनेके लिए कौतुकपूर्ण सकलदेवोंके

कन्यकावीरस्वयंवरविलोकनकुतुकितसकलसुरलोकविमानमण्डनाय महान् कुसुमोपयोगः'। तदाकर्ण्य चेममेव वृत्तान्तमुपायनीकरोमि लङ्केश्वरस्येति प्रचलितो निशाचरः। अहमपि कौतुकादिहागतोऽस्मि । (सविषादम्) अहो ! महाननर्थाङ्कुरोद्भेदो यदयं बाणरावणयोः कर्णान्तिकमपि विश्रान्तः सीतास्वयंवरवृत्तान्तः। अथवा। अलमतिकातरतया। भ्रमारोपिता अपि भ्रमरोक्तयः संभवन्ति। (विमृश्य) कुतो वा भ्रमरसम्भावना।

मकरन्दरसस्यन्द–सुन्दरोद्गारधारिणौ ।

---

कन्यका (कुमारी, सीतेत्यर्थः) तस्या वीरः (शूरः) यः स्वयम्वरः (स्वयं व्रियमाणो वल्लभः) तस्य विलोकनं (दर्शनम्) तस्मिन् कुतुकिताः (संजातकौतूहलाः, तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः) सकलाः (समस्ताः) ये सुरलोकाः (देवसमूहाः) तेषां विमानमण्डनाय (व्योमयानाऽलङ्करणाय)। कुसुमोपयोगः=कुसुमानाम् (पुष्पाणाम्) उपयोगः (व्ययः)। लङ्केश्वरस्य=रावणस्य, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवे'ति नयात् कर्मणः=सम्बन्धविवक्षायां षष्ठी। उपायनीकरोमि=उपहारीकरोमि, अनुपायनमुपायनं यथा संपद्यते तथा करोमि, 'कृभ्वस्तियोगे संपद्यकर्तरि च्विः' इति च्विः। 'अस्य च्वौ' इत्यवर्णस्येत्वम्।' उपायनमुपग्राह्यमुपहारस्तथोपदा।' इत्यमरः। अनर्थाङ्कुरोद्भेदः=अनर्थः (अनिष्टः) एव अङ्कुरः (अभिनवोद्भित्) तस्योद्भेदः (प्राकट्यम्)। कर्णान्तिकं=श्रोत्रसमीपम्। 'उपकण्ठाऽन्तिकाऽभ्यर्णाऽभ्यग्रा अप्यभितोऽव्ययम्। इत्यमरः। अतिकातरतया=अतिभीरुत्वेन, अलंपदेन योगे 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिके'ति नयेन तृतीया। अतिकातरतया साध्यं नाऽस्तीति भावः। भ्रमारोपिताः=भ्रमेण (भ्रान्त्या, तद्भाववति तत्प्रकारकज्ञानरूपयेति भावः) आरोपिताः (कृताऽऽरोपाः)। विमृश्य=भावयित्वा।

मकरन्देति। मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ श्रवणाऽऽनन्दिनौ एतौ बन्दिनौ

---

विमानोंको अलङ्कृत करनेके लिए फूलोंका पर्याप्त उपयोग हुआ है।' ऐसा सुनकर 'इसी वृत्तान्तको लङ्केश्वर रावणको उपहार करता हूँ' ऐसा कहकर राक्षस चला। मैं भी कौतूहलसे यहाँ आया हूँ। (विषादके साथ) अहो ! महान् अनर्थाङ्कुर प्रकट हुआ है जो कि बाण और रावणके कानके समीप भी सीतास्वयंवरके वृत्तान्तने विश्राम किया। अथवा। ज्यादा डरपोक नहीं होना चाहिए। भ्रमरकी उक्तियाँ भ्रमसे भी आरोपित हो सकती हैं। (विचार कर) अथवा भ्रमरकी सम्भावना कैसे हो सकती है ?

कुन्दपुष्पके द्रवके प्रस्रवण (चूने) के सदृश मनोहर शब्दको धारण करनेवाले, कान

श्रवणानन्दिनावेतौ बन्दिनाविव राजतः ॥ २६ ॥

( नेपथ्ये )

साधु भगवन् , विज्ञातं, बन्दिनावेव खल्वावां, नानादिगन्तसमागत-नृपतिचक्रवर्णनाय जनकेन समादिष्टौ ।

दाल्भ्यायनः—अहो घुणाक्षरन्यायो यदिदं भ्रमरद्वयं प्रति मयोक्तं बन्दिद्वयं प्रति फलितं वचः । भवतु । तदिमं भ्रमरवृत्तान्तमस्मद्गुरवे निवेदयामि । ( इति निष्क्रान्ताः )

---

इव राजत इत्यन्वयः।

मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ=मकरन्दस्य ( कुन्दवृक्षस्य ) विकारो मकरन्दं, 'तस्य विकार' इत्यण्' 'पुष्पमूलेषु बहुलम्' इति तस्य लुक्। मकरन्दस्य 'पुष्परसस्येतिव्याख्याने रसपदस्य पौनरुक्त्यं स्यादतो मकरन्दस्य ( कुन्दपुष्पस्य ) रसः ( द्रवः ) तस्य स्यन्दः ( प्रस्रवणम् ) स इव यः सुन्दरः ( मनोहरः ) उद्गारः ( शब्दः ) तं धारयतस्तच्छीलौ अत एव श्रवणाऽऽनन्दिनौ=कर्णानन्दजनकौ, एतौ= भ्रमरौ, बन्दिनाविव = स्तुतिपाठकाविव, राजतः = शोभेते । उपमालङ्कारः। अनुष्टुब्वृत्तम् ॥ २६ ॥

नेपथ्य इति । नानादिगन्तसमागतनृपतिचक्रवर्णनाय=नानादिगन्तेभ्यः ( अनेकदिशान्तेभ्यः ) समागताः ( समायाताः ) ये नृपतयः ( राजानः ) तेषां चक्रं ( मण्डलम् ) तस्य वर्णनाय ( प्रतिपादनाय )।

अतः परं प्रवेशकयोः स्तुतिपाठकयोः प्रवेशसूचकत्वात् प्रवृत्तकमिदं नाट्याङ्गं तल्लक्षणं यथा दशरूपके—'कालसाम्यसमाक्षिप्तप्रवेशः स्यात्प्रवृत्तकम् ।' इति ।

दाल्भ्यायन इति । घुणाऽक्षरन्यायः=घुणदष्टे काष्ठखण्डे यथा संयोगेन वर्णाः प्रतीयन्ते, तथैव संयोगेन याऽऽकस्मिकी घटना भवति तत्राऽयं न्याय उपयुज्यते । अस्मद्गुरवे = 'निवेदयामी'ति क्रियाग्रहणात् 'क्रियया यमभिप्रैति सोऽपिसम्प्रदानम्' इति सम्प्रदानत्वाच्चतुर्थी ।

---

को आनन्दित करनेवाले ये दो भौंरे ) स्तुतिपाठकोंके समान शोभित हो रहे हैं ॥ २६ ॥

( नेपथ्यमें )

भगवन् ! आपने ठीक जानलिया । हमदोनों स्तुतिपाठक ही हैं । हमें अनेक दिशाओंसे आनेवाले राजसमूहका वर्णन करनेके लिए महाराज जनकने आज्ञा दी है ।

दाल्भ्यायन—अहो ! यह घुणाक्षर न्याय है, मैंने इन दो भ्रमरोंको लक्ष्य करके जो वचन कहा वह दो स्तुतिपाठकोंके प्रति घटित हुआ । हो जाय । इसलिये यह भ्रमरवृत्तान्त अपने गुरुजीको निवेदन करता हूं । ( अनन्तर सब बाहर निकलते हैं । )

इति विष्कम्भकः

( ततः प्रविशति बन्दिद्वयम् )

**एकः**—वयस्य मञ्जीरक, पश्य पश्य। गजेन्द्रदशनस्निग्धशलाकासहस्रनिर्मितेषु मञ्चेष्वासीना इमे कुङ्कुमकृताङ्गरागा राजानोऽमलस्फटिकप्रासादशिखरासङ्गिनः कनकसिंहा इव राजन्ते, अमुग्धदुग्धसागरलहरीशिखरावलम्बिनोऽभिनवोद्गच्छन्निशाकरबिम्बप्रतिबिम्बा इव शोभन्ते ।
( वअस्स मञ्जीरअ, पेक्ख पेक्ख। गइन्द-दसण-सिणिद्ध-सलाआसहस्सणिम्मिदेसु मञ्चएसु आसीणा इमे कुङ्कुमकअङ्गराआ राआणो अमलफडिअपासाअसिहरासङ्गिणो

---

विष्कम्भकः = एतल्लक्षणमुक्तं साहित्यदर्पणे यथा—

'वृत्तवर्तिष्यमाणानां कथांऽशानां निदर्शकः।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शकः॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां स प्रयोजितः॥
शुद्धः स्यात्, स तु संकीर्णो नीचमध्यमकल्पितः॥' इति ।

तथा चाऽस्य विष्कम्भकस्य मध्यमपात्रप्रयोजितसंस्कृतमयत्वाच्छुद्धत्वं ज्ञेयम्। अस्याऽत्राऽऽवश्यकता बन्दिप्रवेशसूचनाऽर्थमवसेया ।

एक इति। वयस्य = समवयस्क, वयसा तुल्यो वयस्यस्तत्सम्बुद्धौ, 'नौवयोधर्म' त्यादिना यत्। 'वयस्यः स्निग्धः सवया' इत्यमरः। गजेन्द्रदशनस्निग्धशलाकासहस्रनिर्मितेषु = गजेन्द्राणां ( श्रेष्ठ हस्तिनां ) ये दशनाः ( दन्ताः, 'रदना दशना दन्ता रदा' इत्यमरः ) तेषां स्निग्धाः ( चिक्कणाः ) याः शलाकाः, ( खण्डानि ) तासां सहस्रं ( दशशती ) तन्निर्मितेषु ( तद्रचितेषु )। मञ्चेषु = पर्यङ्केषु। कुङ्कुमकृताऽङ्गरागाः = कुङ्कुमेन ( काश्मीरेण ) कृतः ( विहितः ) अङ्गरागः ( देहाऽनुलेपनम् ) यैस्ते। अमलस्फटिकप्रासादशिखराऽऽसङ्गिनः = अमलाः ( निर्मलाः ) ये स्फटिकाः ( सितोपलाः ) तन्निर्मितो यः प्रासादः ( राजसदनम् ) तस्य शिखरम् ( अग्रभागः ), तस्मिन् आसङ्गिनः संसर्गयुक्ताः, आरूढा इति भावः )। कनकसिंहा इव = सुवर्णकेसरिण इव। राजन्ते = शोभन्ते। राज्ञां कान्तिसाम्येन कनकोपमा

---

इति विष्कम्भक।

( तब दो स्तुतिपाठक प्रवेश करते हैं। )

**एक**—मित्र मञ्जीरक! देखो देखो। हाथियोंके दाँतोंके चिकने हजारों टुकड़ोंसे बने हुए आसनों पर बैठे हुए और केसरसे अङ्गमें लेप किये हुए राजसमूह, निर्मल स्फटिक प्रासादके ऊर्ध्वभागमें आरूढ सोनेके सिंहोंके सदृश शोभित हो रहे हैं। एवम् प्रौढ

कण्ठसिंहा विअ रेहन्ति । अमुद्धदुद्धसाअरलहरिसिहरावलम्बिणो अहिणवुग्गमन्त-णिसाअरबिम्बपडिबिम्बा विअ सोहन्ति )

**मञ्जीरकः**—सखे नूपुरकः पश्य पश्य ।

> स्वां स्वां दिशं श्रितवतां निवहेन राज्ञां
> मञ्चावलीवलय-माकलितं विभाति ।
> सीतास्वयंवर-विलोकन-कौतुकेन
> पुञ्जीकृताकृति दिशामिव चक्रवालम् ॥ २७ ॥

---

पराक्रमसाम्येन सिंहोपमा बोद्धव्या । अमुग्धदुग्धसागरलहरीशिखराऽवलम्बिनः = अमुग्धः (प्रौढः) यो दुग्धसागरः ( क्षीरसमुद्रः ) तस्य लहरीणां ( महातरङ्गाणाम् ) शिखराणि ( ऊर्ध्वभागान् ) अवलम्बन्ते ( आश्रयन्ते ) तच्छीलाः । अभिनवोद्गच्छन्निशाकरप्रतिबिम्बाः = अभिनवोद्गच्छतः ( नूतनोदितस्य ) निशाकरबिम्बस्य ( चन्द्रमण्डलस्य ) प्रतिबिम्बा इव ( प्रतिमा इव, 'प्रतिमानं प्रतिबिम्बं प्रतिमा प्रतियातना प्रतिच्छाया । प्रतिकृतिरर्चा पुंसि प्रतिनिधिः' इत्यमरः )

मञ्जीरको मञ्चाऽऽवलीं वर्णयति—स्वां स्वामिति ।

स्वां स्वां दिशं श्रितवतां राज्ञां निवहेन आकलितं मञ्चावलीवलयं सीतास्वयम्बरविलोकनकौतुकेन पुञ्जीकृताऽऽकृति दिशां चक्रवालमिव विभातीत्यन्वयः ।

स्वां स्वां = स्वकीयां स्वकीयां, वीप्सायां द्विरुक्तिः । आत्मीयत्वेन नियतामिति भावः । दिशं = प्राच्यादिकाष्ठामित्यर्थः । श्रितवतां = सेवितवतां, राज्ञां = भूपालानां, निवहेन = समूहेन, आकलितं = स्वीकृतं, मञ्चावलीवलयं = पर्यङ्कपङ्क्तिमण्डलं, सीतास्वयम्बरविलोकनकौतुकेन = सीतायाः ( जानक्याः ) स्वयम्बरस्य ( वराऽन्वेषणोत्सवस्य ) यद्विलोकनं ( दर्शनम् ) तस्मिन् कौतुकेन ( कुतूहलेन ) । पुञ्जीकृताऽऽकृति = पुञ्जीकृता ( समूहीकृता ) आकृतिः ( आकारः ) यस्य तत् । तादृशं—दिशां चक्रवालमिव = प्राच्यादिकाष्ठानां मण्डलमिव, विभाति = शोभते । तत्तत्स्ववाञ्छितदेशादिशं सेवितवतां राज्ञां समूहेनाऽधिष्ठितं मञ्चपङ्क्तिमण्डलं सीता-

---

क्षीरसमुद्रके महातरङ्गोंके ऊर्ध्वभागका आश्रय करनेवाले नवोदित चन्द्रमण्डलके प्रतिबिम्बों के सदृश शोभा पा रहे हैं ।

**मञ्जीरक**—मित्र नूपुरक ! देखो देखो ।

अपनी अपनी दिशाको आश्रय करनेवाले राजाओंके समूहसे स्वीकृत मञ्चसमूह, सीताके स्वयंवरोत्सव देखनेके कौतुकसे इकट्ठा हुआ दिक्समुदायके सदृश शोभित हो रहा है ॥ २७ ॥

अपि च—

नटति नरकराग्रव्यग्रसूत्राग्रलग्न-
द्विपदशनशलाकामञ्चपाञ्चालिकेयम् ।
त्रिपुरमथनचापारोपणोत्कण्ठिताना-
मतिरभसवतीव क्ष्माभृतां चित्तवृत्तिः ॥ २८ ॥

नूपुरकः—वयस्य मञ्जीरक, कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मी-विलसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं विलोकयंस्ति-

---

स्वयम्बरदर्शनकुतूहलेनैकत्राऽवस्थितं दिङ्मण्डलमिव शोभत इति भावः । तथा चाऽत्रोत्प्रेक्षाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ २७ ॥

भूयोऽपि मञ्चनृपतिवर्णनं विदधाति—नटतीति । इयं नरकराऽग्रव्यग्रसूत्राऽग्र-लग्नद्विपदशनशलाकामञ्चपाञ्चालिका त्रिपुरमथनचापाऽऽरोपणोत्कण्ठितानां क्ष्मा-भृताम् अतिरभसवती चित्तवृत्तिरिव नटतीत्यन्वयः ।

इयं=सन्निकृष्टस्थिता, नरकराऽग्रेत्यादिः—नराणां ( राजपुरुषाणाम् ) कराऽग्रेषु ( हस्ताऽग्रेषु ) व्यग्रम् व्यासक्तं, व्यग्रो व्यासक्त आकुल' 'इत्यमरः' यत् सूत्रं (रज्जुः) तस्य अग्रे (अग्रभागे) लग्ना (सम्बद्धा) या द्विपानां ( हस्तिनाम् ) दशनाः (दन्ताः) तेषां शलाकाभिर्निर्मिता या मञ्चरूपा या पाञ्चालिका ( पुत्रिका )। त्रिपुरमथन-चापाऽऽरोपणोत्कण्ठितानां=त्रिपुरमथनस्य ( शिवस्य ) यश्चापः ( धनुः ) तस्य आरोपणे ( उद्यमने ) उत्कण्ठितानाम् ( उत्सुकानाम् । क्ष्माभृतां राज्ञां, क्ष्मां बिभ्रतीति क्ष्माभृतस्तेषां 'क्विप् चे'ति क्विप्प्रत्ययः' ह्रस्वस्य पिति कृति तुक्' इति तुक् । अतिरभसवती = अतिशयवेगवती, 'रभसो हर्षवेगयो'रिति विश्वः । चित्त-वृत्तिरिव=अन्तः करणवृत्तिरिव, नटति = नृत्यति, 'णट नृत्ते' विति धातोर्लट् । काष्ठ-मयी पाञ्चालिकेव यथा मञ्चरूपा पाञ्चालिक्यपि नर्त्यते तथैव हरचापारोपणोत्क-ण्ठया राज्ञां चित्तवृत्तिरपि नृत्यतीति भावः । अत्र पूर्वार्द्धे मञ्चे पाञ्चालिकारोपाद्रूप-कमुत्तरार्द्धे चोपमाऽलङ्कारस्तथा च द्वयोरङ्गाऽङ्गिभावेन सङ्करः । मालिनीवृत्तम् ॥२८॥

नूपुरक इति । सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डितं=

---

और भी—राजपुरुषोंके कराग्रोंमें व्यासक्त रज्जुके अग्रभागमें सम्बद्ध हाथी दाँतोंसे निर्मित मञ्चरूप ये कठपुतलियाँ, महादेवके धनुको उठानेके लिए उत्कण्ठित राजाओं की अतिशय वेगवाली चित्तवृत्तिकी तरह नृत्य कर रही हैं ॥ २८ ॥

नूपुरक—मित्र मञ्जीरक ! यह कौन सीताके पाणिग्रहणकी लालसारूप वसन्तशोभासे

इति ? ( वअस्स मञ्जीरअ, को इमो सीताकरग्गहवासनावसन्तलच्छीविलसन्तपुलअमुउलजालमण्डिदं णिअभुअसहआरसाहिजुअलं पुलोअन्तो चिट्ठदि ? )

**मञ्जीरकः**—स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालङ्कारो मल्लिकापीडो नाम ।

**नूपुरकः**—अयं पुनः कतमो यः किल दूरापसारितकटकप्रकटितधनुर्गुणकर्षणकिणलेखामण्डले भुजदण्डे विलोकयँस्तिष्ठति ? ( इमो उण कदमो जो किल दूरावसारिअकडअप्पअडिअधणुग्गुणकिणकसणलेहामण्डले भुअदण्डे पुलोअन्तो चिट्ठदि ? )

---

सीतायाः ( जानक्याः ) करग्रहः ( पाणिग्रहणम् ) तस्मिन् या वासना ( लालसा ) सैव वसन्तलक्ष्मीः ( सुरभिशोभा ) तया ये पुलकाः ( रोमाञ्चाः ) एव मुकुलाः ( कुड्मलाः ) तेषां जालं ( समूहः ) तेन मण्डितम् ( अलङ्कृतम् ) । निजभुजसहकारशाखियुगलं = निजभुजौ ( आत्मबाहू ) एव यौ सहकारशाखिनौ ( अतिसौरभाऽऽम्रवृक्षौ ) तयोर्युगलं ( युग्मम् ) विलोकयन् = पश्यन् ।

मञ्जीरक इति । निजयशः परिमलेत्यादिः = निजयशः ( स्वकीर्तिः ) एव परिमलः ( सुगन्धः ) तेन प्रमोदिताः ( हर्षिताः ) ये चारणाः ( यशोगायनाः ) एव चञ्चरीकाः ( भ्रमराः ) तेषां चयः ( समूहः ) तस्य यः कोलाहलः ( कलकलः ) तेन मुखरितं ( शब्दायमानम् ) दिक्चक्रवालं ( दिशामण्डलम् ) येन सः, तादृशः क्ष्मापालानां ( भूमिपालानां, राज्ञामित्यर्थः ) कुन्तलाऽलङ्कारः ( केशभूषणभूतः, यद्वा कुन्तलस्य = कुन्तलदेशस्येत्यर्थः ) । मल्लिकापीडो नाम = नाम्ना मल्लिकापीड इत्यर्थः ।

नूपुरक इति । दूराऽपसारितकटकप्रकटितधनुर्गुणकर्षणकिणलेखामण्डले = दूरम् ( विप्रकृष्टम् ) अपसारितं ( प्रतिसारितम् ) यत् कटकं ( वलयं, प्रकोष्ठाऽऽभरणविशेषः, 'आवापकः पारिहार्यः कटको वलयोऽस्त्रियाम् ।' इत्यमरः ) तेन प्रकटितः ( प्रकाशितः ) यो धनुर्गुणाकर्षणकिणः ( चापमौर्व्याकर्षणकृतः मांसग्रन्थिः ) स

---

रोमाञ्चरूप मुकुलोंके समूहसे अलङ्कृत सहकारवृक्षोंके सदृश अपने दो बाहुओंको देख रहा है ?

**मञ्जीरक**—अपने यशोरूप सुगन्धसे हर्षित चारणरूप भ्रमरोंके कोलाहलसे दिशामण्डलको मुखरित करनेवाला और राजाओंके केशभूषणसदृश ये मल्लिकापीड नामके राजा हैं ।

**नूपुरक**—यह कौन है ? जो कि वलयको दूर हटानेसे प्रत्यञ्चा खींचनेसे मांसग्रन्थिरूप रेखामण्डलको प्रकाशित कर अपने बाहुदण्डको देख रहा है ।

मञ्जीरकः—सोऽयं कुबेरदिगङ्गनाललाटतटविलासलम्पटः काश्मीर-तिलकः ।

नूपुरकः—अयं पुनः को निजप्रतापदिनकरोद्गमपूर्वगिरिशिखरसहचरं दक्षिणभुजदण्डमुन्नमय्य वर्त्तते ? ( इमो उण को णिअपदावदिणअरुग्गमपुव्वगिरिसिहरसहअरं दक्खिणभुअदण्डमुण्णमिअ वट्टदि ? )

मञ्जीरकः—स एष निजप्रतापप्रभापटलपिञ्जरितमलयाचलनितम्बतटः काञ्चीमण्डनो वीरमाणिक्यनामा नृपतिः ।

नूपुरकः—कोऽयं हर्षोल्लसत्पुलकविसंष्ठुलकपोलस्थलचलितकुण्डल-

---

एव लेखामण्डलं ( रेखामण्डलम् ) यस्मिंस्तस्मिन् । एतादृशे भुजदण्डे = बाहुदण्डे ।

मञ्जीरक इति । कुबेरदिगङ्गनाललाटतटविलासलम्पटः=कुबेरस्य ( यक्षराजस्य ) दिक् ( दिशा, उदीचीति भावः ) सैव याऽङ्गना ( कामिनी ) तस्या ललाटतटं ( भालफलकं, पर्यन्तभूरिति भावः ) तस्य विलासलम्पटः ( उपभोगाऽऽसक्तः ) उत्तरदिगवस्थितदेशाऽधीश्वर इति भावः ।

नुपुरक इति । निजप्रतापदिनकरोद्गमपूर्वगिरिशिखरसहचरं = निजप्रतापः ( स्वप्रतापः ) एव दिनकरः ( सूर्यः ) तस्योद्गमस्य ( उदयस्य ) हेतुभूत इति शेषः । यः पूर्वगिरिः ( पूर्वपर्वतः, उदयाऽचल इति भावः ) तस्य शिखरं ( शृङ्गम् ) तस्य सहचरम् ( सखायम् ) उन्नमय्य = ऊर्ध्वं कृत्वा ।

मञ्जीरक इति । निजप्रतापप्रभापटलपिञ्जरितमलयाऽचलनितम्बतटः = निजप्रतापस्य ( स्वप्रतापस्य ) या प्रभा ( दीप्तिः ) तस्याः पटलं ( समूहः ) तेन पिञ्जरितम् ( पिशङ्गीकृतम् ) मलयाऽचलस्य ( मलयनामकपर्वतस्य ) नितम्बतटम् ( मध्यभागः ) येन सः । काञ्चीमण्डनः = काञ्च्याः ( काञ्चीनामकदेशस्य ) मण्डनः ( भूषणभूतः ) ।

नूपुरक इति । हर्षोल्लसत्पुलकविसंष्ठुलकपोलस्थलचलितकुण्डलसदृशनिवेशनाऽ-

---

**मञ्जीरक**—ये कुबेरकी उत्तरदिशारूप सुन्दरीके ललाटतट ( पर्यन्तभूमि ) के विलास से लम्पट काश्मीरतिलक-नामक राजा हैं ।

**नूपुरक**—यह कौन अपने प्रतापसूर्यके उदयके हेतुभूत उदयपर्वतकी चोटीके सदृश अपने दाहिने बाहुदण्डको उठा रहा है ?

**मञ्जीरक**—ये अपने प्रतापके प्रभासमूहसे मलयपर्वतके मध्यभागको रञ्जित करने वाले काञ्चीनगरके अलङ्काररूप वीरमाणिक्य नामक राजा हैं ।

**नूपुरक**—यह कौन हर्षसे प्रकट होनेवाले रोमाञ्चसे चञ्चल कपोलमें प्रचलित कुण्डल

सदृशनिवेशनापदेशेन प्रकटितहरशरासनकर्णपूरमनोरथो राजते ? (को इमो हरखुसन्तपुलअविसंठुलकपोलत्थलचलकुण्डलसरिसनिवेसणावदेसेण पअडिअहरसरासणकण्णऊरमनोरहो रहेदि ?)

मञ्जीरकः—सोऽयमसमरणमहार्णवैकमकरो मत्स्यराजः।

नूपुरकः—अयं पुनः कोऽमलमलयजरसधवलितभुजदण्डविडम्बितभुजगराजश्रीः शिरीषकुसुमसुकुमारं माररिपुशरासनं कलयन् विस्फुरति ? (इमो उण को अमलमलयजरसधवलिअभुअदण्डविडम्बिअभुअगरायसिरी सिरीसकुसुमसुउमारं माररिउसरासणं कलअन्तो विप्फुरदि ?)

---

पदेशेन = हर्षेण (प्रमोदेन) उल्लसन् (उद्गच्छन्) यः पुलकः (रोमाञ्चः) तेन विसंष्ठुलम् (अस्थिरीकृतम्) यत् कपोलस्थलम् (गण्डफलकम्) तस्मिन् चलितं (प्रचलितम्) यत्कुण्डलम् (कर्णवेष्टनम्) तस्य सदृशे (उचितस्थाने) यत् निवेशनं (धारणम्) तस्याऽपदेशेन (व्याजेन)। प्रकटितहरशरासनकर्णपूरमनोरथः = प्रकटितः (प्रकाशितः) हरशरासनम् (शिवकार्मुकम्) एव कर्णपूरः (श्रोत्राऽऽभरणम्) तस्मिन् मनोरथः (अभिलाषः) येन सः। कार्मुकं कर्णान्तमाकृष्य कर्णपूरीकरोमीति तदभिप्राय इति भावः।

मञ्जीरक इति। असमरणमहार्णवैकमकरः=असमः (अतुल्यः, अनुपम इत्यर्थः) तादृशो यो रणः (युद्धम्) स एव महार्णवः (महासागरः) तस्मिन् एकः (अद्वितीयः) मकरः (ग्राहः)। 'मकरो निधौ। नक्रे राशिविशेषे चे'ति हैमः। मत्स्यराजः=मत्स्यदेशाऽधीश्वरः। मत्स्यदेशो विराटस्य राज्ञो राज्यमिति महाभारताख्लीयते। 'मच्छरी'ति प्रसिद्धा मत्स्यपुरी तस्य राजधानी संभाव्यते। स च मत्स्यदेशः साम्प्रतम् 'अलवर 'नाम्ना प्रसिद्धो वर्तते।

नूपुरक इति। अमलमलयजरसधवलितभुजदण्डविडम्बितभुजगराजश्रीः = अमलः (निर्मलः) यो मलयजरसः (चन्दनद्रवः) तेन धवलितौ (शुक्लीकृतौ)

---

को उचित स्थानमें रखनेके बहानेसे शिवधनुको कर्णभूषण बनानेके मनोरथको प्रकाशित कर रहा है ?

**मञ्जीरक**—ये अनुपमयुद्धरूप महासमुद्रके एकमात्र ग्राहस्वरूप मत्स्यराज हैं।

**नूपुरक**—निर्मल चन्दनरससे सफेद किये गये बाहुदण्डोंसे शेषनागकी शोभाका अनुकरण करनेवाला यह कौन शिवधनुषको शिरीषपुष्पके सदृश सुकुमार समझता हुआ शोभित हो रहा है ?

मञ्जीरकः—स एव विमलमुक्तावलीविराजमानवक्षस्तटतुङ्गभुजतरङ्गः सिन्धुराजः । तदलमनेन प्रकृतं तावदुपक्रमामहे । ( परिक्रम्य उच्चैः )

अहो राजानः, आकर्णयताकर्णयत ।

आकर्णान्तं त्रिपुरमथनोद्दण्डकोदण्डनद्धां
मौर्वीमुर्वीवलयतिलकः कोऽपि यः कर्षतीह ।

---

यौ भुजदण्डौ ( बाहुदण्डौ ) ताभ्यां विडम्बिता ( अनुकृता ) भुजगराजस्य ( सर्पराजस्य, शेषस्येत्यर्थः ) श्रीः ( शोभा ) येन सः । माररिपुशरासनं = मारस्य ( कामस्य ) रिपोः ( शत्रोः, शिवस्येत्यर्थः ), शरासनं ( धनुः, शरा अस्यन्तेऽनेनेति 'करणाऽधिकरणयोश्चेति करणे ल्युट्' ) तत् । शिरीषकुसुमसुकुमारं = शिरीषपुष्पकोमलं, कलयन् = विचारयन् , स्वपुरुषाऽर्थातिशयेनेति शेषः ।

मञ्जीरक इति । विमलमुक्तावलीविराजमानवक्षस्तटतुङ्गभुजतरङ्गः = विमला ( निर्मला ) या मुक्तावली ( मौक्तिकमालाः ) तया विराजमानं ( शोभमानम् ) वक्षस्तटम् ( उरः स्थलम् ) यस्य सः, एवं च—तुङ्गः ( उन्नतः ) भुजः ( बाहुः ) एव तरङ्गः ( भङ्गः ) यस्य सः । सिन्धुराजः = सिन्धुदेशाऽधीश्वरः, 'देशे नदविशेषेऽब्धौ सिन्धुर्ना, सरिति स्त्रियाम् ।' इत्यमरः । अत्र मञ्जीरकोक्तौ सर्वत्र विशेषणानि नामाऽन्वर्थानि ज्ञेयानि । अनेनाऽलं कृतं राजवर्णनेन, साध्यं नाऽस्तीति भावः । प्रकृतं = प्रसक्तोपात्तं, स्वकृत्यमिति शेषः । उपक्रमामहे = आरभामहे, 'प्रोपाऽभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ।

जनकप्रतिज्ञां घोषयति—आकर्णान्तमिति ।

इह यः कोऽपि उर्वीवलयतिलकस्त्रिपुरमथनोद्दण्डकोदण्डनद्धां मौर्वीमाकर्णान्तं कर्षति । तस्य परिसरभुवमायान्ती कूजत्काञ्चीमुखरजघना राजपुत्री श्रोत्रनेत्रोत्सवाय भवित्रीत्यन्वयः ।

इह = अस्यां रङ्गभूमौ, यः, कोऽपि = अविज्ञातनामधेयः, उर्वीवलयतिलकः = भूमण्डलमण्डनः, वीरः । त्रिपुरमथनोद्दण्डकोदण्डनद्धां = त्रिपुरमथनस्य ( शङ्करस्य ) उद्दण्डः ( भीतिजनकः ) यः कोदण्डः ( धनुः ) तस्मिन्नद्धाम् ( बद्धाम् ) । तादृशीं मौर्वीं = ज्याम् । 'मौर्वीज्याशिञ्जिनी गुण' इत्यमरः । आकर्णान्तं = कर्णदेशपर्यन्तं,

---

मञ्जीरक—वे निर्मल मुक्तामालासे विराजमान वक्षस्तटसे युक्त और उन्नत बाहुतरङ्ग से शोभित सिन्धुराज हैं । बस, अब अधिक राजवर्णनसे प्रयोजन नहीं, प्रस्तुत विषयका आरम्भ करें । ( घूमकर ऊँचे स्वरसे ) हे राजाओ ! सुनिये सुनिये ।

इस स्वयंवरमें जो कोई भी राजा महादेवजीके भीतिजनक धनुमें बद्ध प्रत्यञ्चाको कान तक खींचेगा । उसकी निकटभूमिमें आती हुई शब्दायमान काञ्चीसे मुखर कटिपुरोभाग

तस्याऽऽयान्ती परिसरभुवं राजपुत्री भवित्री
कूजत्काञ्चीमुखरजघना श्रोत्रनेत्रोत्सवाय ॥ २६ ॥

( पुनः सकौतुकम् ) सखे, दृश्यताममी—

कामारिकार्मुकविकर्षणकौतुकोर्मि-
रोमाञ्चितद्विगुणपीवरबाहुदण्डाः ।
सीताकरग्रहमिलत्कुतुकातिमात्र-

---

कर्षति = आकर्षति । तस्य = हरकार्मुकमौर्वीकर्षकस्य वीरस्य, परिसरभुवं = पर्यन्तभुवं, समीपमिति भावः । आयान्ती = आगच्छन्ती, आगमनकाले च—कूजत्काञ्चीमुखरजघना = कूजन्ती ( शब्दं कुर्वती ) या काञ्ची ( मेखला ) तया मुखरं ( शब्दायमानम् जघनं ( कटिपुरोभागः ) यस्याः सा तादृशी राजपुत्री = राजकुमारी—सीतेति भावः । श्रोत्रनेत्रोत्सवाय = श्रोत्रयोः ( कर्णयोः ) नेत्रयोश्च ( नयनयोश्च ) उत्सवाय ( क्षणाय, हर्षजननायेति भावः ), भवित्री = भाविनी, भविष्यतीति भावः । राजकुमारी तस्य वीरवरस्य समीपागमनेन नेत्रयोस्तदागमनकाले काञ्चीशब्देन च श्रोत्रयोश्च हर्षोत्पादनाय भविष्यतीति तात्पर्यम् । अत्र विशेषणस्य साऽभिप्रायत्वात्परिकराऽलङ्कारः । स यथा चन्द्रालोकेऽनेनैव जयदेवेन उक्तः—

'अलङ्कारः परिकरः साऽभिप्राये विशेषणे ।
सुधांऽशुकलितोत्तंसस्तापं हरतु वः शिवः ॥' इति । मन्दाक्रान्तावृत्तम् ॥२६॥

कामारिकार्मुकेति । कामाऽरिकार्मुकविकर्षणकौतुकोर्मिरोमाञ्चितद्विगुणपीवरबाहुदण्डाः सीताकरग्रहमिलत्कुतुकाऽतिमात्रविस्तीर्यमाणहृदया नरेन्द्राः परितः (सन्तीति शेषः ) इत्यन्वयः ।

अमी = एते, कामाऽरिकार्मुकेत्यादिः = कामाऽरेः = ( शिवस्य ) यत्कार्मुकं (धनुः) तस्य विकर्षणम् ( आकर्षणम् ) तस्मिन् यत्कौतुकं ( कुतूहलम् ), तस्य ऊर्मिः ( तरङ्गः ), तेन रोमाञ्चितौ ( सञ्जातरोमकण्टकौ ) द्विगुणपीवरौ ( द्विगुणमांसलौ, उत्साहाऽतिशयेनेति शेषः ) बाहुदण्डौ ( भुजदण्डौ ) येषां ते । पुनः सीताकरग्रहेत्यादिः = सीतायाः ( जानक्याः ) यः करग्रहः ( पाणिग्रहणम् ) तस्मिन् मिलत् ( संगच्छत् ) यत् कुतुकं ( कुतूहलम् ) तेनाऽतिमात्रम् ) ( अत्यर्थं यथा स्यात्तथा )

---

वाली राजकुमारी सीता, उसके कान और नेत्रोंके उत्सवके लिए ही आयगी ॥ २९ ॥

( फिर कौतुकके साथ ) मित्र ! देखो, ये—

महादेवजीके धनुको खींचनेमें कौतुककी तरङ्गसे रोमाञ्चित और द्विगुण पुष्ट बाहुदण्डोंसे शोभित और सीताजीके पाणिग्रहणमें सम्बद्ध कुतूहलसे अत्यन्त प्रफुल्ल हृदयवाले राज-

विस्तीर्यमाणहृदयाः परितो नरेन्द्राः ॥ ३० ॥

( पुनः सहर्षम् ) अये ! कथमुच्चलितमेव समसमयसञ्चरणमिलत्कपोलतलसङ्घट्टमसृणरणन्मणिकुण्डलेन राजमण्डलेन ।

**नूपुरकः**—विलोकय विलोकय, एषामन्योन्यसङ्घट्टमानकेयूरसमुच्छलत्कनककणमिषेण प्रतापाग्नेर्विस्फुलिङ्गा इव दृश्यन्ते । ( पुलोएहि पुलोएहि, इमाणं अण्णोण्णसङ्घट्टन्तकेयूरसमुच्छलन्तकणअकणमिसेण पआवाग्गिणो विप्फुलिङ्गा विअ दीसन्ति )

**मञ्जीरकः**—( विहस्य )

---

विस्तीर्यमाणं ( जायमानविस्तारं, प्रफुल्लमिति भावः ) हृदयं ( चित्तम् ) येषां ते । तादृशा नरेन्द्राः ( राजानः ) परितः=सर्वतः, रङ्गशालामिति शेषः । सन्तीति क्रियापदाऽध्याहारः । वसन्ततिलकं वृत्तम् ॥ ३० ॥

पुनरिति । समसमयसञ्चरणमिलत्कपोलतलसंघट्टमसृणरणन्मणिकुण्डलेन = समसमयं ( तुल्यकालं यथा तथा ) यत् सञ्चरणं ( संचलनं-धनुराकर्षणायेति भावः ) तेन मिलन्ति ( संगच्छन्ति ) यानि कपोलतलानि ( गण्डफलकानि ) तेषां यः संघट्टः ( मिथोघर्षणम् ) तेन मसृणं ( मृदुलम् ) यथा तथा रणन्ति ( शब्दायमानानि ) मणिकुण्डलानि ( रत्नखचितकर्णवेष्टनानि ) यस्य तत् , तेन । राजमण्डलेन=राजसमूहेन ।

नूपुरक इति । एषां=राज्ञाम् । अन्योन्यसंघट्टमानकेयूरसमुच्छलत्कनककणमिषेण=अन्योन्यं ( परस्परम् ) संघट्टमानानि ( जायमानघर्षणानि ) यानि केयूराणि ( करभूषणानि ) तेभ्यः समुच्छलन्तः ( समुत्पतन्तः ) ये कनककणाः (सुवर्णलवाः) तेषांमिषेण ( छलेन ) । कैतवाऽपह्नुतिः । प्रतापाऽग्नेः=प्रतापाऽनलस्य, राज्ञामिति शेषः । विस्फुलिङ्गाः इव=कणा इव । उत्प्रेक्षाऽलङ्कारः ।

---

वर्ग रङ्गशालाके चारों ओर मौजूद हैं ॥ ३० ॥

( फिर हर्षके साथ ) अरे ! कैसे एक ही बार धनु खींचनेके लिए चलनेसे परस्पर कपोलोंके ठोकरसे शब्द करनेवाले मणिकुण्डलोंसे युक्त राजसमूह चल पड़े !

**नूपुरक**—देखो देखो । इनके परस्पर टक्कर खाते हुए बाजूबन्दोंसे निकले हुए सोनेके टुकड़ोंके बहाने जैसे कि राजाके प्रतापाऽग्निकी चिनगारियाँ देखी जा रही हैं ।

**मञ्जीरक**—( हँसकर )

पश्य पश्य सुभटैः स्फुटभावं भक्तिरेव गमिता न तु शक्तिः ।
अञ्जलिर्विरचितो न तु मुष्टिर्मौलिरेव नमितो न तु चापः ॥ २१ ॥

नूपुरकः—कथमारम्भरमणीय एव एषां संरम्भः । ( कहं आरम्भरमणिज्जो जेव्व इमाणं संरंभः )

मञ्जीरक—( सविषादम् )

आद्वीपात् परतोऽप्यमी नृपतयः सर्वे समभ्यागताः

---

वीराणां धनुरुद्यमनप्रयासनैष्फल्यमाह—पश्य पश्येति ।

सुभटैर्भक्तिरेव स्फुटभावं गमिता शक्तिस्तु न । अञ्जलिः विरचितो मुष्टिस्तु न । मौलिरेव नमितः, चापस्तु न । पश्य पश्येत्यन्वयः ।

सुभटैः = वीरयोधैः, भक्तिरेव = अनुरक्तिरेव, शङ्करकार्मुक इति शेषः । स्फुटभावं = प्राकाश्यं-गमिता = प्रापिता, शक्तिस्तु = सामर्थ्यं तु, न = स्फुटभावं न गमितेत्यर्थः । तथा अञ्जलिः = प्रणाममुद्रा, विरचितः = कृतः, मुष्टिस्तु = धनुराकर्षणमुद्रा तु, न = न विरचितः । तथा च—मौलिरेव मस्तक एव, स्वस्येति शेषः । नमितः = नम्रीकृतः, धनुराकर्षणशक्त्यभावाल्लज्जयेति भावः । चापस्तु = कार्मुकं तु, न = न नमितः । पश्य पश्य = अवलोकयाऽवलोकय, संभ्रमे द्विरुक्तिः । वाक्यार्थः कर्म ?

अत्र तिस्रः शाब्द्यः परिसंख्याः । परिसंख्यालक्षणं सोदाहरणं चन्द्रालोके यथा—

'परिसंख्या निषिध्यैकमन्यस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु, स्वान्तेषु न नतभ्रुवाम् ॥' इति ।

स्वागतावृत्तं, तल्लक्षणं यथा—'स्वागतेति रनभाद्गुरुयुग्मम् ॥' इति ॥ २१ ॥

नूपुरक इति । एषां = वीरपुरुषाणाम् । संरम्भः = उत्साहः आरम्भरमणीयः = उपक्रममनोहरः, निष्फलसमाप्तिरिति भावः ।

आद्वीपादिति । परतोऽपि द्वीपात् आ अमी सर्वे नृपतयः समभ्यागताः । इयं कन्या कलधौतकोमलरुचिः । कीर्तिश्च लाभास्पदम् । केनाऽपि इदं धनुः न आरूढं,

---

वीर योद्धाओंने शिवधनुमें भक्ति ही व्यक्त की, शक्ति नहीं । अञ्जलि ही बाँधी, धनु खींचनेके लिए मुट्ठी नहीं; और माथा ही झुकाया धनु नहीं । देखो देखो ॥ २१ ॥

नूपुरक—किसतरह इन वीर पुरुषोंका उत्साह आरम्भमें ही सुन्दर हुआ ( समाप्तिमें नहीं ) ।

मञ्जीरक—( विषादके साथ )

जम्बूद्वीपसे भी दूर देशभागसे ये सब राजा लोग आये हुए हैं । यह कन्या सुवर्णके

कन्येयं कलधौतकोमलरुचिः, कीर्तिश्च लाभास्पदम् ?
नाकृष्टं, न च टाङ्कृतं, न नमितं स्थानाच्च न त्याजितं
केनापीदमहो धनुः किमधुना निर्वीरमुर्वीतलम् ॥ ३२ ॥

( नेपथ्ये )

आः, कोऽयमलीकवैतालिको धनुर्मात्रकेऽपि नमयितव्ये निर्वीरमुर्वीतलमुपदिशति ? ।

---

न च टाङ्कृतं, न नमितं स्थानाच्च न त्याजितम् । अहो ! अधुना उर्वीतलं किं निर्वीरम् ? इत्यन्वयः ।

परतोऽपि = परस्मादपि, जम्बुद्वीपादिति शेषः । द्वीपात् = देशभागात् , आ = आरभ्य ? अत्राङ्शब्दस्य मर्यादायाम् 'आङ् मर्यादावचने' इति कर्मप्रवचनीयत्वं, तद्योगे द्वीपशब्दात् 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी । अमी = एते, तत्तद्देशविप्रकृष्टत्वाददः शब्देन परामर्शः ।। सर्वे = सकलाः, नृपतयः = राजानः, समभ्यागताः = समायाताः । इयं = सन्निकृष्टस्था, कन्या = कुमारी, सीतेति भावः । कलधौतकोमलरुचिः = सुवर्णमृदुलकान्तिः, कलधौतमिव कोमला रुचिर्यस्याः सा । 'कलधौतं रौप्यहेम्नो'रित्यमरः । शिवधनुरुद्यमनेन न केवलं कन्यालाभः, अपि तु—कीर्तिश्च यशश्च, लाभास्पदं = प्राप्तिविषय इत्यर्थः । तथाऽपि केनाऽपि = वीरेण, इदं = सन्निकृष्टस्थं, धनुः = कार्मुकं शिवस्येति शेषः । नाऽऽकृष्टं = नोत्थापितं, आकर्षणस्य का कथा—न च टाङ्कृतं = स्तोकाकर्षणेनाऽपि न शब्दायितम् । एवं च—न नमितं = नाऽवनतीकृतम् । किं बहुना—स्थानाच्च = अवकाशाच्च, न त्याजितं=न चालितम् । अहो = आश्चर्यम् , 'अहो ही च विस्मये' इत्यमरः । अधुना = सम्प्रति, उर्वीतलं = भूतलं, किं निर्वीरं = किं वीररहितं = जातमिति शेषः । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

नेपथ्य इति । अलीकवैतालिकः = मिथ्यावैतालिकः ।

नमयितव्ये = नामनीये ।

---

सदृश कान्तिवाली है । यश भी प्राप्तिका विषय है । किसीने भी इस धनुको नहीं उठाया, कुछ उठाकर शब्द तक प्रकट नहीं किया । नहीं झुकाया । अधिक क्या ? स्थानसे भी नहीं हटाया । आश्चर्य है, इस समय भूतल क्या वीरशून्य हो गया ? ॥ ३२ ॥

( नेपथ्यमें )

अरे ! यह कौन झूठा वैतालिक केवल धनुको झुकानेके लिये भी भूतल वीरशून्य है ऐसा कह रहा है ?

**नूपुरकः**—वयस्य, कस्याऽयं महीतलचलद्राहुरथरवकर्कशः कण्ठ-ध्वनिः श्रूयते । ( वअस्स, कस्स इमो महीअलचलन्तराहुरहचक्करवकक्कसो कण्ठझुणी सुणी अदि ? )

**मञ्जीरकः**—मयाऽप्ययमपरिचितः । तदेनं पृच्छामि तावत् । ( परिक्रम्य ) अहो, कः खलु भवान्यः सकलदेशदर्शिनो ममाऽपि न विख्यातः ?

( प्रविश्य )

**पुरुषः**—( साटोपं परिक्रम्य ) ( सक्रोधम् ) आः पाप, वैतालिकापसद, कतिपयग्रामटिकापर्यटनदुर्विदग्ध, कथं मामपि दश—( इत्यर्धोक्ते स्वगतम् ) कथं संवरणीयं विवरितुमुपक्रान्तोऽस्मि भवतु । इदमेव तावन्निर्वाहयामि । कथं मामपि दशदिग्विलासिनीकर्णपूरीकृतकीर्त्तिपल्लवं त्रिभुवन-

---

नूपुरक इति । महीतलचलद्राहुरथरवकर्कशः = महीतले ( भूतले ) चलन् ( गच्छन् ) यो राहुरथः ( सैंहिकेयस्यन्दनः ) तस्य यो रवः ( शब्दः ) स इव कर्कशः ( कठोरः, कर्णोद्वेजक इति भावः ) ।

पुरुष इति 'साऽऽटोपं = सदर्पम् । वैतालिकाऽपसद = वैतालिकनीच । कतिपयग्रामटिकापर्यटनदुर्विदग्ध = कतिपयाः ( अल्पसंख्याः ) या ग्रामटिकाः ( क्षुद्रग्रामाः ) तासु पर्यटनं ( भ्रमणम् ) तेन दुर्विदग्ध = दुर्निपुण, निपुणं मन्येति भावः । संवरणीयं = गोपनीयं, दशकण्ठेत्याकारकं स्वनामेति भावः । विवरितुं = विवरणं कर्तुं, प्रकाशयितुमिति भावः । उपक्रान्तः = कृतोपक्रमः । निर्वाहयामि = निर्वाहं करोमि, प्रमादाद्दशेत्युक्तं प्रकाराऽन्तरेण प्रतिपादयामीति भावः । दशदिग्विलासिनीकर्णपूरीकृतकीर्तिपल्लवं = दश ( दशसंख्यकाः ) दिशः ( दिशाः ) एव विलासिन्यः

---

**नूपुरक**—मित्र ! पृथ्वी पर चलते हुए राहुरथके शब्दके सदृश कठोर यह किसकी कण्ठध्वनि सुनी जा रही है ?

**मञ्जीरक**—मैं भी इसे नहीं पहचानता हूँ । इसलिए इससे पूछता हूं । ( घूमकर ) अहो ! आप कौन हैं ? जिसे कि सब देशको देखनेवाला मैं भी नहीं जानता हूँ ।

( प्रवेशकर )

**पुरुष**—( दर्पके साथ परिक्रमण कर )( क्रोधके साथ ) आः पापिन् । अधम वैतालिक ! कुछ छोटे गावोंमें घूमकर ही अपनेको प्रवीण मानने वाले ! कैसे मुझ दश—( ऐसा आधा ही कहने पर, मन ही मन ) कैसे छिपाने योग्य विषयको प्रकाश कर रहा हूँ । अच्छा ! इसी वचनका निर्वाह करता हूँ । किसप्रकार दशदिक्सुन्दरियोंने जिसके कीर्तिपल्लवको कर्णभूषण बनाया है ( दश दिशाओंमें विख्यात ) ऐसे त्रिभुवनवीर नामवाले मुझ

वीरनामधेयं कूपमण्डूक इव सागरमविख्यातमपदिशसि । तत्कथय, क तावत्कर्णान्तिकनिशम्यगुणं कन्यारत्नं कार्मुकं च ।

**मञ्जीरकः**—इदं तावत्कार्मुकम्, कन्या तु चरमं लोचनपथमवतरिष्यति ।

**पुरुषः**—( ससंरम्भम् ) धिङ् मूर्ख, कथं रे, राशिनक्षत्रपाठकानां गोष्ठीं न दृष्टवानसि तेऽपि कन्यामेव प्रथमं प्रकटयन्ति, चरमं धनुः ।

**मञ्जीरकः**—( स्वगतम् ) कथमयं वाचाटतां प्रकटयति । भवतु ।

---

( विलसनशीला ललनाः ) ताभिः कर्णपूरीकृतं ( कर्णाभरणीकृतम् ) कीर्तिः (यशः) एव पल्लवं ( किसलयम् ) यस्य सः, तम् । त्रिभुवनवीरनामधेयं = त्रिभुवने ( लोकत्रये, स्वर्गमर्त्यपातालरूप इति भावः ) वीरः नामधेयं ( नाम ) यस्य सः, तम् । कर्णाऽन्तिकनिशम्यगुणं=पदमिदं देहलीदीपन्यायेन श्लेषेण कन्यारत्नस्य कार्मुकस्य च विशेषणं बोद्धव्यम् । कर्णान्तिके ( श्रोत्रसमीपे ) निशम्याः ( श्रोतव्याः ) गुणाः ( सौन्दर्यवैदुष्यदाक्षिण्यादय इत्यर्थः ) यस्य तदिति कन्यारत्नपक्षे । कार्मुकपक्षे तु—कर्णाऽन्तिके निशम्यः (' आकर्षणेनाऽनेयः, यद्वा श्रव्यः ) गुणः ( मौर्वी, यद्वा लक्षणया मौर्वीशब्दः ) यस्य तत् ।

मञ्जीरक इति । चरमं = पश्चात्, इदधनुर्नमनाऽनन्तरमिति भावः । लोचनपथं = नेत्रमार्गं, लोचनयोः पन्थास्तम् 'ऋक्पूरब्धूः पथामानक्षे' इति समासान्तोऽप्रत्ययः । चाक्षुषप्रत्यक्षगोचरतामिति भावः ।

पुरुष इति । ससंरम्भं = सक्रोधम् । रे इति अनादरोक्तौ । राशिनक्षत्रपाठकानां = ज्योतिःशास्त्रविदामिति भावः । गोष्ठीं = सभाम् । तेऽपि = राशिनक्षत्रपाठका अपि । कन्यामेव = राशिगणनाकाले धनूराशेः प्राक् कन्यामेव ।

मञ्जीरक इति । स्वगतम् = आत्मगतम्, स्वगतलक्षणं यथा साहित्यदर्पणे—

'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।' इति ।

---

समुद्रको भी कूपमण्डूकके समान तुम अप्रसिद्ध कह रहे हो । इसलिए बताओ, कानके समीप श्रवणीय गुणवाली श्रेष्ठ कन्या ( सीता ) और कानके समीप आकर्षणीय प्रत्यञ्चा वाला धनु, ये दो कहां हैं ?

**मञ्जीरक**—धनु यह है और कन्या तो पीछे नेत्रमार्गमें अवतीर्ण होगी ।

**पुरुष**—( क्रोधके साथ ) धिक् मूर्ख ! क्यों रे ! तुमने राशिनक्षत्रपाठकों (ज्योतिषियों) की सभा नहीं देखी है ? वे भी पहले कन्या को ही प्रकट करते हैं, पीछे धनुको ।

**मञ्जीरक**—( मन ही मन ) किसप्रकार यह अपनी वाचाटताको प्रकट कर रहा है ।

अनयैव तावदेनं निवारयामि । ( प्रकाशम् ) अये, एतावति वीरमण्डले त्वमेव नक्षत्रविद्याकुशलः ।

पुरुषः—( सक्रोधम् ) आः, कथं रे, अहमेव क्षत्रविद्यायामकुशलः ?

मञ्जीरकः—तत्कथं कार्मुकमन्तरेणैव कन्याविलोकनायोत्कण्ठसे ।

पुरुषः—( साटोपम् , परिक्रम्य ) कथं ममापि चापारोपणे संशयः ।

मञ्जीरकः—अथ किम् ?

पुरुषः—तदेष ममाभिसंभाव्यते, यदि—

विनैवाम्भोवाहं बहुलरुचिलिप्ताम्बरतला-

---

वाचाटतां = कुत्सितबहुभाषितां, कुत्सिता बहुर्वागस्य वाचाटः, 'आलजाटचौ बहुभाषिणि' 'कुत्सित इति वक्तव्यम्' इत्याटच्प्रत्ययः 'स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् ।' इत्यमरः । वाचाटस्य भावो वाचाटता ताम् । अनयैव = वाचाटतयैव । एनम् = इमं, नवागन्तुकं पुरुषमित्यर्थः । अन्वादेशे इदं शब्दस्य 'द्वितीयाटौस्स्वेनः' इत्येनादेशः नक्षत्रविद्याकुशलः = नक्षत्रविद्यायां ज्यौतिषशास्त्रे ) कुशलः ( निपुणः ) । पक्षान्तरेनेति पदच्छेदेन न क्षत्रविद्याकुशल इति क्षत्रविद्यायामप्रवीण इति तिरस्काररूपोऽर्थो व्यङ्ग्यः ।

मञ्जीरक इति । तत् = तर्हि । कार्मुकं = धनुः, लक्षणया कार्मुकोन्नमनमित्यर्थः । अन्तरेणेति पदेन योगे 'अन्तराऽन्तरेण युक्ते' इति द्वितीया । अन्तरेण = विना । कन्याविलोकनाय = कुमारीदर्शनाय, 'तादर्थ्ये चतुर्थी वाच्ये'ति चतुर्थी ।

विनैवेति । अम्भोवाहं विनैव बहुलरुचिलिप्ताऽम्बरतलात् हेमद्युतिविततिरम्या तडिल्लेखा विलसति यदीति पूर्वार्द्धाऽन्वयः ।

अम्भोवाहं = मेघं, 'विने'ति पदेन योगे 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' इति द्वितीया, पक्षान्तरे तृतीया पञ्चमी च । विनैव=अन्तरेणैव, बहुलरुचिलिप्ताऽम्बरतलात् = बहुलरुचिभिः ( अनेककान्तिभिः ) लिप्तम् ( उपदिग्धम् ) यत् अम्बर-

---

अच्छा । इसी ( वाचाटता ) से इसका निवारण करता हूं । ( सुनाकर ) अरे ! इतने वीरसमुदायमें आप ही नक्षत्रविद्यामें कुशल हैं ( पक्षान्तरमें क्षत्रविद्यामें कुशल नहीं हैं ) ।

पुरुष—( क्रोधके साथ ) ओह ! क्यों रे मैं ही क्षत्रविद्यामें अकुशल हूं ?

मञ्जीरक—तब क्यों धनुको चढाये विना कन्याको देखनेके लिए उत्कण्ठित हैं ?

पुरुष—( दर्पके साथ, घूमकर ) क्या मेरे धनु उठानेमें भी सन्देह करते हो ?

मञ्जीरक—और क्या ?

पुरुष—मेरे विषयमें ऐसी संभावना की जाती है तो—मेघके बिना ही अनेक कान्तियोंसे

तडिल्लेखा हेमद्युतिविततिरम्या विलसति ॥

यदि वा—

विनैव स्वर्गङ्गां नभसि रभसोन्मुद्रशफरी-

परीवर्त्तैः साकं स्फुरति नवनीलोत्पलवनम् ॥ ३२ ॥

( विलोक्य, सविषादम् ) कथमस्मत्प्रतिज्ञाभङ्गाय विपरीतं सृष्टिनैपुणं प्रणीतवान् विधिः । नन्विदं तथैव पश्यामि । ( विमृश्य ) क एष विधिरपि मद्विरोधाय ।

---

तलम् ( आकाशतलम् ) तस्मात् । हेमद्युतिविततिरम्या = हेमद्युतेः ( सुवर्णकान्तेः ) या विततिः ( विस्तारः ) सेव रम्या ( मनोहरा ) 'उपमानानि सामान्यवचनै'रिति समासः । तडिल्लेखा = विद्युल्लेखा, विलसति यदि = प्रकाशते चेत् , मेघमन्तरेण नभस्तलाद्विद्युन्मालाविलसनं सम्भावनासहं चेत्तर्हि ममाऽपि चापारोपणं संशयास्पदं स्यादिति भावः ।

अपरामपि सम्भावनां प्रकाशयति—यदि वेति ?

विनैवेति । स्वर्गङ्गां विनैव नभसि रभसोन्मुद्रशफरीपरीवर्तैः साकं नवनीलोत्पलवनं स्फुरति ( यदि ) इत्यन्वयः । स्वर्गङ्गां विनैव=आकाशगङ्गामन्तरेणैव, नभसि= आकाशे, रभसोन्मुद्रशफरीपरीवर्तैः = रभसेन ( वेगेन ) उन्मुद्राः ( चपलाः ) याः शफर्यः ( क्षुद्रमत्स्याः ) तासां परीवर्तैः ( इतस्ततश्चलनैः ) 'साकं' पदेन योगे 'सहयुक्तेऽप्रधान' इति तृतीया ।

'रभसो वेगहर्षयोः' इति विश्वः । परिवर्तनानि परीवर्तास्तैः, 'भावे' इति घञ् । 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम्' नवनीलोत्पलवनं = नूतननीलकमलसमूहः' स्फुरति यदि = विकसति चेत् । अधारभूतां वियद्गङ्गां विना वियति वेगचञ्चलमीनसंचलनैः समं नीलोत्पलवनो विकसति चेत् तर्हि ममाऽपि चापारोपणं संशयास्पदं स्यादिति भावः । असम्बन्धेऽसम्बन्धरूपाऽतिशयोक्तिरलङ्कारः । शिखरिणीवृत्तम् ॥ ३२ ॥

विलोक्येति । विलोक्य = दृष्ट्वा, सौधशिखराऽवस्थितां सीतामिति शेषः । सृष्टि-

---

जिस आकाशतलसे सुवर्णकान्तिके विस्तारके सदृश मनोहर विद्युल्लेखा प्रकाशित हो—

अथवा—आकाशगङ्गाके बिना ही वेगसे चञ्चल छोटी मछलियोंके परिवर्तनोंके साथ नये नीलकमलोंका वन प्रकाशित हो ॥ ३२ ॥

( देखकर, विषादके साथ ) किस प्रकार मेरी प्रतिज्ञाको भङ्ग करनेके लिए ब्रह्माजीने विपरीत सृष्टिनैपुण्यका प्रणयन किया । मैं इसको वैसा ही देखता हूं । ( विचार कर ) मेरे विरोधके लिए ये ब्रह्माजी भी कौन हैं ?

मयि क्षीरोदन्वन्निभृतमुरजिन्नाभिनलिनीं
निजक्रीडावापीजलकमलिनीं कर्तुमनसि ।
पदभ्रंशाशङ्की मधुरमधुरालापचतुर-
श्चतुर्भिः स्वैर्वक्त्रैरनुनयपरोऽभूदयमपि ॥ ३४ ॥

( पुनर्निपुणं निरूप्य ) अये, सादृश्येन प्रतारितोऽस्मि ।

---

नैपुण = रचनानैपुण्यम् । प्रणीतवान् = कृतवान् । मद्विरोधाय = मद्विरोधं कर्तुं 'तुमर्थाच्च भाववचनात्' इति चतुर्थी ।

मयीति । मयि क्षीरोदन्वन्निभृतमुरजिन्नाभिनलिनीं निजक्रीडावापीजलकमलिनीं कर्तुंमनसि पदभ्रंशाऽऽशङ्की अयमपि मधुरमधुरालापचतुरैः चतुर्भिः स्वैः वक्त्रैः अनुनयपरः अभूदित्यन्वयः ।

मयि = रावणे, क्षीरोदन्वन्निभृतमुरजिन्नाभिनलिनीं = क्षीरोदन्वति ( क्षीरसागरे ) निभृतः ( निश्चलः, सुप्त इति भावः ) यो मुरजित् (मुरारिः विष्णुरित्यर्थः) तस्य नाभिनलिनीं ( नाभिकमलिनीम् ), निजक्रीडावापीजलकमलिनीं = निजस्य ( स्वस्य ) या क्रीडावापी ( केलिदीर्घिका ) तस्यां जलकमलिनीम् ( नीरपद्मिनीम् ) कर्तुंमनसि = कर्तुं ( विधातुम् ) मनः ( चित्तम् ) यस्य सः, तस्मिन् । 'तुं काममनसोरपी'ति मलोपः । 'यस्य च भावेन भावलक्षणम्' इति भावे सप्तमी । साऽपेक्षत्वेऽपि गमकत्वात्समासः । वृत्तिविग्रहयोः समानप्रकारोपस्थितिजनकत्वं गमकत्वम् । पदभ्रंशाऽऽशङ्की = पदस्य ( आधारस्थानस्य, मुरजिन्नाभिनलिन्या इति भावः ) भ्रंशम् ( च्युतिम् ) आशङ्कते तच्छीलः, तादृशः । अयमपि = विधिरपि । मधुरमधुराऽऽलापचतुरैः = मधुरमधुराः ( अतिशयमाधुर्योपेताः ) ये आलापाः ( आभाषणानि ) तेषु चतुराः ( निपुणाः ), तैः । चतुर्भिः = चतुःसंख्यकैः । स्वैः = निजैः, वक्त्रैः = मुखैः, अनुनयपरः प्रार्थनातत्परः, अभूत् = अभवत् । क्षीरसागरशायिनो विष्णोर्नाभिकमलिनीमुन्मूल्य तया स्वक्रीडादीर्घिकाकमलिनीं विधास्यामीति मया चिन्तिते स्वाधारच्युतिमाशङ्क्य चतुराननोऽपि चतुर्भिरपि स्ववदनैर्मामनुनीय 'वत्स ! मैवं कार्षी'रिति प्रार्थितवानिति भावः । शिखरिणीवृत्तम् ॥ ३४ ॥

पुनरिति । निरूप्य = दृष्ट्वा । सीताऽऽकृतिमिति शेषः । प्रतारितः = वञ्चितः ।

---

क्षीरसमुद्रमें सोये हुए विष्णु भगवान्की नाभिस्थितकमलिनीको जब मैंने अपनी क्रीडावापीके जलमें कमलिनी बनानेका विचार किया था तब अपने आधार ( कमलिनी ) के च्युतकी शङ्का करने वाले ब्रह्माजी भी अतिशय मधुर आभाषणमें चतुर अपने चारों मुखोंसे मेरे अनुनय करनेमें तत्पर हुए थे ॥ ३४ ॥

( फिर अच्छी तरह देखकर ) अरे ! सादृश्यसे ठगा गया हूँ । यह बिजलीकी रेखा

तडिल्लेखा नेयं विलसति परं सौधशिखरे
वसन्त्याः कस्याश्चित् कनकरुचिरा गात्रलतिका ।
अपीदं नोन्मज्जत् कुवलयवनं मीनतरलं
परं तस्या एव स्फुरति नयनालोकललितम् ॥ ३५ ॥

( विभाव्य ) नूनं तदेव सीताभिधानं कन्यारत्नम् ।

( पुनः सहर्षम् )

राजीव ! जीवसि मुधा, न सुधाकर ! त्व-

---

तडिल्लेखेति । इयं तडिल्लेखा न विलसति परं सौधशिखरे वसन्त्याः कस्याश्चित् कनकरुचिरा गात्रलतिका । इदमपि उन्मज्जत् मीनतरलं कुवलयवनं न, परं तस्या एव नयनाऽऽलोकललितं स्फुरतीत्यन्वयः । इयं = साम्प्रतं दृश्यमाना, तडिल्लेखा = विद्युद्रेखा, न विलसति = न द्योतते । परं = परन्तु, सौधशिखरे = प्रासादाग्रभागे, वसन्त्याः = निवसन्त्याः, कस्याश्चित् = ललनायाः, कनकरुचिरा = सुवर्णशोभना, गात्रलतिका = देहलतिकाऽविलसतीति शेषः । इदमपि = पुरतो दृश्यमानमपि, उन्मज्जत्=उन्मज्जनं कुर्वत् , दृष्टिपथमारोहदिति भावः । मीनतरलं = मत्स्यचञ्चलं, कुवलयवनं = नीलकमलवनं, न = न वर्तते, परं = किन्तु, तस्या एव = सौधशिखरस्थायिन्या ललनाया एव, नयनाऽऽलोकललितं = नेत्रदर्शनविलासः, स्फुरति = प्रकाशते । सौधशिखरे विद्युल्लेखोपमया देहलतिकया विराजमाना नीलकमललोचना काचिल्ललना विलसतीति भावः । अत्राऽऽदौ संशयोऽन्ते च निश्चये पर्यवसानान्निश्चयाऽन्तः सन्देहोऽलङ्कारः । सविभागं तल्लक्षणं यथा—

सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः ।
शुद्धो निश्चयगर्भोऽसौ निश्चयाऽन्त इति त्रिधा ॥' इति । शिखरिणीवृत्तम् ॥३५॥

विभाव्येति । विभाव्य = विचिन्त्य ।

सीतास्वरूपं वर्णयति—राजीवेति ।

राजीव ! मुधा जीवसि । हे सुधाकर ! त्वमस्याः पदनखस्य समो न, मुखस्य कुतः ? मृगदृशो दृशोरग्रे कुरङ्गः कतमः ? तत् हे खञ्जन ! त्वमपि किं जनरञ्जनाय ? इत्यन्वयः ।

हे राजीव = हे कमल !, मुधा = व्यर्थं, जीवसि = प्राणान् धारयसि, विलसति

---

नहीं प्रकाशित हो रही है, बल्कि राजप्रासादके ऊर्ध्वप्रदेशमें रहती हुई किसी स्त्री की शरीरलता है । दृष्टिमार्गमें प्राप्त यह मछलीसे चपल नीलकमलका वन भी नहीं है, बल्कि उसी स्त्रीके नेत्रोंका दर्शनविलास प्रकाशित हो रहा है ॥ ३५ ॥

( विचार कर ) यह निश्चय ही सीतानामक कन्यारत्न है । ( फिर हर्षपूर्वक )

हे कमल ! तू व्यर्थ जी रहा है । हे चन्द्र ! तुम इस सीताके चरणके नाखूनके बराबर

मस्याः समः पदनखस्य कुतो मुखस्य ।
अग्रे दृशोर्मृगदृशः कतमः कुरङ्ग-
स्तत्खञ्जन ! त्वमपि किं जनरञ्जनाय ॥ ३६ ॥

( पुनः सरभसम् )

कदली कदली, करभः करभः,
करिराजकरः करिराजकरः ।

---

सीतावदने त्वत्सत्त्वं व्यर्थमिति भावः । हे सुधाकर = हे सुधांऽशो ! त्वम् , अस्याः = सीतायाः, पदनखस्य = चरणनखस्य, समः = तुल्यः, न = नाऽसि, मुखस्य = वदनस्य, कुतः = कस्माद्धेतोः, समोऽसीति शेषः । कैमुतिकन्यायेनाऽर्थापत्तिरलङ्कारः । हे सुधांशो ! सीतायाश्चरणनखसादृश्यमप्यलभमानस्य ते मुखसादृश्यकथा दूरमतिदूरेति भावः । मृगदृशः = हरिणलोचनायाः' सीताया इति भावः । मृगस्येव दृशौ यस्याः सा मृगदृक्' तस्याः 'सप्तमी विशेषणे बहुव्रीहौ' इति सप्तमीतिपदज्ञापितो व्यधिकरणबहुव्रीहिः । दृशोः = नेत्रयोः, अग्रे = पुरः, कुरङ्गः = मृगः, कतमः = कोऽपीति भावः । अत्र सीताया लोचनयोः साम्यं हरिणलोचने न वहत इति कवेः प्रतिपाद्यत्वेऽपि पुनः मृगदृक्पदेन सीतायाः प्रतिपादनाद्व्याहतत्वं नाम दोषः । परन्त्वत्र सीताऽसामान्यरूपाऽऽलोकनजातव्यामोहस्य रावणस्य वक्तृत्वेन प्रयोगोऽयं दोषेऽपि गुणत्वं तनुते । तत् = तस्मात्कारणात् , हे खञ्जन = हे खञ्जरीट, त्वमपि, किं जनरञ्जनाय = लोकोह्लादोत्पादनाय, नयनशोभाऽतिशयादिति शेषः । काका त्वमपि जनमनोविनोदाय नाऽसीत्यर्थः । अत्राऽर्थापत्तिप्रतीपयोरङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकं वृत्तम् ॥ ३६ ॥

पुनरिति । सरभसं = सहर्षम् ।

सीताया ऊरू वर्णयति—कदलीति । कदली कदली, करभः करभः, करिराजकरः करिराजकरः । चमूरुदृश इदम् ऊरुयुगं भुवनत्रितयेऽपि तुलां न बिभर्तीत्यन्वयः ।

कदली = रम्भादण्डः, कदली = शैत्याऽतिशयसम्पन्नस्तरुः, अतः श्यामायाः ( समशीतोष्णायाः ) सीताया ऊरुसाम्यं न बिभर्तीति भावः । करभः = ऊर्वाकारः पाणिपार्श्वभागः, 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः । 'इत्यमरः । करभः =

---

भी नहीं हो तो मुखके बराबर कैसे होगे ? मृगनयना ( सीता ) के नेत्रोंके सामने मृग क्या चीज है ? इसलिए हे खञ्जन ! तुम भी लोकनेत्रोंके आनन्दोत्पादनके लिए हो क्या ? ॥३६॥

( फिर हर्षके साथ )

✓कदली कदली है, करभ ( ऊरुके आकारका हाथका पार्श्वभाग ) करभ ही है, हाथीका

भुवनत्रितयेऽपि बिभर्त्ति तुला-
मिदमूरुयुगं न चमूरुदृशः ॥ २७ ॥

मञ्जीरकः—सखे नूपुरक, किमेतत् । कस्याश्चिदपि हस्तादादाय सानन्दमालोकयत्यन्तःपुरिको जनः ?

नूपुरकः—अहमीदृशं सम्भावयामि यत्किल गुरुभवनादागतया चन्दनिकया समर्पितं चित्रपटं विलोकयतीति । ( अहं एरिसं संभावेमि जं किर गुरुभवणादो आगदाए चन्दणिआए समप्पिदं चित्तपटं पुलोवेदि त्ति )

मञ्जीरकः—स त्वया दृष्टश्चित्रपटः ?

नूपुरकः—भर्तृदारिका तावदन्यश्च कोऽपि नीलोत्पलदलश्यामलः कुसुमशरसदृशरूपः कुण्डलीकृतहरचापश्चक्रवर्त्तिकुमारः । ( भट्टदारिआ दाव

---

अशोभनः, करिराजकरः = गजराजशुण्डादण्डः, करिराजकरः = अत्यर्थकर्कशः । इत्थं च चमूरुदृशः = मृगनयनायाः, सीताया इत्यर्थः । इदं = पुरोदृश्यमानम्, ऊरुयुगं = सक्थियुग्मं, भुवनत्रितयेऽपि = लोकत्रयेऽपि, त्रयोऽवयवा यस्य तत् त्रितयं, 'संख्याया अवयवे तयप्' इति तयप्प्रत्ययः । तुलाम् = सादृश्यं, न बिभर्ति = न धारयति । स्वर्गमर्त्यपातालात्मके लोकत्रयेऽपि सीतोरुसाम्यनिर्वाहकं पदार्थान्तरं नास्तीति भावः । अत्र द्वितीयकदलीकरभकरिराजकरशब्दाः पीनरुक्त्यभिया सामान्यकदली-करभकरिराजकररूपेषु मुख्यार्थेषु बाधिताः सन्तो जाड्यादिगुणविशिष्टकदल्यादि-रूपमर्थं बोधयन्ति जाड्याद्यतिशयश्च व्यङ्ग्यः । सोऽयमर्थान्तरसंक्रमितवाच्यध्वनिः । तोटकवृत्तं, तल्लक्षणं यथा—'इह तोटकमम्बुधिसैः प्रमितम् ।' इति ॥ २७ ॥

मञ्जीरक इति । कस्याश्चिदपि = अन्तःपुरपरिचारिकाया अपि ।

नूपुरक इति । भर्तृदारिका = स्वामिदुहिता'सीतेति भावः । नीलोत्पलदलश्या-

---

सूँड हाथीका सूँड ही है । मृगनयना ( सीता ) के ये दोनों ऊरु तीनों लोकमें अपनी सानी नहीं रखते हैं ॥ २७ ॥

मञ्जीरक—मित्र नूपुरक ! यह क्या है ? अन्तःपुरके लोग किसी स्त्रीके हाथसे लेकर इसे आनन्दके साथ देख रहे हैं ।

नूपुरक—मैं ऐसी संभावना करता हूँ कि गुरुगृहसे लौटी हुई चन्दनिकासे समर्पित चित्रपटको लोग देख रहे हैं ।

मञ्जीरक—क्या तुमने वह चित्रपट देखा ?

नूपुरक—राजकुमारी ( सीता ) और कोई नीलकमलके पत्रके सदृश श्यामवर्ण वाले,

अणव को वि णीलुप्पलदलसामलो कुसुमसरसरिसरूवो कुण्डलीकिदहरचावो चक्कवट्टिकुमारो )

**मञ्जीरकः**—अहह !! मुग्धः खल्वबलाजनः । यदेवमपि कठोरप्रतिज्ञे राजनि किशोरवयसं जामातरमाशंसति । सखे, जानासि केन लिखितं चित्रमिति ?

**नूपुरकः**—जानामि महर्षेर्जनकस्य दुहित्रा धर्मचारिण्या । ( जाणामि, महेसिणो जणकस्स दुहिआए धम्मआरिणीए )

**मञ्जीरकः**—इदानीमुद्भिन्नो मम मनोरथाङ्कुरः । देवी मैत्रेयी सिद्धयोगिनी कालत्रयदर्शिनी सा नालीकमालिखति ।

---

मः = नीलोत्पलदलम् ( नीलकमलपत्रम् ) इव श्यामः ( कृष्णवर्णः ) । कुसुमशरसदृशरूपः = कुसुमशरेण ( कुसुमेषुणा कामदेवेनेति भावः ) सदृशं ( तुल्यम् ) रूपं ( सौन्दर्यम् ) यस्य सः । कुण्डलीकृतहरचापः=कुण्डलीकृतः ( कर्णवेष्टनीकृतः, कर्णान्ताकृष्ट इति भावः ) हरचापः ( शिवकार्मुकम् ) येन सः ।

मञ्जीरक इति । मुग्धः = मूढः, 'मुग्धः सुन्दरमूढयो'रित्यमरः । राजनि = भूपे, जनक इति भावः । कठोरप्रतिज्ञे = दृढसन्धे, चापारोपणानन्तरमेव कन्यां समर्पयिष्य इति दृढप्रतिज्ञाकारिणीति भावः । किशोरवयसं = निवृत्तबाल्यमप्राप्तयौवनम् । आशंसति = इच्छति ।

नूपुरक इति = दुहित्रा = पुत्र्याः ।

मञ्जीरक इति । मनोरथाऽङ्कुरः = अभिलाषप्ररोहः । उद्भिन्नः = प्ररूढः । मनोरथाऽङ्कुरोद्भेदे हेतुमाह—देवीति । अलीकं = मिथ्या ।

---

कामदेवके तुल्य सुन्दर, शिवधनुको कानतक खींचनेवाले चक्रवर्तीके कुमार उसमें लिखे गये हैं ।

**मञ्जीरक**—अहह ! स्त्रीजाति मूर्ख होती है । जो कि राजा ( जनक ) के कठोर प्रतिज्ञा करने पर भी किशोर अवस्थाके दामादकी आशा करती है । मित्र ! किसने यह चित्र लिखा है ? जानते हो ।

**नूपुरक**—जानता हूँ । महर्षिजनककी पुत्री धर्मचारिणीने लिखा है ।

**मञ्जीरक**—इस समय मेरा अभिलाषाऽङ्कुर उग पड़ा है । तीनों कालोंको देखने वाली सिद्धयोगिनी देवी मैत्रेयी मिथ्या चित्र नहीं लिखती है ।

**नूपुरकः**—सर्वं सम्भाव्यते यद्ययं जरठाङ्ग इतोऽपसरति । ( सव्वं सम्भावीअदि जइ इमो जरठङ्गो इदो ओसरदि )

**मञ्जीरकः**—आः, कोऽयम् ? किमिदम् ? एनमपसारयामि । अये, किमितस्ततो विलोकयसे ? नन्विदं शाम्भवं धनुस्तदिहैव दीयतां दृष्टिः ।

**पुरुषः**—आः, किमुच्यते दृष्टिरिति, नन्वियं मुष्टिरपि दीयते ।

( परिक्रम्य, शेखरभ्रंशमभिनीय सविषादं विलोकयति )

**मञ्जीरकः**—

अये लङ्केश विस्रस्तशेखरालोकनेन ते ।
समयो याति, तत्तूर्णं गृहाण हरकार्मुकम् ॥ ३८ ॥

---

नूपुरक इति । जरठाङ्गः = जीर्णाऽवयववृद्ध इत्यर्थः ।

मञ्जीरक इति । अपसारयामि = निवारयामि । अय इति सम्बोधने । विलोकयसे = पश्यसि, सौधशिखराऽवस्थितां सीतामिति शेषः । शाम्भवं = शैवम् ।

परिक्रम्येति । शेखरभ्रंशं = शिरोभूषणाऽवस्रंसनं, सविषादं = खेदपूर्वकम् । विषादश्चाऽपशकुनभावनामूलको बोद्धव्यः । विलोकयति = शेखरमिति शेषः ।

अय इति । अये ! ते केशविस्रस्तशेखरालोकनेन अलम् । समयो याति । तत् तूर्णं हरकार्मुकं गृहाणेत्यन्वयः । अय इति सम्बोधने । ते = तव, केशविस्रस्तशेखरावलोकनेन = केशात् ( शिरोरुहात् ) विस्रस्तः (पतितः) यः शेखरः ( शिरोभूषणम् ) तस्याऽऽलोकनेन ( दर्शनेन ) अलं = पर्याप्तं केशविस्रस्तशेखरालोकनेन साध्यं नाऽस्तीति भावः । पक्षान्तरे अये लङ्केश लङ्केश्वर, रावणेत्यर्थो व्यज्यते । समयः = कालः, हरकार्मुकाऽऽकर्षणस्येति शेषः । याति = व्यत्येति । तत् = तस्मात्कारणात् , तूर्णं = सत्वरं, हरकार्मुकं = शिवचापं, गृहाण = आदत्स्व, 'ग्रह उपादाने' इति धातोर्लोट्, 'हलः श्नः शानज्झौ' इति श्नः शानच् । अनुष्टुब्वृत्तम् ॥ ३८ ॥

---

**नूपुरक**—यह बुड्ढा यहांसे हटे तो सब हो सकता है ।

**मञ्जीरक**—अरे ! यह कौन है ? यह क्या है ? मैं इसे हटाता हूं । क्यों जी ! इधर उधर यह क्या देख रहे हो ? यह शिवधनु है, इसलिए इसी पर दृष्टिपात करो ।

**पुरुष**—ओः ! यह क्या दृष्टि देनेकी बात कर रहे हो ? यह मुष्टि भी देता हूं ।

( घूमकर शिरोभूषण गिरनेका अभिनय कर विषादके साथ देखता है । )

**मञ्जीरक**—अरे ! तुम्हें केशोंसे गिरे हुए शिरोभूषणको देखना नहीं चाहिए । अथवा हे लङ्केश गिरे हुए शिरोभूषणको देखनेसे तुम्हारा समय बीत रहा है । इसलिए शिवधनुको शीघ्र पकड़ो ॥ ३८ ॥

**पुरुषः**—( स्वगतम् ) कथमनेन विदितोऽस्मि ( विमृश्य ) घुणाक्षर-न्यायगतं शब्दसादृश्यमेतत् ( प्रकाशम् । ससंरम्भम् )

**सावलेपकमनीयमुदस्य क्रीडयैव विनिबध्य च मौर्वीम् ।**
**कृष्टमेव हरकार्मुकमेतत्, हृश्यमत्र सुदृशो हृदयञ्च ॥ २९ ॥**

( धनुषि हस्तमर्पयित्वा । स्वगतम् ) कथं न चलत्यपि । भवतु । (प्रकाशम्) अये, धनुरिति वक्रः पन्थाः । तत्सरलेन करवालधारापथेन सीतामानयामि ।

---

पुरुष इति । विदितः = ज्ञातः । अये ! लङ्केशेति पदच्छेदवशादिति भावः । घुणाक्षरन्यायगतं = घुणकृतान्यक्षराणि घुणाक्षराणि, संयोगवशात्संजातानि, तेषां न्यायस्तद्गतम् । प्रकाशं = सर्वश्राव्यं यथा स्यात्तथा ।

प्रकाशलक्षणं यथा—'सर्वश्राव्यं प्रकाशं स्या'दिति । साऽवलेपकमनीयमिति । साऽवलेपकमनीयम् उदस्य मौर्वीं क्रीडया एव विनिबध्य च एतत् हरकार्मुकं कृष्टम् एव अत्र हृश्यं सुदृशो हृदयं च ( कृष्टम् एव ) इत्यन्वयः । साऽवलेपकमनीयम् = अवलेपेन ( गर्वेण ) सहितम् , अत एव कमनीयम् ( सुन्दरम् ) क्रियाविशेषणम् । साऽवहेलकमनीय'मिति पाठे तु अवहेलया ( अनतियत्नेन ) सहितं यथा स्यात्तथेति क्रियाविशेषणम् । अत एव कमनीयम् । उदस्य = उत्थाप्य, हरकार्मुकमिति शेषः । मौर्वीं = ज्यां, 'मौर्वी ज्या शिञ्जिनी गुणः' इत्यमरः । क्रीडया एव = लीलया एव, अयत्नेनैवेति भावः । विनिबध्य च—आरोप्य च, एतत् = समीपतरवर्ति, हरकार्मुकं = शिवधनुः, कृष्टम् एव = आकृष्टम् एव, नाऽत्र सन्देह इति भावः । अत्र = इह हृश्यं = मनोहरं, सुदृशः = सुन्दरलोचनायाः, सीताया इति भावः । शोभने दृशौ यस्याः सा सुदृक् , तस्याः । हृदयं च = मनश्च, कृष्टम् एवेति पूर्वतोऽनुवृत्तिः । आकृष्टमेवेत्यर्थः । मद्विक्रमदर्शनेन सीताऽपि प्रसादमासादयिष्यतीति भावः । स्वागता वृत्तं, तल्लक्षणं यथा—'स्वागतेति रनभाद्गुरुयुग्मम्' इति ॥ २९ ॥

धनुषीति । वक्रः=कुटिलः, बहुसमयाऽपेक्षितवेति शेषः ।

---

पुरुष—( मन ही मन ) इसने मुझे कैसे जान लिया । ( विचार कर ) यह घुणाक्षर न्यायसे प्राप्त शब्दसादृश्यमात्र है । ( सुना कर । क्रोधपूर्वक )

घमण्डके साथ सुन्दर रूपसे उठाकर उसपर क्रीडासे ही प्रत्यञ्चाको चढ़ाकर इस शिव-धनको खींच ही लिया । यहां सुन्दर सीताके सुन्दर हृदयको भी आकृष्ट ही कर लिया इसमें लेशमात्र भी संदेह नहीं है ॥ २९ ॥

( धनु पर हाथ देकर । मन ही मन ) कैसे यह चलता भी नहीं । अच्छा । (सुनाकर) अरे ! धनु यह कुटिलमार्ग है । इसलिए सरलतया तलवारकी धाराके मार्गसे सीताको लाता हूं ।

मञ्जीरकः—कथमतिप्रगल्भसे ! न विलोकयसि !

रोषारुणीकृतविलोचनकान्तिभिन्न-
भ्रूभङ्गभीमघटितभ्रुकुटीविटङ्कम् ।
उत्खातलोलकरवाललताकराल-
दोर्दण्डचण्डचरितं नरवीरचक्रम् ॥ ४० ॥

पुरुषः—( कृपाणमुद्यम्य ) ( परितो विलोक्य ) पश्यत पश्यत ।

निर्भिन्नवैरिकरिकुम्भतटीविमुक्त-
मुक्ताफलप्रकरतारकिताम्बरश्रीः ।

---

मञ्जीरक इति । अतिप्रगल्भसे = अतिधाष्टर्यं प्रदर्शयसि, रोषारुणीकृतेति । रोषारुणीकृतविलोचनकान्तिभिन्नभ्रूभङ्गभीमघटितभ्रुकुटीविटङ्कम् उत्खातलोलकरवाललताकरालदोर्दण्डचण्डचरितं नरवीरचक्रम् ( न विलोकयसि )। रोषारुणीकृते-त्यादिः = रोषेण ( कोपेन रावणकृतापमानजनितेनेति शेषः ) अरुणीकृते ( रक्तवर्णीकृते ) ये विलोचने ( नेत्रे ) तयोः कान्त्या ( प्रभया ) भिन्नौ ( प्राप्तभेदौ ) द्वौ भ्रूभङ्गौ ( नेत्ररोमकौटिल्ये ) ताभ्यां भीमं ( भयानकम् ) यथा स्यात्तथा घटितः ( निर्मितः ) भ्रुकुटीविटङ्कः ( भ्रूकुट्याउन्नतः प्रदेशः ) यस्य तदिति नरवीरचक्रस्य विशेषणमिदम् । पुनः उत्खातलोलकरवाललताकरालदोर्दण्डचण्डचरितम् = उत्खाता ( निस्सारिता, कोशादिति शेषः ) लोला ( चञ्चला ) या करवाललता ( खड्गलता ) तया करालः ) भीषणः ) यो दोर्दण्डः ( बाहुदण्डः ) तेन चण्डम् (अत्यन्तकोपनम्) चरितं ( चरित्रम् ) यस्य तत् । तादृशं नरवीरचक्रं = राजमण्डलं, न विलोकयसीति पूर्वस्थपदाभ्यां सम्बन्धः । त्वदीयधाष्टर्येन कोपाक्रान्तमतिविक्रान्तं राजमण्डलं न विलोकयसीति भावः । वसन्ततिलकं वृत्तम् ॥ ४० ॥

पुरुष इति । उद्यम्य = उत्तोल्य ।

निर्भिन्नेति । रे रे नृपाः ! निर्भिन्नवैरिकरिकुम्भतटीविमुक्तमुक्ताफलप्रकरतारकिताम्बरश्रीः यो रणे कालरात्रिरिव स एव कृपाकृपणो मम कृपाणो भातीत्यन्वयः ।

---

मञ्जीरक—क्यों ज्यादा ढिठाई कर रहे हो ? नहीं देखते हो कि क्रोधसे रक्तवर्ण नेत्रों की कान्तिसे भिन्न भ्रूभङ्गोंसे भयङ्कर भ्रुकुटीके उन्नत प्रदेशवाले और मियानसे निकाली गई तलवारसे भीषण बाहुदण्डसे अत्यन्त कोपपूर्ण आचरण करनेवाले राजसमूहको क्या नहीं देख रहे हो ? ॥ ४० ॥

पुरुष—( तलवार उठाकर ) ( चारों ओर देखकर ) देखो देखो । रे रे राजसमूह ! शत्रुरूप हाथियोंके विदारित मस्तक रूप कुम्भोंसे गिरे हुए मोतियोंसे तारायुक्त आकाशको

यः कालरात्रिरिव भाति रणे स एव
रे रे नृपा मम कृपाकृपणः कृपाणः ॥ ४१ ॥

( आकाशे कर्णं दत्त्वा ) किं ब्रूथ ?

एकः कथं बहुतरैः सुभटैः करोमि,
संग्रामडम्बरमिति त्यज रे विषादम् ।
यं मन्यसे सुलभमत्र, सहैव तेन
चेतो निधेहि समरे समरेखयैव ॥ ४२ ॥

---

रे रे इति अनादरद्योतकं निपातद्वयम् । नृपाः = राजानः ! निर्भिन्नेत्यादिः=निर्भिन्नाः (विदारिताः) वैरिकरिणां ( शत्रुगजानाम् ) याः कुम्भतट्यः ( शिरः पिण्डतट्यः ) ताभ्यो विमुक्तानि ( पर्यस्तानि ) यानि मुक्ताफलानि ( मौक्तिकफलानि ) तेषां प्रकरः ( समूहः ) तेन तारकिता ( सञ्जाततारका ) अम्बरश्रीः ( आकाशशोभा) येन स इति कृपाणविशेषणं ज्ञेयम् । यो रणे = युद्धे, कालरात्रिरिव=प्रलयरजनीव, नरसंहारकत्वादिति भावः । स एव = तादृश एव, कृपाकृपणः=कृपायां ( दयायां विषये ) कृपणः ( कार्पण्ययुक्तः, कदर्य इति भावः ) मम = वीरमानिनः, कृपाणः = खड्गः, भाति = शोभते । दयापराङ्मुखमतिभीषणं मम कृपाणं दृष्ट्वा युद्धसाहसं नाऽनुष्ठेयमिति भावः । अत्रोपमेयाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ४१ ॥

आकाशभाषितं प्रत्याह—एक इति । रे ! एको बहुतरैः सुभटैः कथं संग्रामडम्बरं करोमीति विषादं त्यज । अत्र यं सुलभं मन्यसे, तेन सहैव समरे समरेखयैव चेतो निधेहीत्यन्वयः ।

रे इत्यनादरद्योतकं सम्बोधनम् । एकः = एकाकी, बहुतरैः, अधिकसंख्यकैः, सुभटैः = वीरयोधैः, कथं = केन प्रकारेण संग्रामडम्बरं = युद्धाडम्बरं, करोमि = विदधामि, इति = एतादृशं, विषादं = खेदं, त्यज = मुञ्च । विषादत्यागे हेतुमाह यमिति । अत्र = इह स्थाने, यं = मां, सुलभं = सुप्राप्यं, सुजेयमिति भावः । मन्यसे =

---

शोभा दिखानेवाली और युद्धक्षेत्रमें कालरात्रिकी तरह प्रतीत होती है, कृपाके विषयमें कृपण ( कंजूस ) वही मेरी तलवार शोभित हो रही है ॥ ४१ ॥

( आकाशमें कान देकर ) क्या कहते हो ?

अरे ! मैं अकेला होकर बहुतेरे वीर योद्धाओंके साथ संग्रामका आडम्बर कैसे करूंगा ऐसा खेद छोड़ो । यहां पर जिसे तुम सुलभ जान रहे हो, उसके साथ युद्धमें बराबरीके भावका ही मन रखो ॥ ४२ ॥

अहो धृष्टता मनुष्यकीटानाम् । तदेतान्निजमूर्त्यैव भीषयामि । ( सारोपं निष्क्रान्तः ) । ( नेपथ्ये )

मन्दाकिनी-कनकपद्म-विसाङ्कुराणां
किञ्चोग्रदिग्गजलसद्दशनाङ्कुराणाम् ।
उन्मूलनैरलमनीयत शैशवं यै-
स्तेऽमी भुजा मम निजाः प्रकटीभवन्तु ॥ ४३ ॥

---

जानासि, तेन = तादृशेन, सुजेयेन मयेति भावः । सहैव = सममेव, समरे = युद्धे, समरसयैव = तुल्यत्वेनैव, चेतः = चित्तं, निधेहि = स्थापय । एकोऽयं कथं सुभटैः संग्रामं करिष्यतीति खेदस्त्याज्यः । एकोऽहं संग्रामे युष्मभ्यमलमिति भावः । वसन्ततिलकं वृत्तम् ॥ ४२ ॥

निजभुजानाह्वयति—मन्दाकिनीति । मन्दाकिनीकनकपद्मविसाऽङ्कुराणां किञ्च उग्रदिग्गजलसद्दशनाऽङ्कुराणाम् उन्मूलनैर्यैः शैशवम् अलमनीयत । तेऽमी मम निजा भुजाः प्रकटीभवन्त्वित्यन्वयः ।

मन्दाकिनीकनकपद्मविसाऽङ्कुराणां = मन्दाकिन्याः ( आकाशगङ्गायाः ) यानि कनकपद्मानि ( स्वर्णकमलानि ) तेषां विसाऽङ्कुराणां ( मृणालप्ररोहाणाम् ) किञ्च = अथ च । उग्रदिग्गजलसद्दशनाऽङ्कुराणाम् = उग्राः ( भयङ्कराः ) ये दिग्गजाः ( ऐरावतादयो दिक्करिणः ) तेषां लसन्तः ( शोभमानाः ) ये दशनाऽङ्कुराः ( दन्तप्ररोहाः ), तेषाम् । उन्मूलनैः = उत्पाटनैः, यैः = मद्भुजैः, शैशवं = बाल्यं, शिशोर्भावः 'इगन्ताच्च लघुपूर्वात्' इत्यण् । 'शिशुत्वं शैशवं बाल्यम्' इत्यमरः । अलं = पर्याप्तं यथा स्यात्तथा, अनीयत = याप्यते स्म । ते = विक्रमैकरसे समरेऽसकृदनुभूताः, अमी = तादृशाः, मम = दशाऽऽननस्य, निजाः = आत्मीयाः, भुजाः = बाहवः प्रकटीभवन्तु = प्रकाशीभवन्तु । बाल्यावस्थायामपि यैराकाशगङ्गाऽवस्थितसुवर्णपद्मानामैरावतादीनां दिग्गजानां च दन्तानामुत्पाटनेऽनेकक्रमो विक्रमः प्रदर्शितस्तेऽमी भुजाः पुनरपि मद्विक्रान्तरद्योतनाय स्वरूपं प्राप्नुवन्त्विति भावः । वसन्ततिलकावृत्तम् ॥ ४३ ॥

---

अहो ! मनुष्य कीटोंकी ढिठाई । इसकारण इन्हें अपने शरीरसे ही डराता हूं । ( घमण्डके साथ जाता है । ) ( नेपथ्यमें )

आकाश गङ्गाके सुवर्ण कमलोंके मृणालरूप अङ्कुरोंके और भयङ्कर दिग्गजोंके शोभमान दन्तप्ररोहोंके भी उन्मूलन करके जिन्होंने अपनी बाल्याऽवस्था ( बचपन ) पर्याप्तरूप से बिताई । वैसे मेरे बाहुसमूह इस समय प्रकट हों ॥ ४३ ॥

( ततः प्रविशति निजरूपेण दशकण्ठः )

**नूपुरकः**—वयस्य, पश्य पश्य कौतूहलं यदेकस्यापि मानुषस्य दश मस्तकानि। ( वअस्स, पेक्ख पेक्ख कोदूहलं जं एकस्स वि माणुसस्स दस मत्थआइं )

**मञ्जीरकः**—नैष मानुषः, राक्षसराजः खल्वसौ दशकण्ठः।

**नूपुरकः**—तत्परित्रायतां मां वयस्यः। नूनं राक्षसमात्र एव सम्मुखपतितं मानुषं चर्वयति किं पुना राक्षसराजः। ( ता परित्ताअदु मं वअस्सो, णं रक्खसमत्तो जेव्व समुहपडिदं माणुसं चव्वेइ किं उण रक्खसराओ )

**मञ्जीरकः**—अलं कातरतया। सकलवीरवृन्दवन्दनीया हि वन्दिजातिः। तत् कथमस्मद्विधेषु सकलभुवनैकवीरो विपरीतं वर्तिष्यते दशकण्ठः।

**नूपुरकः**—( सहर्षम् ) यदीदृशं तर्हि किमप्येनं निःशङ्कं प्रक्ष्यामि। ( उपसृत्य ) अये, किमितीयन्ति मस्तकान्युह्यन्ते किमिति वैकं रक्षित्वा पुनरपराणि यत्रकुत्रचिन्न निक्षिप्यन्ते। ( जइ एरिसं ता किंपि इमं णीसङ्को

---

नूपुरक इति। कौतूहलं=कौतुकम्।

मञ्जीरक इति। वन्दिजातिः=स्तुतिपाठकजातिः। सकलवीरवृन्दवन्दनीया=सकलाः ( समग्राः ) ये वीराः ( शूराः ) तेषां वृन्दं ( समूहः ) तेन तस्य वा वन्दनीया (अभिवादनीया, स्तुत्या वा)। अस्मद्विधेषु=अस्मादृशेषु। दशकण्ठः=रावणः। विपरीतं=धर्मनीतिविरुद्धं, वर्तिष्यते=आचरिष्यति।

प्रक्ष्यामि=प्रश्नं करिष्यामि। 'प्रच्छ ज्ञीप्सायाम्' इति धातोर्लृट्। उह्यन्ते=धार्यन्ते। अन्यानि=अपराणि, मस्तकानीति शेषः।

---

( अनन्तर अपने रूपसे रावण प्रवेश करता है। )

**नूपुरक**—मित्र! यह कौतुक देखो देखो, जो कि एक मनुष्यके भी दश मस्तक हैं।

**मञ्जीरक**—यह मनुष्य नहीं है, यह राक्षसराज रावण है।

**नूपुरक**—तब मित्र मेरी रक्षा करें। राक्षसमात्र ही सामने आये हुए मनुष्यको चबा जाता है तो फिर इस राक्षसराजका क्या कहना?

**मञ्जीरक**—डरनेकी कोई आवश्यकता नहीं है। क्योंकि बन्दी ( स्तुति पाठक ) की जाति सकल वीरसमूहसे अभिवादनीय है। इस कारण हमारे ऐसे लोगोंपर समस्तलोकमें एकमात्र वीर रावण कैसे विपरीत आचरण करेगा?

**नूपुरक**—( हर्षपूर्वक ) ऐसा है तो मैं इससे निःशङ्क होकर कुछ पूछूं। ( समीप आ

पुरिसंसम् । अये, किंत्ति एत्तिआइं मत्थआइं उव्वहीअन्ति, किंति वा एकं रक्खिअ ण अवराइं जत्तकुत्तवि ण णिक्खिप्पन्ति )

रावणः—आः पाप, कथमस्थाने शिरश्छेदवार्त्तयाऽमङ्गलमावेदयसि । तदेष वैतालिक इत्युपेक्ष्यः ।

मञ्जीरकः—( विहस्य ) स्थाने शिरश्छेदवार्त्तापि भवतो मङ्गलाय ?

रावणः—अथ किम् ? ननु रे—

विद्याधरप्रणयिनी-करपल्लवाग्र-
लीलाविमुक्त-कुसुम-प्रकरावकीर्णे ।
श्रीचन्द्रचूडचरणे च रणे च कामं
छिन्नोऽपि मस्तकगणो मम मङ्गलाय ॥ ४४ ॥

---

रावण इति । वैतालिकः = चारणः । उपेक्ष्यः = उपेक्षणीयः ।

विद्याधरेति । विद्याधरप्रणयिनीकरपल्लवाऽग्रलीलाविमुक्तकुसुमप्रकराऽवकीर्णे श्रीचन्द्रचूडचरणे रणे च कामं छिन्नोऽपि मम मस्तकगणो मङ्गलायेत्यन्वयः ।

विद्याधरेत्यादिः = विद्याधराणां ( देवयोनिविशेषाणाम् ) याः प्रणयिन्यः ( प्रणयशालिन्यः, विद्याधर्य इति भावः ) तासां ये कराः ( हस्ताः ) एव पल्लवाः ( किसलयानि ) तेषामग्रैः ( अग्रभागैः ) लीलया ( विलासेन ) विमुक्तानि ( अर्पितानि ) यानि कुसुमानि ( पुष्पाणि ) तेषां प्रकरः ( समूहः ) तेनाऽवकीर्णे ( परिपूर्णे ) विशेषणमिदं देहलीदीपन्यायेन रणस्याऽपि विशेषणम् । श्रीचन्द्रचूडचरणे = श्रीयुक्तश्चन्द्रचूडः श्रीचन्द्रचूडः ( श्रीचन्द्रशेखरः ) तस्य चरणे ( पादे ) एवं रणे च=संग्रामे च, कामं = यथेष्टं, छिन्नोऽपि = कृत्तोऽपि, मम = रावणस्य, मस्तकगणः = शिरोनिकरः, मङ्गलाय = कल्याणाय, भविष्यतीति शेषः । विद्याधरीकरकिसलयसमर्पित-

---

कर ) अरे ! क्यों इसने मस्तकोंको धारण किया है ? एकको रखकर अन्य सभीको कहीं पर क्यों नहीं रख देता ?

रावण—ओह ! पापिन् ! क्यों शिर काटनेकी बातसे अमङ्गल सूचित करता है ? फिर भी तू वैतालिक होनेसे उपेक्षणीय है ?

मञ्जीरक—( हँसकर ) स्थान ( शिवार्चनमें ) में तो आपके शिर काटनेकी बात भी मङ्गलके लिए है ?

रावण—और क्या ? सुन रे—

लीलासे विद्याधरियोंके हस्तपल्लवोंके अग्रभागोंसे छोड़े गये पुष्पसमूहसे परिपूर्ण श्रीमहादेवके चरणमें और वैसे ही रणमें भी यथेष्टरूपसे छिन्न भी मेरा मस्तकसमूह मङ्गलके लिए है ॥ ४४ ॥

नूपुरकः—यदीदृशस्त्वं तर्हि किमिति निजरूपं संगोप्य चोर इव प्रविष्टोऽसि। (जदि एरिसो तुमं ता किंति णिअरूअं संगोविअ चोराव्व पविट्ठोसि)

रावणः—धिङ् मूर्ख, न जानासि रे—

ये चन्द्रचूडाचलचालनैक-
चातुर्यचिन्तामणयो भुजा मे।
तैरेव भूयिष्ठतरैः प्रवृत्तश्चा-
पाधिरोपाय कथं न लज्जे॥ ४५॥

---

प्रसूननिकरपरिपूर्णे चन्द्रचूडचरणे छेदोत्तरमुपहारीकृतो मदीयमस्तकगणो यथा प्राङ्मङ्गलायाऽऽसीत्तथैव रणेऽप्युपायनीकृता मन्मस्तकसंहतिः कल्याणायैव भविष्यतीति भावः। एतेन रामकर्तृकं भावि रावणमस्तककलापच्छेदनं सूच्यते। रूपकाऽलङ्कारः। वसन्ततिलकं वृत्तम्॥ ४४॥

नूपुरक इति। ईदृशः=एतादृशः, वीर इति भावः। संगोप्य=तिरोहितं कृत्वा। एतेन छद्मपूर्वकं भावि जानकीहरणं सूच्यते।

य इति। ये मे भुजाः चन्द्रचूडाऽचलचालनैकचातुर्यचिन्तामणयः, भूयिष्ठतरैः तैरेव चापाऽधिरोपाय प्रवृत्तः (सन्) कथं न लज्जे इत्यन्वयः।

ये, मे=मम, भुजाः=बाहवः, विंशतिसंख्यका इति भावः। चन्द्रचूडाऽचलचालनैकचातुर्यचिन्तामणयः=चन्द्रचूडस्य (चन्द्रशेखरस्य, शिवस्येति भावः) अचलः (पर्वतः, कैलाश इति भावः) तस्य चालनं (संचालनं, स्वसन्निवेशादुत्सारणमिति भावः) तस्मिन्नेकम् (अद्वितीयम्) यच्चातुर्यं (चतुरता, पटुतेत्यर्थः) तस्मिन् चिन्तामणयः (इच्छापूरकरत्नविशेषाः, चिन्तामणिसदृशा इति भावः। लाक्षणिकोऽयं प्रयोगः)। भूयिष्ठतरैः=अधिकतरैः, तैरेव=बाहुभिरेव, चापाऽधिरोपाय=कार्मुकानमनाय, प्रवृत्तः=तत्परः सन्, अहमिति शेषः। कथं=केन प्रकारेण न लज्जे=लज्जितो न भवामि। यैर्मम भुजैः शिवपर्वतः कैलासोऽपि संचालितः, तैरेव क्षुद्रधनुरानमनोद्यतोऽहं कथं न लज्जितो भवामीति भावः। इन्द्रवज्रा वृत्तं, तल्लक्षणं यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति॥ ४५॥

---

नूपुरक—ऐसा है तो क्या आप अपना रूप छिपाकर चोरकेसमान प्रवेश किये हुए हैं।

रावण—धिक् मूर्ख!, अरे? तू नहीं जानता?

जो मेरे हाथ महादेवजीके पर्वत कैलासको चलानेमें एकमात्र चातुर्यमें इच्छापूरक चिन्तामणिके सदृश हैं, बहुतेरे उन्हीं हाथोंसे एक धनु उठानेके लिए प्रवृत्त होता हुआ मैं क्यों नहीं लज्जित होता हूँ?॥ ४५॥

तत्कथय कुत्र जानकीति ।

मञ्जीरकः—( सविषादम् )

यस्याः स्वयं कुलगुरुः किल याज्ञवल्क्य-
स्तातः स एष जनको जननी धरित्री ।
साऽपि त्वमद्य बत दुर्विधिवैशसेन
वत्से ! निशाचरकराङ्कगता भवित्री ॥ ४६ ॥

नूपुरकः—( अपवार्य ) अलं तापेन । कथमेतावन्मात्रे वीरमण्डले

---

यस्या इति । हे वत्से ! यस्याः कुलगुरुः स्वयं याज्ञवल्क्यः किल, तातः स एष जनकः, जननी धरित्री । साऽपि त्वमद्य दुर्विधिवैशसेन निशाचरकराङ्कगता भवित्री, बत ! इत्यन्वयः ।

हे वत्से = हे वात्सल्यास्पदभूते जानकि ! यस्याः = ते, कुलगुरुः = पितृवंशाचार्यः स्वयं = न त्वन्यः, याज्ञवल्क्यः = याज्ञवल्क्यनामको योगिराजः, किलेति निश्चये । तातः = पिता, 'तातस्तु जनकः पिते'त्यमरः । सः = प्रसिद्धः, एषः = अयं, बुद्धिसन्निकृष्टस्य इति भावः । जनकः = जनकनामधेयो महाराजः । जननी = माता, 'जनयित्री प्रसूर्माते'त्यमरः । धरित्री = पृथिवी । साऽपि = तादृश्यपि, त्वं = सीता, अद्य= अस्मिन्दिने, दुर्विधिवैशसेन = दुर्भाग्यस्य घातुकत्वेन, दुष्टो विधिर्दुर्विधिः, 'कुगतिप्रादय' इति समासः । विशसति = हिनस्तीति विशसः, 'नन्दिग्रहिपचादिभ्यो ल्युणिन्य च' इति पचादित्वादुपसर्गपूर्वकात् 'शसु हिंसायाम्' इति धातोरच्प्रत्ययः । विशसस्य भावो वैशसं, दुर्विधे वैशसेन । निशाचरकराङ्कगता = निशासु चरतीति निशाचरः 'चरेष्ट' इति टप्रत्ययः । निशाचरस्य ( राक्षसस्य, रावणस्येति भावः ) कराऽङ्कगता ( हस्तोत्सङ्गप्राप्ता ) भवित्री = भाविनी, असीतिशेषः । एतेन दण्डकारण्ये रावणकर्तृकं भावि जानकीहरणं सूच्यते । वसन्ततिलकं वृत्तम् ॥ ४६ ॥

नूपुरक इति । अपवार्य = अन्यपरावर्तनपूर्वकं प्रकाश्य । अपवारितलक्षणं साहि-

---

इसलिए बता जानकी कहां है ?

मञ्जीरक—( विषादके साथ )

हे वत्से सीते ! जिसके कुलगुरु स्वयम् याज्ञवल्क्य, पिता जनक महाराज और जननी पृथ्वी हैं । ऐसी होकर भी तुम आज दुर्भाग्यकी घातुकतासे राक्षसकी हस्तगत होगी । हाय ! ॥ ४६ ॥

नूपुरक—( केवल मञ्जीरकको सुनाकर ) सन्ताप नहीं करना चाहिए । इतने वीरोंके

कोऽपि नास्ति योऽस्य हठप्रवृत्तस्य पुरतो भवति । ( अलं तावेण । कहं एत्तिअमेत्तम्मि वीरमण्डले कोवि णत्थि जो इमस्स हठप्पउत्तस्स पुरदो होदि )

**मञ्जीरकः**—कुपितस्य दशकण्ठस्य कः सम्मुखे भवति क्षत्रियः ऋते सहस्रबाहोः कार्त्तवीर्यात् ।

**नूपुरकः**—( सहर्षम् ), जीविताः स्मः, पश्य, ननु प्राप्तः सहस्रबाहुः कृतवीर्यपुत्रः । ( जीविदं ह्म, पेक्ख ण पत्तो सहस्सबाहू किदवीरपुत्तो )

**मञ्जीरकः**—धिङ् मूर्ख, जामदग्न्यकुठारधाराजलनिमग्नः क सम्प्रति कार्त्तवीर्यः तन्नूनमयं बाणासुरो भविष्यति । हन्त भोः, तदिदमनर्थान्तरम् । ( विमृश्य ) अथवा विषस्य विषमौषधं भविष्यति ।

---

स्वदर्पणे यथा—'तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य पराबृत्य प्रकाश्यते । 'इति हठप्रवृत्तस्य=नियमोल्लङ्घनपूर्वकं समीहितसाधनतत्परस्येत्यर्थः । चापारोपणमकृत्वैव सीताहरणोद्यतस्येति भावः । पुरतो भवति = अग्रे भवति, निवारणार्थमिति शेषः ।

मञ्जीरक इति । सहस्रबाहोः = सहस्रभुजस्य, सहस्रं बाहवो यस्य स सहस्रबाहुस्तस्य । दत्तात्रेयप्रसादात्समरसमये सहस्रबाहुसम्पन्नस्येति भावः । कार्तवीर्यात् = कार्तवीर्यनामकाद्धैहयवंशभूपालात्, ऋतेयोगे 'अन्याराद्वितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमी ।

नूपुरक इति । जीविताः = प्राप्तजीवनाः ।

मञ्जीरक इति । जामदग्न्यकुठारधाराजलनिमग्नः = जमदग्नेरपत्यं पुमाञ्जामदग्न्यः = परशुरामः, 'गर्गादिभ्यो यञ्' इति यञ्प्रत्ययः । जामदग्न्यस्य ( परशुरामस्य ) यः कुठारः ( परशुः ) तस्य धारा ( तीक्ष्णाऽग्रभागः ) सैव जलम् ( अम्बु ) तस्मिन्निमग्नः ( कृतनिमज्जनः ) । कार्तवीर्यस्तु परशुरामेण पूर्वमेव परशुना निषूदितः, कुतः पुनरिह तस्याऽऽगमनसम्भव इति भावः । अनर्थान्तरम् = अन्योऽनर्थः,

---

समूहमें कोई ऐसा नहीं है जो हठसे सीताको ग्रहण करनेमें तत्पर इसके आगे आसके ।

**मञ्जीरक**—क्रुद्ध रावणके सम्मुखमें सहस्रबाहु कार्तवीर्यको छोड़कर और कौन क्षत्रिय आसकता है ?

**नूपुरक**—( हर्षके साथ ) हमलोग बच गये । देखो, सहस्रबाहु कृतवीर्यपुत्र आरहे हैं ।

**मञ्जीरक**—धिक् मूर्ख ! परशुरामकी कुठारधाराके जलमें निमग्न कार्तवीर्य अभी कहां हैं ? इसलिए निश्चय ही यह बाणासुर होगा । हाय ! अरे ! यह दूसरा अनर्थ आ पड़ा । ( विचारकर ) अथवा विषका विष ही औषध होगा ।

( ततः प्रविशति बाणासुरः )

बाणासुरः—( परिक्रम्य, साटोपम् )

कैलासशैलशिखरादपि भूरिसारं
निस्सीमभारमधुना धनुरिन्दुमौलेः ।
आलम्ब्य पुष्पसदृशं करपल्लवेन
स्फीतं भुजद्रुमवनं सफलं करोमि ॥ ४७ ॥

रावणः—( अनाकर्णितकेन ) कथमद्यापि नानीयते जानकी ।

'मयूरव्यंसकादयश्चे'ति समासः । एको रावण एवाऽनर्थरूपोऽभूत्तत्राऽयं बाणासुरोऽपरोऽनर्थ आपतित इति भावः ।

तत इति । प्राक् सहस्रबाहुपदोच्चारणेन सहस्रबाहोर्बाणाऽसुरस्य प्रवेशः । उक्तं च सङ्गीतकल्पतरौ—'असूचितस्य पात्रस्य प्रवेशो नव युज्यते ।' इति । बाणाऽसुर इति । साटोपं = सदर्पम् ।

कैलासेति । कैलासशैलशिखरादपि भूरिसारं निःसीमभारम् इन्दुमौलेर्धनुः करपल्लवेन पुष्पसदृशम् आलम्ब्य अधुना स्फीतं भुजद्रुमवनं सफलं करोमीत्यन्वयः ।

कैलासशैलशिखरादपि = कैलासपर्वतशृङ्गादपि, भूरिसारम् = अधिकगौरवम् , अत एव निःसीमभारम् = अनुपमभारसम्पन्नं, निर्गता सीमा यस्मात्स निःसीमा तादृशो भारो यस्य तत् । इन्दुमौलेः = चन्द्रशेखरस्य, शङ्करस्येत्यर्थः । धनुः=कार्मुकं, करपल्लवेन = हस्तकिसलयेन, कर एव पल्लवं, तेन मयूरव्यंसकादयश्चे'ति रूपकसमासः । पुष्पसदृशं = कुसुमसमानं यथा स्यात्तथेति क्रियाविशेषणम् । आलम्ब्य = उत्तम्भय्येति भावः । अधुना = इदानीं स्फीतं = समृद्धं, 'स्फायी वृद्धौ' इत्यस्माद्धातोर्निष्ठायां क्तप्रत्ययः, 'स्फायः स्फी निष्ठायाम्' इति स्फ्यादेशः । भुजद्रुमवनं = बाहुवृक्षविपिनं, भुजा एव द्रुमास्तेषां वनम् । सफलं=फलसम्पन्नं, करोमि=विदधामि । कैलासपर्वतादपि गुरुतरस्य हरधनुष उत्थापनेन स्वकीयं भुजतरुमण्डलं सफलं विधास्यामीति भावः । अत्र रूपकाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ४७ ॥

रावण इति । अनाकर्णितकेन = अनाकर्णितेनेव भावेन । चन्द्रहासः=करवालः ।

( बाणासुर प्रवेश करता है । )

बाणासुर—( परिक्रमण कर दर्पके साथ )

कैलास पर्वतकी चोटीसे भी अधिकसारवाले और निःसीमभारसे युक्त शङ्करधनुको हस्तपल्लवसे फूलके सदृश उठाकर मैं इससमय समृद्ध अपने बाहुरूप वृक्षोंके वनको सफल बनाता हूँ ॥ ४७ ॥

रावण—( न सुननेका भाव दिखाकर ) क्यों अभीतक जानकी नहीं लाई गई ?

बाणः—( विलोक्य, स्वगतम् ) कथमिह दशकण्ठोऽपि । ( प्रकाशम् ) अहो, एतावति वीरलोके न केनापि सावदारोपितमैश्वरं धनुः ।

नूपुरकः—नारोपणीयं च ।

रावणः—कथमद्यापि नानीयते सीता । तदयं चन्द्रहास एव बलादानयति ।

बाणः—( विहस्य ) यदीदृशं वीरडम्बरं तत्किमारोप्यैव हरकार्मुकं नानीयते सीता ।

रावणः—आः, कोऽयमलीकपण्डितः ?

उद्दण्डचण्डिमलसद्भुजदण्डखण्ड—
हेलाचलाचलहराचलचारुकीर्त्तेः ।

---

बलात् = बलमनुष्ठीय, 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति पञ्चमी ।

बाण इति । वीरडम्बरं = वीरदर्पः ।

रावण इति । अलीकपण्डितः = मिथ्याबुधः, मिथ्यापाण्डित्याऽभिमानसम्पन्न इति भावः ।

आत्मपराक्रमं वर्णयति—उद्दण्डेति । उद्दण्ड चण्डिमलसद्भुजदण्डखण्डहेलाचलाचलहराऽचलचारुकीर्तेर्मेऽनया तुलितबालमृणालकाण्डकोदण्डकर्षणकदर्थनया कीदृग्यश इत्यन्वयः ।

उद्दण्डेत्यादिः = उद्दण्डः ( उद्धतः ) यश्चण्डिमा ( अतिकोपनत्वं, क्रौर्यमिति भावः । चण्डस्य भावः, 'पृथ्वादिभ्य इमनिज्वे' तीमनिच्प्रत्ययः ) तेन लसन् ( प्रकाशमानः ) यो भुजदण्डखण्डः ( बाहुदण्डसमूहः ) तेन हेलया ( अनायासेन ) चला-

---

बाण—( देखकर, मन ही मन ) यहां रावण भी कैसे आ गया ? ( सुनाकर ) आश्चर्य है, इतने वीरोंके समूहमें किसीने भी महेश्वरके धनुको नहीं उठाया ।

नूपुरक—वह धनु किसीसे भी नहीं उठाया जा सकेगा ।

रावण—देखें कैसे अभी सीता नहीं लाई जाती । ( देखो ) यह तलवार ही बलसे सीताको ले आती है ।

बाण—( हंसकर ) ऐसा वीरदर्प है तो शिवधनु उठाकर ही क्यों नहीं सीताको ले आते हो ?

रावण—आः ! यह कौन मिथ्यापण्डित है ?

उद्धत क्रौर्यसे प्रकाशमान बाहुसमूहसे अनायास ही चपल होनेवाले महादेवके कैलास

कीदृग्यशस्तुलितबालमृणालकाण्ड-
कोदण्डकर्षण-कदर्थनयाऽनया मे ॥ ४८ ॥

बाणः—सोऽयमशक्तिप्रकारः ।

रावणः—आः, कथं दशमुखस्याप्यशक्तिसम्भावना ।

बाणः—( विहस्य ) अये, बहुमुखता नाम बहुप्रलापितायाः कारणम् । विक्रमस्य बहुबाहुतैव ।

रावणः—आः, कथं रे, पलालभारनिस्सारेण भुजभारेण वीरंमन्योऽसि ।

---

चलः ( चञ्चल ) यो हराऽचलः ( शङ्करपर्वतः, कैलास इत्यर्थः ) तेन चारुः ( मनोहरा ) कीर्तिः ( यशः ) यस्य सः, तस्य । मे = मम, अनया = एतया, तुलितबालमृणालकाण्डकोदण्डकर्षणकदर्थनया = तुलितः ( उपमितः ) बालमृणालकाण्डः ( अभिनवबिसाऽङ्कुरः ) येन सः, एतादृशः यः कोदण्डः ( चापः ) तस्य कर्षणे ( आकर्षणे ) कदर्थनया ( व्यर्थक्लेशेन ), कीदृक् = कीदृशं, यशः = कीर्तिः, स्यादिति शेषः । बाहुदण्डोत्तोलित-शिवाचलस्य प्राप्तयशसो मे प्रथमबिसाऽङ्कुरसमचापसंचालनव्यर्थक्लेशेन कथंविधं यशः आसादितं भवेदिति भावः । उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ४८ ॥

बाण इति । अशक्तिप्रकारः = असामर्थ्यभेदः, 'प्रकारौ भेदसामर्थ्यें' इत्यमरः ।

रावण इति । आः शब्दोऽयमत्र कोपद्योतकः । 'आस्तु स्यात्कोपपीडयो'रित्यमरः ।

बाण इति । बहुप्रलापितायाः=अधिकप्रलपनशीलतायाः । बहुबाहुतैव=अधिकभुजतैव, कारणमिति शेषः ।

रावण इति । पलालभारनिःसारेण = पलालभार इव ( धान्यरहितकाण्डसमूह इव ) निःसारः ( स्थिरांशरहितः ), तेन । वीरम्मन्यः = शूरम्मन्यः, आत्मानं वीरं

---

पर्वतसे सुन्दर यशवाले मुझे इस बालमृणालके सदृश धनुको चढानेमें व्यर्थ क्लेश करनेसे कैसा यश होगा ? ॥ ४८ ॥

बाण—यह असमर्थताका भेद है ।

रावण—ओह ! क्यों रावणकी भी अशक्तिकी संभावना करते हो ?

बाण—(हंसकर) अरे ! बहुत मुख होना तो बहुत बकवाद करने का कारण है । बहुत बाहु होना ही पराक्रमका कारण है ।

रावण—ओह ! क्यों जी ! पलालके भारके सदृश सारशून्य बाहुभारसे तुम अपनेको वीर माननेवाले हो गये हो ।

बाणः—(सक्रोधम्) अये समरकलाकुण्ठ ? दशकण्ठ, ममापि भुजभारं निस्सारं व्यपदिशसि । न जानासि किं, यतोऽत्रैव—

पितुः पादाम्भोजप्रणतिरभसोत्सिक्तहृदयः,
प्रयातः पातालं न कतिकतिवारानकरवम् ।
सहस्रे बाहूनां क्षितिवलयमासज्य सकलं,
जगद्भारोद्वेलां फणफलकमालां फणिपतेः ॥ ४९ ॥

---

मन्यत इति 'आत्ममाने खश्चे'ति खश्प्रत्ययः' अरुर्द्विषदजन्तस्य मुम्' इति मुमागमः।

बाण इति । समरकलाकुण्ठ = समरकलायां (युद्धकलायाम्) कुण्ठः (मन्दक्रियः) तत्सम्बुद्धौ । 'कुण्ठो मन्दः क्रियासु च' इत्यमरः।

पितुरिति । पितुः पादाम्भोजप्रणतिरभसोत्सिक्तहृदयः पातालं प्रयातः सकलं क्षितिवलयं बाहूनां सहस्रे आसज्य फणिपतेः फणफलकमालां जगद्भारोद्वेलां कति-कतिवारान् न अकरवम् इत्यन्वयः।

पितुः = जनकस्य, बलेरिति भावः । पादाऽम्भोजप्रणतिरभसोत्सिक्तहृदयः = पादाऽम्भोजयोः (चरणकमलयोः) या प्रणतिः (प्रणामः) तस्यां रभसेन (वेगेन) उत्सिक्तम् (उत्सेकयुक्तं, गर्वयुक्तमिति भावः) हृदयं (चित्तम्) यस्य सः। तादृशोऽहमिति शेषः । पातालं = रसातलं, प्रयातः = प्राप्तः सन् , सकलं = समस्तं, क्षितिवलयं = भूमण्डलं, बाहूनां = भुजानां, सहस्रे = दशशत्याम् , आसज्य = सम्बद्ध्य, फणिपतेः = नागराजस्य, शेषस्येति भावः । फणफलकमालां = फणफलकानां (फणापट्टकानाम्) मालाम् (पङ्क्तिम्), उद्देश्यमेतत् । जगद्भारोद्वेलां = जगद्भारे (भूभारे) उद्वेलां (धारणमर्यादारहितां, भाररहितामिति भावः) विधेयमेतत् । कति कतिवारान् = अगणितवारान् , न अकरवं = न कृतवान् ।

पितृचरणाऽभिवादनार्थं सवेगं पातालं गतवता मया भुजदण्डसहस्रे भूमण्डलं निधायाऽपरिमितवारं फणिपतिफणासंहतिर्भाररहिता सम्पादितेति भावः। तादृशस्य ममाऽग्रे स्वकीया कैलासाऽचलचालनश्लाघा हास्यजनिकेति व्यङ्ग्योऽर्थः उपमाऽलङ्कारः। शिखरिणीवृत्तम् ॥ ४९ ॥

---

बाण—(क्रोधपूर्वक) अरे युद्धकलामें मन्दक्रिय रावण ! मेरे बाहुभारको भी सारशून्य कहते हो नहीं जानते हो क्या ? जिस कारणसे यहीं पर—

पिताजी (बलि) के चरण कमलोंके प्रणाममें शीघ्रता करनेसे गर्वयुक्त चित्तवाले मैंने पातालमें जाकर समस्त भूमण्डलको हजार बाहुओंमें रखकर शेषनागकी फणापङ्क्तिको पृथ्वी के भारसे शून्य कई बार क्या नहीं कर दिया ? ॥ ४९ ॥

रावणः—अरे, वलितनय ! चलितनयवृत्तिरसि, यदलीकविक्रमवर्णनया सत्यविक्रमस्य मे पुरतः स्वात्मानं विडम्बयसि ।

बाणः—कथं त्वमेव सत्यविक्रमः ?

रावणः—अथ किम् ?

दोष्णां न मे विदितवानसि वीरलक्ष्मी-
प्रासादविभ्रमवतीं पदवीं गरिष्ठाम् ।
ये चन्द्रशेखरगिरौ करपल्लवाङ्क-
पर्यङ्कशायिनि दधुः कलशप्रतिष्ठाम् ॥ ५० ॥

रावण इति । वलितनय = वलितः ( सञ्जातबलः ) नयः ( नीतिः ) येन सः तत्सम्बुद्धौ, हे नीतिप्रतिपालक इति भावः । तत्र बलं संजातमस्य स बलितः, 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः । यद्वा बलेः ( विरोचनपुत्रस्य ) तनयः ( पुत्रः ), तत्सम्बुद्धौ । चलितनयवृत्तिः = चलिता ( विचलिता ) नये ( नीतौ ) वृत्तिः ( वर्तनम् ) यस्य सः । बाण इति । त्वमेव = नाऽन्य इति भावः । अत्रैवकारोऽन्ययोगव्यवच्छेदको बोद्धव्यः ।

दोष्णामिति । वीरलक्ष्मीप्रासादविभ्रमवतीं मे दोष्णां गरिष्ठां पदवीं न विदितवान् असि । ये करपल्लवाङ्कपर्यङ्कशायिनि चन्द्रशेखरगिरौ कलशप्रतिष्ठां दधुरित्यन्वयः । वीरलक्ष्मीप्रासादविभ्रमवतीं = वीरलक्ष्म्याः ( शूरलक्ष्म्याः ) यः प्रासादः ( निवासस्थानम् ) तस्य विभ्रमः ( विलासः ) तद्वतीं ( तत्सम्पन्नाम् ), वीर्यलक्ष्म्याधारभूतामिति भावः । मे = मम, दोष्णां = बाहूनां, गरिष्ठां = गौरवाऽतिशयविशिष्टां, पदवीं = पद्धतिं, न विदितवान् असि = न ज्ञातवान् असि । ये = मे दोषः ( बाहवः ), करपल्लवाङ्कपर्यङ्कशायिनि = करपल्लवानाम् ( हस्तकिसलयानाम् ) अङ्कः ( उत्सङ्ग, मध्यभाग इत्यर्थः ) एव पर्यङ्कः ( पल्यङ्कः ) तच्छायिनि ( तत्स्थिते ) तादृशे चन्द्रशेखरगिरौ = शिवपर्वते, कैलास इति भावः । कलशप्रतिष्ठां = प्रासादाऽ-

रावण—हे नीतिप्रतिपालक ! अथवा हे बलिपुत्र बाण ! तुम्हारा नीतिव्यवहार विचलित है, जो कि सत्यपराक्रमवाले मेरे सामने अपनेको विडम्बित कर रहे हो !

बाण—क्या तुम ही सत्यपराक्रम वाले हो ?

रावण—और क्या ?

वीरलक्ष्मीके प्रासादके विलाससे सम्पन्न ( वीर्यलक्ष्मीको आधारभूत ) मेरे बाहुओंकी गौरवपूर्ण पद्धतिको तुम नहीं जानते हो । जिन्होंने ( मेरे बाहुओंने ) करपल्लवमें रहने वाले शिवपर्वत कैलासमें कलशकी प्रतिष्ठाको धारण किया ॥ ५० ॥

बाणः—अलमलीकवाग्विग्रहेण । तदिदं धनुरावयोस्तारतम्यं निरूपयिष्यति ।

मञ्जीरकः—अये बाण-रावणौ, किमिदं नरवीरैकसमर्पणीयसीतापरिणयमनोरथेन विफलमायास्यते चेतःपदवी ।

बाणः—किमेतावता—

त्रिपुरमथनचापारोपणोत्कण्ठिता धी-
र्मम न जनकपुत्री-पाणिपद्मग्रहाय ।

---

ऽलङ्कारतुल्यतां, वृधुः = एतवन्तः । वीरलक्ष्मीप्रासादतुल्या मद्भुजाः, तन्निहितः कैलाशपर्वतः प्रासादाऽलङ्कारसदृशः सञ्जातः अहो ! कीदृशं मद्वीर्यमिति भावः । अत्रोपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ५० ॥

बाण इति । अलीकवाग्विग्रहेण = मिथ्यावचनकलहेन । तारतम्यं = न्यूनाऽधिकभावम् ।

मञ्जीरक इति । नरवीरैकसमर्पणीयसीतापरिणयमनोरथेन=नरवीरेषु ( मनुष्यशूरेषु ) एकः ( अद्वितीयः, राम इति व्यङ्ग्योऽर्थः ) तस्मै समर्पणीया ( प्रतिपादनीया ) या सीता ( जानकी ) तस्याः परिणये ( विवाहे ) मनोरथेन ( अभिलाषेण )। चेतः पदवी = चित्तसरणिः । विफलं = निष्फलं यथा स्यात्तथा । आयास्यते = पीड्यते ।

त्रिपुरमथनेति । मम धीः त्रिपुरमथनचापारोपणोत्कण्ठिता, जनकपुत्रीपाणिपद्मग्रहाय न । अपि तु बहुलबाहुस्तूहनिर्व्यूंहमालाबलपरिमलहेलाताण्डवाऽऽडम्बरायेत्यन्वयः ।

मम = बाणाऽसुरस्य, धीः = बुद्धिः, त्रिपुरमथनचापारोपणोत्कण्ठिता = त्रिपुरमथनस्य ( त्रिपुरारेः, शङ्करस्येत्यर्थः ) चापः ( धनुः ) तस्याऽऽरोपणे ( ज्यायुक्ताविधाने ) उत्कण्ठिता ( उत्सुका ) जनकपुत्रीपाणिपद्मग्रहाय न = जनकपुत्र्याः ( जानक्याः, सीताया इत्यर्थः ) पाणिपद्मग्रहाय न ( करकमलग्रहणाय न ), उत्क-

---

बाण—मिथ्या वचनकलहकी कोई आवश्यकता नहीं। इसकारण यह धनु हम दोनोंके न्यूनाऽधिकभावका निरूपण करेगा ।

मञ्जीरक—अरे बाण और रावण ! नरवीरोंमें एक ( अद्वितीय ) को समर्पण करनेके लिए योग्य सीताके साथ विवाहकी इच्छासे क्यों आपलोग चित्तमार्गको विफल बनारहे हैं ?

बाण—इतनेसे—

मेरी बुद्धि शिवजीका धनु उठानेके लिए उत्कण्ठित है, सीताके करकमल ग्रहणके लिए

अपि तु बहुलबाहुव्यूहनिर्व्यूहमाला-
बलपरिमलहेलाताण्डवाडम्बराय ॥ ५१ ॥

रावणः—

उन्मीलितेन शिखरेण हराचलस्य
प्रागेव मे भुजवनस्य कृता परीक्षा ।
एषा विदेहतनयाकुचकुम्भकेलि-
कौतूहलाद्गिरिशकार्मुककर्मदीक्षा ॥ ५२ ॥

ण्ठितेति शेषः । अपि तु, बहुलेत्यादिः = बहुलाः ( बहवः ) ये बाहवः ( भुजाः ) तेषां व्यूहः ( समूहः ) तस्य निर्व्यूहा ( व्यूहरहिता, एकैकशः प्रसारितेति भावः ) या माला ( श्रेणी ) तस्या बलपरिमलः ( शक्तिसुगन्धः, 'बलपरिणति'रिति पाठान्तरे तु शक्तिनैपुण्यमित्यर्थः ) तस्य हेलया ( विलासेन ) यत् ताण्डवं ( नृत्यम् ) तस्य आडम्बराय = समारम्भाय च मम श्रीरुत्कण्ठिताऽस्तीति शेषः । 'आडम्बरः समारम्भे गजगर्जिततूर्ययोः ।' इति विश्वः । मदीया श्रीर्जानकीपाणिपीडनार्थमुत्कण्ठिता न वर्तते, हरचापारोपणे प्रसारितबहुबाहुकृतताण्डवनृत्यसमारम्भ उत्सुका विद्यत इति भावः । मालिनीवृत्तं, तल्लक्षणं यथा—'ननमयययुतेयं मालिनी भोगिलोकै'रिति ॥

उन्मीलितेनेति । हराऽचलस्य उन्मीलितेन शिखरेण प्रागेव मे भुजवनस्य परीक्षा कृता । एषा विदेहतनयाकुचकुम्भकेलि कौतूहलात् गिरिशकार्मुककर्मदीक्षेत्यन्वयः ।

हराऽचलस्य = शिवपर्वतस्य, कैलासस्येत्यर्थः । उन्मीलितेन = संचालितेन, शिखरेण = शृङ्गेण, प्रागेव = पूर्वमेव, मे = मम, रावणस्येत्यर्थः । भुजवनस्य = बाहुविपिनस्य, बाहुसमूहस्येत्यर्थः । परीक्षा = परीक्षणं, कृता = विहिता । एषा = इयम् , उपस्थितेति भावः । विदेहतनयाकुचकुम्भकेलिकौतूहलात् = विदेहतनयायाः ( जनकसुतायाः, सीताया इत्यर्थः ) कुचकुम्भयोः ( पयोधरकलशयोः ) या केलिः ( क्रीडा ) तस्यां कौतूहलात् ( कौतुकात् ) । गिरिशकार्मुककर्मदीक्षा = गिरिशस्य ( शिवस्य ) यत्कार्मुकं ( धनुः ) तस्य कर्मणि ( क्रियायाम् , आनमनरूपायामिति भावः ) दीक्षा ( नियमः ) अस्तीति शेषः । विक्रमप्रदर्शनाऽर्थं हराऽचलसंचालनाऽऽख्यं कर्म प्रागे-

नहीं; बल्कि बहुतेरे बाहुओंकी एक एक करके उठाई गई मालाकी शक्ति सुगन्धिके विलाससे नृत्य करनेके आडम्बरके लिए उत्कण्ठित है ॥ ५१ ॥

रावण—शिवपर्वत ( कैलास ) की उठाई गई चोटी मेरे बाहुओंकी परीक्षा पहले ही कर चुकी है । अभी सीताके स्तनकलशोंकी क्रीडाके कौतूहलसे इस शिवधनुको उठाना है ॥

( नेपथ्ये )

असुरसुरनिशाचरोरगाणामपि नरकिन्नरसिद्धचारणानाम् ।
नमयति यदि कोऽपि चापमेतत् मम दुहितुः स करग्रहं तनोतु ॥

रावणः—

रे रे भुजाः ! कुरुत चन्द्रकलाकिरीट-
कोदण्डकर्षणयशोधवलां त्रिलोकीम् ।

---

वाऽनुष्ठितं, साम्प्रतं सीतापाणिग्रहणार्थमेव हरचापारोपणाख्यो व्यापारोऽवशिष्ट इति भावः । वसन्ततिलकं वृत्तम् ॥ ५२ ॥

नेपथ्यतो जनककृता घोषणा श्रूयते—असुरेति । असुरसुरनिशाचरोरगाणां नरकिन्नरसिद्धचारणानाम् अपि कोऽपि एतत् चापं नमयति यदि स मम दुहितुः करग्रहं तनोत्वित्यन्वयः । असुरसुरनिशाचरोरगाणां=दैत्यविबुधराक्षससर्पाणां, तथा नरकिन्नरसिद्धचारणानाम् अपि=मनुष्यकिम्पुरुषसिद्धकुशीलवानां मध्येऽपि, उभयत्राऽपि 'चार्थे द्वन्द्व' इतीतरेतरयोगद्वन्द्वः । 'चारणास्तु कुशीलवा' इत्यमरः । कोऽपि=जनः, एतत्=सन्निकृष्टस्थितं, चापं=हरकार्मुकम् ।' अथाऽस्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम् । इत्यमरः । नमयति यदि=नतं करोति चेत्, तर्हीति शेषः । सः=हरकार्मुकनमनकर्त्ता जनः, मम=मिथिलाऽधिपतेः । दुहितुः=पुत्र्याः, सीताया इत्यर्थः । करग्रहं=पाणिग्रहणं, तनोतु=विदधातु । हरचापारोपणकृते यस्मै कस्मा अपि स्वदुहितरं जानकीं समर्पयिष्य इति भावः । पुष्पिताग्रावृत्तं, तल्लक्षणं यथा—

'अयुजि न युगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा ॥' इति ॥ ५३ ॥

रे रे भुजा इति । रे रे भुजाः ! त्रिलोकीं चन्द्रकलाकिरीटकोदण्डकर्षणयशोधवलां कुरुत; अचिरात् विदेहपुत्रीवक्षोजचन्दनरजः परिधूसरत्वं च अङ्गीकुरुध्वमित्यन्वयः ।

रे रे भुजाः=रे रे बाहवः, मदीया इति शेषः । त्रिलोकीं=लोकत्रयीं, स्वर्गमर्त्यपातालात्मिकामित्यर्थः, उद्देश्यमिदम् । त्रयाणां लोकानां समाहारस्त्रिलोकी, ताम् । 'तद्धितार्थोत्तरपदसमाहारे चे'ति समासस्तस्य 'संख्यापूर्वो द्विगु'रिति द्विगुसंज्ञा । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट' इत्यनुशासनात् 'द्विगो'रिति ङीप् । चन्द्रकलाकिरीटकोदण्डकर्षणयशोधवलां=चन्द्रकला एव किरीटं ( मुकुटम् ) यस्य स

---

( नेपथ्यमें )

दैत्य, देव, राक्षस, सर्प, मनुष्य, किन्नर सिद्ध और चारण इनमें जो कोई भी इस धनुको चढावे तो वह मेरी पुत्रीका पाणिग्रहण कर ले ॥ ५३ ।

रावण—हे मेरे बाहुगण ! तीनों लोकोंको शिवजीके धनु खींचनेसे उत्पन्न यशसे सफेद

अङ्गीकुरुध्वमचिराच्च विदेहपुत्री-
वक्षोजचन्दनरजःपरिधूसरत्वम् ॥ ५४ ॥

( धनुरालोक्य, स्वगतम् ) अये, दुर्विगाहमिदम् । तदलमनेन । ( प्रकाशम् ) बाण, त्वमेव तावदग्रे धनुरारोपय, अस्माकमपि नूतनागतत्वेन मान्योऽसि ।

बाणः—तथाऽस्तु ( इति परिक्रामति )

---

चन्द्रकलाकिरीटः शिवः । यत्तु चन्द्रकला किरीटे यस्य स इति व्याख्यानं तत् 'सप्तमी विशेषणे बहुव्रीहौ' इत्यनेन सप्तमीविशेषणस्य पूर्वप्रयोज्यत्वादुपेक्ष्यम् । 'किरीटी'ति पाठान्तरे चन्द्रकलव किरीटं चन्द्रकलाकिरीटं, तदस्याऽस्तीति चन्द्रकलाकिरीटी = शिव इत्यर्थः । 'अत इनिठनौ' इतीनिप्रत्ययः । पाठान्तरमिदमपि न समीचीनतरम् । 'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इत्यनुशासनात् । कर्मधारयपदस्य बहुव्रीहीतरपरत्वेन गौरवास्पदत्वादवधेयम् । चन्द्रकलाकिरीटस्य ( शिवस्य ) कोदण्डस्य ( धनुषः ) कर्षणेन ( आकर्षणेन, नमनेनेति भावः ) यशसः ( ख्यातेः ) तेन धवलाम् ( शुक्लाम् ) कुरुत = सम्पादयत । ततः—अचिरात् = शीघ्रं, विदेहपुत्रीवक्षोजचन्दनरजःपरिधूसरत्वं = विदेहपुत्र्याः ( सीतायाः ) यौ वक्षोजौ ( उरोजौ, पयोधरावित्यर्थः ) तत्राऽवस्थितं यच्चन्दनरजः ( मलयजपरागः ) तेन परिधूसरत्वम् ( ईषत्पाण्डुरत्वं च ), अङ्गीकुरुध्वं = स्वीकुरुत । हरधनुर्नमनेन त्रिलोकीं स्वयशोधवलां विधाय परिणयोत्तरं सीतालिङ्गनसुखमनुभवतेति भावः । अत्र पूर्वार्द्धे यशसा त्रिलोकीधवलीकरणस्याऽसम्बन्धेऽपि सम्बन्धवर्णनरूपाऽतिशयोक्तिरुत्तरार्द्धे च भङ्ग्या जानकीपरिणयरूपस्य गम्यार्थस्याऽभिधानात्पर्यायोक्तमलङ्कारस्तथा च द्वयोरलङ्कारयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिरलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ५४ ॥

धनुरिति । इदं = धनुः । दुर्विगाहं = दुःसाधनीयम्, अशक्यारोपणमिति भावः । दुःखेन विगाहितुं शक्यम्, 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति खल्प्रत्ययः ।

---

बना डालो और शीघ्र ही सीताके पयोधरस्थित चन्दनरजसे ( धूसर वर्णको भी स्वीकार कर लो ॥ ५४ ॥

( धनु देखकर, मन ही मन ) इसे उठाना मुश्किल है । इसकारण इसकी आवश्यकता नहीं । ( सुनाकर ) बाण ! पहले तुम ही धनु उठाओ । क्योंकि नवागन्तुक होनेसे तुम ही हम लोगोंके भी माननीय हो ।

बाण —ऐसा ही हो ( ऐसा कहकर घूमता है । )

रावणः—( स्वगतम् ) अरे हृदय, अलं कातरतया, अयं तावत्कतरः कुण्ठीकृतदशकण्ठे शितिकण्ठकार्मुके ।

अन्योऽपि कोऽपि यदि चापमिमं विकृष्य
सीताकरग्रहविधिं विदधीत धीरः ।
लङ्कां नयामि च गिरानुनयामि चैनां
द्रागानयामि च वशे जनकेन्द्रपुत्रीम् ॥ ५५ ॥

मञ्जीरकः—सखे, पश्य ।
बाणस्य बाहुशिखरैः परिपीड्यमानं

रावण इति । कुण्ठीकृतदशकण्ठे=कुण्ठीकृतः ( निष्फलीकृतः ) दशकण्ठः (रावणः) येन, तस्मिन् । शितिकण्ठकार्मुके=हरधनुषि । कतरः=कः, बाणोऽप्यहमिव निष्फलप्रयासो भविष्यतीति भावः ।

अन्योऽपीति । अन्योऽपि कोऽपि वीरः इमं चापं विकृष्य सीताकरग्रहविधिं विदधीत यदि, ( तर्हि ) एनां जनकेन्द्रपुत्रीं लङ्कां नयामि गिरा अनुनयामि द्राक् वशे आनयामि चेत्यन्वयः ।

अन्योऽपि=अपरोऽपि, कोऽपि=अज्ञातनामधेयः, वीरः=शूरो जनः, इमं=सन्निकृष्टवर्तिनं, चापं=धनुः, विकृष्य=आरोप्य, सीताकरग्रहविधिं = जानकीपाणिग्रहणविधानं, विदधीत यदि=कुर्याच्चेत् , तर्हि अहमिति शेषः । एनाम्= इमां, जनकेन्द्रपुत्रीं=विदेहेश्वरदुहितरं, सीतामित्यर्थः । लङ्कां=स्वपुरीं, 'नयामी' त्यस्य 'अकथितं चे'त्यनेन गौणकर्मत्वम् । नयामि=प्रापयिष्यामि, 'वर्तमानसामीप्ये वर्तमानवद्वे'ति लट् । गिरा=वाण्या, अनुनयामि=प्रसादयामि द्राक्= शीघ्रं, 'द्राङ्मङ्क्षुसपदि द्रुत' इत्यमरः । वशे=आनयामि च=स्वाधीनां करिष्यामि चेति भावः । एतेन भावि जानकीहरणं सूचितम् । वसन्ततिलकं वृत्तम् ॥ ५५ ॥

बाणस्येति । बाणस्य बाहुशिखरैः परिपीड्यमानम् इन्दुमौलेः इदं धनुः कामा-

रावण—( मन ही मन ) अरे हृदय ! तुम कायर मत बनो । जिसने रावणको असमर्थ कर दिया उस शिवधनु उठानेमें यह कौन है ?

और भी कोई वीर इस धनुको उठाकर सीताका पाणिग्रहण कर लेगा तो सीताको लङ्का ले जाऊंगा और वाणीसे अनुनय करूंगा और अपनी वशवर्तिनी भी कर दूंगा ॥ ५५ ॥

मञ्जीरक—मित्र ! देखो ।

बाणके बाहुशिखरोंसे परिपीड्यमान यह शिवधनु कामातुरकी वचनरचनाओंसे प्रार्थित

नेदं धनुश्चलति किञ्चिदपीन्दुमौलेः।
कामातुरस्य वचसामिव संविधानै-
रभ्यर्थितं प्रकृतिचारु मनःसतीनाम् ॥ ५६ ॥

रावणः—( सविषादमात्मगतम् ) सीतानुनयप्रत्यूहपिशुनेव दुरुपश्रुतिः । ( प्रकाशम् ) अये बाण, अपि नाम ते पलालभारनिस्सारो भुजभारः ।

बाणः—कथं भुजमण्डलमिदमालोकयन्नपि कटुभाषितां न मुञ्चसि ?

---

तुरस्य वचसां संविधानैः अभ्यर्थितं प्रकृतिचारु सतीनां मन इव किञ्चिदपि न चलतीत्यन्वयः ।

बाणस्य = बलिसूनोः, बाहुशिखरैः = पर्वतकूटसदृशैर्भुजैः, बाहवः शिखराणीव बाहुशिखराणि, तैः 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । परि-पीड्यमानं = पर्याकृष्यमाणम् , इन्दुमौलेः = चन्द्रशेखरस्य इदं = सन्निकृष्टस्थितं, धनुः = कार्मुकं, कामाऽऽतुरस्य = मन्मथाऽऽकुलस्य कस्यचिज्जनस्य, वचसां = वचनानां, संविधानैः = रचनाभिः, अभ्यर्थितं = प्रार्थितं, प्रकृतिचारु = स्वभाव-सुशीलं, प्रकृत्या चारु 'प्रकृत्यादिभ्यउपसंख्यानम्' इति तृतीया, ततः समासः । सतीनां = पतिव्रतानां, 'सुचरित्रा तु सतीसाध्वीपतिव्रता' इत्यमरः । मन इव = चित्तम् इव, किञ्चिदपि = मनागपि, न चलति = न संचलति, स्वस्थानादिति शेषः । एतेन सीताकर्तृकं भावि रावणप्रत्याख्यानमाक्षिप्तं भवति । अत्र दृष्टान्ताऽलङ्कार-स्तल्लक्षणं यथा—

'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।' इति । वसन्ततिलकं वृत्तम् ॥५६॥

रावण इति । सीताऽनुनयप्रत्यूहपिशुना = सीतायाः ( जानक्याः ) अनुनयः ( प्रणिपातः ) तस्मिन्प्रत्यूहः ( विघ्नः ) तस्य पिशुना ( सूचिका ) । दुरुपश्रुतिः = दुष्टा उपश्रुतिः = ( उपश्रवणम् ) । अपिरत्र प्रश्नाऽर्थकः ।

बाण इति । हैहयराजेन = कार्तवीर्येण । कार्तवीर्यो रावणं जित्वा कारागारेऽबध्नादिति पुराणप्रथितं वृत्तम् ।

---

स्वभावसुन्दर पतिव्रताओंके मनके समान कुछ भी नहीं चल रहा है ॥ ५६ ॥

रावण—( विषादके साथ मन ही मन ) सीताके अनुनयमें विघ्नकी सूचना करनेवाली यह दुष्ट जनश्रुति प्रकाशित हुई है । ( सुनाकर ) अरे बाण ! तुम्हारा बाहुभार पलालभार के सदृश सारहीन हो गया है क्या ?

बाण—इस बाहुमण्डलको देखकर भी तुम क्यों नहीं कटुभाषणको छोड़ते हो ?

रावणः—तत्किमनेन करिष्यसि ।

बाणः—यत्कृतं हैहयराजेन ।

रावणः—इदमसौ ते भुजवनं निजप्रतापानले निर्दहामि ।

बाणः—इदमहं त्वत्प्रतापानलमनेकरुचिरचापचुम्बितनिजबाहुबलाहकनिवहनिर्मुक्तनाराचधारासारैः शमयामि ।

रावणः—

रे बाण, मुञ्च मयि बाणशतानि पञ्च,
नन्वस्ति मे करतले करवालवल्ली ।
रे पञ्चबाण, विसृज त्वमपि स्वबाणान् ,

---

रावण इति । निर्दहामि = निःशेषं यथा स्यात्तथा भस्मीकरोमि ।

बाण इति । अनेकरुचिरेत्यादिः = अनेके ( बहवः ) रुचिराः ( सुन्दराः ) ये चापाः ( धनूंषि पक्षान्तरे इन्द्रायुधानि )' तैः चुम्बिताः ( सम्बद्धाः ) ये निजबाहवः ( स्वभुजाः ) एव बलाहकाः ( मेघाः ) तेषां निवहः ( समूहः ) तस्मान्निर्मुक्ताः ( विसृष्टाः ) ये नाराचाः ( प्रक्ष्वेडनाः, सर्वलोहमयाः शरविशेषाः ) तेषां धाराः ( परम्पराः ) तासामासारैः ( प्रसरणैः ), 'प्रक्ष्वेडनास्तु नाराचाः' इति 'स्याद्धारासारः प्रसरणम्' इति चाऽमरः । शमयामि = शान्तिं नयामि ।

रे बाणेति । रे बाण ! मयि पञ्च बाणशतानि मुञ्च । ननु मे करतले करवालवल्ली अस्ति । रे पञ्चबाण ! त्वमपि स्वबाणान् विसृज । ननु सा युवतिलोकललामवल्ली एतीत्यन्वयः ।

रे बाण = अरे बाणाऽसुर ! मयि = मद्विषये, पञ्च बाणशतानि = बाणपञ्चशतीं, मुञ्च=प्रक्षिप, ननु=हे बाण, 'प्रश्नाऽवधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणे ननु । इत्यमरः । मे = मम, करतले = पाणितले, करवालवल्ली = खड्गलता, 'वल्ली तु व्रततिर्लता'-

---

रावण—तब इस ( बाहुमण्डल ) से क्या करोगे ?

बाण—जो कार्तवीर्यने किया था ( तुम्हें बाँधूंगा ) ।

रावण—मैं तुम्हारे इस बाहुवनको अपने प्रतापाग्निसे निःशेष कर जला डालूंगा ।

बाण—मैं तुम्हारे इस प्रतापाऽग्निको अनेक सुन्दर धनुषों ( अथवा इन्द्रायुधों ) से सम्बद्ध अपने बाहुरूप मेघोंसे छोड़े गये नाराचोंकी वृष्टियोंसे बुता डालूंगा ।

रावण—रे बाणासुर ! मेरे ऊपर पाँच सौ बाणोंको छोड़ो । मेरे हाथमें खड्गलता है । रे पञ्चबाण ( कामदेव ) ! तुम भी अपने बाणोंको प्रकट करो । स्त्रीसमूहके भूषणलतारूप

मन्वेति सा युवतिलोकललामवल्ली ॥ ५७ ॥

नूपुरकः—अये बाणरावणौ, स्वयमेवात्मानं वर्णयन्तौ न लज्जेथे ? ।
( अये वाणरावणा, सअं जेव्व अप्पाणं वण्णअन्तौ ण लज्जेध )

रावणः—धिक् मूर्ख, कथमात्मैकश्लाघ्यो दशकण्ठः, ननु रे,—

मन्दोदरीकुटिलकोमलकेशभार-
मन्दारदाममकरन्दरसं पिबन्तः ।
वीणानिनादमधुरध्वनिमुद्गिरन्तो
मद्विक्रमं मधुकरा अपि कीर्त्तयन्ति ॥ ५८ ॥

---

स्मरः । अस्ति = विद्यते, अतो नाऽहं बिभेमीति भावः । रे पञ्चबाण = अरे पञ्चशर' त्वमपि, स्वबाणान्' = निजशरान् , वितनु = प्रकटीकुरु । ननु = हे पञ्चबाण !, सा = भुवनविख्याता' युवतिलोकललामवल्ली = युवतिलोके ( तरुणीसमूहे ) ललामवल्ली ( भूषणलताभूता, सीतेति भावः ) एति = आगच्छति, अतो नाऽहं त्वद्बाणेभ्यो बिभेमीति भावः । वसन्ततिलकं वृत्तम् ॥ ५७ ॥

रावण इति । आत्मैकश्लाघ्यः = आत्मा ( निजः ) एव एकः ( एककः ) श्लाघ्यः ( प्रशंसनीयः ) यस्य सः ।

नाऽहमेव प्रत्युत मधुकरा अपि मद्विक्रमं कीर्तयन्तीति प्रतिपादयति—मन्दोदरीति ।

मन्दोदरीकुटिलकोमलकेशभारमन्दारदाममकरन्दरसं पिबन्तो वीणानिनादमधुरध्वनिम् उद्गिरन्तो मधुकरा अपि मद्विक्रमं कीर्तयन्तीत्यन्वयः ।

मन्दोदरीत्यादिः = मन्दम् ( कृशम् ) उदरं ( लक्षणया—मध्यमम् ) यस्याः सा मन्दोदरी ( मयतनुजा, रावणपत्नीत्यर्थः ) तस्याः कुटिलः ( वक्रः ) कोमलः ( मृदुलः ) यः केशभारः ( कुन्तलकलापः ) तस्मिन्निहितं यन्मन्दारदाम ( सुरतरुकुसुममाल्यम् ) तस्य मकरन्दरसं ( पुष्परसम् ) पिबन्तः धयन्तः । अत एव—वीणानिनादमधुरध्वनिं = वीणानिनादः ( वल्लकी शब्दः ) इव मधुरध्वनिम् ( श्रुति-

---

सीता आरही है ॥ ५७ ॥

नूपरक—अरे बाण और रावण ! स्वयम् अपना वर्णन करते हुए तुमलोग लज्जित नहीं होते हो ?

रावण—धिक् मूर्ख ! रावण अपने आप ही कैसे प्रशंसनीय है ? देख रे !

मन्दोदरीके कुटिल और कोमल केशभारमें विन्यस्त मन्दारमालाके पुष्परसको पीते हुए एवम् वीणाके सदृश मधुरशब्दको प्रकट करते हुए भौंरे भी मेरे पराक्रमका कीर्तन करते हैं ॥ ५८ ॥

बाणः—कथमयं सुरतरुकुसुमदामकमनीयकामिनीजनोपभोगसौभाग्यं विडम्बयति ? तदिदानीम्—

> अमी मे दोर्दण्डास्तुलितहरशैलैकशिखरा-
> स्तुरासाहं साहङ्कृतिकरतलन्यस्तकुलिशम् ।
> पराभूय स्वैरं त्रिदशवनमुन्मूल्य सकलं,
> मम क्रीडोद्यानं सुरतरुमनोज्ञं विदधतु ॥ ५९ ॥

---

सुखदस्वनम् ) उद्गिरन्तः = उद्भ्रान्तः, उत्पादयन्त इति भावः । मधुकरा अपि = भ्रमरा अपि, किमुत देवमनुष्याः इत्यपिपदेन व्यज्यते । अत एवाऽत्राऽर्थापत्तिरलङ्कारः । मल्लिकमं = मत्पराक्रमं, कीर्तयन्ति = वर्णयन्ति । वसन्ततिलकावृत्तम् ॥५८॥

बाण इति । सुरतरुकुसुमदामकमनीयकामिनीजनोपभोगसौभाग्यं = सुरतरोः ( मन्दारस्य ) यत् कुसुमदाम ( पुष्पमाल्यम् ) तेन कमनीयः ( कामनायोग्यः ) यः कामिनीजनः ( ललनाजनः ) तस्योपभोगसौभाग्यम् ( निर्वेशसुभगत्वम् ) । विडम्बयति = अनुकरोति ।

बाणः स्वकार्यं सूचयति—अमी इति । तुलितहरशैलैकशिखरा अमी मे दोर्दण्डाः साऽहङ्कृतिकरतलन्यस्तकुलिशं तुरासाहं पराभूय सकलं त्रिदशवनं स्वैरम् उन्मूल्य मम क्रीडोद्यानं सुरतरुमनोज्ञं विदधत्वित्यन्वयः ।

तुलितहरशैलैकशिखराः = तुलितम् ( उपमितम् ) हरशैलस्य ( शिवाऽचलस्य, कैलासस्येत्यर्थः ) एकं ( मुख्यम्, 'एके मुख्याऽन्यकेवलाः' इत्यमरः ) शिखरं ( शृङ्गम् ) यैस्ते । अमी = एते, मे = मम, दोर्दण्डाः = बाहुदण्डाः, साहङ्कृतिकरतलन्यस्तकुलिशं = अहङ्कृत्या ( अहङ्कारेण ) सहितं यथा तथेति क्रियाविशेषणम् । करतले ( पाणितले ) न्यस्तं ( निहितम् ) कुलिशं ( वज्रम् ) येन सः तम् । तादृशं तुरासाहम् = इन्द्रं, पराभूय = विजित्य, सकलं = समग्रं, त्रिदशवनं देवोपवनं, नन्दनकाननमिति भावः । स्वैरं = स्वच्छन्दं यथा स्यात्तथेति क्रियाविशेषणम् । उन्मूल्य = उन्मूलितं कृत्वा मम = बाणाऽसुरस्य, क्रीडोद्यानं = केल्युपवनम् , उद्देश्यमेतत् । सुरतरुमनोज्ञं = मन्दारपादपमनोहरं, विदधतु = कुर्वन्तु । कैलासपर्वतशृङ्गसदृशा मद्बाहवो

---

बाण—यह किसप्रकार मन्दारपुष्पोंकी मालासे कामनायोग्य ललनाके उपभोगके सौभाग्यका वर्णन कर रहा है ? इसलिए अभी—

कैलासपर्वतकी एक चोटीसे उपमित ये मेरे बाहुदण्ड, अहङ्कारके साथ हाथमें वज्र लेनेवाले इन्द्रको जीतकर समस्त नन्दनकाननको स्वच्छन्दतापूर्वक उन्मूलित कर मेरे क्रीडोद्यानको देवद्रुमोंसे मनोहर बना डालें ॥ ५९ ॥

( इति निष्क्रान्तः )

रावणः—कथमयं निर्गतः ? अहं तु—

अनाहृत्य हठात् सीतां नाऽन्यतो गन्तुमुत्सहे ।
न शृणोमि यदि क्रूरमाक्रन्दमनुजीविनः ॥ ६० ॥

मञ्जीरकः—वत्से जानकि ! अधुना दैवैकरक्षणीयासि ।

रावणः—( कर्णं दत्त्वा ) अये, कस्याऽयमाक्रन्दः श्रूयते नभसि । ( निपुणं निरूप्य ) नूनमनेन कस्यचिन्नाराचपीडितेन कठोरमाक्रन्दता गग-

---

वज्रहस्तं पुरन्दरं पराजित्य नन्दनकाननोन्मूलनपूर्वकं मदीयं क्रीडोपवनं मन्दारादिसुरतरुमनोहरं कुर्वन्निवति भावः । अत्रोपमाऽलङ्कारः । शिखरिणीवृत्तम् ॥ ५९ ॥

अनाहृत्येति । अनुजीविनः क्रूरम् आक्रन्दं न शृणोमि यदि, सीतां हठात् अनाहृत्य अन्यतो गन्तुं न उत्सहे इत्यन्वयः । अनुजीविनः = अनुचरस्य, क्रूरं = कठिनम्, आक्रन्दं = रुदितध्वनिम् । न शृणोमि यदि = न आकर्णयामि चेत्, एतेनभावी मारीचाक्रन्दः सूच्यते । तर्हि सीतां = जानकीं, हठात् = बलात्कारमाश्रित्य, 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति पञ्चमी । 'प्रसभं तु बलात्कारो हठ' इत्यमरः । अनाहृत्य = आहरणमकृत्वा अन्यतः = अन्यस्मिन् स्थाने, 'आद्यादिभ्य उपसंख्यानम्' इति सार्वविभक्तिकस्तसिः । गन्तुं = यातुं, न उत्सहे = उत्साहं न करिष्यामि, 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । अनुष्टुब्वृत्तम् ॥ ६० ॥

मञ्जीरक इति । अधुना = इदानीं, बाणाऽसुरे गते सतीति भावः । दैवैकरक्षणीया = भाग्यमात्रेण रक्ष्या । रावणस्य तादृश्यां प्रतिज्ञायां सत्यामिति भावः ।

रावण इति । गगनपथचारिणा = आकाशमार्गगामिना । भवितव्यं = भाव्यं, भाववाच्यप्रयोगः ।

---

( ऐसा कहकर निकलता है )

**रावण**—कैसे यह निकल गया ? मैं तो—

अनुचरकी कठोर रोदनध्वनि न सुनूंगा तो सीताको हठसे हरणकिये बिना दूसरी जगह जानेके लिए उत्साह नहीं करूँगा ॥ ६० ॥

**मञ्जीरक**—वत्से सीते ! इससमय तुम केवल भाग्यसे ही रक्षणीय हो ।

**रावण**—( कान देकर ) अरे ! आकाशमें यह किसीके रोनेकी आवाज सुनी आरही है । ( अच्छीतरह विचारकर ) निश्चय ही यह किसीके नाराचसे पीडित, कठोरशब्दसे

नपथचारिणा मारीचेन भवितव्यम् । तदेनमाश्वासयामि तावत् ( इति निष्क्रान्तः ) ।

नूपुरकः—वयस्य, दिष्ट्या व्याघ्रस्येव मुखात् कुरङ्गीवास्य हस्तादुर्द्धरिता जानकी । ( वअस्स, दिट्ठिआ वग्घस्स विअ मुहादो कुरङ्गी विअ इमस्स हत्थादो उव्वरिदा जाणई )

मञ्जीरकः—सखे, एवमेतत् । तदेहि । वृत्तान्तमिमं जनकराजस्य निवेदयावः ।

( इति निष्क्रान्ताः सर्वे )

इति प्रथमोऽङ्कः ।



नूपुरक इति । दिष्ट्या = भाग्येन, अव्ययमिदम् ।

मञ्जीरक इति । जनकराजस्य = मिथिलेश्वरस्य, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवे'ति नियमात्सम्प्रदानस्याऽभावः ।

इति निष्क्रान्ताः सर्वे इति । सर्वनिष्क्रमणं च अङ्काऽवसानसूचनाऽर्थम् ।

इति प्रसन्नराघवव्याख्यायां प्रथमोऽङ्कः ।



दौनेवाला तथा आकाशमार्गसे चलनेवाला मारीच होना चाहिए। इसकारण इसको आश्वासन देता हूँ । ( अनन्तर निकल जाता है )

नूपुरक—मित्र ! भाग्यसे व्याघ्रके मुखसे मृगीकी तरह इसके हाथसे सीता बची ।

मञ्जीरक—मित्र ! ठीक है । इसलिए आओ । यह वृत्तान्त महाराजजनकको निवेदन करें ।

( तब सब निकल जाते हैं । )

प्रथम अङ्क समाप्त ।



# द्वितीयोऽङ्कः

( ततः प्रविशति तापसः )

**तापसः**—( समन्तादवलोक्य ) अहो,—अयमनेकशुकशावकानुगमनितान्तहरिल्लतावितानमनोरमाराममरमणीयसन्निवेशप्रदेशः । ( नेपथ्याभिमुखमवलोक्य ) कथमयं भिक्षुः ? भिक्षो, इत इतः ।

( प्रविश्य )

**भिक्षुः**—अपि कुशलं तापसस्य ?

**तापसः**—क्षेममस्माकम् , युष्माकं च कुशलम् ?

---

तत इति । तापसः = तपोऽस्याऽस्तीति 'अण्चे'त्यण् । चापक्षे 'तपः सहस्राभ्यां विनीनी' इति विनिप्रत्यये तपस्वीत्यपि 'तपस्वी तापसः पारिकाङ्क्षी'त्यमरः । अनेकशुकशावकाऽनुगमनितान्तहरिल्लतावितानमनोरमाराममरमणीयसन्निवेशप्रदेशः = अनेके ( बहवः ) ये शुकशावकाः ( कीरशिशवः ) तेषामनुगमेन ( समागमेन ) नितान्तं ( एकान्तं यथा स्यात्तथा ) हरित् ( हरितवर्णा ) या लता ( वल्ली ) तस्या वितानं ( विस्तारः ) तेन मनोरमः ( सुन्दरः ) य आरामः ( उपवनम् ) तस्य रमणीयः ( मनोहरः ) सन्निवेशः, ( निवेशनस्थानम् ) यस्मिंस्तः, तादृशः प्रदेशः ( भूभागः ) । भिक्षुः = भिक्षणशीलः, भिक्षते इति 'भिक्ष भिक्षायामलाभे लाभे चे'ति धातोः 'सनाशंसभिक्ष'रिति उप्रत्ययः, 'भिक्षुः परिव्राट् कर्मन्दी पाराशर्यपि मस्करी' इत्यमरः ।

भिक्षुरिति । कुशलमपि=कल्याणमस्ति किम् । अपिः प्रश्नार्थकः । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि' इत्यमरः ।

तापस इति । क्षेमं=कुशलं,'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इत्यमरः ।

---

( अनन्तर तपस्वी प्रवेश करता है । )

**तापस**—( चार ओर देखकर ) अहो ! अनेक तोतोंके समागमसे अतिशय हरे वर्णवाली लताके विस्तारसे सुन्दर उपवनकी रमणीय स्थितिवाला यह स्थान है । ( नैपथ्यके सम्मुख देखकर ) कैसे यह भिक्षु आयगा ? भिक्षो ! इधर इधर ।

( प्रवेशकर )

**भिक्षु**—तापसका कुशल है ?

**तापस**—हमारा कुशल है, तुम्हारा कुशल है ?

भिक्षुः—इदानीं विशेषतो भवद्दर्शनात् ।

तापसः—( पुनः सप्रणयम् ) ननु कीटवन्महीपर्यटनेन श्रान्तो भवान् । तत्र मिथिलायां पञ्चरात्रनिवासेन श्रमोऽपनेतव्यः । प्रसङ्गादयं च राजा जनको द्रष्टव्यः ।

भिक्षुः—किमस्माकं निरीहाणां राजदर्शनेन ।

तापसः—नूनमयं ब्रह्मविद्याविनोदकुशलः खलु सीरध्वजः । तेन द्रष्टुमुचित एव भवादृशाम् ।

भिक्षुः—अये, राजापि ब्रह्मविद्यावानिति सत्यमेतत् ?

---

भिक्षुरिति । विशेषतो = अधिकभावात् , कुशलमस्तीति शेषः ।

तापस इति । कीटवत् = कीटस्येव, 'तत्र तस्येवे'ति वतिप्रत्ययः । यथा कीटाः सन्ततं महीं पर्यटन्ति तथेति भावः । मिथिलायां = जनकपुर्याम् ।

भिक्षुरिति । निरीहाणां = निरभिलाषाणाम् , निर्गतेहा येभ्यस्तेषाम् , 'इच्छा काङ्क्षा स्पृहेहातृड्वाञ्छा लिप्सा मनोरथः ।' इत्यमरः ।

तापस इति । सीरध्वजः = जनकः । ब्रह्मविद्याविनोदकुशलः = ब्रह्मप्रतिपादिका विद्या ब्रह्मविद्या ( वेदान्तविद्या ), 'शाकपार्थिवादीनां सिद्धय उत्तरपदलोपस्योपसंख्यानम्' इति मध्यमपदलोपी समासः । ब्रह्मविद्यया विनोदनं ( मनोविनोदः ) तस्मिन्कुशलः ( निपुणः ) । भवादृशां = भवत्सदृशानां, ब्रह्मविद्याश्रवणयोग्यानां भिक्षूणामिति भावः ।

भिक्षुरिति । ब्रह्मविद्यावान् = ब्रह्मविद्यासम्पन्नः, प्रायशो राजानस्त्रयीवार्तादण्डनीतिष्वेवाऽभिनिविशन्त इति भावः । सत्यं = तथ्यं, काक्वा प्रश्नो व्यज्यते ।

---

भिक्षु—इससमय आपके दर्शनसे विशेषरूपसे कुशल है ।

तापस—( फिर प्रेमके साथ ) आप कीड़ेकी तरह पृथ्वीमें पर्यटन करनेसे थक गये हैं । इसकारण मिथिलापुरीमें पाँच रात विश्रामकर परिश्रमको हटाना चाहिये । प्रसङ्गसे राजाजनकका भी दर्शन करना चाहिए ।

भिक्षु—हमारे ऐसे निःस्पृहोंको राजाके दर्शनसे क्या प्रयोजन है ?

तापस—निश्चय ही ये महाराज सीरध्वज वेदान्तविद्यासे मनोरञ्जन करनेमें निपुण हैं । इसलिए आपके सरीखे भिक्षुओंको उनका दर्शन करना उचित ही है ।

भिक्षु—अरे ! राजा भी ब्रह्मविद्यावाले हैं, क्या यह सच है ?

तापसः—भिक्षो, सत्यमेतत्, देवस्य दश—( इत्यर्धोक्ते ) देवस्य शितिकण्ठस्याज्ञा ।

भिक्षुः—( विहस्य ) अलमपलापेन । विदितं मया, राक्षसः खलु भवान् ।

तापसः—तत्कथय विस्रब्धं को भवानिति ?

भिक्षुः—अहमपि भवादृश एव कोऽपि राक्षसः ।

तापसः—तदाकर्ण्यताम् । अहं हि सकलमन्त्रिमुकुटमाल्येन माल्यवता प्रहितस्ताडकायनम् । आकर्णितं हि तेन यत् किल कोऽपि कौशिको नाम मुनी राजानमयोध्याधिपतिमेत्य स्वमखरक्षणाय तस्य रामनामानं

---

तापस इति । अभ्यासवशाद्दशकण्ठस्येति वक्तुमिच्छति परं रहस्यनिर्भेदभिया दशपदमन्तरैव शितिकण्ठस्याज्ञेति कथयति । शितिकण्ठस्य = महादेवस्य ।

भिक्षुरिति । अपलापेन = निह्नवेन, स्वभावगोपनेनेति भावः ।

तापस इति । विस्रब्धं = विश्वासपूर्वकं यथा स्यात्तथा 'विश्रब्ध'मिति पाठान्तरेऽप्ययमेवार्थः ।

भिक्षुरिति । भवादृशः = भवत्सदृशः ।

तापस इति । सकलमन्त्रिमुकुटमाल्येन = सकलमन्त्रिणां ( समस्तधीसचिवानाम् ) मुकुटमाल्येन ( किरीटमाल्यसदृशेन, मन्त्रिप्रवरेणेति भावः ) । साऽनुजं = साऽवरजं, लक्ष्मणसहितमिति भावः । निजनयनाभ्यामपि = स्वनेत्राभ्यामपि, बाह्यविषयेभ्यो देहस्य, देहान्नयनेन्द्रियस्य प्रियतरत्वं प्रसिद्धमेव । निजतनयौ = स्वपुत्रौ, रामलक्ष्मणाविति भावः । तस्य = कौशिकमुनेः, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव'ति नियमात्सम्प्रदानस्य सम्बन्धत्वं बोध्यम् ।

---

तापस—भिक्षो ! यह सच है । देव दश—( ऐसा आधा ही कहकर ) देव नीलकण्ठकी आज्ञा है ।

भिक्षु—( हँसकर ) झूठ बोलनेकी आवश्यकता नहीं है । मैंने जान लिया कि आप राक्षस हैं ।

तापस—तब विश्वासके साथ आप कहिए कि आप कौन हैं ?

भिक्षु—मैं भी आपके सदृश कोई राक्षस हूँ ।

तापस—तब सुनिए । सम्पूर्ण मन्त्रियोंके मुकुटको मालाके सदृश माल्यवान्‌ने मुझे ताडकावनमें भेजा है । उन्होंने सुना है कि कौशिकनामक किसी मुनिने अयोध्याके राजाके पास आकर अपने यज्ञकी रक्षाके लिए उनके राम नामके पुत्रको छोटे भाई

तनयं सानुजं याचितवान्। तेन चावश्यं माननीयो मुनिरिति निजनयनाभ्यामपि प्रियतमौ निजतनयौ तस्य समर्पितौ।

**भिक्षुः**—ततस्ततः।

**तापसः**—ततस्तेन मुनिना पारितोषिकं ताटङ्कयुगमर्पितं तस्य राज्ञः। उक्तं च, 'राजन्, दिव्यमिदं ताटङ्कयुगम्।

तदिदं वीरसूकर्णनिवेशोचितमित्यसौ।
अन्तःस्फुरन्ती रत्नानां वर्णमालेव शंसति ॥ १ ॥

तेन च कौशल्या कर्णयोर्निवेशनीयम्' इति। अनुमतं च राज्ञा। राज-

---

ताटङ्कयुगं = कर्णभूषणविशेषयुगमम्। दिव्यम् = स्वर्गीयम्, दिवि भवं 'द्युप्रागपागुदक्प्रतीचो यत्' इति यत्प्रत्ययः।

तदिदमिति। तत् इदं वीरसूकर्णनिवेशोचितम्' इति अन्तःस्फुरन्ती असौ रत्नानां वर्णमाला शंसति इवेत्यन्वयः।

तत् = भुवनप्रसिद्धम्, इदं = सन्निकृष्टस्थं, ताटङ्कयुगमिति भावः। वीरसूकर्णनिवेशोचितं = वीरं सूत इति वीरसूः (वीरमाता) तस्याः कर्णयोः (श्रोत्रयोः) निवेशाय (धारणाय) उचितम् (योग्यम्), अस्तीति शेषः। इति = एतत्। अन्तः स्फुरन्ती = अन्तः (अभ्यन्तरभागे) स्फुरन्ती (द्योतमाना), असौ = इयं, रत्नानां = मणीनां, पद्मरागादीनामिति भावः। वर्णमाला = वर्णानां (रक्तपीतादिरूपाणां, पक्षान्तरे अक्षराणाम्) माला (पङ्क्तिः) शंसति इव = सूचयति इव। वर्णमाला यथा कमपि विषयं सूचयति तथैव ताटङ्कान्तरवर्त्यनेकरत्नवर्णमालाऽपि 'ताटङ्कयुगमिदं वीरप्रसूधारणयोग्यम्' इति सूचयतीवेति भावः। उत्प्रेक्षाऽलङ्कारः। अनुष्टुब्वृत्तम् ॥ १ ॥

तेनेति। अनुमतं = स्वीकृतम्।

---

(लक्ष्मण) के साथ माँगा। उन्होंने भी 'मुनि अवश्य मान्य हैं' ऐसा सोचकर नेत्रोंसे भी प्रियतम अपने दोनों पुत्रोंको उन्हें सौंप दिया।

**भिक्षु**—तब क्या हुआ?

**तापस**—अनन्तर मुनिने पारितोषिकके तौर पर ताटङ्क (कर्णभूषण) युगल राजाको अर्पित किया, और कहा, राजन्! यह ताटङ्कयुग्म दिव्य है।

लोकप्रसिद्ध यह ताटङ्कयुगल वीरमाताके श्रोत्रयुग्ममें रहनेके लिए योग्य है। यह बात भीतर चमकती हुई रत्नोंकी वर्णमाला (रक्त पीत आदि वर्णों की वा अक्षरोंकी पङ्क्ति) मैसे सूचित कर रही है ॥ १ ॥

इसकारण इसे कौशल्याके कानमें रखना चाहिए। राजाने भी स्वीकार किया।

कुमारद्वयानुगतेन निजाश्रमपदं प्रति गतं च मुनिना ।

भिक्षुः—ततस्ततः ?

तापसः—तदिदमाकर्ण्य तत्ताटङ्कयुगं लङ्केश्वरजनन्या निकषाया एव कर्णोचितमिति विचिन्त्य तदाहरणाय पूर्वमेव ताटकां प्रति निजानुचर एकः प्रस्थापितः । अधुना च नूनं ताटकया तत्ताटङ्कयुगमाहृतमिति विचार्य तदानयनाय ताटकां प्रत्यहं प्रहितः ।

भिक्षुः—कथं पुनरिदं वृत्तान्तजातमाकर्णितं माल्यवता ।

तापसः—

वार्त्ता च कौतुकवती, विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ २ ॥

---

तापस इति । लङ्केश्वरजनन्याः लङ्केश्वरस्य ( रावणस्य ) जनन्याः ( मातुः ) कर्णोचितं = श्रोत्रधारणयोग्यमित्यर्थः ।

वार्तांचेति । कौतुकवती वार्ता, विमला विद्या, कुरङ्गनाभेः लोकोत्तरः परमलश्च दुर्निवारम् एतत्त्रयं वारिणि तैलस्य बिन्दुरिव भूमौ स्वयमेव प्रसरतीत्यन्वयः । कौतुकवती = कौतूहलोत्पादनसम्पन्ना, वार्ता = वृत्तान्तः 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यात्' इत्यमरः । विमला = निर्मला, विशुद्धेति भावः । विद्या = पुरुषार्थप्रतिपादकं शास्त्रम् । कुरङ्गनाभेः = मृगमदस्य, कस्तूर्या इत्यर्थः । लोकोत्तरः = भुवनश्रेष्ठः, परिमलश्च = सुगन्धश्च, दुर्निवारं = निवारयितुमशक्यम् , एतत्त्रयम् = एतत्त्रितयं, वारिणि = जले, तैलस्य = तिलादिस्नेहस्य, बिन्दुरिव = पृषत इव, भूमौ = पृथिव्यां,

---

और दो राजकुमारोंसे अनुगत मुनि भी अपने आश्रमको चले गये ।

भिक्षु—तब क्या हुआ ?

तापस—यह सुनकर वह ताटङ्कयुगल रावणकी माता निकषाके ही कर्णयुग्मके योग्य है ऐसा विचारकर उसे लानेकेलिए ताटकाके पास पहले ही अपना एक अनुचर भेजा गया है । अभी भी 'निश्चय ही ताटका उस ताटङ्कयुगलको ला चुकी है' ऐसा विचार कर उसे लानेकेलिए ताटकाके पास मैं भेजा गया हूँ ।

भिक्षु—इन वृत्तान्तोंको माल्यवान्‌ने कैसे सुन लिया ?

तापस—कौतुकपूर्ण वृत्तान्त, निर्मल विद्या और कस्तूरीमृगका लोकश्रेष्ठ सुगन्ध, अनिवार्य ये तीनों, जलमें तेलकी बूँदके सदृश पृथ्वीमें अपने आप फैल जाते हैं ॥ २ ॥

विशेषतश्च बहुतरप्रणिधिप्रणिधायी माल्यवान् ।

भिक्षुः—तत्कथं मिथिलोपवने भवान् ? ।

तापसः—आकर्णितं हि मया मिथिलामागतो लङ्केश्वर इति । अतस्त-द्विलोकनाय प्रथममिहागतः । अधुना च ताटकावनं यास्यामि । तत्कथय तावद्भवान् पुनः कतरः ।

भिक्षुः—अहमपि स एव यः प्रथमं ताटकां प्रति प्रहितः । मिथिलो-पवनागमनकारणं समानमावयोः ।

---

स्वयमेव = आत्मनैव, सहायकनैरपेक्ष्येणैवेति भावः । प्रसरति=प्रसारमधिगच्छति । जले प्रक्षिप्तस्तैलबिन्दुर्यथा विस्तारमाप्नोति तथैव कुतूहलोत्पादिका वार्ता, गुरुपर-म्परायाता विद्या मृगमदपरिमलश्च सहायकान्तरनैरपेक्ष्येण प्रसारमधिगच्छन्तीति भावः । अत्र प्रस्तुताया वार्ताया अप्रस्तुतयोर्विद्याकुरङ्गनाभिपरिमलयोश्च भूमिप्रस-रणरूप एकधर्मेऽभिसम्बन्धाद्दीपकमलङ्कारस्तल्लक्षणं यथा—

'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।
अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥' इति ।

एवमुपमालङ्कारश्चेतिद्वयोरङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकं वृत्तम् ॥ २ ॥

विशेषतश्चेति । बहुतरप्रणिधिप्रणिधायी=बहुतराः ( अधिकतराः ) ये प्रणि-धयः ( चाराः ) तान् प्रणिधाति ( नियोजयति ) तच्छीलः, 'सुप्यजातौ णिनिस्ता-च्छील्ये' इति णिनिः । 'यथार्हं वर्णः प्रणिधिरपसर्पश्चरः स्पशः । चारश्च गूढपुरुष-श्चे'त्यमरः ।

तापस इति । सताटङ्कं=ताटङ्काख्यकर्णभूषणसहितम् ताटङ्काभ्यां सहित-मिति, 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः, 'वोपसर्जनस्ये'ति सहस्य सभावः । विकल्पत्वात्पक्षान्तरे 'सहताटङ्क'मिति ।

---

विशेषरूपसे माल्यवान् अनेक गुप्तचरोंका प्रबन्ध करते हैं ।

**भिक्षु**—तो आप कैसे मिथिलाके उपवनमें आये ?

**तापस**—मैंने सुना कि लङ्केश्वर ( रावण ) मिथिलामें आगये हैं । इसलिए पहले उनके दर्शन करनेकेलिए मैं यहाँ आया । अभी ही ताटकावनको जाऊंगा । कहिए आप कौन हैं ?

**भिक्षु**—मैं भी वही हूं जो कि पहले ताटकाके पास भेजा गया था । मिथिलाके उपवन ( बागीचे ) में आनेका कारण हमदोनोंका एक ही है ।

तापसः—( सहर्षम् ) तत्कथय तावत् । तत्किं सताटङ्कं सम्प्रति ताटकावनम् ?

भिक्षुः—सताटकमिति तावत् पृच्छ ।

तापसः—क पुनः सम्प्रति ताटका ? ।

भिक्षुः—पुरीं प्रविष्टा ।

तापसः—तत्किं दशरथस्य ?

भिक्षुः—नहि नहि, अन्तकस्य ।

तापसः—केन पुनः प्रतिहारायितमन्तकपुरीप्रवेशे तस्याः ।

भिक्षुः—रामबाणेनैव ।

तापसः—क एष रामः ? ( विमृश्य ) नूनं स एव यः खलु दशरथकुमारयोरग्रजः । तत्कथय, क पुनरधुना ताटकातनयौ ?

---

भिक्षुरिति । सताटकं = ताटका सहितं, वनमिति शेषः ।

अन्तकस्य: = यमराजस्य अन्तयतीत्यन्तः 'पचाद्यच्' । अन्त एवाऽन्तकः 'कालो दण्डधरः श्राद्धदेवो वैवस्वतोऽन्तकः ।' इत्यमरः ।

तापस इति । प्रतिहारायितं प्रतिहारवत् ( द्वारपालवत् ) आचरितम् । ताटकातनयौ = ताटकापुत्रौ, सुबाहुमारीचाविति भावः ।

---

तापस—( हर्षके साथ ) तो कहिए । तब क्या अभी ताटकावनमें ताटङ्क है ?

भिक्षु—'ताटकाके वनमें ताटका है ?' यह पूछिए ।

तापस—तो इस समय ताटका कहाँ है ?

भिक्षु—उसने पुरीमें प्रवेश किया ।

तापस—क्या दशरथकी पुरीमें ?

भिक्षु—नहीं नहीं, यमराजकी पुरीमें ।

तापस—किसने उसके यमराजकी पुरीमें प्रवेश करनेकेलिए द्वारपालके सदृश आचरण किया ?

भिक्षु—रामके बाणने ही ।

तापस—यह राम कौन है ? ( विचार कर ) निश्चय ही वही है जो दशरथके दोनों कुमारोंमें ज्येष्ठ है । अतः कहिए, कि इससमय ताटकाके पुत्र कहाँ हैं ?

भिक्षुः—सुबाहुस्तावत्ताटकामेवानुगतः। मारीचोऽपि शिशुक्रीडोचिततरामनाराचपीडितो जीवन्मुक्त इव दूरं क्षिप्तः।

तापसः—तत् कथमिदानीं न कथितं केनापि लङ्केश्वरस्य।

भिक्षुः—कथितमेव किलेदमाक्रन्दता मारीचेन।

तापसः—तत्कथं कुपितो न लङ्केश्वरः।

भिक्षुः—सीताभिलापशीतले लङ्केश्वरचेतसि नारूढ एव कोपपरितापः।

तापसः—क्व पुनरधुना रामलक्ष्मणौ।

भिक्षुः—श्रुतं मया कौशिकानुपदं तदाश्रमान्मिथिलां प्रति प्रचलिताविति (विलोक्य) (सत्रासम्) कथमिमौ तावित एवाभिवर्त्तेते। तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुमनुचितमावयोः।

(इति निष्क्रान्तौ)

इति विष्कम्भकः।

---

भिक्षुरिति। ताटकामेव=स्वमातरमेव, अनुगतः=अनुयातः। रामबाणेन व्यापादित इत्यर्थः।

भिक्षुरिति। आक्रन्दता=आक्रन्दनं कुर्वता, रुदतेत्यर्थः। सीताऽभिलाषशीतले=सीतायाम् (जानक्याम्) अभिलाषः (प्रणयमनोरथः) तेन शीतले (शीते)।

विष्कम्भकलक्षणं प्रथमाऽङ्के गतं, तत्राऽयं मध्यमपात्रप्रयोजितत्वाच्छुद्धः।

---

भिक्षु—सुबाहुने तो ताटकाका ही अनुगमन किया। मारीच भी बालककी क्रीडामें अभ्यस्त रामके नाराचसे पीड़ित होकर जीव-मुक्तके समान दूर फेंका गया।

तापस—तब अभी इस बातको लङ्केश्वरके पास किसीने क्यों नहीं कहा?

भिक्षु—चिल्लाकर मारीचने इस बातको कह ही दिया।

तापस—तब क्यों लङ्केश्वर कुपित नहीं हुए?

भिक्षु—सीताकी इच्छासे शीतल लङ्केश्वरके चित्तमें कोपका परिताप चढ़ा ही नहीं।

तापस—अभी राम और लक्ष्मण कहाँ हैं?

भिक्षु—मैंने सुना कि कौशिक ऋषिको अनुगमन कर उनके आश्रमसे राम और लक्ष्मण मिथिलाको चले गये। (देखकर और त्रासके साथ) कैसे ये दोनों इसी ओर आरहे हैं? इसकारण राक्षसके बैरी रामचन्द्रके आगे हम दोनोंका रहना अनुचित है।

(अनन्तर दोनों निकल जाते हैं)

इति विष्कम्भक

( ततः प्रविशतो रामलक्ष्मणौ )

रामः—वत्स लक्ष्मण, पश्य पश्याश्रमरामणीयकम् ।

लक्ष्मणः—आर्य, निसर्गरमणीयोऽयमारामः । अधुना तु मधुमासावतारेण नितान्तरमणीयः ।

रामः—( सहर्षम् ) कथमवतीर्णैव मधुमासलक्ष्मीः ( विमृश्य ) एवमेतत् । तथाहि—

इह मधुपवधूनां पीतमल्लीमधूनां,
विलसति कमनीयः काकलीसम्प्रदायः ।

राम इति । आरामरामणीयकम् = आरामस्य ( उपवनस्य ) रामणीयकम् ( सौन्दर्यम् ) । रमणीयस्य भावो रामणीयकं, 'योपधाद्गुरूपोत्तमाद्वुञ्' इति वुञ् 'युवोरनाकौ' इति तस्याऽकादेशः ।

लक्ष्मण इति । निसर्गरमणीयः = निसर्गेण ( स्वभावेन ) रमणीयः ( सुन्दरः ) । मधुमासाऽवतारेण = मधुमासस्य ( चैत्रमासस्य ) अवतारेण ( आविर्भावेन ) । 'स्याच्चैत्रे चैत्रिको मधुः । इत्यमरः ।

राम इति । मधुमासलक्ष्मीः = चैत्रमासशोभा ।

इहेति । इह पीतमल्लीमधूनां मधुपवधूनां कमनीयः काकलीसम्प्रदायो विलसति । इह दक्षिणाऽनिलेन प्रतिपदम् उपदिष्टा वञ्जुलस्य मञ्जरी सलीलं नटतीत्यन्वयः ।

इह = अत्र, आरामप्रदेश इति भावः । पीतमल्लीमधूनां = पीतानि ( आचान्तानि ) मल्लीमधूनि ( मल्लिका पुष्परसाः ) यैस्तेषां, 'भूपदी शीतभीरुश्च' इत्यमरः । मल्लिका 'बेली'तिनाम्ना प्रसिद्धं पुष्पम् । मधुपवधूनां = भ्रमरस्त्रीणां, भ्रमरीणामित्यर्थः । कमनीयः = मनोहरः, काकलीसम्प्रदायः = मधुरशब्दाम्नायः, विलसति = आविर्भवति । इह = अत्र, आरामप्रदेशे, दक्षिणाऽनिलेन = मलयाऽचलसमीरेण, प्रतिपदं = प्रतिशब्दं प्रतिचरणक्षिपं वा, उपदिष्टा = कृतोपदेशा, वञ्जुलस्य = अशोकस्य, मञ्जरी = वल्लरी, 'वल्लरिमञ्जरिः

( तब राम और लक्ष्मण प्रवेश करते हैं )

राम—वत्स लक्ष्मण ! उपवनका सौन्दर्य देखो देखो ।

लक्ष्मण—आर्य ! यह उपवन स्वभावसे ही सुन्दर है । इससमय तो चैत्रमासके आविर्भावसे और ही सुन्दर हो रहा है ।

राम—( हर्षके साथ ) क्या चैत्रमासकी शोभा आ ही गई । ( विचार कर ) यह ऐसा है । जैसे कि—

इस उपवनमें बेलीके फूलका रसपीनेवाले । भ्रमरियोंका सूक्ष्म मधुरध्वनिका

इह नटति सलीलं मञ्जरी वञ्जुलस्य,
प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ३ ॥

अपि च—

मलयशिखराद्याकैलासं मनोभवशासनाद्
भुवनवलयं जेतुं वाञ्छन् वसन्तसमीरणः।
विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं
मनसि विमृशन् भीतः शङ्के प्रयाति शनैः शनैः ॥४॥

स्त्रियौ' इत्यमरः। सलीलं = सविलासं = क्रियाविशेषणमिदम्। नटति = नृत्यति। अत्रोपदिष्टेत्यत्रेवादिशब्दाभावात्प्रतीयमानोत्प्रेक्षाऽलङ्कारः। मालिनीवृत्तम् ॥ ३ ॥

मलयशिखरादिति। मलयशिखरात् आकैलासं भुवनवलयं मनोभवशासनात् जेतुं वाञ्छन् वसन्तसमीरणः कैलासाऽग्रे विहितवसतिं भुजङ्गधरं हरं मनसि विमृशन् भीतः शनैः शनैः प्रयाति (इति) शङ्के इत्यन्वयः।

मलयशिखरात् = मलयाऽचलशृङ्गात् दक्षिणगिरेः, आकैलासं = कैलासाऽचलपर्यन्तम्, उत्तरगिरिपर्यन्तमिति भावः। भुवनवलयं = लोकमण्डलं, मनोभवशासनात् = मन्मथादेशात्, जेतुं = स्वायत्तीकर्तुं, वाञ्छन् = इच्छन्, वसन्तसमीरणः = सुरभिवातः, कैलासाऽग्रे = कैलासपर्वतशिखरे, विहितवसतिं = विहिता (कृता) वसतिः (वासः) येन, तम्। भुजङ्गधरं = सर्पधारकं, सर्पवलयधारिणमिति भावः। हरं = महादेवं, मनसि = चित्ते, विमृशन् = भावयन्, ततः भीतः = त्रस्तः सन्, शनैः शनैः = मन्दं मन्दं, प्रयाति = प्रचलति, (इति = एतत्) शङ्के = आशङ्के, अहमिति शेषः। दक्षिणपर्वतादुत्तरपर्वतपर्यन्तं जगतीमण्डलं मन्मथादेशात्स्वायत्तीकर्तुं वाञ्छन् वसन्तवातः कैलासाऽचलशिखरे कृतवासं भुजङ्गधरं हरं स्मृत्वा हरमन्मथयोर्वैरेण हरभूषणभुजङ्गानां स्वखादकत्वेन च भीतः सन्नपि प्रभोरादेशस्याऽनतिक्रमणीयत्वान्मन्थररूपेण वातीति शङ्केऽहमिति भावः। उत्प्रेक्षाऽलङ्कारः। हरिणी वृत्तं, तल्लक्षणं यथा—रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा।' इति ॥ ४ ॥

संप्रदाय शोभित हो रहा है। यहां दाक्षिणात्यवायुसे प्रतिशब्द अथवा पगपगमें उपदिष्ट अशोककी मञ्जरी विलासके साथ नृत्य कर रही है ॥ ३ ॥

और भी—

मलयपर्वतकी चोटीसे कैलासपर्वतपर्यन्त लोकमण्डलको कामदेवकी आज्ञासे जीतनेकी इच्छा करता हुआ वसन्तऋतुका वायु कैलासकी चोटीमें वास करनेवाले सर्पको धारण करनेवाले महादेवको मनमें विचार करता हुआ डरकर धीरे धीरे बढ़ रहा है मैं ऐसी आशङ्का करता हूं ॥ ४ ॥

(पुनरन्यतोऽवलोक्य) अये, इयमसौ मदकलकलहंसोत्तंसितसितसरोजराजिराजिता सरसी सरसीकरोति मे चेतः । (पुनः सकौतुकम्) अये, कथमयं नलिनीवनविहारिणीं सहचरीमपि विहाय कलहंसपोतश्चूतविटपान्तरालमनुसरति । (कर्णं दत्त्वा) अये, क एष मदकलकरिकनकशृङ्खलामणिरणितानुकारी मनोहारी कोऽपि कलकलः समुल्लसति ? (विमृश्य)

---

इति भावस्तस्य रमणी (विलासिनी) तत्सम्बुद्धौ । हे देवि चण्डिके ! त्वां = भवतीं, नमस्यामि = पूजयामि, 'नमो वरिवश्चित्रङः क्यच्' इति क्यजन्ताल्लट् । आर्या जातिस्तल्लक्षणं यथा श्रुतबोधे—

'यस्याः पादे प्रथमे, द्वादशमात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये, चतुर्थके पञ्चदश साऽऽर्या ॥' इति ।

एवं सत्युपगीतिप्रभेद इति कथनमनवधानतामूलकमिति विभावयन्तु विपश्चितः ॥ ६ ॥

पुनरिति । मदकलकलहंसोत्तंसितसितसरोजराजिराजिता = मदेन (मत्तत्वेन) कलाः (मधुराऽस्फुटशब्दयुक्ताः) ये कलहंसाः (राजहंसाः) तैरुत्तंसितानि (भूषितानि) सितानि (शुक्लानि) यानि सरोजानि (कमलानि) तेषां राजिः (पङ्क्तिः) तया राजिता (शोभिता), सरसीतिपदस्य विशेषणमिदम् । 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे' इति मेदिनी । सरसी = कासारः । सरसीकरोति = प्रीणयतीति भावः । असरसं सरसं यथा सम्पद्यते तथा करोतीति 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्वि'रिति च्विः । कलहंसपोतः = राजहंसशिशुः । चूतविटपाऽन्तरालम् = आम्रशाखाऽभ्यन्तरम् । मदकलकरिकनकशृङ्खलामणिरणिताऽनुकारी = मदेन (मत्तत्वेन) कलः (मनोहरः) यः करी (हस्ती) तस्य या कनकशृङ्खला (सुवर्णनिगडः) तत्र यो मणिः (रत्नम्) तस्य रणितम् (शब्दम्) अनुकरोतीति तच्छीलः । तादृशः कलकलः = कोलाहलः । समुल्लसति = आविर्भवति । राजहंसशिञ्जितहारि = कलहंसाऽव्यक्तशब्दजैश्शमित्यर्थः । हंसानां राजा राजहंसः 'राजदन्तादिषु परम्' इति

---

(फिर दूसरी ओर देखकर) अरे ! मदसे, मधुर और अस्फुटशब्दसे युक्त हंसोंसे भूषित श्वेत कमलोंकी पङ्क्तिसे प्रकाशित यह तालाब मेरे चित्तको सरस बना रहा है । (फिर कौतुकके साथ) अरे ! कैसे यह हंसशावक कमलिनीके वनमें विहार करने वाली अपनी सहचरीको भी छोड़कर आम्रवृक्षकी शाखाके मध्यभागका अनुसरण कर रहा है । (कानदेकर) अरे ! मदसे मनोहर हाथीकी सुवर्ण शृङ्खलामें अवस्थित मणिके शब्दका अनुकरण (नकल) करनेवाला यह कैसा कोलाहल उठ रहा है ? (विचारकर) निश्चय ही यह

नूनं राजहंसशिञ्जितहारि मञ्जीरगुञ्जितमेतत् । तदवश्यमिह सलीलचलचरणरणन्मणिनूपुरया—पुराङ्गनया कयाचन चण्डिकायतनमागच्छन्त्या भवितव्यम् । तदलमस्माकमितोऽवलोकनेन परस्त्रीति शङ्कापि सङ्कोचाय रघूणाम् ।

( नेपथ्ये )

भर्तृदारिके ! इत इतः ।

**रामः**—कथमियं राजकुमारिका ? तदालोकयामि तावत् । ( विलोक्य सहर्षकौतुकम् )

**केयं श्यामोपलविरचितोल्लेखहेमैकरेखा-**

---

राजपदस्य पूर्वनिपातः । 'राजहंसास्तु ते चञ्चुचरणैर्लोहिताः सिताः ।' इत्यमरः । शिञ्जनं शिञ्जितं, 'शिजि अव्यक्ते शब्दे' इति धातोः 'नपुंसके भावे क्तः' इति क्तप्रत्ययः । राजहंसशिञ्जितं हरतीति तच्छीलम् । मञ्जीरगुञ्जितं = नूपुरशब्दः 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।' इत्यमरः । सलीलचलच्चरणरणन्मणिनूपुरया = सलीलं ( सविलासं यथा स्यात्तथा ) चलन्तौ ( गच्छन्तौ ) यौ चरणौ ( पादौ ) ताभ्यां रणन्तौ ( शब्दं कुर्वन्तौ ) मणिनूपुरौ ( रत्नखचितमञ्जीरौ ) यस्याः सा तया । चण्डिकाऽऽयतनं = दुर्गामन्दिरम् । पुराङ्गनया = नगरसुन्दर्या । रघूणां = रघुवंश्यानां पुरुषाणां, लक्षणयाऽयमर्थः ।

नेपथ्य इति । भर्तृदारिके = राजकुमारि !

राम इति । आलोकयामि = पश्यामि, कुमारीदर्शने दोषाऽभावादिति भावः ।

सीतां वर्णयति केयमिति । श्यामोपलविरचितोल्लेखहेमैकरेखाऽऽभैः कनककदलीकन्दलीगर्भगौरैः हारिद्राऽम्बुद्रवसहचरं कान्तिपूरं वहद्भिः अङ्गैः कामक्रीडा-

---

राजहंसके शब्दको भी जीतनेवाली मञ्जीरकी आवाज है । इसलिए अवश्य ही यहाँ पर विलासके साथ चलनेवाले चरणोंसे जिसके मणिखचित नूपुर ( पाजेब ) शब्द कर रहे हैं ऐसी चण्डिकामन्दिरमें आनेवाली यह कोई नगरसुन्दरी होनी चाहिए । इसलिए इस ओर हमलोगोंको देखना नहीं चाहिए । 'यह परस्त्री है क्या ? ऐसी शङ्का भी रघुवंशमें उत्पन्न पुरुषोंको सङ्कोचके लिए होती है ।

( नेपथ्यमें )

राजकुमारि ! इधर उधर ।

**राम**—क्या यह राजकुमारी है ? तब देखता हूँ । ( देखकर हर्ष और कौतुकके साथ ) कसौटी पर घिसी गई सुवर्णकी अद्वितीय रेखाओंके सदृश संनिविष्ट, सोनेकी कदलीके

लग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः ।
हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः
कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ ७ ॥

( ततः प्रविशति सीता सखी च )

सीता—हला, पश्य पश्य, अद्येदमुद्यानं वसन्तसहचरेण स्वयमेव मन्मथेनाऽलङ्कृतमिवातिमात्रं रमणीयं प्रतिभाति । ( हला, पेक्ख पेक्ख, अज्ज इमसुज्जाणं वसन्तसहअरेण सअं जेव्व मम्महेणालंकिदं विअ अदिमेत्तं रमणिज्जं पडिहादि )

---

भवनवलभीदीपिका इव इयं का आविरस्तीत्यन्वयः । श्यामोपलविरचितोल्लेख-हेमैकरेखालग्नैः = श्यामः ( कृष्णवर्णः ) य उपलः ( प्रस्तरः, शाण इति भावः ) तस्मिन् विरचितः ( कृतः ) उल्लेखः ( उल्लेखनम् ) यस्याः सा । तादृशी या हेम्नः ( सुवर्णस्य ) एकाः ( अद्वितीयाः ) रेखाः ( लेखाः ) ता इव लग्नानि ( संनिविष्टानि ) तैः । कनककदलीकन्दलीगर्भगौरैः = कनककदल्याः ( सुवर्णरम्भातरोः ) कन्दलीगर्भाः ( अभ्यन्तरभागाः ) त इव गौराणि ( पीतानि ), तैः । हारिद्राम्बुद्रवसहचरं = हारिद्रं ( हरिद्रासम्बन्धि ) यदम्बु ( जलम् ) तस्य द्रवः ( रसः ) तस्य सहचरं ( सहचारिणं, सदृशमिति भावः ) तादृशं कान्तिपूरं = शोभाप्रवाहं, वहद्भिः = धारयद्भिः, अङ्गैः = देहाऽवयवैः, उपलक्षितेति शेषः । कामक्रीडाभवनवलभीदीपिका इव = कामक्रीडायैः ( मदनविलासाय ) यद्भवनं ( मन्दिरम् ) तस्य वलभी ( चन्द्रशाला, ऊर्ध्वप्रदेश इति भावः ) तस्यां दीपिका इव = दीप इव । इयं = निकटवर्तिनी, का = अङ्गना, आविरस्ति = प्रादुर्भवति । अत्र पादत्रय उपमा तुरीये पाद उत्प्रेक्षा चेति द्वयोरङ्गाऽङ्गिभावेन सङ्करः । मन्दाक्रान्तावृत्तम् ॥ ७ ॥

सीतेति । हला = हे सखि ! 'हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रति ।' इत्यमरः । वसन्तसहचरेण = वसन्तमित्रेण । अतिमात्रम् = अत्यर्थम् ।

---

भीतरी भागके सदृश पीतवर्ण और हल्दीके रसके सदृश शोभाप्रवाहको धारण करनेवाले अङ्गोंसे उपलक्षित एवम् कामक्रीडाके भवनकी अटारीमें दीपिकाके सदृश यह कौन सुन्दरी प्रादुर्भूत हो रही है ? ॥ ७ ॥

( तब सीता और उनकी सखी आती हैं )

सीता—सखि ! देखो देखो । आज यह बगीचा वसन्तको साथ लिये हुए स्वयम् कामदेवसे ही अलङ्कृतके सदृश बहुत ही सुन्दर लगरहा है ।

सखी—अनवद्याङ्गि ! एवमेतत्।

रामः—अये ! सर्वानवद्याङ्गीति वक्तव्यम्। नन्वस्याः—

बन्धूकबन्धुरधरः, सितकेतकाभं
चक्षुर्मधूककलिकामधुरः कपोलः।
दन्तावली विजितदाडिमबीजराजि-
रास्यं पुनर्विकचपङ्कजदत्तदास्यम्॥ ८॥

सखीति। अनवद्याऽङ्गि = अनिन्दनीयदेहावयवे, सीते इति शेषः। अवद्यं = निन्दनीयम्, 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति निपातः। 'कुपूयकुत्सिताऽवद्यखेटगर्ह्याऽणकाः समाः' इत्यमरः। नाऽवद्यमनवद्यं, तादृशमङ्गं यस्याः साऽनवद्याङ्गी, तत्सम्बुद्धौ। 'अङ्गगात्रकण्ठेभ्यो वक्तव्यम्' इति वा ङीष्। अत्र संस्कृतोक्तिः सीतासख्या वैदुष्यं ख्यापयति। यथोक्तं भरतेन—

'संस्कृतभाषाचाराः प्रायो नाट्येषु न स्त्रियः श्लाघ्याः।
क्वचिदपि तपः प्रभावाद्विदग्धताबोधनाच्च शस्यन्ते॥' इति।

सीताया अनवद्यसर्वाङ्गत्वं समर्थयते—बन्धूकबन्धुरिति। अधरो बन्धूकबन्धुः, चक्षु सितकेतकाऽऽभं, कपोलो मधूककलिकामधुरः, दन्तावली विजितदाडिमबीजराजिः पुनरास्यं विकचपङ्कजदत्तदास्यम् (अस्ति) इत्यन्वयः। अधरः = ओष्ठः सीताया इति शेषः, एवं परत्राऽपि। बन्धूकबन्धुः = बन्धुजीवकपुष्पसदृशः, रक्तकस्तु बन्धूको बन्धुजीवकः इत्यमरः। बन्धूकं भाषायां 'दोपहरिया' इति नाम्ना ख्यातं रक्तपुष्पम्। चक्षुः = नेत्रं, सितकेतकाऽऽभं = शुक्लकेतकीपुष्पकान्तिसदृशं, सितकेतकस्येवाऽऽभा यस्य तत्। कपोलः = गण्डः, मधूककलिकामधुरः = मधूकस्य (गुडपुष्पस्य, भाषायां तु 'महुआ' इति ख्यातस्य) कलिका (कोरकः) इव मधुरः (मनोहरः), मधूके तु गुडपुष्पमधुद्रुमौ। वानप्रस्थमधुष्ठीलौ' इत्यमरः। दन्ताऽऽवली = दशनपङ्क्तिः, विजितदाडिमबीजराजिः = विजिता (पराजिता) दाडिमबीजानां (करकफलबीजानाम्) राजिः (श्रेणी) यया सा। 'समौ करकदाडिमौ' इत्यमरः। पुनः = भूयः, आस्यं = मुखं, विकचपङ्कजदत्तदास्यं = प्रफुल्लकमलवितीर्णदासत्वं, विकच-

---

सखी—हे अनिन्दित अङ्गवाली ! आपका कहना सही है।

राम—अरे ! 'अनिन्दित समस्त अङ्गवाली' कहना चाहिए। इसके ओष्ठ बन्धूक (दोपहरिया नामके रक्तपुष्प) के सदृश, नेत्र सफेद केतकीपुष्पके समान, कपोल मधूक (महुआ नामके फूल) के कोरकके तुल्य मनोहर, दाँतोंकी पङ्क्ति अनारके बीजोंको जीतनेवाली और मुख विकसित कमलको भी दास बनानेवाला है॥ ८॥

अहो ! मुग्धाया अप्यस्याः प्रकृतिकमनीयपदार्थपरिशीलनौचित्यचातुरी । तथाहि इयं हि—

पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं
करभ्यामादत्ते नवकिसलयानामरुणताम् ।
प्रवालस्यच्छायां दशनवसनाग्रेण पिबति,
स्मितज्योत्स्नापूरैरुपहसति कान्ति हिमरुचेः ॥ ९ ॥

कमलाय दत्तं हास्यं येन तत् । मुखं सौन्दर्याऽतिशयेन विकसितकमलतिरस्कारकमस्तीति भावः । इत्थं च सीता सर्वाऽनवद्याङ्गी वर्तत इति समर्थितं भवति । अत्र पूर्वोपात्तानां तिसृणामुपमानामनन्तरप्रतिपादितयोर्द्वयोर्व्यतिरेकयोश्चैकाश्रयाऽनुप्रवेशात्सङ्करः । वसन्ततिलकं वृत्तम् ॥ ८ ॥

अहो इति । मुग्धायाः=अपरिपक्वबुद्धेः, प्रथमाऽवतीर्णयौवनाया वा । प्रकृतिकमनीयपदाऽर्थपरिशीलनौचित्यचातुरी=प्रकृत्या ( स्वभावेन ) कमनीयः ( सुन्दरः ) यः पदार्थः ( वस्तु ) तस्य परिशीलनस्य ( परिचयस्य ) यदौचित्यम् ( उचितता ) तत्र चातुरी ( चातुर्यं, नैपुण्यमिति भावः ) ।

सीतायाः प्रकृतिकमनीयपदाऽर्थपरिशीलनौचित्यचातुरीमुपपादयति—पदाभ्यामिति । पदाभ्यामुन्निद्रां शोणाऽम्बुजरुचिम् अधरयति, कराभ्यां नवकिसलयानाम् अरुणताम् आदत्ते, दशनवसनाऽग्रेण प्रवालस्य छायां पिबति स्मितज्योत्स्नापूरैः हिमरुचेः कान्तिम् उपहसतीत्यन्वयः । अत्र इयमिति पदं पूर्वतोऽध्याहार्यम् । इयं=सीता, पदाभ्यां=चरणाभ्यां, 'पदं व्यवसितित्राणस्थानलक्ष्माऽङ्घ्रिवस्तुषु ।' इत्यमरः । उन्निद्रां=विकसिताम् , उद्गता निद्रा ( निमीलितत्वम् ) यस्याः सा उन्निद्रा ताम् । शोणाऽम्बुजरुचिं=रक्तकमलकान्तिम्, अधरयति=अधरीकरोति । अरुणकमलादपि अरुणतरवर्णौ सीताचरणाविति भावः । कराभ्यां=हस्ताभ्यां, नवकिसलयानां=नूतनपल्लवानाम् , अरुणतां=रक्तताम् , आदत्ते=गृह्णाति, प्रत्यग्रकिसलयसदृशावरुणवर्णौ सीताकराविति तात्पर्यम् । दशनवसनाऽग्रेण=दशनवसनयोः ( दन्तवाससोः, अधरयोरिति भावः ) अग्रेण ( अग्रभागेन ) प्रवालस्य=विद्रुमस्य=

अहो ! अल्हड़ अवस्थामें भी इसकी, स्वभावसुन्दर वस्तुके परिचयके औचित्यमें चतुराई है । यह—

चरणोंसे विकसित रक्तकमलोंकी कान्तिको मात करती है । हाथोंसे नये पल्लवोंकी लालिमाको ग्रहण करती है । ओठोंके अग्रभागसे प्रवाल ( मूंगा ) की कान्तिको पी जाती है और मन्दहास्यके कान्तिप्रवाहोंसे चन्द्रमाकी कान्तिका उपहास करती है ॥ ९ ॥

सखी—भर्तृदारिके, इदं तच्चण्डिकायतनम् ।

सीता—( अञ्जलिं बद्ध्वा ) देवि, शशधरमौलिदेहार्धधारिणि, त्रिभुवनगृहसुवासिनि, नमो नमस्ते । ( देवि, ससहरमौलिदेहद्धधारिणि, तिहुअणघरसुहासिणि, णमो णमो दे )

सखी—समुचितैव प्रणामपरिपाटी ।

सीता—( सप्रणयकोपम् ) अलमलीकजल्पितेन । (अलमलीअजम्पिदेण)

सखी—( अञ्जलिं बद्ध्वा )

कान्तमिन्दुमणिदाममकोमले ! कोमलेन्दुमुकुटाङ्कशायिनि ! ।

---

छायां = कान्तिं, पिबति = आचामति, सीताया अधरौ कात्स्न्र्येन विद्रुमकान्तिधराविस्यभिप्रायः । स्मितज्योत्स्नापूरैः = स्मितस्य ( 'ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताऽधरम्' इत्युक्तलक्षणस्य मन्दहास्यस्य ) ज्योत्स्नापूरैः ( कान्तिप्रवाहैः ) हिमरुचेः = चन्द्रस्य, कान्तिं = शोभाम् , उपहसति = उपहासं करोति । सीतास्मितकान्तिश्चन्द्रशोभातिरस्कारिणीत्याकूतम् । अत्र व्यतिरेकोपमयोरेकाश्रयाऽनुप्रवेशात्सङ्करः । शिखरिणीवृत्तम् ॥ ९ ॥

सीतेति । शशधरमौलिदेहार्द्धधारिणि = शशधरमौलेः ( चन्द्रशेखरस्य, शङ्करस्येत्यर्थः ) देहार्द्धधारिणि ( शरीरार्द्धधारणशीले ) । त्रिभुवनगृहसुवासिनि = त्रिभुवनमेव ( लोकत्रयमेव ) यद्गृहं ( भवनम् ) तस्य सुवासिनि ( सुवासशीले ) ।

सखीति । प्रणामपरिपाटी = अभिवादनपद्धतिः, समुचितैव = योग्यैव, शशधरेत्यादिना पत्यनुरागाऽतिशयस्त्रिभुवनेत्यादिना देव्या जगद्व्यापित्वं तथा च—ततस्त्वया अपि पतिवाल्लभ्यं सततस्वगृहवासश्चोक्तिविधित्वा प्रार्थ्यत इति भावः ।

सीतेति । अलीकजल्पितेन = मिथ्याभाषितेन ।

कान्तमिति । इन्दुमणिदामकोमले हेकोमलेन्दुमुकुटाऽङ्कशायिनि ! इन्दुसुन्दर-

---

सखी—राजकुमारि ! यह वह चण्डिकामन्दिर है ।

सीता—( हाथोंको जोड़कर ) हे देवि ! हे महादेवकी अर्द्धाङ्गिनि । त्रिभुवनरूपगृहमें निवास करनेवाली ! आपको नमस्कार है, नमस्कार है ।

सखी—प्रणाम करनेकी पद्धति समुचित ही है ।

सीता—( प्रणयकोपके साथ ) झूठ मत बोलो ।

सखी—( अञ्जलि बाँधकर )

हे चन्द्रकान्तमणिमालाके तुल्य कोमले । हे चन्द्रशेखरकी गोदमें सोनेवाली ! चन्द्र

इन्दुचारुमचिरेण विन्दतामिन्दुसुन्दरमुखी सखी मम ॥ १० ॥

रामः—अये, कथमस्याः परिणयमनोरथप्रणयी सखीजनः, (विमृश्य) उचितमेतत् । वयस्सन्धौ खल्वियं वर्त्तते । तथाहि—

अपक्रान्ते बाल्ये, तरुणिमनि चागन्तुमनसि,

---

मुखी मम सखी अचिरेण इन्दुचारुं कान्तं विन्दतामित्यन्वयः ।

इन्दुमणिदामकोमले = इन्दुमणिदाम ( चन्द्रकान्तमणिमाला ) सेव कोमला ( मृदुला ) तत्सम्बुद्धौ । हे कोमलेन्दुमुकुटाङ्कशायिनि = बालचन्द्रमौल्युत्सङ्गशयनशीले । कोमलः ( बालः ) इन्दुः ( चन्द्रः ) मुकुटः ( शेखरः ) यस्य सः, तस्य अङ्के ( उत्सङ्गे ) शेते तच्छीला, तत्सम्बुद्धौ । हे पार्वति ! इन्दुसुन्दरमुखी = चन्द्रमनोहराननाः = इन्दुसुन्दरं मुखं यस्याः सा 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । तादृशी मम सखी = वयस्या, सीतेति भावः । अचिरेण = क्षिप्रम् । इन्दुचारु = चन्द्रसमसुन्दरं, कान्तं = वल्लभं, विन्दतां = प्राप्नोतु, विदॢ लाभे' इति धातोर्लोट् । 'शेमुचादीनाम्' इति मुम् । सीताया इन्दुसुन्दरमुखीत्वात्तस्याः कृते इन्दुचारुवरप्राप्तौ कृतायाः प्रार्थनाया औचित्यं द्योत्यते । अत्र विशेषणस्य साऽभिप्रायत्वात्परिकराऽलङ्कारः । रथोद्धतावृत्तं, तल्लक्षणं यथा—'रान्नराविह रथोद्धता लगौ ।' इति ॥ १० ॥

राम इति । परिणयमनोरथप्रणयी = परिणयमनोरथे ( विवाहाऽभिलाषे ) प्रणयी ( प्रणययुक्तः ) । वयःसन्धौ = वयसोः ( अवस्थयोः, गच्छतो बाल्यस्याऽऽगच्छतो यौवनस्य चेति भावः ) सन्धौ ( मेलनकाले ) ।

सीताया वयः सन्धि प्रतिपादयति—अपक्रान्त इति । बाल्येऽपक्रान्ते, तरुणिमनि च आगन्तुमनसि, मुग्धत्वे प्रयाते चतुरिमणि च आश्लेषरसिके सति इन्दीवरदृशो यद् वपुः केनाऽपि वयसा न स्पृष्टं तत् एतत् पञ्चेषोः परमं मर्म इह जयति इत्यन्वयः ।

बाल्ये = शैशवे, अपक्रान्ते = अपगते, तरुणिमनि च = तारुण्ये च, तरुणस्य भावस्तरुणिमा, तस्मिन् 'पृथ्वादिभ्य इमनिज्वा' । इमनिच् । आगन्तुमनसि = आयातुमनसि सति, आगन्तुं मनो यस्य सः, तस्मिन् । नत्वागत इति भावः । तुं काम-

---

सदृश सुन्दर मुखसे युक्त मेरी सखी शीघ्र चन्द्रमाके सदृश सुन्दर वरको प्राप्त करले ॥१०॥

राम—अरे ! सखी कैसे इनके विवाहके अभिलाषमें प्रेम कर रही है ?

( विचार कर ) यह योग्य है । यह दो अवस्थाओं ( बाल्य और यौवन ) की सन्धिमें रह रही है । जैसे कि—

बचपनके बीतनेपर, जवानीके आनेकी इच्छा करनेपर, अल्हड़पनके जानेपर और

प्रयाते मुग्धत्वे, चतुरिमणि चाश्लेषरसिके ।
न केनापि स्पृष्टं यदिह वयसा मर्म परमं
तदेतत्पञ्चेषोर्जयति वपुरिन्दीवरदृशः ॥ ११ ॥

सखी—अयि देवि, सत्वरं मे पूरय मनोरथम्, यावदियं न दुर्मनायते सखी।

सीता—(सप्रणयकोपम्) किमिति दुर्मनायिष्ये। (किंति दुम्मणाविस्सम्)

लक्ष्मणः—अयि राजहंसकन्यके, किमिति दुर्मनायसे, अयं ते चूतविटपान्तरितः कान्तः।

---

मनसोरपी'ति मकारलोपः। तथा च मुग्धत्वे=अपरिपक्वमनोभावे, प्रयाते=प्रगते, अथ च—चतुरिमणि=चतुरभावे, प्रौढत्व इति भावः। चतुरस्य भावश्चतुरिमा, तस्मिन्। आश्लेषरसिके=आलिङ्गनप्रणयिनि सति, न तु कृताश्लेष इति भावः। रसोऽस्याऽस्तीति रसिकः, अत इनि ठनौ' इति ठन्प्रत्ययः। आश्लेषस्य रसिके। इन्दीवरदृशः=नीलकमललोचनायाः, इन्दीवरे इव दृशौ यस्याः सा इन्दीवरदृक्, तस्याः, सीताया इति भावः। इन्दीवरं च नीलेऽस्मिन् 'इत्यमरः। यत् वपुः=शरीरं, केनाऽपि=कतरेणाऽपि, वयसा=अवस्थया न स्पृष्टं=नाऽऽस्पृष्टं, बाल्यस्यगतत्वाद्यौवनस्य चाऽनागतत्वादिति भावः। तत्=तादृशम्, एतत्=समीपतरवर्ति, पञ्चेषोः=पञ्चबाणस्य, कामस्येति भावः। परमम्=उत्कृष्टं, मर्म=तत्त्वभूतं सत्, इह=अस्मिन्, जगतीति भावः। जयति=सर्वोत्कर्षेण वर्तते इति भावः। शिखरिणीवृत्तम् ॥ ११ ॥

सखीति। सखी=सीता। दुर्मनायते अदुर्मना दुर्मना भवति, 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङ्। ङित्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदम्।

लक्ष्मण इति। चूतविटपाऽन्तरितः=चूतविटपे (आम्रशाखायाम्) अन्तरितः (व्यवहितः)।

---

चातुर्यके आलिङ्गन करनेमें रसिक होनेपर सुन्दरी (सीता) के जिस शरीरको किसी अवस्था ने भी स्पर्श नहीं किया, वैसा यह कामदेवका श्रेष्ठ मर्म (तत्त्वभूत) होता हुआ इस संसारमें उत्कर्ष पूर्वक रह रहा है ॥ ११ ॥

सखी—हे देवि! मेरे मनोरथको शीघ्रपूर्ण कीजिए, जबतक यह सखी दुःखित न हो।

सीता—(प्रणय कोपके साथ) मैं क्यों दुःखित हूंगी।

लक्ष्मण—हे राजहंसकन्यके! तुम क्यों दुःखित होती हो। यह तुम्हारा प्रियतम आम्रवृक्षकी शाखा (डाल) में व्यवहित है।

**सीता**—हला, कस्याऽयं करिकलभकण्ठनिर्घोषमधुरः कण्ठशब्दः श्रूयते, तन्निरूपयामः। ( हला, कस्स इमो करिकलहकण्ठणिग्घोसमहुरो कण्ठसद्दो सुणीअदि ता णिरूवेह्य )

**रामः**—( सविषादम् ) कथमियमन्तरितैव लतया। ( लतां प्रति )

स्तनविजितस्तवकश्रीरधराधरितप्रवालनवलक्ष्मीः।
अयि लतिके ! तिरयन्ती तरलदृशं नावलम्बसे लज्जाम् ॥१२॥

---

सीतेति। करिकलभकण्ठनिर्घोषमधुरः=करिकलभस्य ( करिशावकस्य, अत्र कलभपदेनैव करिशावकरूपाऽर्थबोधे सति पुनः करिपदं व्यर्थमिति न वाच्यं, 'विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वम्' इति न्यायेन कलभपदस्य शावकरूपाऽर्थत्वं ततः करिकलभपदेन करिशावकरूपाऽर्थत्वं बोद्धव्यम्। काव्यालङ्कारसूत्रकर्तावामनस्तु—'करिकलभशब्दे करिशब्दस्ताद्रूप्यस्ये'त्याह। करी=प्रौढकुञ्जरः, तद्रूपः कलभः करिकलभ इत्यर्थः। ) कण्ठनिर्घोषः ( गलशब्दः ) स इव मधुरः ( माधुर्ययुक्तः ) श्रुतिसुखद इति भावः )। निरूपयामः=पश्यामः।

रामो लतामुपलभते—स्तनविजितेति। अयि लतिके! स्तनविजितस्तवकश्रीः अधराऽधरितप्रवालनवलक्ष्मीः तरलदृशं तिरयन्ती ( त्वम् ) लज्जां न अवलम्बसे ? इत्यन्वयः। अयि लतिके=अयि व्रतते!, अयीति कोमलामन्त्रणे। स्तनविजितस्तवकश्रीः=स्तनाभ्यां (कुचाभ्याम्) विजिता (अभिभूता) स्तवकश्रीः (गुच्छशोभा) यस्याः सा। तथा अधराऽधरितप्रवालनवलक्ष्मीः=अधरेण ( ओष्ठेन ) अधरिता ( तिरस्कृता ) प्रवालस्य ( पल्लवस्य ) नवलक्ष्मीः ( नूतनशोभा ) यस्याः सा। अत एव तरलदृशं=चपलनयनां, सीतामिति भावः। तिरयन्ती=आच्छादयन्ती, त्वमिति शेषः। लज्जां=व्रीडां, न अवलम्बसे=न आश्रयसि, सीतया स्वकुचाभ्यां त्वदीया कुसुमगुच्छशोभा पराजिता अधरेण च त्वदीया प्रवालनवशोभा पराभूता, एवं च विजेत्र्याः सकाशे विनयस्य प्राप्तत्वेऽपि यत्त्वं स्वजेत्रीं सीतां प्रच्छादयसि तथाऽपि न

---

**सीता**—सखि ! यह किसका हाथीके बच्चेकी कण्ठध्वनिके सदृश मधुर कण्ठशब्द सुना जा रहा है। इसलिए पता लगावें।

**राम**—( विषादके साथ ) कैसे यह लतासे व्यवहित हो गई। ( लतासे ) हे लते ! जिसने अपने स्तनोंसे तुम्हारी गुच्छशोभा जीत ली है एवम् ओठसे तुम्हारे पल्लवकी नई शोभा तिरस्कृत कर दी है चपल नेत्रोंसे युक्त इस ( सीता ) को आच्छादित करने वाली तुम्हें क्या लज्जा नहीं होती ?॥ १२ ॥

( पुनः सहर्षम् )

श्यामच्छवीनामियमन्तराले प्रादुर्भवन्ती कदलीदलानाम् ।
कलेव चान्द्री नवनीरदानां चकोरवन्मां मुदितं करोति ॥ १२ ॥

( पुनः कदलीं प्रति )

हे बालहेमलतिके ! ध्रुवमीहसे त्व-

---

जिह्वेषीति भावः । अत्र व्यतिरेकाऽलङ्कारः । गीतिश्छन्दस्तल्लक्षणं यथा—
'आर्या प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः ।
दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥' इति ॥ १२ ॥

श्यामच्छवीनामिति । श्यामच्छवीनां कदलीदलानाम् अन्तराले प्रादुर्भवन्ती इयं नवनीरदानाम् अन्तराले प्रादुर्भवन्ती चान्द्री कला इव मां चकोरवत् मुदितं करोतीत्यन्वयः । श्यामच्छवीनां = श्यामा ( कृष्णवर्णा ) छविः ( कान्तिः ) येषां तेषां, तादृशानां कदलीदलानां = रम्भापत्राणाम्, अन्तराले = मध्यभागे, प्रादुर्भवन्ती आविर्भवन्ती, इयं = सीता, नवनीरदानां = नूतनमेघानाम् , अन्तराले = मध्यभागे, प्रादुर्भवन्ती = प्रकाशमाना, चान्द्री = चन्द्रसम्बन्धिनी, कला इव = षोडशो भाग इव, मां—रामं, चकोरवत् = चन्द्रिकापायिपक्षिविशेषसदृशं, मुदितं = प्रसन्नं, करोति = विदधाति । नवजलदानां मध्यभागे प्रकाशमाना चान्द्रमसी कला यथा चकोरमाह्लादयति तथैव श्यामवर्णानां रम्भादलानामन्तराले प्रादुर्भवन्ती सीता मामानन्दयतीति भावः । अत्रोपमाऽलङ्कारः । पूर्वार्द्धे इन्द्रवज्राया उत्तरार्द्धे चोपेन्द्रवज्रायाः सम्मिश्रणादुपजातिर्वृत्तं, तल्लक्षणं यथा—'स्यादिन्द्रवज्रा यदि तौ जगौ गः, उपेन्द्रवज्रा जतजास्ततो गौ । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः ॥' इति ॥ १२ ॥

पुना रामः कदलीमुपालभते—हे बालहेमलतिके इति । हे बालहेमलतिके ! त्वं तरलायताक्ष्या ऊरुश्रियं कलयितुम् ईहसे ध्रुवम् , एनां विलासवतीं चिरं विलम्बय, हि स्त्रीणां कलाः परिचिताः ( सत्यः ) स्थिरतां प्रयान्तीत्यन्वयः ।

---

( फिर हर्षके साथ )

श्यामकान्तिवाले कदलीपत्रोंके बीच प्रकट होनेवाली यह सीता नये मेघोंके बीचमें प्रकाशित होनेवाली चन्द्रकलाकी तरह मुझे चकोरके समान आनन्दित कर रही है ॥१२॥

( फिर कदलीसे )

हे बालहेमलतिके ! तुम चञ्चल और बड़े बड़े नेत्रोंसे युक्त सुन्दरी सीताकी ऊरुशोभा

मूरुश्रियं कलयितुं तरलायताक्ष्याः ।
एनां विलम्बय विलासवतीं चिरं, हि
स्त्रीणां कलाः परिचिताः स्थिरतां प्रयान्ति ॥१४॥

सीता—हला, कोऽयं कनकवर्णः शिखण्डिपिच्छमण्डितकर्णपूरो मुग्धत्वविमुक्तलोचनविकारः कुमारो दृश्यते । इमं पश्यन्त्या मम निज-

---

हे बालहेमलतिके = हे प्रत्यग्रसुवर्णसमवल्लि ! त्वं, तरलायताक्ष्याः = चपलदीर्घलोचनायाः, सीताया इति भावः । तरले ( चञ्चले ) आयते ( विस्तृते ) अक्षिणी ( नेत्रे ) यस्यास्तस्याः । समासान्तः षच् , षित्वान्ङीष् । ऊरुश्रियं = सक्थिशोभां, सक्थि क्लीबे पुमानूरुः' इत्यमरः । कलयितुं = प्राप्तुम् , ईहसे = वाञ्छसि, ध्रुवं = नूनं, तर्हि, एनाम् = इमां, विलासवतीं = शृङ्गारचेष्टोपेतां, सीतामिति भावः । चिरं = बहुकालपर्यन्तं, विलम्बय = गमने विलम्बयुक्तां कुरु, स्वसमीप एव स्थापयेति भावः । विलम्बनं समर्थयते—हीति । हि = यतः, स्त्रीणां = ललनानां, कलाः = गुणविशेषाः, परिचिताः = संस्तुताः, सत्यः, 'संस्तवः स्यात्परिचय' इत्यमरः । स्थिरतां = स्थैर्यं, प्रयान्ति = प्रगच्छन्ति, प्राप्नुवन्तीति भावः । इयं सीता चिरकालपर्यन्तं तव समीपे तिष्ठेचर्हि त्वं तस्या ऊरुशोभां कलयितुं पारयेरिति भावः । अत्र पूर्वार्द्धे उत्प्रेक्षाऽलङ्कारो ध्रुवपदमुत्प्रेक्षावाचकं, तदुक्तं यथा—

'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।
उत्प्रेक्षावाचकाः शब्दा इव शब्दोऽपि तादृशः ॥' इति ।

उत्तरार्द्धे च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कार एवं च प्रसिद्धोपमानभूतायाः कदल्या उपमेयत्वप्रकल्पनात्प्रतीपाऽलङ्कारश्चेत्येतेषां मिथोऽनपेक्षया स्थितेः संसृष्टिः वसन्ततिलकं वृत्तम् ॥ १४ ॥

सीतेति । कनकवर्णः = सुवर्णवर्णः कनकस्येव वर्णो यस्य सः । शिखण्डिपिच्छमण्डितकर्णपूरः = शिखण्डिनः ( मयूरस्य ) पिच्छेन ( बर्हेण ) मण्डितः ( भूषितः ) कर्णपूरः ( कर्णभूषणम् ) यस्य सः । मुग्धत्वविमुक्तलोचनविकारः = मुग्धत्वेन ( अप्रौढया ) विमुक्तः ( परित्यक्तः ) लोचनविकारः ( नयनविकृतिः, अपाङ्गभङ्गिरिति

---

की प्राप्त करनेकी इच्छा करती हो क्या ? तो इस विलासवती सीताको बहुत समयतक विलम्बित करो ( अपने पास ठहराओ ); क्योंकि स्त्रियोंकी कलाएँ परिचित होनेपर स्थैर्य को प्राप्त करती हैं ॥ १४ ॥

सीता—सखि ! यह कौन सोनेके सदृश वर्णवाला, मयूरपिच्छसे भूषित कर्णभूषणसे युक्त और मुग्धभावसे रहित नेत्रविकारवाला कुमार देखा जा रहा है । इसको देखकर

वत्स इव वात्सल्यप्रक्षालितं हृदयं वर्त्तते । ( हला, को इमो कलभवण्णो सिहण्डिपिच्छमण्डिदकण्णपूरो मुद्धत्तणविमुक्कलोअणविआरो कुमारो दीसदि । इमं पेक्खन्तीए मह णिअवच्छम्मि विअ वच्छलणपच्छालिअं हिअअं वट्टदि )

**लक्ष्मणः**—अये, केयमस्यां सुमित्रायामिव मे सुचिरप्रवृत्ता चित्तवृत्तिः।

**सीता**—हला, इमं कुमारं विलोकयन्त्या मम वत्सोर्मिला चित्तमारोहति । ( हला, इमं कुमारं पुलोअन्तीए मह वच्छा उम्मिला चित्तमारुहदि )

**सखी**—( विहस्य ) नूनमयं कस्यचिद्वत्सशब्दलालनीयो भविष्यति । यं विलोकयन्त्या मे त्वमपि चित्तवृत्तिमारोहयसि । तत्पृच्छामि तावदेनम् । ( परिक्रम्य ) अये राजकुमार, कः खलु भवान् ? यस्त्वमेक एव मुग्धतयाऽपरिशीलितास्वपि वनभूमिषु विहरसि ।

**लक्ष्मणः**—धिङ् मूर्खे, कथं मामग्रजेन परिसरवर्त्तिना रामचन्द्रेण नाथवन्तमप्येकाकिनमपदिशसि ?

---

भावः ) येन सः । निजवत्स इव = स्ववात्सल्यभाजने कनिष्ठभ्रात्रादौ जन इव । वात्सल्यप्रक्षालितं = वात्सल्येन ( स्निग्धत्वेन ) प्रक्षालितम् ( धौतम् ) ।

लक्ष्मण इति । चित्तवृत्तिः = मनोव्यापारः ।

सखीति । अपरिशीलितासु = अपरिचितासु ।

लक्ष्मण इति । परिसरवर्तिना = निकटवर्तिना । नाथवन्तं = रक्षकयुक्तम् । एकाकिनम् = एककम् , 'एकादाकिनिच्चाऽसहाये' इत्याकिनच्प्रत्ययः । 'एकाकी त्वेक एकक' इत्यमरः ।

---

मेरा चित्त जैसे अपने वात्सल्यभाजन छोटे भाईमें होता है उसीतरह स्नेहसे प्रक्षालित हो रहा है ।

**लक्ष्मण**—अरे ! ये कौन हैं ? इनमें मेरी चित्तवृत्ति माता सुमित्राकी तरह बहुत समयतक प्रवृत्त रहती है ।

**सीता**—सखि ! इस कुमारको देखकर बहन ऊर्मिलाका स्मरण हो रहा है ।

**सखी**—(हँसकर) निश्चय ही यह किसीसे वात्सल्यभाजन शब्दसे लालनीय होगा जिसको देखकर मुझे भी आपका स्मरण होगा । इसलिए इसे पूछती हूँ । (घूमकर) राजकुमार । आप कौन हैं ? जो आप अल्हड़ होनेसे अकेलेही अपरिचित वनभूमियोंमें विचरण कर रहे हैं ।

**लक्ष्मण**—धिक् मूर्खे ! मेरे बड़े भाई रामचन्द्रजीके समीप रहनेपर भी तुम कैसे मुझे अकेला कह रही हो ?

सखी—( सहर्षम् ) कुसुमितस्तदधुना मे मनोरथद्रुमः ।

सीता—हला, किमत्राऽस्माकम् ? तदेहि, निजगृहमेव व्रजामः । (किंचित् परिक्रम्य, पुनर्व्यावृत्य ) हला, एकं विस्मृतास्मि । ननु स सहकार-पादपोऽवलोकनीयो यस्य वासन्त्या लतया सह संगममभिलषन्ति ममाऽम्बाः । ( हला, किमेत्थ अह्माणं ? ता एहि । णिअघरं जेव्व वजाह्म । हला, एक्कं विसुमरिदह्मि । णं सो सहआरपादवो अवलोअणीओ जस्स वासन्दीलदाए सह संगमं अहिलसन्ति मह अम्बाओ )

( इत्युभे परिक्रामतः )

रामः—( सहर्षम् )

मन्मनःकुमुदानन्दशरत्पार्वणशर्वरी ।
अहो ! इयमितो नूनं पुनरप्यभिवर्त्तते ॥ १५ ॥

---

सखीति । कुसुमितः=पुष्पितः । कुसुमानि संजातान्यस्य, 'तदस्य संजातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः ।

सीतेति । व्यावृत्य = परावृत्य । सहकारपादपः=अतिसौरभाम्रवृक्षः । रामदर्शनार्थं सीताया अयं व्यपदेशो बोद्धव्यः ।

सीताप्रत्यागमनं वर्णयति रामः—मन्मन इति । अहो ! मन्मनः कुमुदानन्द-शरत्पार्वणशर्वरी इयं पुनरपि इतः अभिवर्तते नूनमित्यन्वयः ।

अहो=हर्षद्योतकमव्ययमिदमत्र । मन्मनः कुमुदानन्दशरत्पार्वणशर्वरी=मन्मन एव (मच्चित्तमेव) यत् कुमुदम् ( कैरवम् ) तस्याऽऽनन्दे ( हर्षे ) शरदः (शरदृतोः) पार्वणशर्वरी ( पूर्णिमारात्रिः ) । इयं=सीता, पुनरपि=भूयोऽपि, इतः=अत्र, सार्वविभक्तिकस्तसिः । अभिवर्तते=प्रत्यागच्छति, नूनं=निश्चयेन । अत्र परम्परित-रूपकमलङ्कारः । अनुष्टुब्वृत्तम् ॥ १५ ॥

---

सखी—( हर्षपूर्वक ) तब इससमय मेरा अभिलाषवृक्ष पुष्पित हो गया ।

सीता—इसमें हमारा क्या प्रयोजन है ? इसलिए चलो, अपने भवनमें ही चलें । ( कुछ घूमकर, फिर लौटकर ) सखि ! एक बात भूल गई । उस सहकारवृक्षको देखना चाहिए मेरी माताएँ जिसकी वासन्तीलतासे ब्याह कर देनेकी इच्छा रखती हैं ।

( तब दोनों घूमती हैं । )

राम—( हर्षके साथ )

अहो ! मेरे चित्तरूप कुमुदके आनन्दकेलिए शरदृतुकी पूर्णिमारात्रिके समान यह ( सीता ) फिर भी इस ओर आरही है ॥ १५ ॥

( निर्वर्ण्य )

वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुला-
मखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति।
कुचौ किञ्चिन्मीलत्कमलतुलनां कन्दलयत-
स्तमःशोभां चित्रां चिकुरनिकुरम्बं हि कुरुते ॥ १६ ॥

सखी—एष सहकारपादपः, इयं च वासन्ती लता। ( इति तदन्तिकमनुसरतः )

---

निर्वर्ण्येति। निर्वर्ण्य=दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनाऽऽलोकनेक्षणम्।' इत्यमरः। जानकीं वर्णयति रामो—वहत्यस्या इति। अस्या दृष्टिर्विकचनवनीलोत्पलतुलां वहति, इदं वदनम् अखण्डस्य इन्दोः अभिख्यां कलयति, कुचौ किञ्चिन्मीलत्कमलतुलनां कन्दलयतः, चिकुरनिकुरम्बं चित्रां तमः शोभां कुरुते हीत्यन्वयः। अस्याः=सीतायाः, दृष्टिः=नयनं, विकचनवनीलोत्पलतुलां=विकसितनूतननीलकमलोपमां, विकचं नवं यन्नीलोत्पलं तस्य तुलाम् इति विग्रहः। वहति=धारयति। इदं=निकटवर्ति, वदनं=सीताया मुखम्, अखण्डस्य=पूर्णस्य, षोडशकलाकलितस्येति भावः। इन्दोः=चन्द्रमसः, अभिख्यां=शोभाम्, 'अभिख्या नामशोभयो'रित्यमरः। कलयति=भजति। कुचौ=जानक्याः स्तनौ, किञ्चिन्मीलत्कमलतुलनां=किञ्चित् ( ईषत् ) मीलती ( मुकुलिते ) ये कमले ( पद्मे ) तयोस्तुलनाम् उपमाम् कन्दलयतः=प्राप्नुतः। चिकुरनिकुरम्बं=जानक्याः केशकलापः, 'स्त्रियां तु संहतिर्वृन्दं निकुरम्बं कदम्बकम्।' इत्यमरः। चित्रां=विचित्ररूपां, तमःशोभाम्=रात्रिकान्तिं, कुरुते=विदधाति, हि=निश्चयेन। पूर्वश्लोके कृतस्य सीतायां पार्वणशर्वरीत्वारोपस्य स्फुटतां संपादयितु वर्णनस्य चरितार्थताऽऽलोच्या। तथा हि सीतानयने नीलकमलोपमे नीलकमलं रात्रौ विकसति। सीताया वदनं पूर्णचन्द्रसुन्दरं, कुचौ च रात्रिमुद्रितकमलोपमौ, प्रथमावतीर्णयौवनत्वादिति भावः। सीतायाः केशपाशश्च रजन्यन्धकारकान्तिं बिभर्ति। उपमाऽलङ्कारः। शिखरिणीवृत्तम् ॥ १६ ॥

सखीति। वासन्तीलता=माधवीलता।

---

( देखकर )

इसके नेत्र विकसित नवीन नीलकमलोंकी उपमाको धारण करते हैं। इसका मुख पूर्णचन्द्रकी शोभाको प्राप्त करता है। इसके स्तन कुछ ही खिले हुए कमलोंकी उपमाको पाते हैं और केशकलाप विचित्र रात्रिशोभाको प्रकट कर रहे हैं ॥ १६ ॥

सखी—यह सहकार ( बहुत ही सुगन्धित आम्र ) वृक्ष है और यह वासन्ती (माधवी) लता है। ( दोनों उसके पास जाती हैं। )

**रामः**—कथमिमे मे परिसरमनुसरतः । तत्किञ्चिदपसरामि तावत् ।

**सखी**—( सहकारशाखां करे धृत्वा, सकौतुकम् ) हला, पश्य पश्य, एतैर्नखशिखाविलिखितैः कोमलदलैः सम्भाव्यते यत्किलेयं चूतलता केनापि विदग्धेन निजहस्तेन संभावितेति । अथवा निजचापलताशङ्कितेन स्वयं मन्मथेनैवेति । ( हला, पेक्ख पेक्ख, इमेहिं णहसिहाविलिहिदेहिं कोमलदलेहिं संभावीअदि जं किर इअं चूदलदा केणावि विदद्धेण णिअहत्थेण संभाविदेति । अथवा णिअचावलदासङ्किदेण सअं मम्महेणेव्वेति )

**रामः**—इत्थं सम्भावयति भवती, मम पुनरन्यथा वितर्कः ।

मत्वा चापं शशिमुखि ! निजं मुष्टिना पुष्पधन्वा
तन्वीमेनां तव तनुलतां मध्यदेशे बभार ।

---

राम इति । अपसरामि = अपसरणं करोमि, दूरं गच्छामीति भावः ।

सखीति । नखशिखाविलिखितैः = नखस्य ( नखरस्य ) शिखा ( अग्रभागः ) तया विलिखितैः ( चिह्नितैः ) । संभाव्यते = संभावना क्रियते । विदग्धेन = रसिकेन, कामकलानिपुणेनेति भावः ।

राम इति । अन्यथा = प्रकाराऽन्तरेण । वितर्कः = ऊहः ।

तमेव वितर्कं प्रतिपादयति—मत्वेति । हे शशिमुखि ! पुष्पधन्वा तन्वीम् एनां तव तनुलतां निजं चापं मत्वा मुष्टिना मध्यदेशे बभार । यस्मात् अत्र त्रिवलिकपटात् त्रिभुवनवशीकारमुद्राऽनुकाराः तिस्रः अङ्गुलीसन्धिरेखा भान्तीत्यन्वयः ।

हे शशिमुखि = हे चन्द्रमुखि, शशीव मुखं यस्याः सा, तत्सम्बुद्धौ, हे सीते इति भावः । पुष्पधन्वा = कामदेवः, पुष्पं धनुर्यस्य सः, 'वा संज्ञायाम्' इत्यनङ् । तन्वीं = कृशां, तव = भवत्याः, तनुलतां = देहलतिकां, निजं = स्वं, चापं = धनुः, मत्वा = ज्ञात्वा, मुष्टिना = संपिण्डिताऽङ्गुलिपाणिना मध्यदेशे = अवलग्नभागे, बभार = धृतवान् । उक्तमर्थं समर्थयते—यस्मादिति । यस्मात् = यतः, कारणात् । अत्र = इह तव तनुलतायामिति भावः । त्रिवलिकपटात् = उदररेखात्रितयकैतवात् , त्रयाणां

---

राम—किसप्रकार ये दोनों मेरे समीप आ रही हैं ? इसलिए मैं कुछ हटता हूँ ।

सखी—( सहकारकी शाखाको हाथमें लेकर ) ( कौतुकके साथ ) सखि ! देखो देखो । नाखूनके अग्रभागसे किये गये इन कोमलपत्रोंसे मालूम होता है कि इस आम्रलताको किसी रसिक पुरुषने अपने हाथसे या अपनी धनुर्लताकी शङ्कासे स्वयम् कामदेवने ही अनुगृहीत किया है ।

राम—यह ऐसी संभावना ( अटकल ) करती है, परन्तु मेरा दूसरा ही तर्क है ।

हे चन्द्रमुखि ! कामदेवने पतली इस तुम्हारी देहलताको अपना धनु समझकर मुट्ठी

यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारा-
स्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसन्धिरेखाः ॥ १७ ॥

सखी—भर्तृदारिके, इयं वासन्ती लता, इदं च पश्य,

वासन्तीरसबिन्दुं सुन्दरमिन्दिन्दिरा इह चरन्ति ।
चिरमन्दिरमरविन्दं मन्दं मन्दं परिहरन्ति ॥ १८ ॥

वलीनां कपटात्, 'तद्धितार्थोत्तरपदसमाहारे चे'त्युत्तरपदसमासः। 'वलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपहारे पुमान्स्त्रीतु जरया श्लथचर्मणि। गृहदारुप्रभेदे च जठराऽवयवेऽपिचे'ति मेदिनी। त्रिभुवनवशीकारमुद्राऽनुकाराः = त्रिभुवनस्य (लोकत्रयस्य) वशीकारमुद्राणाम् (आकर्षणप्रत्ययकारिणीनाम्) अनुकारः (अनुहारः, सदृशकरणमिति भावः) यासु ताः। तादृश्यः तिस्रः = त्रिसंख्यकाः, अङ्गुलीसन्धिरेखाः = करशाखासन्धिचिह्नानि, पुष्पधन्वन इति शेषः। भान्ति = प्रकाशन्ते। हे सुन्दरि! मदनो नतमध्यां तव तनुलतां स्वीयां धनुर्यष्टिं ज्ञात्वा मुष्टिना मध्यदेशे बभार, तत एव तव तनुलतायामुदररेखात्रितयकैतवाल्लोकत्रयवशीकरणमुद्रासदृश्यस्तिस्रोऽङ्गुलिसन्धिरेखा विराजन्त इति भावः। अत्र पूर्वार्द्धे भ्रान्तिमदलङ्कार उत्तरार्द्धे च कैतवापह्नुतिश्चेति द्वयोरङ्गाङ्गिभावेन सङ्करः। मन्दाक्रान्तावृत्तम् ॥ १७ ॥

वासन्तीति। इह इन्दिन्दिराः सुन्दरं वासन्तीरसबिन्दुं चरन्ति; चिरमन्दिरम् अरविन्दं मन्दं मन्दं परिहरन्तीत्यन्वयः। इह = अत्राऽऽरामे इन्दिन्दिराः = भ्रमराः, सुन्दरं = मनोहरं, वासन्तीरसबिन्दुं = माधवीमकरन्दपृषतं, चरन्ति = पिबन्ति, चिरमन्दिरं = चिरकालाऽऽधारभूतम्, अरविन्दं = कमलं, मन्दं मन्दं = शनैः शनैः' वीप्सायां द्विरुक्तिः। परिहरन्ति = परित्यजन्ति। अत्र 'अतिपरिचयादवज्ञासन्ततगमनादनादरो भवति। लोकः प्रयागवासी कूपे स्नानं समाचरति ॥' इति न्यायेन चिरकालोपयुक्तत्वात्कमले भ्रमराणामनादरो नवागतत्वाद्वासन्तीलतायां चाऽऽसक्तिविशेषो द्योत्यते। वृत्त्यनुप्रासोनाम शब्दाऽलङ्कारस्तल्लक्षणं यथा—

'अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा ।
एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥' इति। आर्या जातिः ॥१८॥

से मध्यदेश (कमर) में पकड़ा। जिस कारणसे इस (देहलता) में तीन उदर रेखाओंके बहानेसे तीनों लोकोंको आकर्षण करनेकी मुद्राओंका अनुकरण करनेवाली तीन अङ्गुलिसन्धियोंकी रेखाएँ प्रकाशित हो रही हैं ॥ १७ ॥

सखी—राजकुमारि! यह वासन्तीलता है। आप यह भी देखिए। इस बगीचेमें भ्रमर मनोहर वासन्तीलताके रसबिन्दुको पी रहे हैं और चिरकालसे आधारभूत कमलको धीरे धीरे छोड़ते जा रहे हैं ॥ १८ ॥

( सीता तदेव पठति )

रामः—किमिदानीं लतान्तरवर्णनया, नन्वियमेव—

निर्मुक्तशैशवदशा-शिशिरा नवीन-
सम्प्राप्त-यौवन-वसन्त-मनोरम-श्रीः ।
उन्मीलितस्तननवस्तवका निकाम-
मेणीदृशस्तनुलता तनुते मुदं नः ॥ १९ ॥

सखी—भर्तृदारिके, पश्य । इयमसौ वासन्ती लता स्वयमेव सहकारपोतमालिङ्गितुं पुरःसरति ।

---

राम इति । लताऽन्तरवर्णनया = अन्यव्रततिवर्णनेन, अन्या लता लतान्तरं, 'मयूरव्यंसकादयश्च'ेति समासः । लतान्तरस्य वर्णना, तया ।

सीताया लतासाम्यं प्रदर्शयति—निर्मुक्तेति । निर्मुक्तशैशवदशाशिशिरा नवीनसंप्राप्तयौवनवसन्तमनोरमश्रीः उन्मीलितस्तननवस्तबका एणीदृशः तनुलता नो मुदं निकामं तनुत इत्यन्वयः । निर्मुक्तशैशवदशाशिशिरा=निर्मुक्ता (अपगता) शैशवदशा (बाल्याऽवस्था) एव शिशिरः ( शिशिरर्तुः यस्याः सा । नवीनसंप्राप्तयौवनवसन्तमनोरमश्रीः = नवीनं ( नूतनं, यथा तथा ) संप्राप्ता ( समासादिता ) यौवनम् (तारुण्यम् ) एव वसन्तः ( सुरभिः ) तस्य मनोरमा ( रुचिरा ) श्रीः ( शोभा ) यस्याः सा । तथा उन्मीलितस्तननवस्तबका = उन्मीलितौ ( विकसितौ ) स्तनौ ( कुचौ ) एव नवस्तबकौ ( नूतनपुष्पगुच्छौ ) यस्याः सा । एणीदृशः = हरिणीदृशः, सीताया इति भावः । तादृशी तनुलता देहवल्ली, नः = अस्माकं, पश्यतामिति शेषः । मुदं = हर्षं, निकामं ( यथेष्टम् ) तनुते = विस्तारयति । शिशिराऽपगमे वसन्ताऽविर्भावे च विकसितनवकुसुमगुच्छा लतेव शैशवाऽपगमानन्तरमाविर्भूततारुण्या विकसितस्तनी सीताया इयं देहलताऽस्मदीयं हर्षं विस्तारयतीति भावः । अत्र परम्परितरूपकमलङ्कारः । वसन्ततिलकंवृत्तम् ॥ १९ ॥

---

( सीता उसी श्लोकको पढ़ती हैं )

राम—अभी दूसरी लताके वर्णनसे क्या ? अरे ! इसने ही बाल्याऽवस्थारूप शिशिर-ऋतुको छोड़कर तारुण्यरूप वसन्तकी नवीन शोभा प्राप्त कर ली है । विकसित स्तन ही जिसके नये पुष्पगुच्छ हैं इस सुन्दरी ( सीता ) की ऐसी देहलता, हमारे हर्षको यथेष्ट फैला रही है ॥ १९ ॥

सखी—राजकुमारि ! देखिए । यह वासन्तीलता स्वयम् ही आम्रवृक्षको आलिङ्गन करनेके लिए आगे बढ़ रही है ।

सीता—( सप्रणयकोपम् ) अये, अलीकजल्पिनि, इदानीं तव परिसरं परिहृत्यान्यत्र गमिष्यामि। ( अये, अलिअजप्पिणि, दाणिं तुह परिसरं परिहरिअ अण्णादो गमिस्सम् )

रामः—

> अमलमृणालकाण्डकमनीयकपोलरुचे-
> स्तरलसलीलनीलनलिनप्रतिफुल्लदृशः।
> विकसदशोकशोणकरकान्तिभृतः सुतनो-
> र्मदलुलितानि हन्त! ललितानि हरन्ति मनः ॥२०॥

---

सीतेति। अलीकजल्पिनि = मिथ्याभाषिणि, अलीकं जल्पतीति तच्छीला, तत्सम्बुद्धौ।

रामः सीताप्रणयकोपं वर्णयति—अमलमृणालेति। हन्त! अमलमृणालकाण्डकमनीयकपोलरुचेः तरलसलीलनीलनलिनप्रतिफुल्लदृशो विकसदशोकशोणकरकान्तिभृतः सुतनोः मदलुलितानि ललितानि मनो हरन्तीत्यन्वयः।

हन्त = हर्षद्योतकमव्ययमिदमत्र। अमलमृणालकाण्डकमनीयकपोलरुचेः=अमलं ( निर्मलम् ) यन्मृणालकाण्डं ( बिसनालम् ) तदिव कमनीया ( मनोहरा ) कपोलरुचिः ( गण्डफलककान्तिः ) यस्याः सा, तस्याः। तथा तरलसलीलनीलनलिनप्रतिफुल्लदृशः=तरले ( चञ्चले ) सलीले ( लीलासहिते, सविलासे इत्यर्थः ) ये नीलनलिने ( नीलकमले ) ते इव प्रतिफुल्ले ( विकसिते ) दृशौ ( नेत्रे ) यस्या सा तस्याः। एवं च विकसदशोकशोणकरकान्तिभृतः=विकसत् ( विकासं प्राप्नुवत् ) यत् अशोकम् ( अशोककुसुमम् ) तदिव शोणा ( रक्तवर्णा ) या करकान्तिः ( हस्तशोभा ) तां बिभर्ति ( धारयति ) इति, तस्याः। तादृश्याः सुतनोः=सुन्दर्याः' सीताया इति भावः। मदलुलितानि=मदेन ( तारुण्यगर्वेण ) लुलितानि ( चञ्चलानि )। ललितानि=शृङ्गारचेष्टाः' मनः=चित्तं, मदीयमिति शेषः। हरन्ति=

---

सीता—( प्रणयकोपके साथ ) अरी झूठबोलने वाली! मैं इससमय तेरा सामीप्य छोड़कर दूसरी जगह चली जाती हूं।

राम—हन्त! निर्मल मृणालकाण्डके सदृश मनोहर कपोलकान्तिसे युक्त, चञ्चल और विलासपूर्ण नीलकमलोंके सदृश विकसित नेत्रोंसे सम्पन्न और विकसित अशोकपुष्पके सदृश हस्तशोभाको धारण करनेवाली सुन्दरी ( सीता ) के तारुण्यगर्वसे चञ्चल शृङ्गार चेष्टायें मनको आकृष्ट कर रही हैं ॥ २० ॥

**सीता**—( विलोक्य, सकौतुकम् )

**विकसितपेशलोत्पलपलाशपुञ्जश्यामलो**
**महेशसौम्यशेखरस्फुरत्सोम-कोमलः ।**
**लतागृहे कोऽयमनङ्गरूप-खण्डनो**
**विलोचनयोर्ददाति मे सुखं शिखण्डमण्डनः ॥ २१ ॥**

( विसट्टपेसलुप्पलप्पलासपुञ्जसामलो
महेससोम्मसेहरप्फुरन्तसोमकोमलो ।
लदाघरम्मि को इमो अणङ्गरूअखण्डणो
विलोअणाण देइ मे सुहं सिहण्डमण्डणो ॥ )

---

आकर्षन्ति । ललितलक्षणं यथा साहित्यदर्पणे—
'सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत् ।' इति ।

अत्रोपमाऽलङ्कारः । नर्दटकं वृत्तं, तल्लक्षणं यथा—
'यदि भवतो नजौ भजजला गुरु नर्दटकम् ।' इति ॥ २० ॥

सीताऽभिरामचन्द्रं वर्णयति—विकसेति । विकसितपेशलोत्पलपलाशपुञ्जश्यामलो महेशसौम्यशेखरस्फुरत्सोमकोमलः अनङ्गरूपखण्डनः शिखण्डमण्डनो लतागृहे अयं को मे विलोचनयोः सुखं ददातीत्यन्वयः ।

विकसितपेशलोत्पलपलाशपुञ्जश्यामलः = विकसितः ( प्रफुल्लः ) 'विसट्ट' स्थाने 'फुरन्ते'ति पाठे स्फुरन् = विकासं प्राप्नुवन्नित्यर्थः ) पेशलः ( कोमलः ) च उत्पलपलाशपुञ्जः ( कुवलयदलसमूहः ) स इव श्यामलः ( नीलवर्णः ) । पुनः महेशसौम्यशेखरस्फुरत्सोमकोमलः = महेशस्य ( महादेवस्य ) सौम्यशेखरे ( मनोहरमौलौ ) स्फुरन् ( भासमानः ) यः सोमः ( चन्द्रः ) स इव कोमलः ( मृदुलः ) । एवं च अनङ्गरूपखण्डनः = कामसौन्दर्यखण्डनकारकः, कामादपि सुन्दरतर इति भावः । अत्र अनङ्गरूपं खण्डयतीति 'कृत्यल्युटो बहुलम्' इत्यत्र बहुलग्रहणसामर्थ्यात्कर्तरि ल्युट् । एतादृशः शिखण्डमण्डनः—मयूरपिच्छमण्डितः, शिखण्डं मण्डनं यस्य सः । 'शिखण्डस्तु पिच्छबर्हे नपुंसके ।' इत्यमरः । लतागृहे = निकुञ्जे, अवस्थित इति शेषः । अयं = निकटस्थः, कः = जनः, मे = मम, विलोचनयोः = नेत्रयोः

---

**सीता**—( देखकर, कौतुकके साथ (

विकसित कोमल नीलकमलोंके पत्रसमूहके सदृश नीलवर्ण, महादेवजीके मनोहर शेखरमें भासमान चन्द्रके सदृश कोमल, कामदेवके रूपको मात करने वाला लतागृहमें अवस्थित यह कौन पुरुष मेरे नेत्रोंमें सुख दे रहा है ॥ २१ ॥

सखी—भर्तृदारिके, कथय कथय, कथं लतालोकनाद्विरतासि !

( सीताऽनाकर्णितकेन तदेव पञ्चमस्वरं पठति )

सखी—(उपसृत्य) कथमियमन्यचित्तेव लक्ष्यते ? क्व पुनश्चित्तमस्याः ? ( रामं दृष्ट्वा, साकूतम् ) अये, इदमस्याश्चित्तगजबन्धनालानम्। ( पुनः सीतां करे धृत्वा ) प्रणयमधुरोऽपि सखीजनः किमवधीर्यते ? अथवोचितमिदम्, अधुना हि तवायं हृदयमधिवसति।

सीता—( स्वगतम् ) कथमवगतास्म्यनया। ( कहं अवगदह्मि इमाए ! )

( इति लज्जां नाटयति )

---

सुखम्=आनन्दं, ददाति=वितरति। अत्रोपमाऽलङ्कारः। पञ्चचामरं वृत्तं, तल्लक्षणं यथा—'प्रमाणिकापदद्वयं वदन्ति पञ्चचामरम्।' इति।

प्रमाणिकालक्षणं यथा—'प्रमाणिका जरौ लगौ' इति॥ २१॥

सखीति। लताऽऽलोकनात्=व्रततिदर्शनात्, विरते'तिपदेन योगे 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति पञ्चमी।

अनाकर्णितकेन=आकर्णनरहितेनेव भावेन, उपलक्षितेति शेषः।

सखीति। अन्यचित्ता=अन्यमनस्का, अन्यस्मिंश्चित्तं यस्याः सा। साऽऽकूतं=साऽभिप्रायम्। अस्याः=एतस्याः, सीताया इत्यर्थः। चित्तगजबन्धनालानं=चित्तम् ( मनः ) एव गजः ( हस्ती ) तस्य बन्धनायाऽऽलानम् ( स्तम्भः )। राम एव अस्याश्चित्तं बद्धमिति भावः। प्रणयमधुरः=प्रेममाधुर्यसम्पन्नः। अवधीर्यते=तिरस्क्रियते। हृदयं=चित्तम्, 'अधिवसती'ति पदेनयोगे 'उपान्वध्याङ्वस' इत्याधारस्य कर्मत्वाद्द्वितीया।

सीतेति। अवगता=ज्ञाता। इमं=रामम्, उद्दिश्येति शेषः। तुम्वं='कोपि-

---

सखी—राजकुमारि! कहिए कहिए। क्यों आप लता नहीं देख रही हैं? ( सीता अनसुनी करके फिर उसी श्लोकको पञ्चमस्वरसे पढ़ती हैं। )

सखी—( निकट जाकर ) क्यों यह अन्यमनस्कके समान प्रतीत हो रही है? इसका चित्त कहां पर है?

( रामको देखकर अभिप्रायपूर्वक ) अरे। ये इसके चित्तरूप हाथीके बन्धनके स्तम्भ हैं। ( फिर सीताको हाथसे पकड़कर )

प्रणयसे मधुर सखीजनका भी तिरस्कार करती हो? अथवा यह उचित है। क्योंकि इससमय ये तुम्हारे हृदयमें रहते हैं।

सीता—( मन ही मन ) कैसे इसने मुझे जान लिया? ( लज्जाका अभिनय करती हैं। )

सखी—( स्वगतम् ) कथमियं लज्जते ? तदन्यतो नयामि । ( प्रकाशम् ) कथमद्यापि हृदयं न मुञ्चति ते प्रणयकोपः ?

सीता—( स्वगतम् ) कोपमुद्दिश्यानया भणितम्, न पुनरिमम् । ( कोवमुद्दिसिअ इमाए भणिदं ण उण इमम् ) ( प्रकाशम् ) हला, कथं तुभ्यं, कोपिष्यामि । केवलमन्यचित्ततया न संभावितासि । ( हला, कहं तुह कुविस्सं । केवलमण्णचित्तदाए ण सम्भाविदासि )

सखी—क तर्हि दत्तचित्तासि ?

सीता—आरामे । ( आरामम्मि )

सखी—( विहस्य ) अहो ! ते चातुर्यम्, यत आकारप्रकटनेनैवाकार-गुप्तिं कृतवत्यसि ।

( सीता सलज्जमधोमुखी तिष्ठति )

---

ष्यामी'ति पदेन योगे 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति चतुर्थी ।

सखीति । आकारप्रकटनेन = 'आ'वर्णप्रकाशनेन, आरामपद इति शेषः । आकार-गुप्तिम् = अभिप्रायगोपनं, रामे दत्तचित्ताऽपि रामपदं आकारयोजनेनाऽभिप्रायगोपनं कृतवत्यसीति भावः ।

उत्तरङ्गयेति । हे कुरङ्गलोचने ! कमलगर्भमोचने लोचने उत्तरङ्गय । हे सुन्दरि ! अम्बरं कलिन्दनन्दिनीवीचिडम्बरगभीरभू अस्तित्यन्वयः ।

---

सखी—( मन ही मन ) किसतरह यह लज्जित हो रही है । इसलिए इसे दूसरी ओर ले जाती हूं । ( सुनाकर ) कैसे अभीतक प्रणयकोप तुम्हारे हृदयको नहीं छोड़ रहा है ?

सीता—( मन ही मन ) कोपको उद्देश्य करके इसने कहा है इन ( राम ) को नहीं । (सुनाकर) सखि ! कैसे तुमपर कोप करूंगी ? मैं अन्यमनस्क होनेसे ही तुम्हारी संभावना नहीं कर सकी ।

सखी—तब तुमने चित्त कहां दिया है ?

सीता—आराममें ।

सखी—( हंसकर ) अहो ! तुम्हारी चतुरता । जो कि तुमने 'आ'कार प्रकाश करके ही आकार छिपा लिया ।

( सीता लज्जासे अवनतमुखी होकर रहती हैं । )

रामः—

उत्तरङ्गय कुरङ्गलोचने ! लोचने कमलगर्वमोचने ।

अस्तु सुन्दरि ! कलिन्दनन्दिनीवीचिडम्बरगभीरमम्बरम् ॥२२॥

सखी—( सप्रणयस्मितम् ) अलमालिजनेऽपि हृदयापलापेन । ननु विदितं मया—

अत्र ते सखि ! शिखण्डमण्डने, पुण्डरीकरमणीयलोचने ।

श्यामतामरसदामकोमले, रामनामनि मनो मनोभवे ॥ २३ ॥

---

हे कुरङ्गलोचने = हे मृगाक्षि !, कमलगर्वमोचने = पद्मदर्पत्यागकारिणी, कमलगर्वस्य मोचनं याभ्यां, ते । कमलादप्यधिकतरसुन्दरे इति भावः । तादृशी, लोचने= नेत्रे, उत्तरङ्गय = उन्नमय, उन्नते कुरु । तेन च हे सुन्दरि = हे सौन्दर्यसम्पन्ने, हे सीत इति भावः । अम्बरम् = आकाशं, कलिन्दनन्दिनीवीचिडम्बरगभीरं = यमुनातरङ्गसमूहगम्भीरं, कलिन्दनन्दिन्याः ( सूर्यतनयायाः, यमुनाया इत्यर्थः ) वीचयः ( तरङ्गाः ) तासां डम्बरः ( समूहः ), तेन गभीरम् ( गम्भीरं गहनमिति भावः ) अस्तु = भवतु । नीलोत्पलदलसमयोस्त्वल्लोचनयोरुपरि प्रसारणेनाऽऽकाशं यमुनातरङ्गोपमं नीलवर्णं भवत्विति भावः । उपमा, व्यतिरेकोऽसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरलङ्कारस्तथा चैतेषां मिथोऽनपेक्षया स्थितेः संसृष्टिः । रथोद्धतावृत्तम् ॥२२॥

सखीति । आलिजनेऽपि = सखीजनेऽपि । हृदयाऽपलापेन = हृदयस्थिताऽभिप्रायनिह्नवेन ।

अत्रेति । हे सखि ! शिखण्डमण्डने पुण्डरीकरमणीयलोचने श्यामतामरसदामकोमले अत्र रामनामनि मनोभवे ते मनः ( इति मया विदितम् ) इत्यन्वयः ।

हे सखी = हे वयस्ये ! सीते ! शिखण्डमण्डने = मयूरपिच्छभूषणे, पुण्डरीकरमणीयलोचने = पुण्डरीके ( श्वेतकमले ) इव रमणीये ( सुन्दरे ) लोचने ( नेत्रे ) यस्य, तस्मिन् । श्यामतामरसदामकोमले = श्यामानि ( कृष्णवर्णानि ) यानि ताम-

---

राम—हे हरिणाक्षि सीते ! कमलके घमण्डको छुड़ानेवाले नेत्रोंको ऊपर कराओ ( ऊँचा करो )। हे सुन्दरि ! आकाश यमुनाके तरङ्गसमूहके सदृश गहन हो ॥ २२ ॥

सखी—( प्रेमके मन्दहास्यके साथ ) सखीजनमें भी हृदयको मत छिपाओ। मैंने जान लिया।

हे सखि ! मयूरपिच्छसे भूषित, श्वेतकमलोंके सदृश सुन्दर नेत्रोंसे युक्त और नीलकमलकी पङ्क्तिकी नाईं कोमल इस रामनामके कामदेवमें तुम्हारा मन है ( यह मैंने जान लिया )॥ २३ ॥

सीता—हला, पश्य पश्य ! ( हला, पेक्ख पेक्ख )

मदनवधूनूपुररवरमणीयं किमपि किमपि कूजन् ।
माकन्दमुकुलमधुरसमधुरमुखो मधुकरो भ्रमति ॥ २४ ॥
( मअणवहूणेउररवरमणिज्जं किम्पि किम्पि कूजन्तो ।
माअन्दमुउलमहुरसमहुरमुहो महुअरो भमइ ॥ )

( पुनः स्वगतम् )

अयि पिवतं लोचने ! प्रियजनवदनारविन्दमकरन्दम् ।

---

रसानि ( कमलानि, नीलोत्पलानीति भावः ) तेषां दाम ( पङ्क्तिः ) तद्विव कोमलः ( मृदुलः ) तस्मिन् । अत्र = अस्मिन् , रामनामनि = रामाऽऽख्ये, रामो नाम यस्य स तस्मिन् ! मनोभवे = कामदेवे, ते = तव, मनः = चित्तं, संलग्नमिति शेषः । इति मया विदितमिति पूर्वतः सम्बन्धः । अत्रोपमाऽलङ्कारः । रथोद्धता वृत्तम् ॥ २३ ॥

मदनेति । मदनवधूनूपुररवरमणीयं किमपि किमपि कूजन् माकन्दमुकुलमधुरसमधुरमुखो मधुकरो भ्रमतीत्यन्वयः । मदनवध्वाः ( कामपत्न्याः, रतेरित्यर्थः ) नूपुररवः ( मञ्जीरशब्दः ) स इव रमणीयं ( मनोहरम् ) तद्यथा तथा । किमपि किमपि = अनिर्वाच्यमव्यक्तं यथा स्यात्तथा । कूजन् = शब्दं कुर्वन् , माकन्दमुकुलमधुरसमधुरमुखः = माकन्दमुकुलस्य ( आम्रकुड्मलस्य, 'कुड्मलो मुकुलोऽस्त्रियाम्' ) यो मधुरसः ( मकरन्दः ) तेन मधुरं ( माधुर्यपूर्णम् ) मुखम् ( आननम् ) यस्य सः । तादृशो मधुकरः = भ्रमरः । भ्रमति = भ्रमणं करोति । वृत्त्यनुप्रासः । आर्या जातिः ॥

पुनः सीता स्वनयने प्रत्याह—अयीति । अयि लोचने ! प्रियजनवदनाऽरविन्दमकरन्दं पिबतम् । अयि तरले ! 'पुनः युवां क्व, अयं च क्व' इति विचारयतमित्यन्वयः ।

अयीति कोमलामन्त्रणे, लोचने = नेत्रे ! प्रियजनवदनाऽरविन्दमकरन्दं=प्रियजनस्य ( वल्लभजनस्य, रामस्येति भावः ) वदनम् ( मुखम् ) अरविन्दम् ( कमलम् ) इव, तस्य मकरन्दं ( पुष्परसम् ), पिबतं = धयतं, दयितजनवदनशोभां

---

सीता—सखि ! देखो देखो ।

कामदेवकी पत्नी ( रति ) के नूपुरशब्दके सदृश मनोहर और अनिर्वचनीय प्रकारसे शब्द करता हुआ आमके मुकुलके मकरन्दको पान करनेसे मधुर मुख शब्दवाला भ्रमर भ्रमण कर रहा है ॥ २४ ॥

( फिर मन ही मन )

हे नेत्रों ! प्रियजन ( राम ) के मुखकमलके मकरन्दका पान कर लो । हे चञ्चलों !

अयि तरले ! विचारयतं 'पुनः क युवां, क्वायं च' ॥ २५ ॥
( अइ पिबह लोअणाइं पिअजणवअणारविन्दमअरन्दम् ।
अइ तरलाइं विआरह पुण कह तुह्मे कह इमो अ ॥ )

रामः—( निर्वर्ण्य )

सर्वस्वं नवयौवनस्य, भवनं भोगस्य, भाग्यं दृशां,
सौभाग्यं मदविभ्रमस्य, जगतः सारं, फलं जन्मनः ।
साकूतं कुसुमायुधस्य, हृदयं रामस्य, तत्त्वं रतेः,

---

मणयाऽतिशयेन पश्यतमिति भावः । अयि तरले = हे चञ्चले लोचने ! पुनः = भूयः युवां = लोचने, क = कुत्र, स्थास्यथ इति शेषः, अयं च = निकटस्थः प्रियजनश्च, राम इति भावः । क = कुत्र, स्थास्यतीति शेषः, भूयोऽनेन समं युवयोः समागमो दुर्घट इति भावः । इति=इत्थं, विचारयतं = विचारं कुरुतम् । अत्रोत्तरार्द्धस्य पूर्वार्द्धगतवाक्यार्थं प्रति हेतुत्वात्काव्यलिङ्गमलङ्कारः । तल्लक्षणं यथा—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।' इति । आर्या जातिः ॥ २५ ॥

रामः सीताया आलोकितं वर्णयति—सर्वस्वमिति ।

नवयौवनस्य सर्वस्वं, भोगस्य भवनं, दृशां भाग्यं, मदविभ्रमस्य सौभाग्यं जगतः सारं, जन्मनः फलम् । कुसुमाऽऽयुधस्य साऽऽकूतं, रामस्य हृदयं, रतेस्तत्त्वं शृङ्गारस्य रहस्यम् उत्पलदृशः तत् किञ्चित् आलोकितम् इत्यन्वयः । नवयौवनस्य= नूतनतारुण्यस्य, सर्वस्वं = सकलसम्पत्तिः, भोगस्य = दर्शनादिजन्यस्य सुखसाक्षात्कारस्य, भवनम् = आश्रमस्थानम् । दृशां = नेत्राणां, भाग्यं = भागधेयम् । भाग्यदैवैतादृशस्याऽऽलोकितस्य दृग्गोचरतेति भावः । मदविभ्रमस्य=यौवनमदविलासस्य, सौभाग्यं = सुभगत्वम् । जगतः = लोकस्य, सारं = सर्वोत्कृष्टं, तत्त्वमिति शेषः । जन्मनः = जननस्य, फलम् = सत्परिणामः, एतद्विलोकनेनैव जन्मसाफल्यमिति भावः । कुसुमायुधस्य = कामदेवस्य, साऽऽकूतम् = अभिप्रायविशिष्टं, स्थानमिति शेषः । रामस्य = मम, हृदयं = मनः, एतेन सीताऽऽलोकितस्यैव रामसुखकरणत्वं

---

'फिर तुम दोनों कहाँ ? और ये कहाँ ?' इस बातका विचार करलो ॥ २५ ॥

राम—( देखकर )

नई जवानीका सर्वस्व, भोगका भवन ( आश्रयस्थान ), नेत्रोंका भाग्य, यौवनमदके विलासका सौभाग्य, संसारका सार, जन्मका सत्परिणाम, कामदेवका अभिप्रायविशिष्ट स्थान, रामका हृदय, रागकी पराकाष्ठा और शृङ्गारका रहस्य, कुवलयलोचना ( सीता ) का

शृङ्गारस्य रहस्यमुत्पलदृशस्तत् किञ्चिदालोकितम् ॥ २६ ॥

( सीता स्वगतं पुनस्तामेव गाथां पठति )

सखी—अयि भर्तृदारिके, पश्य ।

दलदमलकोमलोत्पलपलाशशङ्काकुलोऽयमलिपोतः ।
तव लोचनयोरनयोः परिसरमनुवेलसरति ॥ २७ ॥

सीता—( सहर्षमात्मगतम् ) अपि लोचने बद्धषट्पदे ननु सुखोपश्रुतिरियम् । ( अपि लोअणाइं बद्धसप्पदाइं णं सुहोपसुदीयम् )

---

चोच्यते । रतेः = रागस्य, तत्त्वं = पराकाष्ठा । शृङ्गारस्य = आदिरसस्य, रहस्यम् = उपनिषत्, उत्पलदृशः = कुवलयनयनायाः, सीताया इत्यर्थः । तत् = असकृत्कृतसाक्षात्कारं, किञ्चित् = अनिर्वचनीयम्, आलोकितं = दर्शनम्, अस्तीति शेषः । अत्र रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

सीतेति । गाथाम् = आर्याम्, प्राकृतभाषायां गाथापदमार्यार्थे प्रयुज्यते ।

सखी भ्रमरव्याजेन रामं—वर्णयति—दलदमलेति । दलदमलकोमलोत्पलपलाशशङ्काऽऽकुलोऽयम् अलिपोतः तव अनयोर्लोचनयोः परिसरम् अनुवेलम् अनुसरतीत्यन्वयः । दलदमलकोमलोत्पलपलाशशङ्काऽऽकुलः = दलत् ( विकसत् ) अमलं ( निर्मलम् ) कोमलम् ( मृदुलम् ) यदुत्पलं (कुवलयम्) तस्य पलाशस्य (पत्रस्य) शङ्कया ( सन्देहेन ) आकुलः ( व्यस्तः ) 'व्यस्तेत्वप्रगुणाऽऽकुलौ' इत्यमरः । अयं = निकटवर्ती, अलिपोतः = भ्रमरशिशुः, तव = भवत्याः, अनयोः—एतयोः लोचनयोः = नयनयोः परिसरं = पर्यन्तप्रदेशम्, अनुवेलं = प्रतिक्षणम्, अनुसरति=अनुगच्छति । सीतानयनयोः पर्यन्तप्रदेशं नीलोत्पलभ्रान्त्या अयमलिपोतः ( कृष्णवर्णत्वाद्रामचन्द्रोऽपि ) अनुक्षणमनुसरतीति भावः । भ्रान्तिमदलङ्कारस्तल्लक्षणं यथा—

'साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान्प्रतिभोत्थितः ।' इति । आर्या जातिः ॥ २७ ॥

सीतेति । लोचने = नेत्रे, मदीये इति शेषः । बद्धषट्पदे = अनुरागनिगडीकृत-

---

वह अनिर्वचनीय दर्शन है ॥ २६ ॥

( सीता मन ही मन फिर उसी गाथाको पढ़ती हैं । )

सखी—राजकुमारि ! देखिए ।

खिलते हुए निर्मल और कोमल कुवलयके पत्रकी शङ्कासे आकुल यह भ्रमरशिशु आपके इन नेत्रोंके पास प्रतिक्षण अनुसरण कर रहा है ॥ २७ ॥

सीता—( हर्षपूर्वक मन ही मन ) लोचनोंने भी भ्रमरको बद्ध करदिया यह सुखजनकश्रवण है ।

रामः—( सप्रत्याशम् )

अमृतमयपयोधिक्षीरकल्लोललोलैः
स्नपयति तरलाक्षी यत्र मां नेत्रपातैः।
अपि भवतु सदाऽयं सन्मुहूर्त्तः···
( विमृश्य सविषादम् )
···कुतो वा ?
मधुरविधुरमिश्राः सृष्टयो हा! विधातुः ॥ २८ ॥

भ्रमरे। मदीयनेत्रयो रामरूपभ्रमरोऽनुबद्ध इति श्रुत्वा सुखमुत्पद्यत इति भावः।

राम इति। सप्रत्याशम् = आकाङ्क्षासहितं यथा तथा।

रामः सीताऽवलोकनं वर्णयति—अमृतमयेति। तरलाक्षी अमृतमयपयोधिक्षीरकल्लोललोलैः नेत्रपातैः यत्र मां स्नपयति सदाऽपि अयं सन्मुहूर्तो भवतु। वा कुतः ? विधातुः सृष्टयो मधुरविधुरमिश्राः हा! इत्यन्वयः।

तरलाक्षी = चञ्चललोचना, सीतेत्यर्थः। अमृतमयपयोधिक्षीरकल्लोललोलैः = अमृतमयः ( सुधाप्रचुरः ) यः पयोधिः ( समुद्रः ) तस्य क्षीरसमाः ( दुग्धसदृशाः ) ये कल्लोलाः ( महातरङ्गाः ) ते इव लोलाः ( चञ्चलाः ) तैः। तादृशैः नेत्रपातैः = दृष्टिपातैः, कटाक्षपूर्णैरिति भावः। यत्र = यस्मिन्मुहूर्ते, मां = रामं, स्नपयति = प्रक्षालयति, णिजन्तात् 'ष्णाशौच' इति धातोर्लट्। कटाक्षपूर्णैर्नेत्रपातैर्मामनुगृह्णातीति भावः। सदाऽपि = सर्वदाऽपि, अयं = सम्प्रत्यनुभूयमानः, सन्मुहूर्तः = उत्तमः क्षणः, भवतु = अस्तु,। अस्यमनोरथस्याऽसंभावनाविमर्शेन सविषादं पुनरूहते—कुतो वेति। वा = अथवा, कुतः = कस्मात्, हेतोरिदं संभाव्यत इति शेषः। असंभावनायां हेतुं प्रतिपादयति—मधुरेति। विधातुः = ब्रह्मणः, सृष्टयः = रचनाः, मधुरविधुरमिश्राः = मधुरेण ( माधुर्यपूर्णेन, सुखरूपतया विभावितेनेति भावः ) विधुरेण च ( वैधुर्यपूर्णेन, वियोगहेतुत्वाद्दुःखरूपतया विभावितेनेति भावः ) मिश्राः

राम—( इच्छापूर्वक )

चञ्चल नेत्रोंसे युक्त (सीता) अमृतमय समुद्रके दूधके सदृश, महातरङ्गोंके तुल्य, चञ्चल दृष्टिपातोंसे जिसमें मुझे नहा रही है ( अनुगृहीत कर रही है ), सदा ही यह उत्तम मुहूर्त बना रहे।

( विचार कर खेदपूर्वक )

अथवा यह बात कैसे हो सकती है ? ब्रह्माजीकी रचनाएँ संयोग और वियोगसे मिश्रित हैं ॥ २८ ॥

( प्रविश्य )

**चेटी**—भर्तृदारिके, भट्टिनीभिराज्ञप्ताऽस्मि, यत्किल वत्सा जानकी झटिति गृहमानीय विचित्राभरणैर्मण्ड्यताम् । येन तस्याः सानन्दं वदनारविन्दं विलोकयामः । ( भट्टदारिए, भट्टिणीहिं आण्णत्ह्मि । जं किर वत्सा जाणई झत्ति घरमाणीअ विचित्ताहरणेहिं मण्डीअदु । जेण तीए सानन्दं वअणारविन्दं पुलोअह्म )

**सीता**—हण्डे, कथं स्नेहमुग्धा ममाऽम्बाः । ( हण्डे, कहं सिणेहमुद्धाओ मह अम्बाओ )

**चेटिका**—यास्त्वां निसर्गलावण्यचन्द्रलेखां नेपथ्यलक्ष्मीलाञ्छनेनाऽलङ्कर्तुमिच्छन्ति । ( जा तुमं णिसग्गलावण्णचन्दलेहां णेवच्छलच्छीलञ्छणेणालङ्किदुमिच्छन्ति । तहा अ )

---

( मिश्रिताः ) भवन्तीति शेषः । अतोऽयं सन्मुहूर्तः=सदा न स्थास्यतीति भावः । मालिनीवृत्तम् ॥ २८ ॥

चेटीति । भट्टिनीभिः=इतराभी राज्ञीभिः । विचित्राऽऽभरणैः = नैकविधाऽलङ्कारैः । मण्ड्यतां=विभूष्यतां, कर्मवाच्यप्रयोगः ।

सीतेति । हण्डे=नीचां परिचारिकां प्रति सम्बोधनपदमिदं प्रयुज्यते । तदुक्तममरेण—'हण्डे ! हञ्जे ! हलाऽऽह्वाने नीचां चेटीं सखीं प्रति ।' इति । स्नेहमुग्धाः=स्नेहेन ( वात्सल्येन ) मुग्धाः ( मोहयुक्ताः ) ।

चेटिकेति । चेटिका=दासी । याः=अम्बाः निसर्गलावण्यचन्द्रलेखां=निसर्गेण ( स्वभावेन ) लावण्यं ( सौन्दर्यम् ) यस्याः सा निसर्गलावण्या, सा चाऽसौ चन्द्रलेखा ( चन्द्ररेखासदृशी ), ताम् । लाक्षणिकोऽयं प्रयोगः । नेपथ्यलक्ष्मीलाञ्छनेन=नेपथ्यलक्ष्मीः ( भूषणरचनाऽऽदिजनितशोभा ) सैव लाञ्छनं ( चिह्नं, कलङ्को वा )

---

( प्रवेश कर )

**चेटी**—( परिचारिका ) राजकुमारि ! रानियोंने आज्ञा दी है कि 'पुत्री सीताको झटपट भवनमें लाकर विचित्र अलङ्कारोंसे अलङ्कृत करो । जिससे कि उनके मुखकमलको आनन्दके साथ देख लें ।

**सीता**—परिचारिके ! मेरी मातायें किसतरह स्नेहसे मोहयुक्त हो रही हैं ।

**चेटिका**—जो कि स्वभावसे ही लावण्यपूर्ण चन्द्ररेखाके सदृश आपको भूषणादि जनितशोभारूप लाञ्छनसे अलङ्कृत करनेकी इच्छा करती हैं ।

अयि ! तव मुखलेखा चन्द्रबिम्बे सस्नेहा,
दशनकिरणलक्ष्मीरच्छज्योत्स्नासदृक्षा।
कुवलयदलद्रोणीकन्दरायां वहन्ती,
तरलबहलमिष्टा दुग्धधारेव दृष्टिः ॥ २९ ॥

( अइ तुह मुहलेहा चन्दबिम्बे सणेहा
दसणकिरणलच्छी अच्छजोह्णासरिच्छी।
कुवलय-दलदोणी-कन्दराए वहन्ती
तरलबहलमिट्ठी दुद्धधारे व्व दिट्ठी ॥ )

तदागच्छ, गच्छामो निजगृहमेव। (ता आअच्छ, गच्छम्ह णिअघरं जेव्व)

रामः—( सविषादम् ) कथं नयनपथमतिक्रान्तैव कान्ता ?।

---

तेन। 'आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम्।' इत्यमरः। स्वभावसुन्दरीं त्वां यद्भूषणरचनादिनाऽलङ्कर्तुमिच्छन्त्यस्याः, अतस्ताः मुग्धा एवेति भावः।

प्रकृतिसुन्दर्याः सीतायाः कृते नेपथ्यविधानस्याऽनावश्यकतां प्रतिपादयति—अयीति। अयि ! तव मुखलेखा चन्द्रबिम्बे सस्नेहा, दशनकिरणलक्ष्मीः अच्छज्योत्स्नासदृक्षा, दृष्टिः कुवलयदलद्रोणीकन्दरायां वहन्ती तरलबहलमिष्टा दुग्धधारेवे-त्यन्वयः। अयि = हे सीते !, तव=भवत्याः, मुखलेखा=वदनरेखा, चन्द्रबिम्बे = इन्दु-मण्डले, सस्नेहा = प्रणयिनी, त्वदीया वदनरेखा चन्द्रमण्डलसदृशीति भावः। एवं च दशनकिरणलक्ष्मीः = दन्तांऽशुशोभा, अच्छज्योत्स्नासदृक्षा = अमलचन्द्रिका-तुल्या, तव = भवत्याः, दृष्टिः = दृक्, कुवलयदलद्रोणीकन्दरायां = कुवलयपुष्पस्य ( उत्पलपत्रस्य ) या द्रोणी ( नौकाकारा पत्ररचना ), भाषायां 'दोने'ति नाम्ना ख्यातेति भावः तस्याः कन्दरायां ( गुहायाम् ) वहन्ती ( स्यन्दमाना )। तरल-बहलमिष्टा = तरला ( चञ्चला ) बहलमिष्टा ( अधिकमधुरा ), दुग्धधारेव = पयो-धारेव, अस्तीति शेषः। स्वभावसुन्दरस्य त्वच्छरीरस्य कृत्रिमभूषणान्तरपरिधानेन किमिति न विमृशन्ति ते मातर इति भावः। उपमाऽलङ्कारः। मालिनीवृत्तम् ॥२९॥

राम इति। कान्ता = वल्लभा, सीतेति भावः। नयनपथं = नेत्रमार्गं, दृग्गोचरता-

---

हे राजकुमारि ! आपकी मुखरेखा चन्द्रमण्डलके समान है, दन्तकिरणोंकी शोभा निर्मल चाँदनीके सदृश है और दृष्टि नीलकमलके पत्तेकी द्रोणीके मध्यभागमें बहती हुई चञ्चल और अधिक मधुर दूधकी धाराके तुल्य है ॥ २९ ॥

इसलिए पधारिए, अपने भवनमें ही चलें।

राम—( खेदके साथ ) किसतरह सुन्दरी नेत्रमार्गसे ओट ही होगई ?

( पुनः सप्रत्याशम् )

अप्याविरस्तु भूयोऽपि मम लोचनयोरियम् ।
दिवसेऽन्तर्हिता नक्तं चन्द्रिकेव चकोरयोः ॥ २० ॥

लक्ष्मणः—आर्य, इयमाविरस्ति ।

रामः—( सहर्षम् ) कथं पुनः प्राप्ता प्रेयसी । ( विलोक्य ) न तावन्नूनं किमप्यन्यदभिसन्धाय तदिदमुक्तं वत्सेन । (उच्चैः) वत्स, केयमाविरस्ति ।

लक्ष्मणः—

मुग्धस्य केलिविजितस्मरचापयष्टे-

---

मित्यर्थः । नयनयोः पन्था नयनपथस्तम् । 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः । अतिक्रान्ता = लङ्घितवती ।

अप्याविरस्त्विति । इयं ममलोचनयोः भूयोऽपि, दिवसेऽन्तर्हिता चन्द्रिका नक्तं चकोरयोरिव आविरस्त्वित्यन्वयः । इयम् = एषा, सीतेत्यर्थः । मम = रामस्य, लोचनयोः = नेत्रयोः, अग्र इति शेषः भूयोऽपि = पुनरपि, दिवसे = दिने, अन्तर्हिता = तिरोहिता, भास्करकरैरिति शेषः । चन्द्रिका = कौमुदी, नक्तं = रात्रौ, चकोरयोरिव = चन्द्रिकापायिपक्षियुगस्येव, अग्र इति शेषः । चकोरी च चकोरश्च चकोरौ, तयोः । 'पुमान्स्त्रिया' इत्येकशेषः । आविरस्तु = आविर्भवतु, दिवाऽदर्शनं गता चन्द्रिका यथा नक्तमुदयमासाद्य चकोरौ सुखयति तथैवेयं सीताऽपि पुनर्दृग्गोचरतामुपेत्या मामानन्दयत्विति भावः । अत्रोपमाऽलङ्कारः । अनुष्टुब्वृत्तम् ॥ २० ॥

लक्ष्मण इति । इयम् = एषा, अथवा आर्या = पूज्या, सीतेति भावः । सन्ध्याऽर्थान्तरं व्यज्यते ।

राम आर्याऽऽविरस्तीति मनसिकृत्य हर्षं प्रदर्शयति—राम इति । प्रेयसी = प्रियतमा, सीतेति भावः ।

सन्ध्याऽऽगमनं वर्णयति लक्ष्मणो मुग्धस्येति । ननु ! मुग्धस्य केलिविजित-

---

( फिर आशापूर्वक )

दिनमें अदृश्य चांदनी रातमें जैसे चकोरोंके सामने आविर्भूत होती है उसीतरह यह ( सीता ) मेरे नेत्रोंमें प्रकट हो ॥ २० ॥

लक्ष्मण—आर्य ! प्रकट हो गई है ।

राम—( हर्षके साथ ) प्रेयसी कैसे फिर प्राप्त होगई ? ( देखकर ) निश्चय ही किसी दूसरे विषयको लक्ष्य करके वत्स लक्ष्मणने ऐसा नहीं कहा है । ( ऊँचे स्वरसे ) यह कौन प्रकट हो गई है ?

लक्ष्मण—हे आर्य ! सुन्दर और क्रीडासे ही कामदेवकी धनुर्यष्टिको जीतनेवाले

रातन्वती रुचिमतीव सुधाकरस्य ।
रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः
सन्ध्याविरस्ति ननु काऽपि पतिंवरेव ॥ २१ ॥

रामः—वत्स, एवमेतत्, तथा हि—

कृत्वा प्रबुद्धकमलामखिलां त्रिलोकी-

स्मरचापयष्टेः सुधाकरस्य रुचिमतीवाऽऽतन्वती रागोद्धुरा स्फुटम् उदञ्चिततारकश्रीः सन्ध्या काऽपि पतिंवरेव आविरस्तीत्यन्वयः ।

ननु = हे आर्य !, मुग्धस्य = सुन्दरस्य, 'मुग्धः सुन्दरमूढयो'रित्यमरः । केलिविजितस्मरचापयष्टेः = केल्या ( क्रीडयैव, अनायासेनेति भावः ) विजिता ( पराजिता ) स्मरचापयष्टिः ( कामकार्मुकयष्टिः ) येन, तस्य । तादृशस्य सुधाकरस्य = चन्द्रमसः, कस्यचिन्नायकस्य वा । रुचिं = कान्तिं, प्रणयं वा । अतीव = अत्यर्थं, क्रियाविशेषणमिदम् । आतन्वती = विस्तारयन्ती, रागोद्धुरा = रागेण ( लौहित्येन, दिनकरकरजनितेनेति शेषः । अनुरागेण वा ) उद्धुरा ( युक्ता ) । स्फुटं = व्यक्तं, यथा स्यात्तथा । उदञ्चिततारकश्रीः = उदञ्चिता ( प्रदर्शिता ) तारकाणां ( नक्षत्राणां, तारकयोः = नेत्रकनीनिकयोर्वा ) श्रीः (शोभा) यया सा । तादृशी सन्ध्या = सायंवेला, काऽपि = अनिर्दिष्टनामधेया, पतिंवरेव = स्वयंवरा कन्येव, पतिं वृणोतीति, पत्युपपदपूर्वकात् 'वृञ् संभक्तौ'विति धातोः 'संज्ञायां भृतॄवृजिधारिसहितपिदम' इति खच्, 'अरुर्द्विषदजन्तस्य मुम्' इति मुम् । 'अथ स्वयंवरा । पतिंवरा च वर्याचे'त्यमरः । आविरस्ति = प्रादुर्भवति । अत्र श्लेषस्योपमायाश्चाऽङ्गाङ्गिभावेन सङ्करः । वसन्ततिलकं वृत्तम् ॥ २१ ॥

कृत्वेति । असौ भगवान् अरविन्दबन्धुः अखिलां त्रिलोकीं प्रबुद्धकमलां कृत्वा अन्तःप्रसुप्तहरिनाभिसरोजबोधकौतूहलीव इदानीम् अम्भोनिधेः गर्भं विशतीत्यन्वयः ।

असौ = विप्रकृष्टस्थानस्थितः, भगवान् = ऐश्वर्यसंपन्नः, अरविन्दबन्धुः = कमलबान्धवः, विकासकत्वादिति भावः । अखिलां = समस्तां, त्रिलोकीं = त्रिभुवनं, प्रबुद्धकमलां = प्रबुद्धानि ( विकसितानि ) कमलानि ( पद्मानि ) यस्यां सा, ताम् ।

चन्द्रमाकी या किसी वर की कान्तिको अतिशय ही फैलानेवाली रागसे ( लालिमासे या अनुरागसे ) युक्त व्यक्तरूपसे नक्षत्रोंकी या नेत्रोंकी पुतलियोंकी शोभाको प्रदर्शित करनेवाली सन्ध्या, कोई स्वयंवर करनेके लिए प्रस्तुत वधूके समान प्रकट हो रही है ॥ २१ ॥

राम—वत्स ! यह ठीक है । जैसे कि—

वे भगवान् कमलबान्धव ( सूर्य ) सब लोकोंके कमलोंको विकसितकर विष्णु भगवान्के

अम्भोनिधेर्विशति गर्भमसाविदानीम् ।
अन्तःप्रसुप्तहरिनाभिसरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥ ३२ ॥

लक्ष्मणः—आर्य, दृश्यताम्-अयमीषन्मुकुलितराग इव गगनाभोगः ।
रामः—एवमेतत्—इदानीं हि—
प्राचीमालम्बमाने घनतिमिरचये बान्धवे बन्धकीनाम्

---

कृत्वा = विधाय, अन्तःप्रसुप्तहरिनाभिसरोजबोधकौतूहलीव = अन्तः ( अभ्यन्तरे, हरिदेहाऽभ्यन्तरे इति भावः ) प्रसुप्तं ( निद्राणं, निमीलितमिति भावः ) यत् हरिनाभिसरोजं ( विष्णुनाभिकमलम् ) तस्य बोधः विकासनम् ), तस्मिन् कौतूहली इव ( कुतूहली इव उत्कण्ठित इवेति भावः ) । इदानीं = साम्प्रतं सन्ध्याकाल इति भावः । अम्भोनिधेः = समुद्रस्य, गर्भम् = अन्तरं, विशति = प्रविशति । सूर्यो हरिनाभिकमलं विकासयितुमुत्कण्ठित इव समुद्रान्तरं प्रविशतीति भावः । अत्रहेतूत्प्रेक्षाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३२ ॥

लक्ष्मण इति । गगनाऽऽभोगः = गगनस्य ( आकाशस्य ) आभोगः ( परिपूर्णता ) । ईषन्मुकुलितराग इव ईषत् ( किञ्चित् ) मुकुलितः ( विकसितः ) रागः ( लौहित्यम् ) यस्य सः ।

रामो लक्ष्मणोक्तिं समर्थयते—प्राचीमिति । बन्धकीनां बान्धवे घनतिमिरचये प्राचीम् आलम्बमाने, स्वैरिणीनां वैरिणि शशिकरनिकरे च प्रतीचीं सम्प्राप्ते, अर्धश्यामोपलार्धस्फटिकमिव दिशाम् अन्तरालं कालिन्दीजह्नुकन्यामिलदमलजलस्पन्दसन्दोहमैत्रीं विधत्त इत्यन्वयः ।

बन्धकीनां = पुंश्चलीनाम् , अभिसारिणीनामिति शेषः । 'पुंश्चलीचर्षणी बन्धक्यसती कुलटेत्वरी ।' इत्यमरः । बान्धवे = बन्धौ, तद्रहस्यस्य गोपकत्वादिति भावः । तादृशे घनतिमिरचये = निबिडाऽन्धकारसमूहे, प्राचीं = पूर्वदिशाम् , आलम्बमाने = आश्रयति सति, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी, एवं परत्राऽपि । एवं च स्वैरिणीनां = कुलटानाम् , अभिसारिणीनामिति शेषः, स्वेनेरितुं शीलमस्ति

---

शरीरके भीतर मुद्रित नाभिकमलको विकसित करनेमें उत्कण्ठितके समान होकर इस समय समुद्रके भीतर प्रवेश कर रहे हैं ॥ ३२ ॥

लक्ष्मण—आर्य ! देखिए । यह आकाशमण्डल कुछ लालिमासे युक्त हो रहा है ।

राम—यह ठीक है । क्यों कि इससमय—

कुलटाओंके बन्धु गाढ अन्धकारसमूहके पूर्वदिशाको और कुलटाओंके वैरी चन्द्र-

सम्प्राप्ते च प्रतीचीं शशिकरनिकरे वैरिणि स्वैरिणीनाम्।
अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तरालं विधत्ते
कालिन्दीजह्नुकन्यामिलदमलजलस्यन्दसन्दोहमैत्रीम् ॥ २३ ॥

( पुनः सहर्षमङ्गुल्या दर्शयन् )

एतत्कोककुटुम्बिनीजनमनःशल्यं, चकोराङ्गना-

---

यासां ताः स्वैरिण्यस्तासाम्, ताच्छील्ये णिनिः। 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणम्' इति परिभाषया 'स्वादीरेरिणो'रिति वृद्धिः। वैरिणि रिपौ, प्रकाशेन तद्रहस्यप्रदर्शनादिति भावः। तादृशे शशिकरनिकरे च = चन्द्रकिरणसमूहे च, प्रतीचीं = पश्चिमदिशां, संप्राप्ते = समासादिते, तथा च अर्धश्यामोपलार्धस्फटिकमिव = अर्धम् ( अर्धभागः ) श्यामोपलः ( कृष्णपाषाणः ) यस्य तत्, एवं च अर्धम् ( अर्धभागः ) स्फटिकः ( सूर्यकान्तमणिः ) यस्य तत्, तादृशमिव, दिशामन्तरालं ( दिङ्मध्यभागः, ) कालिन्दीजह्नुकन्यामिलदमलजलस्यन्दसन्दोहमैत्रीं = कालिन्दीजह्नुकन्ययोः ( यमुनाजाह्नव्योः ) मिलन् ( संगमं प्राप्नुवन् ) योऽमलजलस्यन्दसन्दोहः ( निर्मलसलिलप्रवाहसमूहः ) तस्य मैत्रीं = सख्यं, सादृश्यमिति भावः। विधत्ते = करोति। सूर्यस्याऽस्ताचलगमनाद्याप्यां तमस्तोमे संजाते, प्रतीच्यां चोदयेन चन्द्रमसि प्रकाशमाने कृष्णशुक्लपाषाणद्वयमिश्रितमिव दिगन्तरालं यमुनाजाह्नव्योर्मिश्रितजलप्रवाहस्य सादृश्यं भजतीति भावः। उपमाऽलङ्कारः। स्रग्धरा वृत्तं, तल्लक्षणं यथा—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।' इति ॥२३॥

चन्द्रोदयं वर्णयति—एतदिति। कोककुटुम्बिनीजनमनःशल्यं, घटितयोः चकोराङ्गनाचञ्चुकोटिकपाटयोः उद्घाटिनी कुञ्चिका, दग्धस्याऽपि स्मरतरोः नवाऽङ्कुरः' आर्द्राऽऽगसां प्रेयसीमानोद्दामगजाऽङ्कुशो मुग्धम् एतत् सुधांऽशोः वपुः विजयत इत्यन्वयः। कोककुटुम्बिनीजनमनःशल्यं=कोकस्य ( चक्रवाकस्य ) कुटुम्बिनीजनस्य ( कमलिनीमण्डलरूपस्य, सूर्याऽस्ताऽचलगमनसमये समदुःखत्वात्कमलिनीमण्डले कोकस्य कुटुम्बिनीजनत्वं बोद्धव्यम् ) यद्वा—कोककुटुम्बिनीजनानां ( चक्रवाकचक्रवाकीरूपाणां जनानाम् ) मनःशल्यं ( मानसशङ्कुरूपं ) चन्द्रोदयकाले कोकदम्पतीनां

---

किरण समूहके पश्चिम दिशाको प्राप्त होनेपर आधा काला पत्थरवाला और आधा स्फटिकसे युक्त दिशाओंका मध्यभाग, गङ्गा और यमुनाके मिलते हुए निर्मल जलके प्रवाहसमूहका सादृश्य व्यक्त कर रहा है ॥ २३ ॥

( फिर हर्षके साथ उंगलीसे दिखाते हुए )

चक्रवाककी कुटुम्बिनी ( कमलिनी ) के मनके शल्यरूप, परस्पर मिली हुई चकोरीके

चञ्चत्कोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका ।
दग्धस्यापि नवाङ्कुरः स्मरतरोरार्द्रागसां प्रेयसी-
मानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥ ३४ ॥

लक्ष्मणः—

कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरः स्वःस्रवन्तीमृणालं
कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम् ।

---

मिथो वियोगेन कमलिनीमण्डलस्य च निमीलितत्वेन चन्द्रवपुषः मनःपावकरूपत्व-मवसेयम् । घटितयोः = मिथो मिलितयोः । चकोराङ्गनाचञ्चूकोटिकपाटयोः = चकोराङ्गना ( चकोरी ) तस्याः चञ्चूकोटी ( त्रोटयग्रे ) एव कपाटे ( अररे ), तयोः । उद्घाटिनी ( उद्घाटनशीला, चन्द्रोदये चकोराश्चञ्चूद्घाटनं कुर्वन्तीति प्रवादः ) । कुञ्चिका = उद्घाटनयन्त्रं, भाषायां 'चाभी'ति प्रसिद्धम् । दग्धस्याऽपि = भस्मीभूतस्याऽपि, हरनयनाऽनलेनेति, शेषः । स्मरतरोः = कामवृक्षस्य । नवाङ्कुरः नूतनप्ररोहः आर्द्राऽऽगसां = नूतनाऽपराधानां, तादृशानां नायकानामिति शेषः । प्रेयसीमानोद्दामगजाऽङ्कुशः = प्रेयसीनां ( प्रियतमानाम् ) यो मानः ( प्रणयकोपः ) स एवोद्दामगजः ( मत्तहस्ती ) तस्याऽङ्कुशः ( सृणिः ), मानिनीप्रणयमाननिवारक इति भावः । मुग्धं = सुन्दरम् , एतत् = इदं, सुधांऽशोः = सुधाकरस्य, चन्द्रमस इत्यर्थः । वपुः = शरीरं, मण्डलमिति भावः । विजयते = सर्वोत्कर्षेण वर्तत इत्यर्थः ।

अत्र रूपकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥

लक्ष्मणश्चन्द्रोदयं वर्णयति—कल्लोलेति । कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरः स्वःस्रवन्तीमृणालं कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालं दुग्धाऽब्धिबन्धोः गगनकमलिनी पत्रपानीयबिन्दोः इन्दोः जगन्मण्डनम् एतत् खण्डं केषाम् अन्तस्तोषं न किसलयतीत्यन्वयः ।

कल्लोलेत्यादिः = कल्लोलेन ( महातरङ्गेण ) क्षिप्तः ( प्रेरितः ) कलङ्करूप इति भावः पङ्कः ( कर्दमः ) यस्मिंस्तत् । त्रिपुरहरस्य ( शङ्करस्य ) शिरसि ( मूर्ध्नि ) या स्वः स्रवन्ती ( स्वर्णदी, आकाशगङ्गेति भावः ) तस्या मृणालम् ( बिसखण्डम् ) कर्पूरक्षोदजालं = कर्पूरस्य ( घनसारस्य ) क्षोदजालम् ( चूर्णस-

---

चञ्चुरूप किवाड़ोंको खोलनेके लिए कुञ्जी, दग्ध कामवृक्षका नवीन अङ्कुर, नये अपराध वाले नायकोंकी प्रियतमाओंका प्रणयकोपरूप मत्त हाथीका अङ्कुश और सुन्दर यह चन्द्र-मण्डल, अतिशय उत्कर्षके साथ प्रकाशित हो रहा है ॥ ३४ ॥

लक्ष्मण—महातरङ्गसे जिसका कलङ्क दूर हो गया है, एवम् महादेवके शिरमें बहती हुई आकाशगङ्गाके मृणालदण्ड, कपूरके चूर्णसमूहके तुल्य, कामपत्नीके मदिरा पीनेके

पतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दो-
रन्तस्तोषं न केषां किसलयति जगन्मण्डनं खण्डमिन्दोः ॥३५॥

रामः—वत्स, अलमतिप्रसङ्गेन, तदेहि, सायन्तनत्रिदशार्चनोचित-कुसुमोपायनेन भगवन्तं गाधिनन्दनमुपास्महे ।

( इति निष्क्रान्ताः सर्वे )

इति द्वितीयोऽङ्कः ।



---

मूहः ) कर्पूरपूरधवलमिति भावः । कुसुमशरवधूसीधुभृङ्गारनालं = कुसुमशरवध्वाः ( कामपत्न्याः ) सीधुभृङ्गारनालं ( मदिरापानपात्रम् ) । दुग्धाऽब्धिबन्धोः = क्षीर-बान्धवस्य, इन्दु येन तज्जलवर्धकत्वादिति भावः । गगनकमलिनीपत्रपानीयबिन्दोः= गगनम् ( आकाशम् ) एव यत्कमलिनीपत्रं ( पद्मिनीदलम् ) तत्र पानीयबिन्दोः ( जलपृषतसदृशस्येति भावः ) । तादृशस्येन्दोः = चन्द्रमसः, जगन्मण्डनं = लोक-भूषणम् , एतत् = इदं खण्डं = शकलं, केषां = जनानाम् , अन्तस्तोषम् = अन्तःकर-णप्रीतिं, न किसलयति = न पल्लवयति, चन्द्रमण्डलं सर्वेषां जनानां हृदयाह्लादं विस्तारयतीति भावः । अत्राऽपि रूपकाऽलङ्कारः । स्रग्धरावृत्तम् ॥ ३५ ॥

राम इति । अतिप्रसङ्गेन = अत्यवसरेण, कार्योचितकालाऽतिक्रमणेनेति भावः । सायन्तनत्रिदशाऽर्चनोचितकुसुमोपायनेन = सायंकालिकदेवपूजनयोग्यपुष्पोपहारेणे-त्यर्थः । गाधिनन्दनं = विश्वामित्रम् ।

इति श्रीप्रसन्नराघवव्याख्यायां चन्द्रकलाऽऽख्यायां द्वितीयोऽङ्कः ।



---

पात्रके सदृश (उज्ज्वल), क्षीरसमुद्रके बान्धव, आकाशरूप कमलिनीपत्रको जलबिन्दुके समान, लोकभूषण यह चन्द्रखण्ड किसके अन्तःकरणमें सन्तोषको पल्लवित नहीं करता है ? ॥३५॥

राम—वत्स ! अब अधिक वर्णन मत करो । इसलिए आओ, सायङ्कालके देवपूजन योग्य फूलोंके उपहारसे भगवान् विश्वामित्रकी सेवा करें ।

( सब निकल पड़ते हैं । )

इति द्वितीय अङ्क ।



# तृतीयोऽङ्कः

( ततः प्रविशति वामनकः )

**वामनकः**—( आत्मानं विलोक्य । सविस्मयम् ) अहो ! अङ्गानां मे तुङ्गत्वम् , अपि नामेदृशैरङ्गैरत्र सञ्चरता मया द्वारशिखरं भज्यते । तत्कुब्जो भूत्वा सञ्चरिष्यामि । ( अहो अङ्गाणं मे तुङ्गत्तणम् । अवि णाम ईरिसेहिं अङ्गेहि एत्थ संचरन्तेण मए दुआरसिहरं भज्जीअदि ! ता खुज्जो भविअ संचरिस्सम् ) ( तथा करोति )

( प्रविश्य )

**कुब्जकः**—वयस्य वामनक, इदानीं सकलगुणसंयुक्तोऽसि त्वम् । ( वअस्स वामणअ, दाणिं सअलगुणसंजुत्तो सि तुमं )

**वामनकः**—कथमिव ( कहं विअ )

**कुब्जकः**—प्रथममेव वामन इदानीं पुनः कुब्जत्वं प्राप्तः । ( पढमं जेव्व वामणो दाणिं उण खुज्जत्तणं पत्तो )

**वामनकः**—( सक्रोधम् ) अये मूर्ख, कथमात्मनः कुब्जत्वं परस्मिन्ना-

---

वामनक इति । तुङ्गत्वम् = उन्नतत्वम्, 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे' इत्यमरः । भज्यते = आमृद्यते ।

कुब्जक इति । कुब्जत्वं = गडुलत्वम् ।

वामनक इति । द्वारशिखरभङ्गशङ्कितेन = द्वारशिखरभङ्गे ( प्रतीहारोर्ध्वभागा-

---

( अनन्तर एक बौना प्रवेश करता है । )

**वामनक**—( बौना )—( अपनेको देखकर । आश्चर्यके साथ ) अहो ! मेरे अङ्गोंकी कैसी ऊँचाई है ! ऐसे अङ्गोंसे यहाँ पर भ्रमण करूंगा तो द्वारशिखर टूट जायगा । इसलिए कुबड़ा होकर भ्रमण करूंगा । ( वैसी ही करता है । )

**कुब्जक ( कुबड़ा )**—( प्रवेशकर ) मित्र वामनक ! इससमय सकलगुणोंसे संयुक्त हो गये हो ।

**वामनक**—कैसे ?

**कुब्जक**—तुम पहले बौने थे इस समय फिर कुबड़े भी हो गये ।

**वामनक**—( क्रोधके साथ ) अरे मूर्ख ! कैसे अपनी कुब्जता दूसरे पर आरोपित करते

रोपयसि। ननु त्वमेव कुब्जकः। मया पुनर्द्वारशिखरभङ्गशङ्कितेनात्मनि कुब्जत्वमारोपितम्। ( अए मुक्ख, कहं अत्तणो खुज्जत्तणं परम्मि आरोवेसि। णं तुमं जेव्व खुज्जओ। मए उण दुआरसिहरभङ्गसङ्किदेण अप्पम्मि खुज्जत्तणमारोविदम् )

**कुब्जकः**—( विहस्य ) कथं वितस्तिमात्रेण तवाङ्गेन द्वारशिखरं भङ्क्ष्यते। ( पुनः सक्रोधम् ) अरे अलीकवाचाल, केन तव कथितमहं कुब्जक इति। ( कहं विअत्थिमेत्तएण तुह अङ्गेण दुआरसिहरं भज्जिस्सदि। अरे अलीअवाआल, केण तुह कहिदं अहं खुज्जओ त्ति )

**वामनकः**—नन्वनेनैव दृप्तवृषभककुदसदृशेन पृष्ठस्थितेन मांसस्तबकेनोद्वाहितेन। ( णं इमिणा जेव्व दरिअवुसहककुदसरिसेण पुट्ठट्ठिदेण मंसत्थवएण उव्वाहिएण )

**कुब्जकः**—( विहस्य ) अये मतिशून्य, कथमयं मांसस्तबकोऽपि पुनः सौभाग्यलक्ष्म्या उपधानगेन्दुकः। ( अए मदिसुण्ण, कहं इमो मंसत्थवओ वि उण सोहग्गलच्छीए उवहाणगेण्डुओ )

---

मर्दने ) शङ्कितेन ( सञ्जातशङ्केन )।

कुब्जक इति। वितस्तिमात्रेण = वितस्तिः ( द्वादशाङ्गुलः ) मात्रा ( प्रमाणम् ) यस्य तत्, तेन। 'अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुलः।' 'इत्यमरः। अङ्गेन = देहावयवेन। भङ्क्ष्यते = भग्नं करिष्यते, 'भञ्जो आमर्दने' इति धातोः कर्मणि लृट्। अलीकवाचाल = मिथ्यावाचाट।

वामनक इति। दृप्तवृषभककुदसदृशेन = दृप्तः ( दर्पयुक्तः ) यो वृषभः ( बलीवर्दः ) तस्य ककुदसदृशेन ( स्कन्धोर्ध्वभागस्याङ्गतुल्येन )। उद्वाहितेन = उद्वाहितेन। मांसस्तबकेन = मांसपिण्डेन।

कुब्जक इति। मतिशून्य = बुद्धिरहित। उपधानगेन्दुकः = उपबर्हकन्दुकः, सौभाग्यलक्ष्म्या आधारभूत इति भावः।

---

हो ? तुम ही कुबड़े हो। मैं तो द्वारशिखरके टूटनेके भयसे कुबड़ा बन गया हूं।

**कुब्जक**—( हँसकर ) बित्ते भरके तुम्हारे अङ्गसे कैसे द्वारशिखर टूट जाएगा ? ( फिर क्रोधके साथ ) अरे झूठा बकवास करने वाले ! किसने तुम्हें बतलाया कि मैं कुबड़ा हूं।

**वामनक**—इसी दर्पयुक्त साँड़के ककुदके सदृश पीठमें विद्यमान लादेगये मांसके लोथड़े ने।

**कुब्जक**—( हँसकर ) अरे बुद्धिशून्य ! कैसे यह मांसका लोथड़ा है ? यह तो सौभाग्य लक्ष्मीका आधारभूत है।

वामनकः—( साशङ्कम् ) अरे, शनैर्जल्प, अस्मादृशानामन्तःपुरचारिणां सौभाग्यवृत्तान्तमाकर्ण्य भर्त्ता कोपिष्यति । ( अरे, सणिअं जप्प, अह्मारिसाणं अन्तेउरचारिणं सोहग्गवुत्तन्तमाअण्णिअ भट्टा कुविस्सदि )

कुब्जकः—अलं भीरुत्वेन, इदानीं ध्यानगृहे वर्त्तते भर्त्ता । ( अलं भीरुत्तणेण, दाणिं धाणघरम्मि वट्टदि भट्टा )

वामनकः—न खलु न खलु, अद्य किल कस्यापि प्राघुणिकस्य महर्षेरागमनं प्रतिपालयन् बाह्यमण्डपे वर्त्तते । ( ण हु ण हु । अज्ज किर कस्सावि पाहुणस्स महेसिणो आगमणं पडिवालअन्तो बाहिरमण्डवे वट्टदि )

कुब्जकः—हा हताः स्मः । ( हा हदह्म )

वामनकः—किमिति ( किंत्ति )

कुब्जकः—ननु प्रथममेवैकेन महर्षिणा याज्ञवल्क्येनोपदिष्टोऽयं राजाऽक्षिनिमीलनै रात्रीर्गमयति । इदानीं पुनरनेनोपदिष्टोऽन्तःपुरमेव परि-

---

वामनक इति । अन्तःपुरचारिणां=शुद्धान्तगामिनाम् । 'तद्वृद्धवरोधे । वामनषण्ढकिरातम्लेच्छाऽऽभीराः शकार कुब्जाद्याः । 'इत्युक्तैर्वामनकुब्जादीनां राज्ञोऽन्तःपुरसहायत्वमवधेयम् । कोपिष्यति=कोपं करिष्यति अन्तःपुरचारिणां सौभाग्यं श्रुत्वाऽन्यथा सम्भावयिष्यतीति भावः ।

कुब्जक इति । ध्यानगृहे—चिन्तनभवने, योगाऽभ्यासनिकेतन इति भावः ।

वामनक इति । प्राघुणिकस्य=अतिथेः । प्रतिपालयन्=प्रतीक्षमाणः । बाह्यमण्डपे=प्रासादबहिर्भवे भवने इति भावः ।

कुब्जक इति । अक्षिनिमीलनैः=नयनसंमीलनैः, योगाऽध्यानाऽभ्यास इति

---

वामनक—( आशङ्काके साथ ) अरे ! धीरे बोलो । हमारे जैसे अन्तःपुर ( रनिवास ) में रहने वालोंका सौभाग्यवृत्तान्त सुनकर प्रभु कोप करेंगे ।

कुब्जक—डरनेकी जरूरत नहीं । इससमय प्रभु ध्यानगृहमें हैं ।

वामनक—नहीं जी नहीं । महाराज आज किसी अतिथि महर्षिके आगमनकी प्रतीक्षा करते हुए ( बाट जोहते हुए ) बाहरके भवनमें हैं ।

कुब्जक—हमलोग मारे गये ।

वामन—क्यों ?

कुब्जक—पहले ही एक महर्षि याज्ञवल्क्यके उपदेश करने पर राजा आँखोंको मूद-कर ( योगाऽभ्यासकर ) सारी रातें बिता देते हैं । अब फिर इनसे उपदेश पाकर अन्तःपुर

हरिष्यति । ततः किमयमस्माभिः क्षपणक इव कर्पटपेटकैः करिष्यति । ( णं पढमं जेव्व एक्केण महेसिणा अण्णवक्केण उवदिट्ठो इमो राआ अच्छिनील-णेहिं रत्तिओ गमेदि । दाणिं उण इमिणा उवदिट्ठो अन्तेउरं जेव्व परिहरिस्सदि । तदो किं इमो अह्मेहिं खवणो व्व कप्पडपेडएहिं करिस्सदि )

**वामनकः**—सत्यमेतत् , यद्ययं महर्षिरस्माकं राज्ञ उपदेशार्थमागतो भवेत् । अयं पुनर्हरधनुर्दर्शनार्थम् । ( सच्चं एदं, जइ इमो महेसी अह्माणं रण्णो उवदेसत्थं आअदो भवे । इमो उण हरधणुदंसणत्थम् )

**कुब्जकः**—किमस्य महर्षेर्होमाग्निधूमश्यामलितलोचनस्य हरचापदर्शनेन, तत्तर्कयामि क्षत्रियब्राह्मणोऽयमिति । ( किं इमस्स महेसिणो होमग्गिधूमसामलिअलोअणस्स हरचावदंसणेण । ता तक्केमि खत्तिअबह्मणो इमो त्ति )

**वामनकः**—( विहस्य ) कथं तनुरिव मतिरपि ते वक्रा, यदेवं तर्कयसि सत्यं क्षत्रियब्राह्मणोऽयमिति । ( कहं तणु व्व मदीवि तुह वङ्कुणी जं एव्व तक्केसि । सच्चं खत्तिअबह्मणो इमो त्ति )

---

शेषः । गमयति = यापयति । क्षपणकः = नग्नसाधुः, दिगम्बरजैनादिरिति भावः । कर्पटपेटकैः = जीर्णवस्त्रमञ्जूषाभिः । नग्नसाधोर्यथा वस्त्रमञ्जूषाणां नाऽऽवश्यकता, तथा राज्ञोऽप्यस्माकमावश्यकता न भविष्यति, वृत्तिच्छेदोऽस्माकं सम्भवेदिति भावः।

वामनक इति । हरधनुर्दर्शनाऽर्थं = शिवकार्मुकविलोकनाऽर्थम् , आगमिष्यतीति शेषः ।

कुब्जक इति । होमाऽग्निधूमश्यामलितलोचनस्य = होमस्य ( हवनस्य ) योऽग्निः ( अनलः ) तस्य धूमेन ( अग्निध्वजेन ) श्यामलिते ( श्यामीकृते ) लोचने ( नेत्रे ) यस्य, तस्य । किं = किं प्रयोजनमिति भावः । क्षत्रियब्राह्मणः = पूर्वं क्षत्रियः पश्चाद् ब्राह्मण इति भावः ।

वामनक इति । वक्रा = कुटिला ।

---

ही छोड़ देंगे । जीर्णवस्त्रोंकी मञ्जूषाओंसे क्षपणकके समान राजा हमलोगोंसे क्या करेंगे ?

वामनक—ये महर्षि हमारे राजाको उपदेशके लिए आये होंगे तो यह सच है । पर ये तो महादेवजीके धनुको देखनेके लिए आयेंगे ।

कुब्जक—होमाऽग्निके धूमसे श्याम नेत्रवाले इन महर्षिको महादेवके धनुको देखनेसे क्या ? मैं विचार करता हूं कि ये क्षत्रिय ब्राह्मण हैं ।

वामनक—( हंसकर ) कैसे शरीरकी तरह तुम्हारी बुद्धि भी टेढ़ी हो गई है, जो ऐसा विचार करते हो । सचमुच ये क्षत्रियब्राह्मण हैं ।

कुब्जकः—तत्कोऽप्यनर्थः सम्भाव्यते यत् किल चिरतपस्याकर्षितो-ऽयं तीव्रं प्रेक्षमाणः क्षत्रियब्राह्मण ऋजुमतेरस्माकं राजर्षे राज्यं ग्रहीतुमागत इति । ( ता को वि अणत्थो सम्भाविअदि जं किर चिरतवस्साकरिसिदो इमो तिव्वं पेक्खमाणो खत्तिअबह्मणो रुजुमदिणो अह्माणं राएसिणो रज्जं गहीदुं आअदो त्ति)

वामनकः—शान्तं पापम् , ईदृशं मा जल्प, अयं हि चिरतपस्यापरितोषितस्य ब्रह्मणो वाचा क्षत्रियत्वं परिहृत्य ब्राह्मणत्वं प्राप्तः । ( सन्तं पावम् । ईरिसं मा जप्प । अअं हि चिरतवस्सापरितोसिदस्स बह्मणो वाआए खत्तिअत्तणं परिहरिअ बह्मणत्तणं पत्तो )

कुब्जकः—कथं तनुरिव मतिरपि ते वामनी, यदीदृशालीकलोकवृत्तान्तेऽपि प्रत्याय्यते, यदि कस्यापि वाचा क्षत्रियो ब्राह्मणो भवति तर्हि मम वाचा त्वमपि ब्राह्मणो भवसि । ( कहं तणु व्व मदीवि तुह वामणी जं एरिसअलीअलोअवुत्तन्ते वि पत्तिआअदि । जइ कस्सवि वाआए खत्तिओ बह्मणो होइ ता मह वाआए तुमं वि बह्मणो होसि )

वामनकः—अरे बालिश, कथं तव गोमुखस्य भगवतश्चतुर्मुखस्यापि

---

कुब्जक इति । कोऽपि = अनिर्वाच्यः । तीव्रं = तीक्ष्णम् । ऋजुमतेः = सरलबुद्धेः । राजर्षेः = जनकस्येति भावः ।

वामनक इति । शान्तं = निवृत्तं, भवेदिति शेषः । अयं = विश्वामित्रः ।

कुब्जक इति । वामनी = खर्वा, अनुन्नतेति भावः । ईदृशाऽलीकलोकवृत्तान्ते-ऽपि = एतादृशमिथ्याजनोदन्तेऽपि । प्रत्याय्यते = विश्वस्यते ।

वामनक इति । बालिश = मूर्ख, 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशाः । 'इत्य-

---

कुब्जक—तब कोई अनर्थ होनेकी संभावना है, जो कि बहुत समयकी तपस्यासे आकर्षित ये तीक्ष्ण दृष्टिवाले क्षत्रियब्राह्मण, हमारे सरलबुद्धि राजाके राज्यको ग्रहण करनेके लिए आये हैं ।

वामनक—पाप निवृत्त हो । ऐसा मत कहो । ये चिरसमयकी तपस्यासे परितोषित ब्रह्माजीकी वाणीसे क्षत्रियत्व छोड़कर ब्राह्मण हो गये हैं ।

कुब्जक—कैसे शरीरकी तरह तुम्हारी बुद्धि भी बौनी हो गई है, जो कि ऐसे झूठे लोकवृत्तान्तमें भी विश्वास कर रहे हो । किसीकी वाणीसे क्षत्रिय भी ब्राह्मण होता हो तो मेरी वाणीसे तुम भी ब्राह्मण होगे ।

वामनक—अरे मूर्ख ! बैलके समान मुखवाले तुममें और भगवान् ब्रह्माजीमें भी

नास्त्यन्तरम् । ( अरे वालिस, कहं तुह गोमुहस्स भअवदो चतुम्मुहस्स वि णत्थि अन्तरम् )

कुब्जकः—यद्ययं शुद्धब्राह्मणस्तत्किमस्य चापचिन्तया । ( जइ इमो सुद्धबह्मणो ता किं इमस्स चावचिन्ताए )

वामनकः—अस्ति कारणं, तस्य पार्श्वे तत एव गृहीतचापविद्यौ द्वौ क्षत्रियकुमारौ वर्त्तेते, ताभ्यां दर्शयिष्यति चापमिति । ( अत्थि कारणं, तस्स पासम्मि तदो जेव्व गहिअचावविज्जा दोवि खत्तिअकुमारा वट्टन्ति । ताणं दंसइस्सदि चावं ति )

कुब्जकः—तच्छुद्धाशयोऽयम् । ( ता सुद्धासओ इमो )

वामनकः—अथ किम् ? ( अह इं )

कुब्जकः—तत्कथय, तावत् , अस्मिन् अलीकदूषणारोपेण ननु मम पापमुत्पन्नं न वेति । ( ता कहेहि दाव, इमस्सिं अलीअदूसणारोवेण णं मह पावं उप्पण्णं ण वेति )

वामनकः—पापमिति किं भण्यते, ननु महापापमुत्पन्नम् । ( पावं ति किं भणीअदि ? ण महापावं उप्पण्णम् )

---

मरः । गोमुखस्य = गोरिव मुखं यस्य स गोमुखस्तस्य वृषभाननस्येत्यर्थः । चतुर्मुखस्य = ब्रह्मणः । अन्तरं = भेदः, 'अन्तरमवकाशाऽवधिपरिधानाऽन्तर्धिभेदतादर्थ्ये ।' इत्यमरः ।

कुब्जक इति । शुद्धाऽऽशयः = निर्दोषाऽभिप्रायः । अस्मिन् = विश्वामित्रे अलीकदूषणाऽऽरोपेण = मिथ्यादोषारोपणेन, 'अयं राज्यमपहर्तुमागतः' इत्याकारकेणेति भावः । तत्त्वं = रहस्यम् ।

---

क्या अन्तर ( फर्क ) नहीं है ?

कुब्जक—यदि ये शुद्ध ब्राह्मण हैं तो इन्हें धनुकी चिन्तासे क्या मतलब ?

वामनक—कारण है, इनके समीपमें उन्हींसे धनुर्विद्या ग्रहण करनेवाले दो क्षत्रियकुमार हैं । वे उन्हें ही धनु दिखलाएँगे ।

कुब्जक—तब ये शुद्ध आशयवाले हैं ? ।

वामनक—और क्या ?

कुब्जक—तब कहो, इनमें मिथ्या दोष लगानेसे मुझे पाप हुआ या नहीं ।

वामनक—पाप ही क्या कहते हो ! अरे ! महापाप उत्पन्न हुआ ।

कुब्जकः—अरे मूर्ख, न जानासि धर्मस्य तत्त्वम् । सम्बन्धिजने परिहासवचनानि न पापकारणानि भवन्ति । ( अरे मुरुख, ण आणासि धम्मस्स तत्तम् । संबन्धिअणे परिहासवअणाइं ण हु पावकारणाइं )

वामनकः—कथं पुनरयं तव सम्बन्धिजनः । ( कहं उण इमो तुह सम्बन्धिअणो )

कुब्जकः—अरे, न जानासि, अस्यापि द्वौ कुमारौ । अस्माकमपि द्वे कुमारिके । तत्तर्कयामि सम्बन्धिजनो भविष्यतीति । ( अरे, ण आणासि ! अस्स वि दोण्णि कुमारा, अह्माणं वि दोण्णि कुमारीओ । ता तक्केमि सम्बन्धिअणो हविस्सदि त्ति )

वामनकः—( विहस्य ) कथमस्माकमीदृशं पुण्यम् । ( कहं अह्माणं एरिसं पुण्णम् )

( नेपथ्ये )

ताटङ्किना झटिति ताडितताटकेन
रामेण पद्मरमणीय-विलोचनेन ।

---

वामनक इति । सम्बन्धिजनः = वरपक्षीयजनः, अनेन भाव्युत्कृष्टत्वं सूच्यते ।

ताटङ्किनेति । अयं कुशिकसूनुर्मुनिः ताटङ्किना झटिति ताडितताटकेन पद्मरमणीयविलोचनेन क्रीडाशिखण्डकधरेण सलक्ष्मणेन रामेण साकम् इत एतीत्यन्वयः अयम् = एषः, कुशिकसूनुर्मुनिः = कौशिकमुनिः, विश्वामित्रऋषिरिति भावः । ताटङ्किना = ताटङ्काख्यकर्णभूषणधारिणा, झटिति = शीघ्रम् , अनायासेनैवेति भावः । ताडितताटकेन = ताडिता ( निहता ) ताटका ( ताटकाख्या राक्षसी ) येन, तेन । पद्मरमणीयविलोचनेन = कमलसुन्दरनयनेन, पद्मे इव रमणीये विलोचने यस्य,

---

कुब्जक—अरे मूर्ख ! तुम धर्मका तत्त्व नहीं जानते हो । सम्बन्धीजनमें परिहास ( दिल्लगी ) के वचन पापके कारण नहीं होते हैं ।

वामनक—ये कैसे तुम्हारे सम्बन्धीजन हुए ?

कुब्जक—अरे ! नहीं जानते हो । इनके भी दो कुमार हैं, हमलोगोंकी भी दो कुमारियाँ हैं । इसलिए मैं संभावना करता हूँ कि ये सम्बन्धीजन होंगे ।

वामनक—( हँसकर ) हमारा ऐसा पुण्य कहाँ ?

( नेपथ्यमें )

ये कौशिक मुनि ताटङ्कधारी, शीघ्र ताटकाको मारने वाले, कमलोंके सदृश सुन्दर

क्रीडाशिखण्डकधरेण स-लक्ष्मणेन
साकं मुनिः कुशिकसूनुरितोऽयमेति ॥ १ ॥

**वामनकः**—( सहर्षविस्मयम् ) अहो, या किल सकललोकभीषणा राक्षसी ताटकेति श्रूयते साऽनेन यदि ताडिता तदस्मिन्हरचापारोपणमपि सम्भाव्यते । तदेहि । इमं कर्णसुधारसं भट्टिनीभ्यः समर्पयामः । ( अहो, जा किर सअललोअभीसणा रक्खसी ताडएत्ति सुणीअदि सा इमिणा जइ ताडिदा ता इमस्सिं हरचावारोवणं वि सम्भावीअदि, ता एहि । इमं कण्णसुहारसं भट्टिणीणं समप्पम्ह )

( इति निष्क्रान्तौ )

( इति प्रवेशकः )

( ततः प्रविशति रामलक्ष्मणानुगतो विश्वामित्रः )।

---

तेन । क्रीडाशिखण्डकधरेण = केलिकाकपक्षधारिणा, सलक्ष्मणेन = लक्ष्मणसहितेन, तादृशेन रामेण = रामचन्द्रेण, 'साकं' पदेन योगे 'सहयुक्तेऽप्रधान' इति तृतीया साकं = सह । इतः = अस्मिन्स्थाने, सार्वविभक्तिकस्तसिः । एति = आगच्छति । अतोऽस्याऽतिथेः प्रत्युद्गमनादिकः सत्कारः कर्तव्य इति । शेषोऽर्थः । वसन्ततिलकं वृत्तम् ॥ १ ॥

वामनक इति । सहर्षविस्मयम् = आनन्दाश्चर्यपूर्वकम् । सकललोकभीषणा = सर्वजनभयङ्करी । तत् = तर्हि कर्णसुधारसं = श्रोत्राऽमृतद्रवं, कर्णानन्ददायकं वृत्तान्तमिति भावः । भट्टिनीभ्यः = राज्ञीभ्यः ।

प्रवेशक इति । प्रवेशकलक्षणं यथा—

'प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयाऽन्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥' इति ॥

---

नेत्रोंसे युक्त, क्रीडाके काकपक्षोंको धारण करनेवाले, लक्ष्मणयुक्त रामचन्द्रजीके साथ इधर आरहे हैं ॥ १ ॥

**वामनक**—( हर्ष और आश्चर्यके साथ ) आश्चर्य है । जो सबलोकोंको भयङ्कर ताटका नामकी राक्षसी सुनी जाती है, उसे भी इन्होंने मारडाला है तो इनमें महादेवके धनुः उठानेकी संभावना की जा सकती है । इसलिए आओ । इस कर्णाऽमृतरसको रानियोंको समर्पण करें । ( दोनों निकलते हैं । )

( इति प्रवेशक )

( अनन्तर राम और लक्ष्मणसे अनुगत विश्वामित्र प्रवेश करते हैं । )

विश्वामित्रः—( अङ्गुल्या दर्शयन् ) वत्स रामभद्र,
एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागण-
ग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासां निधिः ।
दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहो-
ल्लासाय स्फुटवैरिकैरववनत्रासाय विद्योतते ॥ २ ॥

'शेषं विष्कम्भके यथे'ति कथनेन वृत्तस्य = भूतस्य ताटकाहननरूपस्य कथांऽशस्य वर्तिष्यमाणस्य = भविष्यस्य धनुर्भङ्गविवाहादिरूपस्य च कथांऽशस्य निदर्शकत्वादयं प्रवेशको बोध्यः ।

एतदिति । भासां निधिः चक्रवाकहृदयाश्वासाय तारागणग्रासाय स्फुरदिन्दुमण्डलपरीहासाय दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहोल्लासाय स्फुटवैरिकैरववनत्रासाय विद्योतते एतत् तर्कयेत्यन्वयः ।

भासां = प्रभाणां, निधिः = आकरः, सूर्य इत्यर्थः । चक्रवाकहृदयाश्वासाय = चक्रवाकाणां ( कोकपक्षिणाम् ) हृदयाऽऽश्वासनाय ( मानसाश्वासनाय ), रात्रौ चक्रवाकाः स्वप्रियया वियुज्यन्ते अतः प्रभाते उदयाऽनन्तरं सूर्यस्तानाश्वासयतीति भावः । 'तादर्थ्ये चतुर्थी वाच्या' इति तादर्थ्ये चतुर्थी । तारागणग्रासाय = तारागणस्य ( नक्षत्रमण्डलस्य ) ग्रासाय ( तिरोधानाय ) स्फुरदिन्दुमण्डलपरीहासाय= स्फुरत् ( प्रकाशमानम् ) यत् इन्दुमण्डलं ( चन्द्रमण्डलम् ) तस्य परीहासाय ( उपहासाय, स्वतेजसा म्लापनायेति भावः ) । परिहसनं परीहासः, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घत्वम् । दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय = दिक्कान्तानां ( दिशारूपनायिकानाम् ) ये कुचाः (स्तनाः) एव कुम्भाः (कलशाः) तेषु कुङ्कुमरसन्यासाय ( काश्मीरजद्रवनिक्षेपणाय, स्वकिरणलौहित्येन रञ्जनायेति भावः ) । पङ्केरुहोल्लासाय = कमलविकासाय, पङ्के रोहन्तीति पङ्केरुहाणि, पङ्कोपपदपूर्वकात् 'रुह प्रादुर्भावे' इति धातोः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः 'तत्पुरुषे कृति बहुलम्' इत्यलुक् । 'पङ्केरुहं तामरसं सारसं सरसीरुहम्' इत्यमरः ।

विश्वामित्र—( अङ्गुलिसे दिखाते हुए ) वत्स रामभद्र !

प्रभाओंके आकर ( सूर्य ) चकवाक पक्षियोंके हृदयको आश्वासन देनेके लिए, तारागणको तिरोधान करनेके लिए, चमकते हुए चन्द्रमण्डलका उपहास करनेके लिए, दिशारूप कान्ताओंके कुचरूप कलशोंमें केशरका रस रखनेके लिए ( लालिमा फैलानेके लिए ), कमलोंके विकासके लिए और विकसित शत्रुरूप कुमुदवनको सङ्कुचित करनेके लिए भी प्रकाशित हो रहे हैं । यह देखो ॥ २ ॥

रामः—( अञ्जलिं बद्ध्वा )

**लालयन्तमरविन्दवनानि, क्षालयन्तमभितो भुवनानि।**
**पालयन्तमथ कोककुलानि, ज्योतिषां पतिमहं महयामि ॥ ३ ॥**

विश्वामित्रः—( स्वगतम् ) अपि नाम मयोपनीयमानं वत्सरामभद्रमचिरादेव जनकस्तनूजया सम्भावयिष्यति ?

लक्ष्मणः—आर्य, पश्य—

---

पङ्केरुहाणामुल्लासाय। स्फुटवैरिकैरववनत्रासाय = स्फुटं ( विकसितम् ) यत् वैरिकैरववनं ( शत्रुकुमुदसमूहः ) तस्य त्रासाय ( भीत्यै, सङ्कोचनायेति भावः )। विद्योतते = प्रकाशते। एतत् = इदं, भास्तां निधेर्विद्योतनमिति भावः। तर्कय = विचारय, पश्येति भावः। अत्र रूपकाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

लालयन्तमिति। अहम् अरविन्दवनानि लालयन्तं, भुवनानि अभितः क्षालयन्तम्, अथ कोककुलानि पालयन्तं ज्योतिषां पतिं महयामीत्यन्वयः।

अहं = रामचन्द्रः, अरविन्दवनानि = कमलसमूहान्, लालयन्तं = विलासयन्तम् उदयेन विकासयन्तमिति भावः। भुवनानि = लोकान्, अभितः = समन्तात्, क्षालयन्तं = शोधयन्तं, स्वकरेणोद्भासयन्तमिति भावः। अथ = अनन्तरं, कोककुलानि = चक्रवाकसमूहान्, पालयन्तं = रक्षन्तं रात्र्या वियुक्तान् चक्रवाकान् तत्कान्ताभिः संयोजनेन रक्षन्तमिति भावः। तादृशं ज्योतिषां ग्रहाणां, पतिं = स्वामिनं, सूर्यमिति भावः। महयामि = पूजयामि। स्वागतावृत्तम् ॥ ३ ॥

विश्वामित्र इति। अपि नामेति सम्भावनायाम्।

लक्ष्मणः पद्मविकासं वर्णयति—यावदिति। यावत् प्रभातसमयः नीरनिधेः प्रोद्धृत्य लोकत्रयीमाणिक्यं रविबिम्बम् अम्बरवणिग्वीथीपथे न्यस्यति। तावत् अस्य उचितं मूल्यं कर्तुम् इव पद्माकरेण स्वयम् लब्धविकासपङ्कजकरन्यस्ता लक्ष्मीः पुरः स्थाप्यत इत्यन्वयः।

---

राम—( अञ्जलि बांधकर )

मैं कमलवनोंको विकसित करने वाले, लोकोंको चारों ओर उज्ज्वल बनानेवाले और बिछुड़े हुए चकवाकोंको संयुक्तकर रक्षा करनेवाले ग्रहपति ( सूर्य ) को पूजता हूँ ॥ ३ ॥

विश्वामित्र—( मन ही मन ) मुझसे लाये गये वत्स रामभद्रको जनक शीघ्र ही पुत्री ( सीता ) से क्या संभावित करेंगे ?

लक्ष्मण—आर्य ! देखिए।

यावन्नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयी-
माणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति ।
तावत्कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं
लक्ष्मीर्लब्धविकासपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ ४ ॥

विश्वामित्रः—( सहर्षमात्मगतम् ) अये वत्स लक्ष्मणेनैव दत्तमुत्तरम् । देवताधिष्ठितानि हि मुग्धवचनानि भवन्ति ।

---

यावत् = यदा प्रभातसमयः=प्रातःकालः, नीरनिधेः = जलनिधेः, समुद्रादित्यर्थः । प्रोद्धृत्य = निष्कास्य, लोकत्रयीमाणिक्यं = लोकत्रय्याः ( त्रिलोक्याः ) माणिक्यं (शोणरत्नं, मणिविशेषम् ), रविबिम्बं = सूर्यमण्डलम् , अम्बरवणिग्वीथीपथे = अम्बरम् ( आकाशम् ) एव वणिग्वीथीपथः ( पण्यभूमिः ), तस्मिन् । न्यस्यति = स्थापयति, पण्यद्रव्यत्वेनेति शेषः । तावत् = तदा, अस्य = रविबिम्बस्य अम्बरवणिग्वीथीपथन्यस्तस्येति शेषः । उचितं = योग्यं, मूल्यं = अवक्रयं, 'मूल्यं वस्नोऽप्यवक्रय' इत्यमरः । कर्तुम् इव = विधातुम् इव, पद्माऽऽकरेण = तडागेन, पद्मसमूहयुक्तेन, पद्माकरस्तडागोऽस्त्री'त्यमरः । स्वयम् = आत्मनैव, लब्धविकासपङ्कजकरन्यस्ता=लब्धः ( प्राप्तः ) विकासः ( प्रफुल्लता ) येन तत्, तादृशं यत्पङ्कजं ( कमलम् ) तदेव करः ( हस्तः ) तस्मिन्न्यस्ता ( स्थापिता ) । लक्ष्मीः = शोभा, मूल्यभूतं धनं वा, पुरः = अग्रे, स्थाप्यते = न्यस्यते । सूर्योदयसमनन्तरमेव कमलविकासः संजात इति भावः । अत्र रूपकोत्प्रेक्षयोरेकाश्रयाऽनुप्रवेशेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

विश्वामित्र इति । उत्तरं = प्रतिवाक्यं, 'वत्सरामचन्द्रं जनकस्तनूजया सम्भावयिष्यती'त्याकारकप्रश्नस्य, एतदिति श्लोके प्रभातसमयो विश्वामित्रः, नीरनिधेः = दशरथात् पृथक्कृत्वा रविबिम्बं = रामचन्द्रम् , अम्बरवणिग्वीथीपथे = जनकधनुर्यज्ञे यदा स्थापितवान् । तदैव पद्माकरेण = जनकेन, लक्ष्मीः = लक्ष्मीस्थानीया जानकी पुरः स्थाप्यते इत्थं दत्तमुत्तरमिति भावः । मुग्धवचनानि = अप्रौढवाक्यानि, बालवचनानीति भावः ।

---

जबतक प्रातःकाल, समुद्रसे निकालकर लोकत्रयके माणिक्य सूर्यमण्डलको आकाशरूप पण्यभूमिमें रखता है, तब तक मानों इसका उचित मूल्य करनेके लिए पद्माकर ( तालाब ) स्वयम् प्रफुल्ल कमलरूप हाथमें स्थापित लक्ष्मी ( शोभा ) को आगे रख देता है ॥ ४ ॥

**विश्वामित्र**—( हर्षके साथ मन ही मन ) अरे ! वत्स लक्ष्मणने ही उत्तर दे दिया । क्योंकि बालकोंके वचन देवतासे आश्रित होते हैं ।

**रामः**—( मुनिं प्रति ) भगवन् , बहुनरकरितुरङ्गमतरङ्गितापि राजधानीयं कथं तपोवनभूमिरिव प्रशान्तपावनी विभाव्यते ।

**विश्वामित्रः**—क इह विस्मयः ? नन्विह जनकः प्रतिवसति यस्याऽयं भगवान्याज्ञवल्क्यो गुरुः ।

**रामः**—सोऽयं भगवानस्य गुरुर्यः किल योगीश्वर इति ख्यायते ।

**विश्वामित्रः**—वत्स, स एवायम् ।

पादोपजीवनाद् भानोः प्रबोधमुपलभ्य यः ।
अभूद्योगीश्वरख्यातेः सद्म पद्ममिव श्रियः ॥ ५ ॥

---

राम इति । बहुनरकरितुरङ्गमतरङ्गिता = बहवः ( अधिकाः ) नराः ( मनुष्याः ) करिणः ( हस्तिनः ) तुरङ्गमाः ( अश्वाः ) तैस्तरङ्गिता ( सञ्जाततरङ्गा, सङ्कुलेति भावः ) । प्रशान्तपावनी = प्रशान्ता ( शान्तिपरिपूर्णा ) पावनी ( पावयित्री ) च । विभाव्यते = विचिन्त्यते ।

विश्वामित्र इति । जनकः=विदेहराजः । याज्ञवल्क्य=तदाख्यो महर्षिः, ब्रह्मवादीयोगिराजः । यत्र ब्रह्मवादी योगिराजश्च याज्ञवल्क्यो महर्षिस्तच्छिष्यो विदेहराजो जनकश्च प्रतिवसति तस्या राजधान्यास्तपोवनभूमिसादृश्ये को विस्मय इति भावः ।

विश्वामित्रो याज्ञवल्क्यं वर्णयति—पादोपजीवनादिति । भानोः पादोपजीवनात् प्रबोधम् उपलभ्य यः पद्मम् श्रिय इव योगीश्वरख्यातेः सद्म अभूदित्यन्वयः ।

यः = याज्ञवल्क्यः, भानोः = सूर्यस्य, पादोपजीवनात् = चरणोपाश्रयात् , चरणपरिचरणादिति भावः, पद्मे किरणस्पर्शात् । प्रबोधं = ज्ञानं, पक्षान्तरे विकासम् , उपलभ्य = प्राप्य यः = याज्ञवल्क्यः, पद्मं = कमलं, श्रिय इव = लक्ष्म्या इव, योगीश्वरख्यातेः = योगीश्वरेति प्रसिद्धेः, सद्म = सदनम् , आश्रय इति भावः । अभूत्=

---

राम—( मुनिसे ) भगवन् ! अनेकों मनुष्य, हाथी और घोड़ोंसे व्याप्त होनेपर भी यह राजधानी तपोवनकी भूमिकी तरह किसप्रकार प्रशान्त और पवित्र करनेवाली मालूम पड़ रही है ।

विश्वामित्र—इसमें क्या आश्चर्य है ? यहां महाराज जनक रहते हैं, वे भगवान् याज्ञवल्क्य जिसके गुरु हैं ।

राम—वही महर्षि इनके गुरु हैं, जो योगीश्वर कहे जाते हैं ?

विश्वामित्र—वे यही हैं ।

जैसे सूर्यकी किरणसेवासे कमल विकास प्राप्तकर शोभाको प्राप्त करता है, वैसे ही ये सूर्यकी पादसेवासे ज्ञान प्राप्तकर 'योगीश्वर' ऐसी प्रसिद्धिको प्राप्त किए हुए हैं ॥ ५ ॥

तदेहि, राजभवनमुपसर्पामः (इति निष्क्रान्ताः)।

(नेपथ्ये)

पयोभिः सिच्यन्तां बहलविलसत्कुङ्कुमरसैः
प्रसूनैः कीर्यन्तां परिमलमिलल्लोलमधुपैः ।
चतुष्कैः पूर्यन्तामविरललसन्मौक्तिकगणैः
मुदा पौरस्त्रीभिर्नगरपथरथ्याङ्गणभुवः ॥ ६ ॥

विश्वामित्रः—नूनमस्मदभ्यागमनसानन्दस्य शतानन्दस्य वाक्य-

---

संजातः। रविकरस्पर्शाह्निकासं प्राप्य कमलं यथा लक्ष्म्या आश्रयो भवति तथैव यो याज्ञवल्क्यः सूर्यचरणपरिचरणाज्ज्ञानं प्राप्य योगीश्वरेतिप्रसिद्धेराधारो जात इति भावः। अत्र श्लेषोपमयोरङ्गाङ्गिभावेन सङ्करः। अनुष्टुब्वृत्तम् ॥ ५ ॥

पयोभिरिति। पौरस्त्रीभिः मुदा नगरपथरथ्याऽङ्गणभुवः बहलविलसत्कुङ्कुम-रसैः पयोभिः सिच्यन्तां, परिमलमिलल्लोलमधुपैः प्रसूनैः कीर्यन्ताम्, अविरल-लसन्मौक्तिकगणैः चतुष्कैः पूर्यन्ताम् इत्यन्वयः।

पौरस्त्रीभिः=नागरिकनारीभिः, मुदा=हर्षेण, नगरपथरथ्याऽङ्गणभुवः= नगर-पथस्य (पुरमार्गस्य) रथ्याऽङ्गणभुवः (प्रतोलीचत्वरभूमयः)। बहलविलसत्कुङ्कु-मरसैः=बहलम् (अधिकं यथा तथा) विलसन्तः (शोभमानाः) कुङ्कुमरसाः (काश्मीरजद्रवाः) येषु, तैः। तादृशः पयोभिः=जलैः, सिच्यन्ताम्=उक्ष्यन्ताम्। परिमलमिलल्लोलमधुपैः=परिमलेन (सुगन्धेन) मिलन्तः (संगच्छन्तः) लोल-मधुपाः (चञ्चलभ्रमराः) येषु तैः। तादृशैः प्रसूनैः=पुष्पैः। कीर्यन्तां=प्रक्षिप्य-न्ताम्। एवं च अविरललसन्मौक्तिकगणैः= अविरलं (घनं यथा स्यात्तथा) लसन्तः (शोभमानाः) मौक्तिकगणाः (मुक्तादामानि) येषु तैः। तादृशैश्चतुष्कैः=गृह-विशेषैः, मार्गस्थविश्रामनिकेतनैः। पूर्यन्तां=पूर्णाः क्रियन्ताम्। विश्वामित्रमहर्षि-सत्कारार्थं पुरमार्गाः संस्क्रियतामिति भावः। शिखरिणीवृत्तम् ॥ ६ ॥

विश्वामित्र इति। अस्मदभ्यागमनसानन्दस्य = अस्माकमभ्यागमनेन सानन्द-

---

इसलिए आओ, राजभवनमें चलें। (सब निकलते हैं।)

(नेपथ्यमें)

नगरकी स्त्रियाँ हर्षपूर्वक पुरमार्गकी प्रतोली और अङ्गनोंके प्रदेशोंको प्रचुररूपसे शोभमान केशररसोंसे युक्त जलसे छिड़कें, सुगन्धके कारण चञ्चल भ्रमरोंसे युक्त फूलोंसे विकीर्ण करें और निबिडभावसे शोभित मोतियोंसे प्रकाशित गृहविशेषोंसे पूर्ण करें ॥ ६ ॥

विश्वामित्र—निश्चय ही यह हमारे आनेसे आनन्दित शतानन्दके वाक्यका संचार

परिस्पन्दः । ( विलोक्य ) अहो अस्य रभसातिशयो यदयं कृतमपि नगर-परिष्कारं पुनरप्यादिशति ।

( प्रविश्य )

शतानन्दः—भगवन् , अभिवादये ।

विश्वामित्रः—सौम्य, आयुष्मान् भूयाः ।

शतानन्दः—अयमसौ जनको राजा भगवन्तं प्रतीक्षते ।

विश्वामित्रः—( विलोक्य ) अये, स एष जनकः,

अङ्गैरङ्गीकृता यत्र षड्भिः सप्तभिरष्टभिः ।

---

स्य ( आनन्दयुक्तस्य )। शतानन्दस्य = तन्नामकस्य गौतमगोत्रस्य जनकपुरोहित-स्येति भावः। वाक्यपरिपस्पन्दः = पदसमूहसंचारः। रभसाऽतिशयः = हर्षोत्कर्षः, रभसो हर्षं वेगयोः' इति विश्वः। आदिशति = आज्ञापयति।

शतानन्द इति। अभिवादये = नमस्करोमि।

विश्वामित्रो जनकं वर्णयति—अङ्गैरिति। यत्र षड्भिः सप्तभिरष्टभिश्च अङ्गैः अङ्गीकृता त्रयी राज्यलक्ष्मीः योगविद्या च दीव्यतीत्यन्वयः।

यत्र = यस्मिन् , जनक इति भावः। षड्भिः = षट्संख्यकैरङ्गैः, त्रय्याः षडङ्गानि यथा—

'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गतिः।
छन्दोविचितिरित्येतैः षडङ्गो वेद उच्यते ॥' इति।

सप्तभिः = सप्तसंख्यकैरङ्गैः, राज्यलक्ष्म्याः सप्ताऽङ्गानि यथा—

'स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥' इति।

---

है। ( देखकर ) अहो ! इनके हर्षका उत्कर्ष ऐसा है कि शहरमें परिष्कार करने पर भी फिर करनेके लिए आज्ञा दे रहे हैं।

( प्रवेशकर )

शतानन्द—भगवन् ! मैं अभिवादन करता हूँ।

विश्वामित्रः—सौम्य ! आयुष्मान् बनो।

शतानन्द—ये महाराज जनक आपकी प्रतीक्षा कर रहे हैं।

विश्वामित्र—( देखकर ) अरे ! ये वे जनक हैं—

जिन ( जनक ) में छः ( शिक्षा, कल्प, व्याकरण, निरुक्त, छन्द और ज्योतिष ), सात ( स्वामी, अमात्य, सुहृत् , कोष, राष्ट्र, दुर्ग और बल ) और आठ ( यम, नियम, आसन,

त्रयी च राजलक्ष्मीश्च योगविद्या च दीव्यति ॥ ७ ॥

( ततः प्रविशति जनकः )

जनकः—( कृताञ्जलिर्भूत्वा )

यः काञ्चनमिवात्मानं निक्षिप्याग्नौ तपोमये ।
वर्णोत्कर्षं गतः सोऽयं विश्वामित्रो मुनीश्वरः ॥ ८ ॥

(उपसृत्य) भगवन् , अयं ते समीहितसम्पल्लतासमुद्गमारामः प्रणामः ।

---

अष्टभिः=अष्टसंख्यकैरङ्गैः, योगविद्याया अष्टाङ्गानि यथोक्तानि पातञ्जलयोगदर्शने—'यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानी'ति । अङ्गैः = अवयवैः, अङ्गीकृता=अभ्युपगता, त्रयी=वेदविद्या, राज्यलक्ष्मी=राष्ट्रश्रीः, योगविद्या च = पातञ्जलशास्त्रं च, दीव्यति = प्रकाशते । महाराजे जनके षडङ्गसहितो वेदः, सप्ताङ्गोपेता राज्यलक्ष्मीरष्टाङ्गविलसिता योगविद्या च विद्योतत इति भावः । अत्र यथासंख्यमलङ्कारः सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'यथासंख्यं द्विधाऽर्थाः स्युः क्रमादेकैकमन्विताः । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥' इति । अनुष्टुब्वृत्तम् ॥ ७ ॥

यः काञ्चनमिवेति । यः काञ्चनमिव आत्मानं तपोमये अग्नौ निक्षिप्य वर्णोत्कर्षं गतः । अयं सः मुनीश्वरो विश्वामित्र इत्यन्वयः ।

यः = विश्वामित्रः, काञ्चनमिव = सुवर्णमिव, आत्मानं = स्वं, तपोमये = तपस्वारूपे, अग्नौ = अनले, निक्षिप्य = निधाय, वर्णोत्कर्षं = वर्णोत्कृष्टतां, पक्षान्तरे—जात्युत्कृष्टतां ब्राह्मणत्वमिति भावः । गतः = प्राप्तः । अयम् = एषः, सः = प्रसिद्धः, मुनीश्वरः = ऋषिश्रेष्ठः, विश्वामित्रः = तन्नामा महर्षिः, अस्तीति शेषः । अत्रोपमारूपकाऽर्थश्लेषाणां मिथोऽनपेक्षया स्थितेः संसृष्टिरलङ्कारः । अनुष्टुब्वृत्तम् ॥ ८ ॥

उपसृत्येति । समीहितसम्पल्लतासमुद्गमारामः = समीहिताः ( समभीष्टाः )

---

प्राणायाम, प्रत्याहार, धारणा, ध्यान और समाधि ) अङ्गोंसे अङ्गीकृत वेद, राज्यलक्ष्मी और योगविद्या भी प्रकाशित हो रही है ॥ ७ ॥

( तब जनक प्रवेश करते हैं । )

जनक—( अञ्जलि बाँधकर )

जो सुवर्णके सदृश अपनेको तपस्यारूप अग्निमें रखकर वर्णके उत्कर्षको प्राप्त हुए हैं । वे वैसे मुनीश्वर विश्वामित्र हैं ॥ ८ ॥

( समीप आकर ) भगवन् ! अभीष्ट सम्पत्तिरूप लताओंकी उत्पत्तिका उपवनस्वरूप आपको यह प्रणाम है ।

**विश्वामित्रः**—राजर्षे, वसुधासुनासीर, सीरध्वज, अप्रतिहतमनोरथो भूयाः ।

( इति यथोचितमुपविशन्ति )

**जनकः**—भगवन्, अधुना सुनासीरसाधारणत्वमधःकरणं मे ।

**विश्वामित्रः**—कथमिव ?

**जनकः**—सम्प्रति तदीयामपि पदवीमतीत्य वर्त्ते ।

गाधिनन्दन ! न नन्दनजन्मा, तादृशः स हरिचन्दनशाखी ।
यादृशो मम भवत्पदपद्म-द्वन्द्ववन्दनविधिः सुखहेतुः ॥ ६ ॥

---

याः सम्पदः ( सम्पत्तयः ) एव लताः ( वल्लयः ) तासां समुद्गमस्य ( समुत्पत्तेः ) आरामः ( उपवनम् ) । प्रणामः नमस्कारः । अभीष्टाऽर्थफलप्रदो भवत्कर्मकः प्रणामो विलसत्विति भावः ।

विश्वामित्र इति । वसुधासुनासीर = वसुधायां ( पृथिव्याम् ) सुनासीरः ( इन्द्रः ) तत्सम्बुद्धौ । अप्रतिहतमनोरथः = अप्रतिहतः ( प्रतिबन्धरहित इति भावः ) मनोरथः ( अभिलाषः ) यस्य स = तादृशः ।

जनक इति । सुनासीरसाधारणत्वम् = इन्द्रसमानत्वम् । अधःकरणं = तिरस्करणम् । सम्प्रति=इदानीम् । तदीयामपि = सुनासीरीयामपि, इन्द्रस्याऽपीति भावः । पदवीं = प्रतिष्ठाम् । अतीत्य = उल्लङ्घ्य ।

जनक इन्द्रादपि स्वोत्कर्षं समर्थयते—गाधिनन्दनेति । हे गाधिनन्दन ! नन्दनजन्मा स हरिचन्दनशाखी तादृशः सुखहेतुः न, यादृशो मम भवत्पदपद्मद्वन्द्ववन्दनविधिः सुखहेतुरित्यन्वयः ।

हे गाधिनन्दन = हे विश्वामित्र ! नन्दनजन्मा=इन्द्रोपवनोत्पन्नः, नन्दनाज्जन्म यस्य सः । सः=प्रसिद्धः, हरिचन्दनशाखी=हरिचन्दनाऽऽख्यो देववृक्षः, तादृशः=तथाविधः, सुखहेतुः = आनन्दकारणं, न = नाऽस्ति, यादृशः = यथाविधः, मम = जन-

---

**विश्वामित्र**—राजर्षे ! पृथिवीन्द्र ! सीरध्वज ! आपका मनोरथ विघ्नरहित हो ।

( इस प्रकार यथोचित रूपसे बैठते हैं । )

**जनक**—भगवन् ! इस समय इन्द्रका सादृश्य मेरे लिए तिरस्कारक है ।

**विश्वामित्र**—कैसे ?

**जनक**—इस समय इन्द्रकी पदवीको भी लङ्घन करके रह रहा हूं ।

हे गाधिनन्दन ( विश्वामित्र ) ! नन्दनकाननमें उत्पन्न वह हरिचन्दन वृक्ष भी वैसा सुखकारक नहीं है, जैसा कि मुझे आपके चरणयुगलके वन्दनकी विधि सुखकारक है ॥६॥

**विश्वामित्रः**—अहो ते प्रणयातिशयो यः सहजप्रमोदसुखाम्भोधिनिमग्नोऽप्यस्मत् समागमजन्मनः सुखशीकरान् बहु मन्यसे ।

**जनकः**—भगवन् , अस्मद्विधानां राज्यरागोपरक्तचेतश्चन्द्रमसां कुतस्त्योऽयं सहजानन्दचन्द्रिकोद्भेदः ।

**विश्वामित्रः**—मैवम् , भोः—

---

कस्य, भवत्पदपङ्कजद्वन्द्ववन्दनविधिः = त्वच्चरणकमलयुगलाऽभिवादनविधानं, सुखहेतुः = आनन्दकारणम् , अस्तीति शेषः । नन्दनवनप्रसूतो हरिचन्दनाभिधानो देवतरुरिन्द्रस्य तादृशः सुखहेतुर्न, यादृशो भवच्चरणवन्दनविधिर्मे सुखहेतुरतोऽहमधुनेन्द्रादप्युत्कृष्टतर इति भावः । अत्र यमकं नाम शब्दाऽलङ्कारस्तल्लक्षणं यथा—'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवाऽऽवृत्तिर्यमकं विनिगद्यते ॥' इति । स्वागता वृत्तम् ॥ ९ ॥

विश्वामित्र इति । प्रणयाऽतिशयः = प्रेमाऽऽधिक्यम् । सहजप्रमोदसुखाम्भोधिनिमग्नः = सहजः ( स्वाभाविकः ) यः प्रमोदः ( आनन्दः ), ब्रह्मानन्द इति भावः । स एव सुखाऽम्भोधिः ( आनन्दसमुद्रः ), तस्मिन्निमग्नः ( कृतनिमज्जनः ), 'तस्यैवानन्दस्य मात्रामन्यानि भूतान्युपजीवन्ती'ति श्रुतेरिति भावः । अस्मत्समागमजन्मनः = मत्सङ्गमोत्पन्नान् । सुखशीकरान् = आनन्दाऽम्बुकणान् । बहु = अधिकम् । ब्रह्मानन्दाऽम्बुनिधिनिमग्नस्य ते मत्सङ्गमसुखशीकरेषु बहुत्वभावनं मयि प्रणयाऽतिशयं द्योतयतीति भावः ।

जनक इति । राज्यरागोपरक्तचेतश्चन्द्रमसां = राज्ये ( राजकर्मणि राजभावे वा ) यो रागः ( अनुरागः, राहुरिवेति ध्वनिः ) तेन उपरक्तः ( रक्तवर्णीकृतः, ग्रस्तो वा ) चेतः ( चित्तम् ) एव चन्द्रमा येषां तेषाम् । तादृशानामस्मद्विधानाम् = अस्मत्सदृशानाम् । सहजाऽऽनन्दचन्द्रिकोद्भेदः = ब्रह्मानन्दकौमुदुद्गमः राहूपरक्ते चन्द्रे चन्द्रिकोद्गम इव । राज्यासक्तचित्तानामस्मादृशानां कथं ब्रह्मानन्दाविर्भाव इति भावः ।

---

**विश्वामित्र**—अहो ! यह आपके प्रेमकी अधिकता है जो कि स्वाभाविक ब्रह्मानन्दरूप महासागरमें निमग्न होकर भी हमारे समागमसे उत्पन्न सुखशीकरोंको अधिक मान रहे हैं।

**जनक**—राज्यरागसे उपरक्त ( वा ग्रस्त ) चित्तरूप चन्द्रसे युक्त हमारे जैसे लोगोंको ब्रह्मानन्दरूप चन्द्रिकाका आविर्भाव कैसे हो सकता है ?

**विश्वामित्र**—ऐसा नहीं । महाराज !

ज्याघातः कार्मुकस्य श्रयति करतलं, कण्ठमोङ्कारनाद-
स्तेजो भाति प्रतापाभिधमवनितले, ज्योतिरात्मीयमन्तः ।
राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्री-
र्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ १० ॥

ज्याघात इति । येषां कार्मुकस्य ज्याऽऽघातः करतलं श्रयति, ओङ्कारनादः कण्ठं श्रयति, प्रतापाऽभिधं तेजोऽवनितले भाति, आत्मीयं ज्योतिः अन्तर्भाति, सिंहासनश्रीः राज्यं वक्ति, पद्मासनश्रीः परमं शममपि वक्ति ते एते यूयं निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ( स्थ ) इत्यन्वयः ।

येषां=निमिकुलकुमुदानन्दचन्द्राणां नरेन्द्राणां, कार्मुकस्य=धनुषः, कर्मणे प्रभवतीति कार्मुकं, तस्य 'कर्मण उकञ्' इत्युकञ् । ज्याऽऽघातः=ज्यायाः ( गुणस्य ) आघातः ( आघातचिह्नम् , लाक्षणिकोऽयमर्थः ) करतलं=हस्ततलं, श्रयति= आश्रयति, तथा ओङ्कारनादः=प्रणवशब्दः, कण्ठं=गलं, श्रयति । प्रतापाऽभिधं= प्रतापनामकं, प्रतापोऽभिधा यस्य तत् । तेजः=दीप्तिः, 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपी'त्यमरः । अवनितले=भूतले, भाति=प्रकाशते । आत्मीयम्=आत्मसम्बन्धि ज्योतिः=तेजः, आदित्यवर्णो ब्रह्मप्रकाश इति भावः । अन्तः=अन्तःकरणे, भाति=प्रकाशते । सिंहासनश्रीः=राजाऽऽसनशोभा, राज्यं=राजभावं, राज्ञो भावः कर्म वा राज्यं=तत् । 'राजाऽऽसे' इति यक्प्रत्ययः । वक्ति=प्रतिपादयति । पद्मासनश्रीः=पद्मासनशोभा, अष्टप्रकारेषु योगाङ्गेष्वासनं तृतीयमासनम् । तस्य चतुरशीतिर्भेदास्तत्र पद्मासनं मुख्यम् । तल्लक्षणं यथा—

'ऊर्वोरुपरि विन्यस्य सम्यक्पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्तथा ॥
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥' इति ।

( तादृशस्य पद्मासनस्य, श्रीः=शोभा ) परमं=काष्ठाऽऽरूढं, शममपि=शान्तिमपि, वक्ति=प्रतिपादयति, सूचयतीति भावः । ते=तादृशाः, एते=इमे, यूयं जनकादयः, निमिकुलकुमुदाऽऽनन्दचन्द्राः=निमिकुलम् ( मिथिलेश्वर निमिवंशः )

जिन लोगोंके धनुकी प्रत्यञ्चाका आघातचिह्न, करतलको और ओङ्कारशब्द, कण्ठको आश्रय करता है । प्रतापनामक तेज, भूतलमें और आत्मसम्बन्धी तेज, अन्तःकरणमें प्रकाशित होता है । सिंहासनकी शोभा, राज्यका और पद्मासनकी कान्ति, काष्ठारूढ शान्तिका प्रतिपादन करती है । वैसे आपलोग निमिवंशरूप कुमुदके आनन्दके लिए चन्द्रके तुल्य महाराज हैं ॥ १० ॥

शतानन्दः—सत्यमेतत् । एते हि—

वाराङ्गनाकरतरङ्गितचामरोर्मि-
श्वेतातपत्रशतपत्रिणि राजहंसाः ।
क्रीडन्ति राज्यसरसि स्वरसं च धीरा
योगीन्द्रचन्द्रसुगमे पथि सञ्चरन्ति ॥ ११ ॥

एव कुमुदं ( कैरवः ) तस्य आनन्दाय ( आह्लादाय ) चन्द्राः ( चन्द्रमसः ), तादृशा नरेन्द्राः = राजानः, स्थेति शेषः । निमिकुलोत्पन्ना राजानो यूयं शस्त्राऽस्त्रेष्वध्यात्मशास्त्रे योगशास्त्रे राज्यशासनकर्मणि चाऽनितरसाधारणधिषणाः स्थेति भावः । अत्र रूपकाऽलङ्कारः । स्रग्धरा वृत्तम् ॥ १० ॥

शतानन्दो विश्वामित्रोक्तिं समर्थयते—वाराऽङ्गनेति । (एते) राजहंसाःवाराऽङ्गनाकरतरङ्गितचामरोर्मिश्वेताऽऽतपत्रशतपत्रिणि राज्यसरसि स्वरसंक्रीडन्ति योगीन्द्रचन्द्रसुगमे पथि च संचरन्तीत्यन्वयः ।

एते = पूर्वोक्ताः, निमिवंशोद्भवा इति भावः । राजहंसाः = राजानः ( भूपालाः ) एव हंसाः ( चक्राङ्गाः ), अत्र स्मृत्युक्तसंन्यासिवाचिहंसपदेन मिथिलाऽधीश्वरेषु भूपालेषु विरक्त्यतिशयो द्योत्यते । वाराऽङ्गनाकरतरङ्गितचामरोर्मिश्वेताऽऽतपत्रशतपत्रिणि = वाराङ्गनानां ( वारसुन्दरीणां, चामरग्राहिणीनामिति भावः ) कराः ( हस्ताः ) तैस्तरङ्गितानि ( संजाततरङ्गाणि ) यानि चामराणि ( प्रकीर्णकानि ) तेषामूर्मयः ( तरङ्गाः ) त एव श्वेतानि ( शुक्लानि ) आतपत्राणि ( छत्राणि ) तद्रूपाणि शतपत्राणि ( कमलानि ) सन्ति यस्मिंस्तत् , तस्मिन् । तादृशे राज्यसरसि = राष्ट्रकासारे, स्वरसम् = आत्माऽनुरागपूर्वकं, स्वः ( आत्मीयः ) रसः ( अनुरागः ) यस्मिन् कर्मणि तद्यथा तथा । क्रीडन्ति = क्रीडां कुर्वन्ति एवं च योगीन्द्रचन्द्रसुगमे = योगीन्द्राः ( योगिराजाः ) एव चन्द्राः ( इन्दवः ) तैः सुगमे ( सुगमनयोग्ये, पथि च = मार्गे च, संचरन्ति = विहरन्ति । राजहंसा यथा कमलयुक्ते कासारे स्वरसपूर्वकं क्रीडन्ति चन्द्रसुगमे पथि च संचरन्ति तथैवैते निमिवंशोद्भवा राजानः साऽनुरागं राज्यसुखोपभोगं कुर्वन्ति याज्ञवल्क्यादियोगीन्द्रैः उपदिष्टे योगपथे च संचरन्ति, भोगयोगयोरुभयोरपि ख्यातिप्राप्ता एते निमिवंशोद्भवा भूपाला इति भावः । अत्र रूपकाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ ११ ॥

शतानन्द—यह सच है । ये लोग—

( ये ) राजहंस, वाराङ्गनाओंके हाथोंसे तरङ्गित चामरोंके तरङ्ग ही श्वेतच्छत्ररूप कमलोंसे युक्त राज्यरूप तालाबमें अनुरागपूर्वक क्रीडा करते हैं और योगिराजरूप चन्द्रोंसे सुगम मार्गमें विहार भी करते हैं ॥ ११ ॥

**लक्ष्मणः**—( अपवार्य ) आर्य, राजानोऽप्यमी ब्रह्मविद्याचतुरा इति चित्रीयते मे चेतः।

**रामः**—वत्स, किमिह चित्रम्? ननु—

छत्रच्छाया तिरयति न यद्यन्न च स्प्रष्टुमीष्टे
दृप्यद्गन्धद्विपमदमषीपङ्कनामा कलङ्कः।
लीलालोलः शमयति न यच्चामराणां समीरः,
स्फीतं ज्योतिः किमपि तदमी भूभुजः शीलयन्ति॥ १२॥

---

लक्ष्मण इति। अपवार्य=केवलं रामं प्रतीति भावः। चित्रीयते=विस्मयत इत्यर्थः। आश्चर्यमनुभवतीति भावः। 'नमोवरिवश्चित्रङः क्यच्' इति क्यच्।

छत्रच्छायेति। छत्रच्छाया यत् न तिरयति। दृप्यद्गन्धद्विपमदमषीपङ्कनामा कलङ्कश्च यत् स्प्रष्टुं न ईष्टे। लीलालोलः चामराणां समीरो यत् न शमयति। अमी भूभुजः स्फीतं तत् किमपि ज्योतिः शीलयन्तीत्यन्वयः।

छत्रच्छाया=आतपत्रच्छाया, यत्=ज्योतिः न तिरयति=न तिरोहितं करोति, नाच्छादयतीति भावः। दृप्यद्गन्धद्विपमदमषीपङ्कनामा=दृप्यन्तः ( दर्पं कुर्वन्तः' माद्यन्तीति पाठे—माद्यन्तः ( मत्ता भवन्त इत्यर्थः ) तादृशा ये गन्धप्रधाना द्विपाः ( हस्तिनः ) तेषां मदः ( मदजलम् ) एव मषीपङ्कः ( मसीकर्दमः ) स एव नाम ( अभिधानम् ) यस्य सः। तादृशः कलङ्कश्च=अपवादश्च, राज्यलक्ष्मीजनितमदश्चेति भावः। यत्=ज्योतिः, स्प्रष्टुं=स्पर्शं कर्तुं, मलिनीकर्तुमिति भावः। न ईष्टे=न समर्थो भवति। लीलालोलः=विलासचञ्चलः, चामराणां=प्रकीर्णकानां, समीरः=वातः, यत्=ज्योतिः, न शमयति=न शान्तं विदधाति, नो निर्वापयतीति भावः। अमी=एते, भूभुजः=निमिवंशप्रसूता राजानः, स्फीतं=समृद्धं, 'स्फायी वृद्धौ' इति धातोर्निष्ठायां क्तप्रत्ययः, स्फायः स्फी निष्ठायाम्' इति स्फीभावः। तत्=तादृशं, किमपि=अनिर्वचनीयं, ज्योतिः=प्रकाशं, परमात्मस्वरूपमिति भावः।

---

**लक्ष्मण**—( केवल रामको सुनाकर ) ये लोग राजा होकर भी ब्रह्मविद्यामें निपुण हैं, इस बात पर मेरा चित्त आश्चर्यका अनुभव कर रहा है।

**राम**—वत्स! इसमें क्या आश्चर्य है?

छत्रच्छाया जिस ज्योतिको आच्छादित नहीं करती है। दर्पवाले गन्धगजोंका स्याही के सदृश काला मदजल भी जिसे छू नहीं सकता। लीलासे चञ्चल चामरवायु जिसे नहीं बुझा सकता है; मिथिलाके ये राजवर्ग समृद्ध और अनिर्वचनीय उस परमात्मस्वरूप ज्योतिका परिशीलन करते हैं॥ १२॥

**विश्वामित्रः**—आङ्गिरसोचितमात्थ, राजहंसा इति । सकलकुवलयोत्तंसा राजहंसा अमी ।

**जनकः**—भगवन्, इदमस्मत्प्राचीनेषु शोभते न तु मयि कतिपयग्रामटिकास्वामिनि ।

**विश्वामित्रः**—मैवं भोः,

> अवनिमवनिपालाः सन्तु शः पालयन्ता
> मवनिपतियशस्तु त्वां विना नापरस्य ।

---

शीलयन्ति = अभ्यस्यन्ति । यच्छुत्रादिना नाऽऽच्छाद्यते, राजलक्ष्मीजनितमदश्च यत् स्प्रष्टुमपि न शक्तः' उभयत्र आविर्भूतश्चामराणां समीरोऽपि यच्छिर्वापयितुमसमर्थः, निमिवंशप्रसूता एते भूपालास्तादृशं परमात्मस्वरूपमबाह्यं ज्योतिः परिशीलयन्तीति भावः। इतरज्योतिरपेक्षया परमात्मसंज्ञकस्य ज्योतिष आधिक्यवर्णनाद्व्यतिरेकाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ १२ ॥

विश्वामित्र इति । आङ्गिरसोचितं = बृहस्पतिवचनसदृशमिति भावः । अङ्गिरसोऽपत्यं पुमानाङ्गिरसः, 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'त्यण् । 'जीव आङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः ।' इत्यमरः । आङ्गिरसेनोचितं यथा स्यात्तथेति क्रियाविशेषणम् । यद्वा हे आङ्गिरस = अङ्गिरोगोत्रोद्भव !, उचितं = योग्यम् आत्थ = कथयसि । सकलकुवलयोत्तंसाः = सकलानां (समस्तानाम्) कुवलयानाम् (उत्पलानाम्) उत्तंसाः (भूषणभूताः) इति हंसपक्षे । राजपक्षे तु—सकलस्य (समग्रस्य) कोः (पृथिव्याः, 'गोत्रा कुः पृथिवी पृथ्वी'त्यमरः) वलयस्य (मण्डलस्य)।

जनक इति । कतिपयग्रामटिकास्वामिनि = परिमितक्षुद्रग्रामपतौ ।

विश्वामित्रो विदेहराजं जनकं प्रशंसति—अवनिमिति । अवनिपालाः सन्तु शोऽवनिं पालयन्ताम् । तु अवनिपतियशः त्वां विना अपरस्य न । हे जनक ! यत् कनकगौरीं तनूजां प्रसूता भूः जगति भवन्तं दुहितृमन्तं वितेन इत्यन्वयः ।

---

**विश्वामित्र**—आङ्गिरस ! 'राजहंस' यह आप ठीक कहते हैं । सकल उत्पलोंके (अथवा भूमण्डलके) ये राजहंस हैं ।

**जनक**—आपका ऐसा कहना हमारे पूर्वजोंके लिए सुहाता है न कि कतिपय छोटे गाँवोंके स्वामी मेरे लिए ।

**विश्वामित्र**—ऐसा नहीं ।

और राजा लोग भले ही बहुशः पृथिवीका पालन कर लें, परन्तु राजाकी कीर्ति आपको छोड़कर दूसरेकी नहीं है । हे जनक ! जो कि सोनेके समान पीतवर्णवाली कन्याको

जनक, कनकगौरीं यत्प्रसूता तनूजां
जगति दुहितृमन्तं भूर्भवन्तं वितेने ॥ १२ ॥

जनकः—भगवन्, नूतनभुवननिर्माणनिपुणस्य भगवतः कियतीयमभिनववचनचातुरी नाम, स खलु भवान्यस्य,—

शलाकीकृत्य स्वां दृशमसमकोपारुणरुचिं
सुरश्रेणीचित्रं गगनतलभित्तौ रचयतः।

अवनिपालाः=भूपालाः, अन्ये राजान इति भावः। सहस्रशः=बहुशः, अवनिं=पृथिवीं, पालयन्तां = पान्तु। तु=परन्तु, अवनिपतियशः=भूपतिकीर्तिः, त्वां विना=भवन्तं विना, अपरस्य=अन्यस्याऽवनिपतेः, न=नाऽस्ति, काममन्ये भूपा भुवं रक्षन्तु परं वास्तविकी भूपकीर्तिस्तवैव, भूपान्तरस्य नास्तीति भावः। उक्तेऽर्थे कारणमुपन्यस्यति—जनकेति। हे जनक=हे विदेहराज!, यत्=यस्मात्कारणात्, कनकगौरीं=कनकम् (सुवर्णम्) इव गौरी (पीता), कनकगौरी तां, तादृशीं, तनूजां=तनयां, सीतामिति भावः। प्रसूता=उत्पादितवती, 'गत्यर्थाकर्मके'ति सूत्रेण कर्तरि क्त प्रत्ययः। भूः=पृथिवी, जगति=लोके, भवन्तं=त्वामेव, दुहितृमन्तं=प्रशस्ततनयाशालिनं, सीतयेति भावः। वितेने=चकार, पृथिवीप्रसूतया लोकोत्तरगुणगणधन्यया कन्यया सीतया त्वं दुहितृमान्, अतस्त्वमेव वस्तुतः पृथिवीपतिरिति भावः।

अत्र द्वितीयचरणस्थितवाक्ये उत्तरार्द्धवाक्यस्य हेतुत्वाद्वाक्याऽर्थहेतुकं काव्यलिङ्गमलङ्कारः। मालिनी वृत्तम् ॥ १२ ॥

जनक इति। नूतनभुवननिर्माणनिपुणस्य = नूतनं (नवीनम्) यत् भुवनं (लोकः) तस्य निर्माणे (रचनायाम्) निपुणस्य (प्रवीणस्य)। अभिनववचनचातुरी=अभिनवा (नूतना) वचनचातुरी (वाक्यविदग्धता)। शलाकीकृत्येति। असमकोपाऽरुणरुचिं स्वां दृशं शलाकीकृत्य गगनतलभित्तौ सुरश्रेणीचित्रं रचयतः प्रथमरचितं सुधांऽशोः भानोश्च बिम्बयुगलं सुधालावासाम्बुप्रभरितपात्रद्वयम् अभूदित्यन्वयः।

उत्पन्न करनेवाली पृथ्वीने आपको ही सीताके समान कन्याका पिता बनाया ॥ १२ ॥

जनक—नये लोकोंकी रचनामें प्रवीण आपकी यह कितनी नये वचनोंकी चातुरी है। आप ऐसे हैं जिसके—अनुपम क्रोधसे लाल अपनी दृष्टिको शलाका (चित्र लिखनेकी कूची) बनाकर आकाशरूप भित्ति (आधार) में देवपङ्क्तिके चित्रकी रचनाकरनेवाले आप

सुधांशोर्भानोश्च प्रथमरचितं बिम्बयुगलं
सुधालाक्षासान्द्रद्रवभरितपात्रद्वयमभूत् ॥ १४ ॥

शतानन्दः—राजर्षे, सत्यमात्थ, किमुच्यतेऽसौ भगवान्,
त्रिशङ्कोः स्वर्लोकादवनितलपातं रचयितुं
सुनासीरे कोपाद्विकसितपदाब्जे विकसितः ।

---

असमकोपाऽरुणरुचिम् = असमेन (असमानेन, अनुपमेनेति भावः) कोपेन (क्रोधेन) अरुणरुचिं (रक्तवर्णाम्) तादृशीं, स्वाम् = आत्मीयां, दृशं = दृष्टिं, शलाकीकृत्य = चित्रलेखनोचितां कूर्चिकां कृत्वा, गगनतलभित्तौ = गगनतलम् (आकाशतलम्) एव भित्तिः (कुड्यं, चित्राश्रयीभूतमिति भावः) तत्र, सुरश्रेणीचित्रं = सुरश्रेण्याः (देवपङ्क्तेः) चित्रम् (आलेख्यम्), रचयतः = विदधतः, तवेति शेषः प्रथमरचितं = प्रथमं (प्राक्, ब्रह्मणेति शेषः) रचितं (विहितम्), सुधांशोः = चन्द्रमसः, भानोश्च = सूर्यस्य च, बिम्बयुगलं = मण्डलयुग्मं, सुधालाक्षासान्द्रद्रवभरितपात्रद्वयं = सुधा (अमृतम्) स्वच्छलेखनद्रव्यं वा) लाक्षा (रक्तद्रव्यम्) च तयोः सान्द्रः (घनः) यो द्रवः (रसः) तेन भरितं (पूर्णम्) पात्रद्वयम् (भाजनद्वितयम्) । अभूत् = सञ्जातम् । नूतनलोकचित्रकारस्य महर्षेर्विश्वामित्रस्य कोपारुणदृष्टिश्चित्रलेखनकूर्चिका, गगनतलं लेखनाऽऽधारभूता भित्तिः, नूतनसुरश्रेणी चित्रणीयपदार्थः, एवं च प्राक्सृष्टं चन्द्रमण्डलं सुधाद्रवभरितं, सूर्यमण्डलं च लाक्षारसपूर्णमित्थं चैतन्मण्डलद्वयं चित्ररञ्जनाऽर्थं पात्रद्वयमेवमत्र रूपकाऽलङ्कारः । शिखरिणी वृत्तम् ॥ १४ ॥

त्रिशङ्कोरिति । त्रिशङ्कोः स्वर्लोकात् अवनितलपातं रचयितुं विकसितपदाब्जे सुनासीरे विकसितो यदीयोऽसौ नव्यत्रिदशनगराऽऽरम्भरभसो भक्त्या मुकुलितकराब्जे सुरस्तोमे मुकुलित इत्यन्वयः ।

त्रिशङ्कोः = तन्नामकस्य सूर्यवंशोद्भवस्य राज्ञः, विश्वामित्रप्रयत्नेन सशरीरं स्वर्गगमनोद्यतस्येति भावः । स्वर्लोकात् = स्वर्गलोकात्, अवनितलपातं = भूतलनिपातं, रचयितुं = विधातुं, विकसितपदाब्जे = विकसितं (प्रस्फुटम्) पदाब्जं कमलम्) यस्य सः, तस्मिन्, पादाघाततत्परे सतीति भावः । तादृशे सुनासीरे =

---

के, महादेवसे प्रथमरचित चन्द्रमण्डल और सूर्यमण्डल, चून और लाक्षाके रससे पूर्ण दो पात्र हो गये ॥ १४ ॥

शतानन्द—राजर्षे ! आप सच कहते हैं । इन महर्षिको क्या कहें । त्रिशङ्कुको स्वर्गसे पृथ्वी पर गिरानेके लिए इन्द्रके चरण उठानेपर नवीन स्वर्गकी रचनाके लिए

यदीयोऽसौ नव्यत्रिदशनगरारम्भरभसः
सुरस्तोमे भक्त्या मुकुलितकराब्जे मुकुलितः ॥ १५ ॥

लक्ष्मणः—( अपवार्य ) आर्य, कथमेवं-विधं भगवतः प्रतापितभुवनत्रयं तपोऽभिधानं तेजः ।

रामः—अपि न विदितं ते राजर्षेरिदम् ?

रोषाभिभूतपुरुहूतपदाभिभूतं,
दृष्ट्वा त्रिशङ्कुमथ कोपविपाटलश्रीः ।

---

इन्द्रे, सतीति शेषः । विकसितः = प्रफुल्लः, यदीयः यत्सम्बन्धी, यस्येति भावः । असौ = पूर्वकालिकः, नव्यत्रिदशनगराऽऽरम्भरभसः = नव्यं ( नूतनम् ) यत् त्रिदशनगरं ( देवपुरं, स्वर्ग इति भावः ) तस्य च आरम्भः ( रचनोपक्रमः ), तस्मिन् रभसः ( वेग उत्साहो वा ), सः । भक्त्या = अनुरक्त्या, मुकुलितकराऽब्जे = निमीलितहस्तकमले, अञ्जलिप्रवण इति भावः । तादृशे च सुरस्तोमे = देवसमूहे, मुकुलितः = सङ्कुचितः । इन्द्रे स्वर्गाद्त्रिशङ्कुं, पातयितुमुद्यते सति यस्य महर्षेर्विश्वामित्रस्य स्वर्गान्तरं रचयितुमुत्साहो विकसितः पुनस्तस्यैव देवसमूहे प्रणते सति पूर्वोक्त उत्साहः सङ्कुचितः, सतां कोपस्य प्रणामान्तत्वादिति भावः । अत्र रूपकाऽलङ्कारः । शिखरिणी वृत्तम् ॥ १५ ॥

लक्ष्मण इति । प्रतापितभुवनत्रयं = प्रतापितं ( सन्तापितम् ) भुवनत्रयं (लोकत्रयम् ) येन तत् ।

रामो विश्वामित्रमहिमानं प्रकाशयति—रोषाऽभिभूतेति । त्रिशङ्कुं रोषाऽभिभूतपुरुहूतपदाऽभिभूतं दृष्ट्वा अथ कोपविपाटलश्रीः आकुड्मलीकृतकराऽम्बुजराजिरम्या अस्य दृष्टिः सन्ध्या इव यत् अमरैः उपासितेत्यन्वयः ।

त्रिशङ्कुं = तन्नामकं सूर्यवंशप्रसूतं राजानं, रोषाऽभिभूतपुरुहूतपदाऽभिभूतं = रोषेण ( कोपेन ) अभिभूतः ( आत्तगर्वः, गर्वारूढ इत्यर्थः ) यः पुरुहूतः ( इन्द्रः ) तस्य पदेन ( चरणेन ) अभिभूतम् ( तिरस्कृतम् ) । दृष्ट्वा = विलोक्य, अथ =

---

विकसित इनका उत्साह देवताओंके हाथ जोड़कर प्रार्थना करनेपर सङ्कुचित हो गया ॥ १५ ॥

लक्ष्मण—( केवल रामको सुनाकर ) आर्य ! भगवान् विश्वामित्रका लोकत्रयको सन्तप्त करनेवाला, तपस्या नामवाला यह कैसा तेज है ?

राम—( भूतपूर्व ) राजर्षिकी यह बात तुम नहीं जानते हो ?

त्रिशङ्कुको कोपारूढ इन्द्रके चरणसे तिरस्कृत देखकर अनन्तर कोपसे लाल कान्ति-

आकुड्मलीकृतकराम्बुजराजिरम्या,
सन्ध्येव दृष्टिरमरैर्यदुपासिताऽस्य ॥ १६ ॥

विश्वामित्रः—राजर्षे, अपि तावद् रत्नगर्भागर्भसम्भवं कन्यारत्नमलङ्कुरुते त्वाम् ?

जनकः—भगवन्, भवत्प्रसादादधुना जामातृरत्नमलङ्करिष्यते । ( राममवलोक्य ) ( सकौतुकम् ) भगवन् !

सकलजनविलोकनोत्सवानामय-
मयनं कतरः पुरः कुमारः ? ।

---

अनन्तरं, कोपविपाटलश्रीः = कोपेन ( क्रोधेन ) विपाटला ( अतिरक्ता ) श्रीः (कान्तिः) यस्याः सा, अत एव आकुड्मलीकृतकराऽम्बुजराजिरम्या = आकुड्मलीकृता ( आमुकुलीकृता, प्रणामकाले स्तोकं संकोचितेति भावः ) या कराम्बुजराजिः ( हस्तकमलपङ्क्तिः, देवानामिति शेषः ) । तस्या रम्या ( मनोहरा ), अस्य = विश्वामित्रस्य, दृष्टिः = दृक्, सन्ध्या इव = सायं वेला इव, यत्, अमरैः = देवैः, उपासिता = पूजिता, सन्ध्यायमपि कृताञ्जलयो जना उपासते । उपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १६ ॥

विश्वामित्र इति । रत्नगर्भागर्भसम्भवं = रत्नगर्भा ( पृथिवी ), तद्गर्भसम्भवम् ( तदभ्यन्तरदेशप्रसूतम् ) । 'भूतधात्री रत्नगर्भा जगती सागराऽम्बरा ।' इत्यमरः ।

सकलजनेति । सकलजनविलोकनोत्सवानाम् अयनम् अयं पुरः कुमारः कतरः ? यो हरितमणिमयूखहारिणः कल्पतरोः प्ररोहलीलां कलयतीत्यन्वयः ।

सकलजनविलोकनोत्सवानां = सकलजनानां ( सम्पूर्णमनुष्याणाम् ) विलोकनस्य ( दर्शनस्य ) उत्सवानाम् ( उद्धर्षाणाम् ), अयनम् = आश्रयः, अयम् = एषः, पुरः = पुरः स्थितः, कुमारः = बालकः, कतरः = कः, कस्य सुतः किं देशश्चेति भावः ।

---

वाली और देवताओंके जोड़े गये करकमलोंकी पङ्क्तिसे मनोहर इनकी दृष्टि की सन्ध्याकी तरह देवताओंने उपासना की ॥ १६ ॥

विश्वामित्र—राजर्षे ! रत्नगर्भा ( पृथ्वी ) के गर्भसे उत्पन्न कन्यारत्न ( सीता ) क्या आपको अलङ्कृत करती है ?

जनक—भगवन् ! आपके अनुग्रहसे इस समय श्रेष्ठ जामाता ( दामाद ) भी मुझे अलङ्कृत करेंगे । ( रामको देखकर, कौतुकके साथ ) भगवन् !

संपूर्ण मनुष्योंके दर्शनोत्सवोंके आश्रय ये पुरःस्थित कुमार कौन है ? जो कि हरित-

हरितमणिमयूखहारिणो यः,
कलयति कल्पतरोः प्ररोहलीलाम् ॥ १७ ॥

शतानन्दः—भगवन्, अयं च कतरो यः खल्वस्यैव ।
नीलनीरजदलोज्ज्वलकान्तेर-
न्तिके स्फुरति काञ्चनगौरः ।
लोचनस्य सुदृशः श्रवणाग्रे
सन्निविष्ट इव चम्पक-गुच्छः ॥ १८ ॥

---

यः = कुमारः, हरितमणिमयूखहारिणः = हरितमणिः ( मरकतरत्नम् ) तस्य मयूखः ( किरणः ) स इव हारी ( मनोहरः ), तस्य । तादृशस्य कल्पतरोः = कल्पवृक्षस्य, प्ररोहलीलाम् = अङ्कुरशोभां, कलयति = धारयति । अत्र हरितमणिमयूखसादृश्येन रामस्य सन्तापहारकत्वमेवं कल्पतरुप्ररोहकलनेन शिष्टवाञ्छापूरकत्वं च सूचित-मिति ज्ञेयम् । अत्र 'हरितमणिमयूखहारिणा' इत्यत्रोपमा 'कल्पतरोः प्ररोहलीलां कलयती'त्यत्र ललितोपमा । तल्लक्षणं सोदाहरणं यथा चन्द्रालोके—'उपमाने च लीलादिपदाढ्ये ललितोपमा । स्वन्नेत्रयुगलं धत्ते लीलां नीलाऽम्बुजन्मनोः ॥' इति तथा चैतयोर्द्वयोरलङ्कारयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । पुष्पिताग्रा वृत्तम् ॥ १७ ॥

लक्ष्मणमनूद्य शतानन्दः कथयति—नीलनीरजेति । नीलनीरजदलोज्ज्वलकान्तेः अन्तिके काञ्चनगौरो यः सुदृशो लोचनस्य श्रवणाऽग्रे सन्निविष्टः चम्पकगुच्छ इव स्फुरतीत्यन्वयः ।

नीलनीरजदलोज्ज्वलकान्तेः = नीलं ( श्यामम् ) यत् नीरजदलं ( कमलपत्रम् ) तदिव उज्ज्वला ( निर्मला ) कान्तिः ( शोभा ) यस्य सः, तस्य, रामस्येति भावः । अन्तिके = समीपे, काञ्चनगौरः = सुवर्णपीतः, यः = अपरः कुमारः, लक्ष्मण इति भावः । सुदृशः = सुलोचनायाः, लोचनस्य = नेत्रस्य, नीलवर्णविशिष्टस्येति शेषः । श्रवणाऽग्रे = कर्णाऽग्रे, सन्निविष्टः = स्थितः, चम्पकगुच्छ इव = चाम्पेयपुष्पस्तबक इव, 'अथ चाम्पेयश्चम्पको हेमपुष्पकः' इत्यमरः । स्फुरति = शोभते । अत्रोपमाऽलङ्कारः । स्वागता वृत्तम् ॥ १८ ॥

---

मणि (पन्ना) की किरणके सदृश मनोहर कल्पवृक्षके अङ्कुरकी शोभाको धारण कर रहे हैं ॥

शतानन्द—भगवन् ! और ये कौन हैं ? जो इन्हींके—

नील कमलपत्रके सदृश निर्मल कान्तिवाले इनके समीपमें सोनेके सदृश पीतवर्णवाले जो सुन्दरीके नेत्रके सामने कानके अग्रभागमें रक्खे गये चम्पकगुच्छके समान शोभित हो रहे हैं ॥ १८ ॥

विश्वामित्रः—नाम्ना तावद्रामलक्ष्मणावेतौ ।

जनकः—अहो कर्णामृतम् ।

शतानन्दः—( निर्वर्ण्य ) भगवन् ,

एतयोरहमुदाररूपयो-रुल्लसत्सहज-सौहृदश्रियोः ।
कामपि स्वजनतां विभावये, कौस्तुभामृतमयूखयोरिव ॥१६॥

जनकः—

एतयोः प्रकृतिरम्यरूपयोरुल्लसत्सहजसौहृदश्रियोः ।

---

विश्वामित्र इति । नाम्ना=अभिधानेन, 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया ।

शतानन्द इति । निर्वर्ण्य=दृष्ट्वा, 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।' इत्यमरः ।

एतयोरिति । अहम् उदाररूपयोः उल्लसत्सहजसौहृदश्रियोः एतयोः ] कौस्तुभाऽमृतमयूखयोरिव काम् अपि स्वजनतां विभावय इत्यन्वयः ।

अहं=शतानन्दः, उदाररूपयोः=महासौन्दर्ययोः, अतिशयसुन्दरयोरिति भावः, 'उदारोदातृमहतो'रित्यमरः । उल्लसत्सहजसौहृदश्रियोः=उल्लसन्ती (प्रकाशमाना) सहजसौहृदस्य ( स्वाभाविकसौहार्दस्य ) श्रीः ( शोभा ) ययोस्तयोः । एतयोः=कुमारयोः, रामलक्ष्मणयोरिति भावः । कौस्तुभाऽमृतमयूखयोरिव=हरिमणिचन्द्रयोरिव, अमृतरूपा मयूखा यस्य सोऽमृतमयूखश्चन्द्र इत्यर्थः । काम् अपि=अनिर्वचनीयां, स्वजनताम्=आत्मीयजनतां, विभावये=तर्कयामि । समानप्रभवत्वाद्यथा कौस्तुभचन्द्रमसौ सादृश्यशालिनौ तथैवैतौ कुमारावपि तर्कयामीति भावः । अत्रोपमाऽलङ्कारः । रथोद्धतावृत्तम् ॥ १९ ॥

एतयोरिति । प्रकृतिरम्यरूपयोः उल्लसत्सहजसौहृदश्रियोः प्रत्यगात्मपरमात्मनोरिव एतयोः कोऽपि आन्तरः सन्निधिः स्फुरतीत्यन्वयः ।

---

विश्वामित्र—इन दोनोंका नाम राम और लक्ष्मण है ।

जनक—अहो कर्णामृत सदृश नाम है ।

शतानन्द—( देखकर ) भगवन् !

मैं अतिशय सुन्दर और स्वाभाविक सौहार्दकी शोभासे प्रकाशमान इन दोनोंकी कौस्तुभमणि और चन्द्रकी तरह अनिर्वचनीय आत्मीयता है ऐसा विचार कर रहा हूँ ॥१९॥

जनक—स्वभावसे ही मनोहर सौन्दर्यवाले और स्वाभाविक सौहार्दकी शोभासे प्रका-

आन्तरः स्फुरति कोऽपि सन्निधिः, प्रत्यगात्मपरमात्मनोरिव॥२०॥

विश्वामित्रः—अयि योगीश्वरशिष्य, ईदृशेषु गभीरेष्वभिनवोदन्तवेशन्तेषु भवत एव मनो निमज्जति। स्वजनभावे पुनरनयोर्वयमपि साक्षिणः।

जनकः—तत् किं भ्रातरावेतौ ?।

विश्वामित्रः—अथ किम्।

जनकः—( सहर्षं निर्वर्ण्य )

तनुश्रिया निर्जितचम्पकोत्पलौ
सुवर्णनीलोत्पलकोशकोमलौ।

---

प्रकृतिरम्यरूपयोः = प्रकृत्या ( स्वभावेन ) रम्यरूपयोः ( मनोहरसौन्दर्ययोः )। उल्लसत्सहजसौहृदश्रियोः = उल्लसन्ती ( प्रकाशमाना ) सहजसौहृदस्य ( स्वाभाविकसौहार्दस्य ) श्रीः ( शोभा ) ययोस्तयोः। तादृशयोरेतयोः = उभयोः कुमारयोः' रामलक्ष्मणयोरिति भावः। प्रत्यगात्मपरमात्मनोरिव = जीवेश्वरयोरिव, कोऽपि = अनिर्वचनीयः, आन्तरः = आभ्यन्तरिकः, बाह्यसादृश्याऽतिरिक्त इति भावः। सन्निधिः = सामीप्यं, सम्बन्ध इति भावः। स्फुरति = शोभते। एतयोः कुमारयोर्न केवलं रूपादिकृतं बाह्यसादृश्यं जीवात्मपरमात्मनोरिवाऽनिर्वचनीयमाभ्यन्तरिकमपि सादृश्यं प्रतीयत इति भावः। रथोद्धतावृत्तम् ॥ २० ॥

विश्वामित्र इति। योगीश्वरशिष्य = याज्ञवल्क्यान्तेवासिन्! एतया सम्बुद्धया जनकस्य योगशास्त्राऽभ्यासो द्योत्यते। ईदृशेषु, गभीरेषु = गम्भीरेषु, अभिनवोदन्तवेशन्तेषु = नूतनवार्तारूपपल्वलेषु, प्रत्यगात्मपरमात्मसादृश्यप्रयोगरूपेष्वल्पसरःस्विति भावः। निमज्जति = निमज्जनं करोति, अन्तर्लीयत इति भावः। जनको रामलक्ष्मणौ वर्णयति—तनुःश्रियेति।

तनुश्रिया निर्जितचम्पकोत्पलौ सुवर्णनीलोत्पलकोशकोमलौ दृशाम् उत्सववान् दक्षिणौ सुलक्षणौ लक्ष्मणलक्ष्मणाऽग्रजौ अहो! इत्यन्वयः।

---

शमान इन दोनों ( राम और लक्ष्मण ) का जीवात्मा और परमात्माके सदृश अनिर्वचनीय आभ्यन्तरिक सामीप्य शोभित हो रहा है ॥ २० ॥

विश्वामित्र—हे योगीश्वर (याज्ञवल्क्य) शिष्य! ऐसे गम्भीर वृत्तान्तरूप पल्वलों (छोटे तालाबों) में आपका ही मन निमज्जन करता है। इन दोनोंकी बन्धुतामें हम भी साक्षी हैं।

जनक—तो क्यों ये दोनों भाई हैं ?

विश्वामित्र—और क्या ?

जनक—( हर्षके साथ देखकर )

शरीरकी कान्तिसे चम्पक और नीलकमलको जीतनेवाले, सुवर्ण और नीलकमलके

अहो ! दृशामुत्सवदानदक्षिणौ
सुलक्षणौ लक्ष्मण-लक्ष्मणाग्रजौ ॥ २१ ॥

( पुना रामं विलोक्य । सकौतुकम् )

यथाऽहं निस्सीमोत्सवसुभगभोगे भवकथा-
पथातीते चेतः प्रणयिनि रमे पुंसि परमे ।
तथैवाऽस्मिन् बाले ! दलदमल-नीलोत्पलदलो-
दरश्यामे रामे नयनपदवीमागतवति ॥ २२ ॥

---

तनुश्रिया = शरीरकान्त्या, निर्जितचम्पकोत्पलौ = निर्जिते ( अभिभूते ) चम्पकोत्पले ( चाम्पेय नीलकमले ) याभ्यां तौ । सुवर्णनीलोत्पलकोशकोमलौ = हेमनीलकमलाऽभ्यन्तरभागमृदुलौ, दृशां = लोचनानाम् , उत्सवदानदक्षिणौ = हर्षवितरणोदारौ, सुलक्षणौ = शुभलक्षणयुक्तौ, रेखाकारध्वजापत्रादिविलसिताविति भावः । लक्ष्मणलक्ष्मणाऽग्रजौ=लक्ष्मणरामौ स्त इति शेषः । अहो = आश्चर्यम् । अत्र व्यतिरेकोपमयोरेकाश्रयाऽनुप्रवेशात्सङ्करः । वंशस्थं वृत्तम् ॥ २१ ॥

यथाऽहमिति । अहं यथा निःसीमोत्सवसुभगभोगे भवकथापथाऽऽतीते चेतःप्रणयिनि परमे पुंसि रमे; तथैव दलदमलनीलोत्पलदलोदरश्यामे अस्मिन्बाले रामे नयनपदवीम् आगतवति ( सति ) रम इत्यन्वयः । अहं = जनकः, यथा = येन प्रकारेण, निःसीमोत्सवसुभगभोगे = निर्गता सीमा ( अवधिः ) यस्मात्स निःसीमः ( सीमारहितः, इयत्तारहित इति भावः ) एतादृशो य उत्सवः ( महः ) तेन सुभगः ( मनोहरः ) भोगः ( सुखसाक्षात्कारः ) यस्य सः, तस्मिन् । परमानन्दमय इति भावः, 'तस्यैवानन्दस्य मात्रामन्यानि भूतान्युपजीवन्ती'ति श्रुतेः । एवं च भवकथापथाऽतीते = सांसारिकवार्ताऽतिक्रान्ते, यद्वा भवपदं जन्मादेरुपलक्षकं तेन जन्माऽऽदिवार्ताऽतिक्रान्ते, अलौकिक इति भावः । पुनश्च चेतःप्रणयिनि = मानसप्रीत्यास्पद इति भावः, तादृशे परमे पुंसि = उत्तमपुरुषे, परमात्मनीति भावः । रमे = परमाऽऽनन्दमनुभवामीति भावः । तथैव = तेन प्रकारेणैव । दलदमलनीलो-

---

भीतरी भागके सदृश कोमल, नेत्रोंके उत्सवदानमें उदार और शुभलक्षणोंसे सम्पन्न ये लक्ष्मण और उनके बड़े भाई ( राम ) हैं । आश्चर्य है ।

( फिर रामको देखकर कौतुकपूर्वक )

मैं जिस प्रकार इयत्तारहित आनन्दसे मनोहर भोगवाले, सांसारिक वार्ताको अतिक्रमण करनेवाले और चित्तकी प्रीतिके आधार परमात्मामें परम आनन्दका अनुभव करता हूँ; उसी प्रकार विकसित निर्मल नीलकमलके पत्रके मध्यभागके सदृश श्यामवर्णवाले इस बालक रामको देखने पर परमआनन्दका अनुभव कर रहा हूँ ॥ २२ ॥

विश्वामित्रः—( स्वगतम् ) उचितमेतत् । न खलु लोकलोचनानन्दकरः शीतकरः शङ्करशिरःशयालोः कलानिधेरपरं तत्त्वम् । ( प्रकाशम् ) राजर्षे, स एष सौन्दर्यातिशयस्य महिमा ।

जनकः—कः पुनराभ्यां पुत्रवतां मौलिमाणिक्यमारोपितः ? ।

विश्वामित्रः—

किं शीतांशुमरीचयः, किमु सुरस्रोतस्विनीवीचयः
किं वा केतकसूचयः, किमथ वा चन्द्रोपलानां चयः ।

---

त्पलदलोदरश्यामे = दलत् ( विकसत् ) अमलं ( निर्मलम् ) यत् नीलोत्पलदलं ( नीलकमलपत्रम् ) तस्योदरम् ( मध्यभागः ) तदिव श्यामः ( नीलवर्णः ), तस्मिन् । अस्मिन् = निकटस्थिते, बाले = कुमारे, रामे = रामचन्द्रे, नयनपदवीं = लोचनमार्गं, दृग्गोचरतामिति भावः । आगतवति = प्राप्तवति सति, रमे = परमानन्दमनुभवामीति भावः । एतेन परमात्मसादृश्येन रामस्य परमात्माऽवतारत्वं व्यज्यते । अत्रोपमाऽलङ्कारः । शिखरिणीवृत्तम् ॥ २२ ॥

विश्वामित्र इति । स्वगतम् = आत्मगतम् । लोकलोचनाऽऽनन्दकरः = जननयनहर्षोत्पादकः, शीतकरः = हिमांऽशुः, चन्द्र इत्यर्थः । शङ्करशिरःशयालोः = शिवमस्तिकवर्तिनः, कलानिधेः = चन्द्रस्य, अर्धचन्द्रस्येति भावः । नाऽपरं तत्त्वम् = न भिन्नः पदार्थः । गगनमण्डलोदिताच्चन्द्राद्यथा शिवशिरोवर्तिनश्चन्द्रस्य भेदो न तथैव परमात्मनोऽपि रामचन्द्रस्य न भेद इति भावः ।

जनक इति । आभ्यां = कुमाराभ्यां, मौलिमाणिक्यं = मुकुटरत्नतामिति भावः । अनयोः कुमारयोः को जनक इति तात्पर्यम् ।

किं शीतांऽशुमरीचय इति । किं शीतांऽशुमरीचयः ? किमु सुरस्रोतस्विनीवीचयः ? किं वा केतकसूचयः ? अथ वा किं चन्द्रोपलानां चयः ? इत्थं जातकुतूहलाभिः त्रिदिवौकसां कान्ताभिः अभितः सानन्दम् आलोकिताः यत्कीर्तयो दिशि दिशि क्रीडन्तीत्यन्वयः ।

---

विश्वामित्र—( मन ही मन ) यह उचित है । लोकके नेत्रोंको आनन्दित करनेवाले चन्द्रमा शङ्करके शिरमें रहनेवाले चन्द्रसे भिन्न पदार्थ नहीं है । ( सुनाकर ) राजर्षे ! यह अतिशय सुन्दरताकी महिमा है ।

जनक—इन दोनोंसे पुत्रवान् जनोंमें कौन मुकुटरत्न हुआ है ?

विश्वामित्र—क्या ये चन्द्रकी किरणें हैं ? अथवा आकाशगङ्गाकी तरङ्गें हैं ? या केतकी पुष्पोंके अग्रभाग हैं ? या चंद्रकान्तमणियोंका समूह है ? इस प्रकार कुतूहलसे युक्त देव-

इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः
कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्त्तयः ॥२३॥

रामः—वत्स, नूनमयं सकलगुणावदातस्तातः प्रस्तूयते ।

लक्ष्मणः—अपि नाम भूयोऽपि प्रस्तोष्यते ?

विश्वामित्रः—अपि च ।

---

किमिति प्रश्ने । शीतांशुमरीचयः = शीतांशोः ( चन्द्रस्य ) मरीचयः ( किरणाः ) । किमु इति वितर्के । सुरस्रोतस्विनीवीचयः = सुरस्रोतस्विन्याः ( देवनद्याः, मन्दाकिन्या इति भावः ) वीचयः ( तरङ्गाः ) । किं वा = अथ वा, केतकसूचयः = केतकीपुष्पाऽग्रभागाः । अथ वा = यद्वा, किं, चन्द्रोपलानां = चन्द्रपाषाणानां, चन्द्रकान्तमणीनामिति भावः । चयः = समूहः । इत्थम् = अनेन प्रकारेण, 'इदमस्थमु'रिति थमुप्रत्ययः 'कृन्मेजन्त' इति तदन्तस्याऽव्ययत्वम् । जातकुतूहलाभिः= उत्पन्नकौतुकाभिः, त्रिदिवौकसां = स्वर्गस्थानानां, देवानामित्यर्थः । कान्ताभिः = वधूभिः, देवीभिरित्यर्थः । अभितः = समन्तात् सानन्दम् = आनन्दपूर्वकम् , आलोकिताः = दृष्टाः, यत्कीर्तयः = यद्यशांसि दिशि दिशि=प्रतिदिशं वीप्सायां द्विरुक्तिः । क्रीडन्ति = क्रीडनं कुर्वन्ति । यत्कीर्तयः प्रतिदिशं व्याप्ता इति भावः । अत्र शुद्धसन्देहोऽलङ्कारः । 'यशसि धवलता' इति कविप्रसिद्धिमनुसृत्य नीरूपस्याऽपि यशसो धावल्यवर्णनं बोध्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

राम इति । नूनं = निश्चयेन । सकलगुणाऽवदातः = सकलगुणैः ( दयादाक्षिण्यादिसमस्तगुणैः ) अवदातः ( शुक्लवर्णः ) । तातः = पिता, दशरथ इति भावः । प्रस्तूयते = प्रकर्षेण स्तूयते ( स्तुतिविषयः क्रियत इति भावः ) ।

विश्वामित्रः पुनर्दशरथं वर्णयति—यस्योद्यदिति । यस्य उद्यद्भुजदण्डचण्डिममलत्कोदण्डलीलायितैः दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे निष्पीते आखण्डलीयं वपुः केवलं पौलोमीकरजाऽङ्कुरव्यतिकरात् अन्नविराटलक्षतमयीं लक्ष्मीम् आलम्बत इत्यन्वयः ।

---

वधूओंसे चारों ओर आनन्दपूर्वक देखी गई जिनकी कीर्त्तियां प्रतिदिशामें क्रीडा करती हैं ॥

राम—वत्स ! निश्चय ही महर्षि यह सम्पूर्ण गुणोंसे उज्ज्वल पिताजी की प्रशंसा कर रहे हैं ।

लक्ष्मण—क्या फिर प्रशंसा करेंगे ?

विश्वामित्र—और भी ।

यस्योद्यद्भुजदण्डचण्डिमलसत्कोदण्डलीलायितै-
निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे ।
लक्ष्मीमस्रविपाटलक्षतमयीमालम्बते केवलं
पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥ २४ ॥

अपि च—

तस्य पद्मवनबान्धववंशोत्तंसमांसलमहामणिमौलेः ।

यस्य = दशरथस्य । उद्यद्भुजदण्डचण्डिमलसत्कोदण्डलीलायितैः = उद्यन् (आविर्भवन्) यो भुजदण्डः (बाहुदण्डः) तस्य चण्डिम्ना (कोपनत्वेन) लसत् (शोभमानम्) यत् कोदण्डं (धनुः) तस्य लीलायितैः (लीलावच्चेष्टितैः)। दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे = दनुजेन्द्राणां (दानवेन्द्राणाम्) याश्चन्द्रवदनाः (चन्द्रमुख्यो रमण्यः) तासां भ्रूवल्लरीणां (भ्रूलतानाम्) विभ्रमे (विलासे)। निष्पीते = निःशेषेण पानविषयीकृते सति, विनाशिते सतीति भावः। दशरथस्य भुजबलेन दानवेन्द्राणां हननबन्धनादिना तद्रमणीनां भ्रूविलासे तिरोहिते सतीति भावः। ततः आखण्डलीयम् = इन्द्रस्येत्यर्थः। वपुः = शरीरं, केवलम् = एकमात्रं यथा स्यात्तथा। पौलोमीकरजाऽङ्कुरव्यतिकरात् = पौलोम्याः (इन्द्राण्याः) कर-जाङ्कुराणां (नखप्ररोहाणाम्) व्यतिकरात् (सम्पर्कात्)। अस्रविपाटलक्षतमयीम् = अस्रेण (रुधिरेण) विपाटलम् (अतिशयरक्तम्) यत् क्षतम् (व्रणम्) तन्मयीम् (तत्स्वरूपाम्)। लक्ष्मीं = शोभाम्, आलम्बते = अवलम्बते, धारयतीति भावः। दशरथेन वधबन्धनादिना दानवेन्द्रेषु निगृहीतेषु सपत्नाऽभावादिन्द्रः स्वपत्न्या शच्या सह कामकेलिषु नखक्षतादिनैव स्वशरीरे क्षतं बिभर्ति न तु युद्धेनेति भावः। अत्र भङ्ग्या दानवेन्द्रपराजयवर्णनात्पर्यायोक्तमलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

रामलक्ष्मणपरिचयमयं दशरथवर्णनमुपसंहरति तस्येति। पद्मवनबान्धववंशो-त्तंसमांसलमहामणिमौलेः तस्य दशरथस्य इमौ कायकान्तिपरिभूतमनोजौ तौ कुमारावित्यन्वयः। पद्मवनबान्धववंशोत्तंसमांसलमहामणिमौलेः = पद्मवनस्य (कमल-समूहस्य) बान्धवः (बन्धुः, विकासकत्वादिति भावः। सूर्य इत्यर्थः) तस्य वंशः (कुलम्) तस्योत्तंसाः (भूषणभूताः) मांसलाः (विशालाः) ये महामणयः

जिनके आविर्भूत बाहुदण्डकी प्रचण्डतासे, सुन्दर धनुकी चेष्टाओंसे, दैत्यसुन्दरियोंकी भ्रूलताओंके विलासके नष्ट होने पर इन्द्रका शरीर केवल इन्द्राणीके नखाङ्कुरोंके सम्पर्कसे उत्पन्न रुधिरसे अतिरक्तवर्ण व्रणरूप शोभाको धारण करता है ॥ २४ ॥

और भी—कमलबान्धव (सूर्य) के कुलके भूषण, विशाल महारत्नस्थानीय राजाओं

कायकान्तिपरिभूतमनोज्ञौ ताविमौ दशरथस्य कुमारौ ॥२५॥

जनकः—

यद्बाहू वहतः पराक्रमहृतां प्रत्यर्थिसीमन्तिनी-
चक्षुष्कज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् ।
यद्दोर्दुर्दमकर्मकार्मुकगुणप्रोत्तालकोलाहलै-
र्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २६ ॥

(महारत्नस्थानीया नृपतयः) तेषां मौलेः (प्रधानस्य)। तस्य = पूर्वोक्तस्य, दशरथस्य = दशरथनामधेयस्य राज्ञः। इमौ = पुरोवर्तिनौ, कायकान्तिपरिभूतमनोज्ञौ = कायकान्त्या (देहशोभया) परिभूतः (तिरस्कृतः) मनोज्ञः (कामदेवः) याभ्यां तौ। तौ = प्रसिद्धौ। कुमारौ = पुत्रौ, स्त इति शेषः। अत्र व्यतिरेकाऽलङ्कारः स्वागतावृत्तम् ॥ २५ ॥

जनको दशरथप्रतापं वर्णयति—यद्बाहू इति। यद्बाहू पराक्रमहृतां प्रत्यर्थिसीमन्तिनीचक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकां वहतः। यद्दोर्दुर्दमकर्मकार्मुकगुणप्रोत्तालकोलाहलैः वैरिस्त्रीकलमेखलाकलकलाः पीता इव अस्तं गता इत्यन्वयः।

यद्बाहू = यस्य (दशरथस्य) बाहू (भुजौ)। पराक्रमहृतां = पराक्रमेण (विक्रमेण) हृताम् (आनीताम्)। प्रत्यर्थिसीमन्तिनीचक्षुः कज्जलकालिकामिव = प्रत्यर्थिनां (शत्रूणाम्) याः सीमन्तिन्यः (रमण्यः) तासां चक्षुषां (नेत्राणाम्) कज्जलकालिकामिव (अञ्जनश्यामतामिव)। धनुर्मौर्वीकिणश्यामिकां = धनुर्मौर्वी (कार्मुकज्या) तस्याः किणानां (व्रणानाम्) श्यामिकां (कालिमानम्)। वहतः = धारयतः। पतिषु निहतेषु तद्रमण्यः कज्जलं न धारयन्ति तदेव कज्जलं दशरथबाहुस्थितकिणत्वेन स्थितमित्युत्प्रेक्षाऽलङ्कारः। यद्दोर्दुर्दमकर्मकार्मुकगुणप्रोत्तालकोलाहलैः = यस्य (दशरथस्य) दोष्णोः (बाह्वोः) दुर्दमं (दुःखेन दमनीयम्, उद्धतमिति भावः) कर्म (क्रिया) यस्य तत्, तादृशं यत्कार्मुकं (धनुः), तस्य

में प्रधान उन दशरथ महाराजके ये दोनों (राम और लक्ष्मण) शरीरकी कान्तिसे कामदेवको तिरस्कृत करनेवाले प्रसिद्ध पुत्र हैं ॥ २५ ॥

जनक—जिन (दशरथ) के बाहु, पराक्रमसे लाई गई शत्रुओंकी स्त्रियोंके नेत्रोंके कज्जलकी कालिमाके सदृश प्रत्यञ्चाके व्रणोंका श्यामवर्ण धारण करते हैं। जिनके बाहुओंके उद्धत कर्मवाले धनुकी प्रत्यञ्चाके ऊँचे कोलाहलोंसे वैरियोंकी नारियोंके मेखलाशब्द पीए गये की तरह नष्ट हो गये हैं ॥ २६ ॥

अपि च—

यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां
साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति ।
पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं
धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः ॥ २७ ॥

---

गुणस्य ( मौर्व्याः ) प्रोत्ताला: ( उन्नताः ) ये कोलाहला: ( कलकलाः ) तैः । वैरिस्त्रीकलमेखलाकलकला: = वैरिस्त्रीणां ( रिपुनारीणाम् ) कलाः ( मधुराः ) ये मेखलाकलकलाः ( काञ्चीकोलाहलाः ) ते, पीता इव = निगीर्णा इव, अस्तम् = अदर्शनं, गताः = प्राप्ताः । अरातिषु निपातितेषु तल्ललना मेखलां परित्यजन्ति तेषामेव शिञ्जितानि दशरथधनुर्ज्यारवत्वेन प्रतीयन्त इत्युत्प्रेक्षा । अत्र पूर्वार्द्धे द्रव्योत्प्रेक्षा, उत्तरार्द्धे हेतूत्प्रेक्षा एवं भङ्गिविशेषाभ्यां शत्रुपराजयवर्णनात्पर्यायोक्तं चैतेषामलङ्काराणामाङ्गाङ्गिभावेन संकरः । अत्र गुणपदेनैव कार्मुकगुणरूपाऽर्थस्य प्रतीतौ सत्यामपि पुनः कार्मुकपदमारूढत्वाऽऽदिबोधाय बोद्धव्यम् । तदुक्तं साहित्यदर्पणे यथा—

'धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः । आरूढत्वादिबोधाये'ति । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

पुनर्दशरथप्रतापं वर्णयति—यस्येति । यस्य दोर्मण्डले इन्द्राऽरिजयश्रिया सह झटिति मौर्वीलताम् आकृष्य भूवलयेन साकं चापवलयं बिभ्रति आखण्डलः रहः पौलोमीकुचकुम्भसीमनि नवं नखाङ्कं पश्यन् केवलं चेतसि कोदण्डं धत्ते करे तु न धत्त इत्यन्वयः । यस्य = दशरथस्य, दोर्मण्डले = बाहुमण्डले, इन्द्राऽरिजयश्रिया = इन्द्रारेः ( इन्द्रशत्रोः, असुरस्येति भावः ) जयश्रिया ( विजयलक्ष्म्या ) सह = साकं, झटिति = शीघ्रं, मौर्वीलतां = ज्यावल्लीम् आकृष्य = नमयित्वा, जयश्रीपक्षे स्वीकृत्य । भूवलयेन = पृथ्वीमण्डलेन, साकं = सह, चापवलयं = धनुर्मण्डलं, बिभ्रति = धारयति सति, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । आखण्डलः = इन्द्रः, 'आखण्डलः सहस्राक्ष ऋभुक्षाः' इत्यमरः । रहः = एकान्ते । पौलोमीकुचकुम्भसीमनि = पौलोम्याः ( शच्याः ) कुचकुम्भसीमनि ( स्तनकलशप्रान्तभागे । नवं =

---

फिर भी—जिन ( दशरथ ) के बाहुमण्डलके दैत्योंकी जयलक्ष्मीके साथ शीघ्र प्रत्यञ्चाको खींचकर पृथ्वीमण्डलके साथ धनुर्मण्डलको धारण करनेपर, इन्द्र एकान्तमें इन्द्राणीके पयोधर कलशोंके प्रान्तभागमें किये गये नये नखक्षतको देखते हुए चित्तमें ही धनु लेते हैं हाथमें नहीं ॥ २७ ॥

तपनकुलशिरःकिरीटकोटिस्फुरदरुणोत्पलकुड्मलस्य तस्य ।
दशरथनृपतेरिमौ मृगाङ्कप्रतिमसुरेखमुखाम्बुजौ कुमारौ ॥ २८ ॥

विश्वामित्रः—अथ किम् ? ।

जनकः—अहो ! धन्यता दशरथस्य, यस्य द्वे अपि तनयावलोकन-शीतले दृशौ ।

---

नूतनं, नखाऽङ्कं = नखरक्षतरूपं चिह्नम् । पश्यन् = विलोकयन् , केवलम् = एकमात्रं, चेतसि = चित्ते, कोदण्डं = धनुः, धत्ते = धारयति, चिन्तयतीति भावः । करे तु = हस्ते तु, न धत्ते = नो धारयति । यस्मिन्दशरथे महाराजे इन्द्रारिविजयश्रियं श्यालतां च आकृष्टवति पृथ्वीवलयं धनुर्मण्डलं च धारयति सति देवराजः सपत्नाऽभावात् शच्या समं रहः कामकेलिं विदधद्धनुर्मण्डलं चिन्तयत्येव न पुनः करे गृह्णातीति भावः । अत्र सहोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

दशरथवर्णनं समाप्य रामलक्ष्मणपरिचयं प्रस्तौति—

तपनकुलेति । तपनकुलशिरःकिरीटकोटिस्फुरदरुणोत्पलकुड्मलस्य तस्य दशरथनृपतेः मृगाऽङ्कप्रतिमसुरेखमुखाम्बुजौ इमौ कुमाराविस्यन्वयः ।

तपनकुलेत्यादिः = तपनकुलस्य ( सूर्यवंशस्य ) याः शिरः किरीटकोटयः (मस्तकमुकुटाऽग्रभागाः ) तासु स्फुरत् ( विकसत् ) यत् अरुणोत्पलकुड्मलं ( रक्तकमलमुकुलम् ), तस्य, लक्षणया तत्सदृशस्येत्यर्थः । तस्य = तादृशस्य, प्रसिद्धस्येति भावः । दशरथनृपतेः = दशरथाऽऽख्यनरपतेः । मृगाङ्कप्रतिमसुरेखमुखाऽम्बुजौ = मृगाऽङ्कः ( चन्द्रः ) प्रतिमा ( प्रतिकृतिः ) यस्य तत् मृगाङ्कप्रतिमं ( चन्द्रसदृशम् ) सुरेखं ( सुन्दरम् ) मुखाऽम्बुजं ( वदनकमलम् ) ययोस्तौ, तादृशौ । इमौ = एतौ, निकटवर्तिनौ । कुमारौ = बालौ, रामलक्ष्मणावित्यर्थः । स्त इति शेषः । अत्रोपमाऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ २८ ॥

जनक इति । धन्यता = पुण्यवत्ता । धनं लब्धा धन्यः, धनगणं लब्धे'ति यत् । 'सुकृती पुण्यवान्धन्य' इत्यमरः । धन्यस्य भावो धन्यता । दृशौ = नेत्रे । तनयाऽवलोकनशीतले = तनययोः ( पुत्रयोः, रामलक्ष्मणयोरिति भावः ) अवलोकनेन (दर्शनेन ) शीतले ( शीते, तापरहिते इति भावः ) ।

---

सूर्यवंशके मस्तकस्थित मुकुटोंके अग्रभागोंमें शोभित रक्तकमलके मुकुलके सदृश उन महाराजके दशरथ चन्द्रतुल्य सुन्दर मुखकमलवाले ये दो पुत्र हैं ॥ २८ ॥

विश्वामित्र—और क्या !

जनक—अहो ! महाराज दशरथ धन्य हैं, जिनके दोनों नेत्र पुत्रदर्शनसे शीतल हैं ।

शतानन्दः—दिशौ च ।

विश्वामित्रः—ननु दिश इति वक्तव्यम् ।

शतानन्दः—तत् किमन्यावपि कुमारौ दशरथस्याङ्कं भूषयतः ?

विश्वामित्रः—अथ किम् ? । यौ खलु भरतशत्रुघ्नौ प्रतिबिम्बाविव रामलक्ष्मणयोः ।

शतानन्दः—नूनममी ऋष्यश्रृङ्गचरुभागानां विलासाः ।

जनकः—दशरथ-भागधेयानां च ।

विश्वामित्रः—एवमेतत्, अवधिः खलु भाग्यवतां राजा दशरथः ।

जनकः—महात्मवतां च ।

विश्वामित्रः—तत् किमस्माभिरुच्यताम्, भवतोर्महिम्नि भवन्तावेव साक्षिणौ ।

जनकः—कतरोऽहं दशरथस्य महिमाभोगमनुभवितुं कासार इव सागरस्य ?

---

शतानन्द इति । दिशौ च = दिग्भागौ च, पार्श्वद्वयमपीति भावः । ऋष्यश्रृङ्ग-चरुभागानाम् = ऋष्यश्रृङ्गनामकस्यर्षेः चरुभागानाम् ( हव्यपाकानां, पायसरूपाणा-मिति भावः ) ।

विश्वामित्र इति । अवधिः = सीमा ।

जनक इति । महिमाऽऽभोगं = महिम्नः ( महत्त्वस्य ) आभोगम् (परिपूर्णताम्)

---

शतानन्द—न केवल नेत्र बल्कि दोनों दिग्भाग भी ( शीतल हैं ) ।

विश्वामित्र—चारों दिशायें ऐसा कहना चाहिए ।

शतानन्द—तब क्या और भी दो कुमार दशरथकी गोदको भूषित कर रहे हैं ?

विश्वामित्र—और क्या ? जो कि राम और लक्ष्मणके प्रतिबिम्बके सदृश भरत और शत्रुघ्न हैं ।

शतानन्द—निश्चय ही ये सब ऋष्यश्रृङ्ग ऋषिके चरुभागोंके विलास हैं ।

जनक—दशरथके भाग्योंके भी ( विलास हैं ) ।

विश्वामित्र—यह ठीक है । महाराज दशरथ भाग्यवानोंकी सीमा ( हद ) हैं ।

जनक—महात्मा वाले पुरुषोंकी भी ( सीमा ) हैं ।

विश्वामित्र—यह हमसे क्या कहा जाय, आप दोनोंकी महिमामें आप ही दोनों साक्षी हैं ।

जनक—मैं तालाब जैसा होकर समुद्रके समान दशरथकी महिमाकी परिपूर्णताका अनुभव करनेके लिए कौन हूं ?

विश्वामित्रः—शोभन्त एव विनयमधुराणामधरीकृतात्ममहिमानः कामं सत्यविधुरा अपि वाचः । अथवा समुचितमेवैतत् । यतः—

जज्ञिवान् दशरथः स हि राजा
रामामिन्दुमिव सुन्दरगात्रम् ।
लोकलोचनविगाहनशीलां
त्वं पुनः कुमुदिनीमिव सीताम् ॥ २९ ॥

लक्ष्मणः—(अपवार्य) इन्दुकुमुदिनीदृष्टान्तेन किमपि संविधानं सूचितं भगवता !

---

कासार इव=सर इव ।

विश्वामित्र इति । अधरीकृतात्ममहिमानः=अपकृष्टीकृतस्वमहत्त्वाः । सत्यविधुराः=तथ्यरहिताः, मिथ्याभूता इति भावः ।

जज्ञिवानिति । हि स राजा दशरथ इन्दुम् इव सुन्दरगात्रं रामं जज्ञिवान् । त्वं पुनः कुमुदिनीम् इव लोकलोचनविगाहनशीलां सीतां जज्ञिवानित्यन्वयः । हि=यतः, सः=प्रसिद्धः, राजा=नृपः, दशरथः, इन्दुम् इव=चन्द्रम् इव, सुन्दरगात्रं मनोहरशरीरं-रामं=रामचन्द्रं, जज्ञिवान्=उत्पादितवान्, 'जनी प्रादुर्भावे' इति धातोरन्तर्भावितण्यर्थत्वेन सकर्मकत्वेन 'क्वसुश्चे'ति क्वसुप्रत्ययः । क्वसुकानचौ छान्दसाविति त्रिमुनिमतम् । कवयस्तु लोकेऽपि बहुलं प्रयुञ्जते । त्वं=भवान्, पुनः कुमुदिनीम् इव=कैरविणीम् इव, लोकलोचनविगाहनशीलां=लोकलोचनेषु (जननयनेषु) विगाहनं (प्रवेशनम्) शीलं (स्वभावः) यस्याः सा, तां, सौन्दर्यातिशयेन जननयनाऽऽकर्षिणीमिति भावः । तादृशीं सीतां=तदभिधेयां तनयां, जज्ञिवान्=उत्पादितवान् । अत्रेन्दुसमसुन्दरस्य रामस्योत्पादकत्वेन दशरथस्य सागरसादृश्यमेवं च कुमुदिनीसदृश्या लोकलोचनाकर्षिकायाः सीताया उत्पादकत्वेन जनकस्य कासारसादृश्यं व्यङ्ग्यं तथा चाऽनितरसामान्ययोः सीतारामरूपयोरपत्ययो उत्पादकत्वेन जनकदशरथयोर्लोकाऽतिशायी महिमागम्यः । स्वागता वृत्तम् ॥२९॥

लक्ष्मण इति । किमपि=व्यङ्ग्यरूपेणाऽवस्थितमिति भावः । संविधानं=

---

विश्वामित्र—विनयसे मनोहरजनोंकी अपनी महिमाको न्यून जतानेवाली असत्य वाणियाँ भी शोभित ही होती हैं । अथवा यह समुचित ही है । क्योंकि—

उन महाराज दशरथने चन्द्रके सदृश सुन्दर शरीरवाले रामको और आपने कुमुदिनीके सदृश लोगोंके नेत्रोंको आकृष्ट करनेवाली सीताको उत्पन्न किया ॥ २९ ॥

लक्ष्मण—(केवल रामको सुनाकर) चन्द्र और कुमुदिनीके दृष्टान्तसे भगवान्‌ने किसी दूसरी ही बातकी सूचना की है ।

रामः—( सप्रणयकोपम् ) अलमलीकालापितया।

जनकः—( स्वगतम् ) कथमनया भङ्ग्या किमपि सूचितं मुनिना। तत् किमनेन रभसवशंवदेन विस्मृतमेव शाम्भवं धनुः। ( प्रकाशम् ) भगवन्, अनेन भगवतो वक्रकमनीयेन वाग्विलासेन द्वितीयेनेव हर-कार्मुकेण किमपि कौतुकितोऽस्मि।

विश्वामित्रः—( स्वगतम् ) कथमनया परिपाट्या हरचापारोपण-मुद्भावयति। भवतु। ( प्रकाशम् ) राजर्षे, साधु स्मारितोऽस्मि। अतीव मे कौतुकं वृषभकेतुकार्मुकावलोकने। तेन तदानयनायादिश्यन्तां पुरुषाः। अथवा, किमन्यैः, रामभद्र एवादिश्यताम्।

जनकः—( सविस्मयम् ) भगवन्! कथं मुग्ध इव दुग्धमुखमपि राम-मिन्दुकिरीटकार्मुकानयनार्थमादिशसि। न जानासि किम्?

---

वृत्तान्तः, सीतारामयोः मिथः प्रणयितारूप इति तात्पर्यम्।

राम इति। अलीकाऽऽलापितया = मिथ्या भाषितया।

जनक इति। भङ्ग्या = वक्रोक्त्या। किमपि = सीतारामविवाहरूपं वृत्तमिति भावः। रभसवशंवदेन = हर्षपराऽधीनेन। 'रभसोवेगहर्षयोः।' इति विश्वः। शाम्भवं = शम्भुसम्बन्धि।

विश्वामित्र इति। परिपाट्या = अनुक्रमेण। आदिश्यन्ताम् = आज्ञाप्यन्ताम्।

जनक इति। मुग्धः = मूढः। 'मुग्धः सुन्दरमूढयोः' इत्यमरः। दुग्धमुखं =

---

राम—( प्रणयकोपपूर्वक ) मिथ्याभाषण मत करो।

जनक—( मन ही मन ) कैसे इस वक्रोक्तिसे मुनिने किसी बातको सूचित किया है? इसलिए क्या ये हर्षके अधीन होकर शिवजीके धनुको भूल ही गये? ( सुनाकर ) भगवन्! दूसरे शिवधनुके सदृश आपके इस वक्र और सुन्दर वचनविलाससे मैं अनिर्वचनीयरूपसे कौतुकपूर्ण हूं।

विश्वामित्र—(मन ही मन) ये किस प्रकार इस परिपाटीसे शिवधनु उठानेकी बातको प्रकाशित कर रहे हैं। अच्छा ( सुनाकर ) राजर्षे! आपने मुझे ठीक स्मरण कराया। मुझे शिवधनु देखनेमें अतिशय ही कौतुक है। इस कारणसे उसे लानेके लिए पुरुषोंको आज्ञा दीजिए। अथवा औरोंका क्या प्रयोजन है? रामभद्रको ही आज्ञा दीजिए।

जनक—( आश्चर्यपूर्वक ) आप क्यों अज्ञकी तरह दुधमुँहे रामको भी शिवधनु लानेके लिए आज्ञा दे रहे हैं? क्या नहीं जानते हैं?

एतत्तद्दुर्विगाह्यं तुहिनगिरिमयं कार्मुकं, यत्र जज्ञे
मौर्वी दर्वीकराणां पतिरुदधिसुतानायकः सायकश्च ।
दोर्दण्डैश्चन्द्रमौलेर्नतमपि यदभूदुन्नतं कार्मुकाणां
बाष्पाम्भोवृष्टये च त्रिपुरमृगदृशामैशमप्यैन्द्रमासीत् ॥३०॥

स्तन्यपायिबालसदृशमिति भावः । इन्दुकिरीटकार्मुकाऽऽनयनार्थम् = इन्दुकिरीटः (शिवः), तस्य कार्मुकानयनाऽर्थम् (धनुरानयनार्थम्) ।

धनुर्महत्त्वं सूचयति—एतत्तदिति । एतत् तत् दुर्विगाह्यं तुहिनगिरिमयं कार्मुकं, यत्र दर्वीकराणां पतिः मौर्वी, उदधिसुतानायकः सायको जज्ञे । यत् चन्द्रमौलेः दोर्दण्डैः नतमपि कार्मुकाणाम् उन्नतमभूत्, त्रिपुरमृगदृशां बाष्पाऽम्भोवृष्टये ऐशमपि ऐन्द्रम् आसीदित्यन्वयः । एतत् = इदम्, आनयनविषयभूतमिति भावः । तत् = प्रसिद्धं, दुर्विगाह्यं = दुर्माह्यमिति भावः । तुहिनगिरिमयं = हिमालयनिर्मितं, कार्मुकं = धनुः, यत्र = धनुषि, दर्वीकराणां = सर्पाणां, पतिः = स्वामी, वासुकिरिति भावः । मौर्वी = ज्या, उदधिसुतानायकः = उदधिसुतायाः (समुद्रदुहितुः, लक्ष्म्या इत्यर्थः) नायकः (पतिः, विष्णुरित्यर्थः) । सायकः = बाणः, 'शरे खड्गे च सायक' इत्यमरः । जज्ञे = जातः । यत् = कार्मुकं, चन्द्रमौलेः = शिवस्य, दोर्दण्डैः = बाहुदण्डैः, नतमपि = प्रह्वीकृतमपि, आततज्यमपीति भावः । कार्मुकाणाम् = अन्येषां धनुषाम्, उन्नतम् = उच्चं, प्राप्तोत्कर्षमिति भावः । अभूत् = संजातम् । एवं च त्रिपुरमृगदृशां = त्रिपुराऽसुरसुन्दरीणां, बाष्पाऽम्भोवृष्टये = अश्रुजलवर्षणाय, ऐशमपि = शाङ्करं सदपि, ऐन्द्रम् = इन्द्रसम्बन्धि, आसीत् = अभवत् । ऐन्द्रं धनुरुन्नतं सद्यथा वृष्टिं कृतवान् तथैवेदं हरकार्मुकमपि प्रोन्नतं सत्त्रिपुराऽसुरस्य वधेन तत्सुन्दरीणामश्रुवृष्टिं चकारेति भावः । अत्र त्रिपुराऽसुरवधाऽर्थं हरकार्मुके वासुकेर्गुणत्वस्य भगवतो विष्णोः सायकत्वस्य च वर्णनादुदात्ताऽलङ्कारस्तल्लक्षणं यथा—

'लोकाऽतिशयसम्पत्तिवर्णनोदात्तमुच्यते ।
यद्वाऽपि प्रस्तुतस्याऽङ्गं महतां चरितं भवेत् ॥' इति ।

एवं च नतमप्युन्नतम्, ऐशमप्यैन्द्रमित्यत्र च । द्वौ विरोधाभासौ च, इत्थमेतेषामेकाश्रयाऽनुप्रवेशेन सङ्करः । स्रग्धरावृत्तम् ॥ ३० ॥

यह वह दुर्माह्य हिमालय पर्वतसे निर्मित धनु है, जिसमें सर्पराज वासुकी प्रत्यञ्चा और भगवान् विष्णु बाण हुए थे । जो कि भगवान् शिवजीके बाहुदण्डोंसे नत होकर भी और धनुओंमें उन्नत हुआ था एवम् त्रिपुराऽसुरकी सुन्दरियोंके अश्रुजलकी वृष्टिके लिए शिवधनु होता हुआ भी इन्द्रधनुके सदृश बन गया था ॥ ३० ॥

**विश्वामित्रः**—जानामि ।

सेवायातसमस्तखेचरकरक्रीडाचलच्चामर-
श्रेणीमारुतपातपीननिबिडज्यापन्नगाकर्षिणा ।
गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैर्यदीयैः श्रमः
सन्त्यक्तः पुरवैरिणाऽपि, तदिदं शैलेन्द्रसारं धनुः ॥२१॥

**जनकः**—तत्कथमस्यानयनाय रामायादिशसि ?

**विश्वामित्रः**—न केवलमानयनाय, किन्त्वानमनाय (रामं प्रति) वत्स,

---

विश्वामित्रोऽपि हरधनुर्वर्णयति—सेवाऽऽयातेति । सेवाऽऽयातसमस्तखेचरकर-क्रीडाचलच्चामरश्रेणीमारुतपातपीननिबिडज्यापन्नगाकर्षिणा पुरवैरिणाऽपि यदीयैः गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैः श्रमः सन्त्यक्तः, तत् इदं शैलेन्द्रसारं धनुरित्यन्वयः।

सेवाऽऽयातेत्यादिः=सेवायै ( परिचर्यायै ) आयाताः ( आगताः ) ये समस्ताः ( सकलाः ) खेचराः ( देवाः, खे चरन्तीति, 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ) तेषां करक्रीडाभिः ( हस्तक्रीडनैः ) चलन्ती ( प्रचलन्ती ) या चामरश्रेणी ( प्रकीर्णक-पङ्क्तिः ) तस्या मारुतपातेन ( वायुपातेन ) पीनः ( पुष्टः ) निबिडः ( घनः ) यो ज्यापन्नगः ( गुणरूपः सर्पः, वासुकिरिति भावः ) तमाकर्षतीति तच्छीलस्तेन, तादृशेन पुरवैरिणाऽपि=त्रिपुरशत्रुणाऽपि, हरेणाऽपीत्यर्थः । यदीयैः=यद्धनुः-सम्बन्धिभिः, गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैः=गाढम् ( दृढम् ) यत् आकुञ्चनम् ( आनमनम् ) तेन जृम्भमाणाः ( उत्पद्यमानाः ) ये तुहिनस्यन्दाः ( हिमप्रवाहाः ) तैः । श्रमः=आयासः, धनुराकर्षणजन्य इति भावः । सन्त्यक्तः=परित्यक्तः । तत्=तादृशम् , इदम्=प्रकृतवर्ण्यमानं, शैलेन्द्रसारं=शैलेन्द्रस्य ( पर्वतश्रेष्ठस्य, हिमालयस्येति भावः ) सारभूतं ( स्थिरांऽशभूतम् ), धनुः=कार्मुकम् , अस्तीति शेषः । रूपकांऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

---

**विश्वामित्र**—मैं जानता हूं ।

सेवाके लिए आये हुए समस्त देवताओंकी हस्तक्रीडाओंसे चलनेवाली चामरपङ्क्तिके वायुपातसे पुष्ट और घन प्रत्यञ्चारूप सर्प ( वासुकि ) को खींचनेवाले शिवजीने भी जिस धनुके दृढतापूर्वक झुकानेसे उत्पन्न हिमप्रवाहोंसे श्रम छोड़ा । वैसा यह हिमालयपर्वतके सदृश साररूप धनु है ॥ २१ ॥

**जनक**—तब आप कैसे उस धनुको लानेके लिए रामको आज्ञा देते हैं ?

**विश्वामित्र**—लानेके लिए ही नहीं झुकानेके लिए भी मैं ( आज्ञा देता हूं ) ।

बध्यतां परिकरः । इदं च

मारीचमारीचतुरं सुबाहोरपवारणम् ।
न्यस्यतां लक्ष्मणकरे ताटकाताडनं धनुः ॥ ३२ ॥

जनकः—कथमसम्भावनीयमेवोद्भावयसि ?

विश्वामित्रः—कथमिदं न विदितं ते । अनेन हि—

प्राप्य चापनिगमानितः क्रमात् सम्प्रताप्य विशिखैर्निशाचरान् ।

---

विश्वामित्र इति । परिकरः = यत्नः, आरम्भो वा । 'यत्नाऽऽरम्भौ परिकरौ' इति त्रिकाण्डशेषः । बध्यतां = क्रियताम् ।

मारीचेति । मारीचमारीचतुरं सुबाहोः अपवारणं ताटकाताडनं धनुः लक्ष्मणकरे न्यस्यतामित्यन्वयः । मारीचमारीचतुरं = मारीचस्य ( तदाख्यस्य राक्षसस्य ) मार्या ( मारणक्रियायाम् मारणं मारः, मारस्य भावः कर्म वा मारी, तस्याम् । ) चतुरं ( प्रवीणम् ) एवं नतुमारकमित्यर्थः । सुबाहोः = तन्नामकस्य राक्षसस्य, अपवारणं= निवारणसाधनं, मारणेनेति भावः । पुनश्च ताटकाताडनं = ताटकायाः ( तदभिधानाया राक्षस्याः) ताडनम् (आघातसाधनम्), तादृशं, धनुः = कार्मुकं, लक्ष्मणकरे = स्वाऽनुजहस्ते, न्यस्यतां = समर्प्यतामित्यर्थः । मारीचनिवारकः सुबाहुताटकाघातकश्चाऽयं रामो न त्वया प्राकृतबालकबुद्ध्या द्रष्टव्य इति भावः । अनुष्टब्वृत्तम् ॥३२॥

जनक इति । असम्भावनीयं = संभावनाऽनर्हम् ।

विश्वामित्र इति । ते = तव, 'विदित'मिति पदेन योगे 'क्तस्य च वर्तमाने' इति षष्ठी । विदितं = ज्ञातं, 'विद्ज्ञाने' इति धातोः 'मतिबुद्धिपूजाऽर्थेभ्यश्चे'ति क्तः । रामस्याऽसाधारणं कर्म प्रकाशयति—प्राप्येति । इतः क्रमात् चापनिगमान् प्राप्य विशिखैः निशाचरान् संप्रताप्य दक्षिणेन ( अनेन ) अस्मदीयमखरक्षणक्रिया गुरुदक्षिणीकृतेत्यन्वयः ।

इतः = अस्मात् , मदिति भावः । 'पञ्चम्यास्तसिल्' इति तसिल् , 'इदम इश्' इतीशादेशः । क्रमात् = अनुक्रमात् , चापनिगमान् = धनुर्वेदान् , अङ्गोपाङ्गाऽभिप्रायेण बहुवचनम् । प्राप्य = आसाद्य, अनन्तरं विशिखैः = बाणैः, निशाचरान् =

---

( रामसे ) वत्स ! यत्न करो । यह

मारीचको मारनेकी क्रियामें चतुर, सुबाहुके निवारणका साधन और ताटकाके आघात का साधन धनु लक्ष्मणके हाथमें दे दो ॥ ३२ ॥

जनक—आप कैसे नहीं हो सकने वाली बात कर रहे हैं ?

विश्वामित्र—यह आपको कैसे ज्ञात न हुआ ?

अस्मदीयमखरक्षणक्रियादक्षिणेन गुरुदक्षिणीकृता ॥ २३ ॥

जनकः—( विमृश्य । निःश्वस्य च ) भगवन् ! अस्त्येतत्, किन्तु

मारीचमुख्यरजनीचरचक्रचूडा-
चञ्चन्मरीचिचयचुम्बितपादपीठः ।
अत्राभवद्विफलबाहुबलावलेपो वीरः
शशाङ्कमुकुटाचलचालनोऽपि ॥ २४ ॥

राक्षसान्, संप्रताप्य = हत्वेत्यर्थः । दक्षिणेन = निपुणेन, युद्ध इति शेषः । अनेनेति पूर्वतोऽनुवर्तनीयम् । रामेणेति भावः । अस्मदीयमखरक्षणक्रिया = अस्मदीयमखस्य ( मदनुष्ठितयज्ञस्य ) रक्षणक्रिया ( पालनकृतिः, राक्षसाऽऽदिकृतोपद्रवेभ्य इति शेषः ) । गुरुदक्षिणीकृता = गुरवे ( आचार्याय, मह्यमित्यर्थः ) दक्षिणीकृता ( देयदक्षिणात्वेन समर्पितेत्यर्थः ) । मत्तोऽनुक्रमाद्धनुर्वेदमधीत्याऽनेन रामेण मदनुष्ठितयज्ञे विघ्नाऽनुष्ठातॄन्राक्षसान् बाणैर्व्यापाद्य मन्मखरक्षणरूपा गुरुदक्षिणा निर्व्यूढा, अतोऽयं रामः सामान्यबालबुद्ध्याऽऽनाऽवमन्तव्य इति भावः । रथोद्धतावृत्तम् ॥ २३ ॥

हरधनुर्गौरवं प्रतिपादयति—मारीचमुख्येति । मारीचमुख्यरजनीचरचक्रचूडाचञ्चन्मरीचिचयचुम्बितपादपीठो वीरः शशाङ्कमुकुटाऽचलचालनोऽपि अत्र विफलबाहुबलाऽवलेपोऽभवदित्यन्वयः ।

मारीचमुख्येत्यादिः = मारीचः ( तदाख्यः राक्षसः ) मुख्यः ( प्रधानम् ) येषां ते, तादृशा ये रजनीचराः ( निशाचराः, राक्षसा इत्यर्थः ) तेषां चक्रं ( मण्डलम् ), तस्य चूडायाः ( शिरोभूषणस्य ) चञ्चन् ( प्रकाशमानः ) यो मरीचिचयः ( किरणसमूहः ), तेन चुम्बितं ( सम्बद्धमित्यर्थः ) पादपीठं ( चरणन्यासस्थानम् ) यस्य सः । तादृशो राक्षसमण्डलाऽऽखण्डलो वीरः = शूरः, शशाङ्कमुकुटाऽचलचालनोऽपि = शशाङ्कमुकुटः ( चन्द्रशेखरः, शङ्कर इत्यर्थः ) तस्याऽचलः ( पर्वतः, कैलाश इति भावः ) तस्य चालनोऽपि चालकोऽपि, स्वभुजाभ्यां कैलासाऽचलचालको रावणोऽपीति भावः ) । अत्र = अस्मिन्, हरधनुषीत्यर्थः । विफलबाहुबलाऽवलेपः = विफलः

मुझसे क्रमपूर्वक धनुर्वेदको पाकर, बाणोंसे राक्षसोंको मारकर, इन युद्धनिपुण रामने मुझे यज्ञरक्षारूप गुरुदक्षिणा दे दी ॥ २३ ॥

जनक—( विचार कर निःश्वासपूर्वक ) भगवन् ! यह है । परन्तु मारीच आदि राक्षसोंके मण्डलके शिरोभूषणके प्रकाशमान किरणसमूह जिसके पादपीठको उद्भासित करते हैं और शिवपर्वत कैलासको भी हिलाने वाले, ऐसे वीर रावणके भी बाहुबलका घमण्ड इस धनुमें निष्फल हो गया ॥ २४ ॥

विश्वामित्रः—किमेतावता ? नन्वत एव राममादिशामि ( रामं प्रति ) वत्स, उत्तिष्ठ ! कुमुदिनीकान्तकलाकिरीटकार्मुकरोपणप्रवीणतया सम्प्रीणयास्मान् ।

जनकः—( स्वगतम् )

यस्य ख्याता जगति सकले निस्तमिस्रा तपःश्री-
र्मिथ्योत्कण्ठः कथमिह भवेदेष गाधेस्तनूजः ।
बालो रामः, किमपि गहनं कार्मुकं चन्द्रमौलेः,

( निष्फलः ) बाहुबलस्य ( भुजशक्तेः ) अवलेपः ( गर्वः ) यस्य सः तादृशोऽभवत्= अभूत्, धनुरुन्नमनाऽशक्तेरिति भावः। मारीचादिरजनीचरचक्रचूडामणिर्दशाऽचल-चालकोऽपि रावणो यदाऽत्र धनुषि विफलभुजबलोऽभूत्तदा मारीचघातुके रामे मदीयः सन्देहो नाऽयुक्तरूप इति भावः। वसन्ततिलकं वृत्तम् ॥ ६४ ॥

विश्वामित्र इति। कुमुदिनीकान्तकलाकिरीटकार्मुकरोपणप्रवीणतया = कुमुदिनी-कान्तः ( चन्द्रः ) तस्य कला (भागः) किरीटे ( मस्तके ) यस्य सः, शङ्कर इत्यर्थः। तस्य कार्मुकं ( धनुः ) तस्मिन् रोपणे ( ज्यासन्धाने ) प्रवीणतया ( निपुणतया )।

जनकः स्वगतत्वेन रामविक्रमे विचिकित्सति यस्येति। यस्य सकले जगति निस्तमिस्रा तपःश्रीः ख्याता, एष गाधेस्तनूज इह कथं मिथ्योत्कण्ठो भवेत् ? रामो बालः, चन्द्रमौलेः कार्मुकं किमपि गहनं, तेन मे चित्तवृत्तिः मुहुः दोलाऽऽरोहं कलयतीत्यन्वयः। यस्य = गाधेस्तनूजस्य, महर्षेर्विश्वामित्रस्येत्यर्थः। सकले = समस्ते, जगति = लोके, निस्तमिस्रा = अन्धकाररहिता प्रकाशसम्पन्नेति भावः। तपःश्रीः = तपोलक्ष्मीः, ख्याता = प्रसिद्धा। एषः = समीपतरवर्ती सः, गाधेः = तदाख्यस्य राजर्षेः, तनूजः = पुत्रः, महर्षिर्विश्वामित्रः इह = रामस्य हरधनुरानमन-विषये, कथं = केनप्रकारेण, मिथ्योत्कण्ठः = मिथ्या ( अनुत्तमाया ) उत्कण्ठा ( उत्क-लिका ) यस्य सः। तादृशो भवेत् = भवतु, संभावनायां लिङ्। विश्वामित्रस्यो-त्कण्ठया मिथ्यारूपया नो भाव्यमिति भावः। परं रामः = रामचन्द्रः, बालः = आप्राप्तवयस्कः, चन्द्रमौलेः = शिवस्य, कार्मुकं = धनुः, किमपि = अनिर्वचनीयरूपं,

विश्वामित्र—इतनेसे क्या ? मैं इसीसे रामको आज्ञा देता हूं। ( रामसे ) वत्स ! उठो। चन्द्रशेखर (शिव) के धनुकी प्रत्यञ्चा चढानेमें निपुणता दिखाकर हमें प्रसन्न करो।

जनक—( मन ही मन )

जिनकी संपूर्ण विश्वमें प्रकाशपूर्ण तपोलक्ष्मी प्रसिद्ध है। वे गाधिपुत्र भगवान् विश्वा-मित्र, इस विषयमें कैसे मिथ्या कौतूहलवाले होंगे ? परन्तु राम लड़के हैं, शिवधनु अनि-

दोलारोहं कलयति मुहुस्तेन मे चित्तवृत्तिः ॥ २५ ॥

( पुनः पृथिवीमालोक्य )

रतिरिव जननेत्रानन्दिनी नन्दिनी ते,
कुसुमशर इवायं रूपसारः कुमारः ।
यदि तु धनुरपीदं प्राप्तमेतस्य हस्तं
कुसुममयमिव स्यात्संभृतः सम्प्रदायः ॥२६॥

शतानन्दः—राजर्षे, किमेवन्मूढ इव मुहुर्मुहुरालोकसे, अनुवर्तस्व

---

गहनं = दुर्विगाहमिति भावः । तेन = कारणेन, मे = मम, चित्तवृत्तिः = अन्तःकरणवृत्तिः, मुहुः = वारं वारं, दोलाऽऽरोहं=प्रेङ्खाऽऽरोहणं, कलयति=अनुभवति, इतस्ततश्चलनेन चित्तवृत्तिर्नैकत्राऽवस्थितिं भजतीति भावः । मन्दाक्रान्तावृत्तम् ॥ २५ ॥

रतिरिवेति । जननेत्राऽऽनन्दिनी रतिरिव ते नन्दिनी, अयं कुमारः कुसुमशर इव रूपसारः । इदं धनुः एतस्य हस्तं प्राप्तं कुसुममयम् इव स्यात् यदि, तु सम्प्रदायः संभृत इत्यन्वयः ।

( हे पृथिवि ! ) जननेत्राऽऽनन्दिनी = जननेत्राणाम् ( लोकनयनानाम् ) आनन्दिनी ( आनन्दोत्पादिका ) । रतिरिव = कामप्रियेव, सुन्दरीति भावः । ते = तव नन्दिनी = पुत्री सीतेति भावः । अस्तीति शेषः । एवं च—अयं = निकटवर्ती, कुमारः = बालः, रामचन्द्र इति भावः । कुसुमशर इव = कुसुमेषुरिव, काम इवेत्यर्थः । रूपसारः = रूपे ( सौन्दर्ये ) सारः ( श्रेष्ठ इत्यर्थः ) । इदम् = प्रकृतं, धनुः= हरकार्मुकम् , एतस्य = कुमारस्य, रामस्य । हस्तं = करं, प्राप्तम् = आसादितं सत्, कुसुममयम् इव = पुष्पनिर्मितमिव, लाघवोपेतमाकर्षणाऽर्हं चेति भावः । स्याद्यदि= भवेच्चेत् , तु = तर्हि, सम्प्रदायः = आम्नायः, रतेः कामपरिग्रहत्वं, कामस्य च कुसुमशरत्वमित्येवं रूप इति भावः । संभृतः = पालितः, स्यादिति शेषः । अत्रोपमाऽलङ्कारः । मालिनीवृत्तम् ॥ २६ ॥

शतानन्द इति । अनुवर्तस्व = अनुसर ।

---

वंचनीय रूपसे गहन है, इस कारण मेरी मनोवृत्ति इस विषयमें बारंबार दोलाऽऽरोहण कर रही है ॥ २५ ॥

( फिर पृथ्वीकी ओर देखकर )

लोकनेत्रोंको आनन्दित करनेवाली रतिके समान आपकी पुत्री है। ये कुमार ( राम ) पुष्पशर ( कामदेव ) के समान रूपमें श्रेष्ठ हैं। यह धनु इनके हाथमें प्राप्त होकर पुष्पनिर्मितके सदृश होगा तो संप्रदाय सुरक्षित होगा ॥ २६ ॥

शतानन्द—राजर्षे ! क्यों अनजानके समान बारंबार देखते ही रहते हैं, महर्षिके

महर्षेर्वचनम् ।

जनकः—( प्रकाशम् ) अनुवृत्तमेव, ( रामं प्रति ) वत्स, अनुष्ठीयतां गुरुवचनम् । ( राम उत्थाय परिकरं बध्नाति )

( प्रविश्य )

प्रतीहारी—जयतु जयतु देवः, कोऽपि ब्राह्मणो देवस्य दर्शनार्थी द्वारदेशे तिष्ठति तत् किं प्रवेश्यताम् । ( जेदु जेदु देवो । कोवि बह्मणो देवस्स दसणत्थी दुआरदेसम्मि चिट्ठदि । ता किं पवेसीअदु )

जनकः—आः, इदमपि किं जनकः प्रष्टव्यः ।

प्रतीहारी—तथा ( इति निर्गत्य तेन सह प्रविशति )

जनकः—ब्रह्मन् , प्रणम्यसे ।

मुनिः—राजन् , सुमतिर्भूयाः ।

जनकः—(स्वगतम्) अन्यादृशीयमाशीःपरिपाटी । भवतु । (प्रकाशम्) मुने इहास्यताम् ।

मुनिः—सन्देशहरः खल्वस्मि ।

---

जनक इति । आशीःपरिपाटी = आशीर्वादपद्धतिः । अन्यादृशी = अन्यप्रकारा, लोकविलक्षणेति भावः ।

मुनिरिति । सन्देशहरः = दूतः, सन्देशं हरतीति, 'हरतेरनुद्यमनेऽच्' इत्यच् ।

---

वचनका अनुवर्तन कीजिए ।

जनक—( सुनाकर ) अनुवर्तन ही करता हूं । ( रामसे ) वत्स ! गुरुवचनका पालन करो । ( राम उठकर परिकर बांधते हैं ) ।

( प्रवेश कर )

प्रतीहारी—महाराजकी जय हो जय हो । कोई ब्राह्मण महाराजके दर्शनके लिए द्वारमें उपस्थित हैं । क्या उन्हें ले आऊं ?

जनक—ओह ! यह बात भी क्या जनकसे पूछनेकी है ?

प्रतीहारी—अच्छी बात है । ( ऐसा कहकर निकलकर उनके साथ प्रवेश करती है । )

जनक—ब्राह्मण ! मैं आपको प्रणाम करता हूं ।

मुनि—राजन् ! आप उत्तम बुद्धिवाले हों ।

जनक—( मन ही मन ) आशीर्वादकी यह प्रणाली दूसरे ही ढङ्गकी है । अच्छा । ( सुनाकर ) मुने ! यहां विराजिए ।

मुनि—मैं सन्देश ले आया हूं ।

जनकः—कस्य ? कीदृशो वा संदेशः ?

मुनिः—

पीत्वा कज्जलकालिमानमखिलं क्ष्मापालनारीदृशां
नीत्वा स्फीतयशोऽट्टहासमहसा लोकत्रयं शुभ्रताम्।
चण्डीशं चरितैरनेकविभवैरद्यापि यः सेवते,
हे वैदेह ! स जामदग्न्यपरशुस्त्वामेतदाभाषते ॥ २७ ॥

जनकः—( स्वगतम् ) अहो ! गर्वाङ्कुरस्य वक्रता। भवतु। (प्रकाशम्) किं तत्।

---

सन्देशोपक्रमं कुरुते—पीत्वेति। हे वैदेह ! यः क्ष्मापालनारीदृशाम् अखिलं कज्जलकालिमानं पीत्वा स्फीतयशोऽट्टहासमहसा लोकत्रयं शुभ्रतां नीत्वा अद्याऽपि अनेकविभवैः चरितैः चण्डीशं सेवते, स जामदग्न्यपरशुः त्वाम् एतत् आभाषत इत्यन्वयः।

हे वैदेह = हे विदेहराज जनक !, यः = जामदग्न्यपरशुः, क्ष्मापालनारीदृशां = क्ष्मापालाः ( क्षत्रिया राजानः ) तेषां नारीदृशाम् ( वधूनयनानाम् ), अखिलं = समस्तं, कज्जलकालिमानम् = कज्जलकृष्णत्वं, पीत्वा = निपीय, क्षत्रियभूपालानां हननेन विधवानां तन्नारीणां नयनेभ्यः कज्जलमपनीयेति भावः। स्फीतयशोऽट्टहास-महसा = स्फीतयशः ( समृद्धकीर्तिः ) एव योऽट्टहासः ( उच्चैर्हास्यम् ) तस्य महसा ( तेजसा ), लोकत्रयं = भुवनत्रितयं, शुभ्रतां = शुक्लतां, गौणकर्मेदम्। नीत्वा = प्रापय्य, अद्याऽपि = अधुनाऽपि, अनेकविभवैः = बलसंपदुपयुक्तैरिति भावः। चरितैः आचरणैः, चण्डीशं = शङ्करं सेवते = परिचरति। सः = तादृशः, जामदग्न्यपरशुः = जमदग्निसुतपरश्वधः, त्वां = भवन्तम्, एतत् = इदं, वक्ष्यमाणप्रकारं वचनम्, आभाषते = आलपति। अत्र पर्यायोक्तमलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

जनक इति। गर्वाऽङ्कुरस्य = दर्पाऽऽविर्भावस्य। वक्रता = कुटिलता। तत् = आभाषणम्।

---

जनक—किसका अथवा कैसा सन्देश ?

मुनि—हे वैदेह ! जो राजाओंकी नारियोंके नेत्रोंके सब कज्जलकी कालिमा पीकर समृद्धकीर्तिरूप अट्टहास्यके तेजसे तीनों लोकोंको सफेद बनाकर आज भी अनेक बल और सम्पत्तिसे उपयुक्त आचरणोंसे महादेवकी सेवा कर रहा है, वह परशुरामका परशु (फरसा) आपको यह कहता है ॥ २७ ॥

जनक—( मन ही मन ) अहो ! गर्वाङ्कुरकी कैसी वक्रता है। अच्छा ( सुनाकर ) वह क्या ?

मुनिः

कस्मैचिद्देहि कन्यां नरपतिशिशवे, दीर्घमायुर्लभस्व,
व्यावर्त्तस्वाप्रियान्नः पुरमथनधनुःकर्षणालापपापात् ।
नो चेदन्योऽस्त्युपायस्तव कलुषमसीपङ्कसंक्षालनाया-
मस्मद्विस्तारिधाराञ्चलबहलपयःपूरदूरावगाहः ॥ ३८ ॥

जनकः—( विहस्य ) तन्मयापि प्रतिसंदेशः कथनीयस्तस्य ।

---

तमेव सन्देशं प्रकाशयति—कस्मैचिदिति । कस्मैचित् नरपतिशिशवे कन्यां देहि । दीर्घम् आयुः लभस्व । पुरमथनधनुःकर्षणालापपापात् नः अप्रियात् व्यावर्तस्व । नो चेत् तव कलुषमसीपङ्कसंक्षालनायाम् अस्मद्विस्तारिधाराञ्चलबहलपयः-पूरदूराऽवगाहः अन्यः उपायः अस्तीत्यन्वयः ।

कस्मैचित् = अविज्ञातनामधेयाय, नरपतिशिशवे = राजकुमाराय, कन्यां=कुमारीं, सीतामित्यर्थः । देहि = वितर, हरधनुराकर्षणरूपं पणं विनैवेति भावः । एवं च दीर्घं = विस्तीर्णम् , आयुः = जीवितकालं, लभस्व = प्राप्नुहि, पुरमथनधनुः-कर्षणालापपापात् = पुरमथनस्य ( शङ्करस्य ) धनुः कर्षणं ( कार्मुकानमनम् ) तस्य आलापः ( कीर्तनम् ) तेन जनितात् पापात् ( कल्मषात् ), 'व्यावर्तस्वे'ति पदेन योगे 'जुगुप्साविरामप्रमादाऽर्थानामुपसंख्यानम्' इति पञ्चमी । नो चेत् = एवमेवं न कुर्या यदि । तव = भवतः, कलुषमसीपङ्कसंक्षालनायां = कलुषस्य (पापस्य) यो मसीपङ्कः ( कज्जललेपः ), तस्य संक्षालनायाम् ( प्रक्षालनक्रियायाम् ), अस्मद्विस्तारिधाराऽञ्चलबहलपयःपूरदूराऽवगाहः = अस्माकं, परशोरिति शेषः विस्तारिणी ( विस्तारवती ) या धारा ( अग्रभागः ) सैवाऽञ्चलं ( प्रान्तभागः ) तस्मिन्बहलः ( अधिकः ) यः पयःपूरः ( जलप्रवाहः ), तस्मिन् दूराऽवगाहः ( अधिकप्रवेशः ), तादृशः, अन्यः = अपरः, उपायः = प्रतीकारः, अस्ति = विद्यते । कस्मैचिद्राजसूनवे कन्यां समर्पय, हरधनुराकर्षणपणरूपात्पापान्निवर्तस्वेत्येतन्मदीयमभिमतं, एवं न स्वीकुर्याश्चेन्मदीयपरशुधाराया लक्ष्यरूपो भवेरिति भावः । स्रग्धरा वृत्तम् ॥ ३८ ॥

जनक इति । प्रतिसन्देशः = सन्देशोत्तरमिति भावः । परशुरामाय प्रतिसन्देशं

---

मुनि—किसी राजकुमारको कन्या दीजिए और दीर्घ आयु पाइए । शिवधनुके कर्षणा-भाषणरूप हमारे अप्रिय पापसे हट जाइए । नहीं तो आपके पापरूप मसीपङ्कको क्षालित करनेमें हमारी विस्तीर्ण परशुकी धारके अधिक जलप्रवाहमें आपका अवगाहन करना यही दूसरा उपाय है ॥ ३८ ॥

जनक—( हंसकर ) तब आपको मेरा भी प्रतिसन्देश उन्हें कहना चाहिए ।

मुनिः—कीदृशोऽसौ ?

जनकः—

त्वं मित्रं मम जामदग्न्यपरशो ! येनैतदाभाष्यसे,
सम्प्रत्येव यथाप्रतिश्रुतमियं कन्या मया दीयते।
तेनेह स्वयमेत्य धूर्जटिधनुर्धौरेयदोःसम्पदो
जामातुः पुरतश्चिराय भवता धाराजलं त्यज्यताम् ॥२९॥

---

प्रतिपादयति—त्वं मित्रमिति।

हे जामदग्न्यपरशो ! त्वं मम मित्रं, येन एतत् आभाष्यसे। सम्प्रत्येव मया यथाप्रतिश्रुतम् इयं कन्या दीयते। तेन इह स्वयम् एत्य धूर्जटिधनुर्धौरेयदोः सम्पदो जामातुः पुरतः भवता चिराय धाराजलं त्यज्यतामित्यन्वयः।

हे जामदग्न्यपरशो = हे भार्गवपरश्वध !, त्वं = भवान् मम = जनकस्य, मित्रं = सखा, येन = कारणेन, एतत् = इदं, वक्ष्यमाणप्रकारं वाक्यम्, आभाष्यसे = कथ्यसे, सम्प्रत्येव = अधुनैव, मया = जनकेन, यथाप्रतिश्रुतं = प्रतिश्रुतमनतिक्रम्य, पूर्वप्रतिश्रुताऽनुसारमिति भावः। इयम् = एषा, कन्या = कुमारी, सीतेति भावः। दीयते = वितीर्यते, हरचापाकर्षकाय मया स्वदुहिता समर्प्यत इति भावः। तेन = कारणेन, इह = अस्मिन्स्थाने, स्वयम् = आत्मना, एत्य = आगत्य, धूर्जटिधनुर्धौरेयदोःसम्पदः=धूर्जटेः ( शिवस्य, 'कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः।' इत्यमरः ) धनुषः ( कार्मुकस्य ) धौरेयी ( धुरन्धरा, भारवहनसमर्थेति भावः ) दोः सम्पत् ( बाहुसम्पत्तिः ) यस्य, तस्य। तादृशस्य जामातुः = दुहितृपतेः, पुरतः = अग्रे, भवता = त्वया, परशुनेति भावः। चिराय = चिरकालपर्यन्तम्—

'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः।'

इत्यमरः। धाराजलं = परश्वधाऽग्रभागरूपं सलिलं त्यज्यतां = विसृज्यताम्। हे रामपरशो ! अचिरादेव मदीयजामाता त्वदीयधाराजलगर्वमपनेष्यतीति भावः। पर्यायोक्तमलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

---

मुनि—वह कैसा है ?

जनक—हे जामदग्न्यके परशो ! तुम मेरे मित्र हो, जिससे मैं तुम्हें ऐसा कहता हूँ। अभी ही मुझसे प्रतिज्ञाके अनुसार यह कन्या दी जा रही है। इसकारण यहाँ स्वयम् आकर शिवधनुको धारण करनेमें समर्थ दामादके आगे तुम चिरकालपर्यन्त धाराजलका परित्याग करो ॥ २९ ॥

मुनिः—तथास्तु । ( इति निष्क्रान्तः )

जनकः—आङ्गिरसोपक्षिप्तस्तावदयं जामदग्न्येन निजकोपानलस्फुलिङ्गः ।

शतानन्दः—किमेतावता ? अतिगम्भीरभुजसारकासारकैरवारामः खलु रामः ।

विश्वामित्रः—राजर्षे, के पुनरमी परितः स्फुरन्मणिमौलयः परःसहस्रा दृश्यन्ते ।

जनकः—

श्रीकण्ठकार्मुकनिरस्तभुजावलेपा
नानादिगन्तजगतीपतयः किलामी ।

---

जनक इति । हे आङ्गिरस = हे शतानन्द । शतानन्दस्य अङ्गिरोगोत्पन्नत्वाद् आङ्गिरसपदप्रयोगः जामदग्न्येन=परशुरामेण, जमदग्नेरपत्यं पुमान् जामदग्न्यस्तेन, 'गर्गादिभ्यो यञ्' इति यञ्। निजकोपाऽनलस्फुलिङ्गः = स्वक्रोधाऽग्निकणः । उपक्षिप्तः = उपन्यस्तः ।

शतानन्द इति । अतिगम्भीरभुजसारकासारकैरवारामः = अतिगम्भीरः ( अतिशयगभीरः, दुरवगाह इति भावः ) भुजसारः ( बाहुबलम् ) स एव कासारः (सरः), तस्मिन् कैरवारामः ( कुमुदोद्यानरूपः ), अनेन रामविशेषणेन जामदग्न्यकोपाऽनलनिर्वापकत्वं व्यज्यते ।

विश्वामित्र इति । परः सहस्राः = सहस्रात् परे, सहस्राऽधिका इति भावः । 'राजदन्तादिषु परम्' इति सहस्रपदस्य परनिपातः । 'पारस्करप्रभृतीनि च संज्ञाया'मिति सुट् ।

श्रीकण्ठेति । श्रीकण्ठकार्मुकनिरस्तभुजाऽवलेपा अमी नानादिगन्तजगतीपतयो मम अभ्यर्थनां किमपि अभिवर्तमानाः कानिचिदहानि नरेन्द्रपूजां गृह्णन्ति किलेत्यन्वयः ।

---

मुनि—ऐसा ही हो । ( ऐसा कहकर जाते हैं । )

जनक—शतानन्दजी ! परशुरामजीने अपने कोपानलकी कणाका आविर्भाव किया ।

शतानन्द—इतनेसे क्या ? अतिगम्भीर बाहुबलरूप तालाबमें कुमुदोंके उद्यानरूप राम हैं ।

विश्वामित्र—राजर्षे ! चारों ओर मणियोंसे शोभित मुकुटवाले हजारोंकी संख्यामें कौन दिखाई दे रहे हैं ?

जनक—शिवधनुसे जिनके बाहुबलके गर्व दूर हो गये हैं ऐसे ये अनेक दिशाओंके

अभ्यर्थनां मम किमप्यभिवर्त्तमाना
गृह्णन्ति कानिचिदहानि नरेन्द्रपूजाम् ॥ ४० ॥

**विश्वामित्रः**—वत्स रामचन्द्र, तदेषामेव पश्यतां कौतुकमस्माकं पूरय।

( रामो विश्वामित्रं प्रणम्य निष्क्रान्तः )

**जनकः**—आङ्गिरस, अपरिशीलितसन्निवेशस्य वत्सरामस्य भवता प्रत्यनन्तरीभूयताम्। आदिश्यतां कञ्चुकी च करकलितकमलमालाया जानक्याः स्वयंवराङ्गणावतरणाय।

---

श्रीकण्ठकार्मुकनिरस्तभुजाऽवलेपाः = श्रीकण्ठकार्मुकेण ( शिवधनुषा ) निरस्तः ( निवारितः ) भुजाऽवलेपः ( बाहुबलगर्वः ) येषां ते। अमी = एते, नानादिगन्त-जगतीपतयः = अनेकदेशभूपालाः, मम = जनकस्य, अभ्यर्थनां = प्रार्थनां, 'किञ्चि-द्दिनपर्यन्तमत्र निवसनेनेयं मिथिलाधरा समलङ्क्रियतां श्रीमद्भि'रित्याकारिका-मिति भावः। किमपि = केनाऽपि प्रकारेणेति भावः। अभिवर्तमानाः = अनुसरन्तः सन्तः, कानिचिदहानि = कतिचिद्दिनानि, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्विती-या। नरेन्द्रपूजां = राजसत्कारं, गृह्णन्ति = स्वीकुर्वन्ति, किलेति निश्चये। वसन्त-तिलकं वृत्तम् ॥ ४० ॥

विश्वामित्र इति। एषामेव = राज्ञामेव, 'षष्ठी चाऽनादरे' इति षष्ठी।

जनक इति। अपरिशीलितसन्निवेशस्य = अपरिशीलितः ( अपरिचितः ) सन्नि-वेशः ( स्थानविशेषः ) यस्य, तस्य। प्रत्यनन्तरीभूयतां = निकटवर्तिना भूयता-मिति भावः। करकलितकमलमालायाः = करकलिता ( हस्तन्यस्ता ) कमलमाला ( पद्मस्रक् ) यया, तस्याः। स्वयम्वराऽङ्गणाऽवतरणाय = स्वयंवरचत्वरोपस्थानाय। 'अङ्गणं चत्वराऽजिरे।' इत्यमरः।

---

राजवर्ग मेरी प्रार्थनाको किसी प्रकारसे स्वीकार कर कुछ दिनतक राजसत्कारका ग्रहण कर रहे हैं ॥ ४० ॥

**विश्वामित्र**—वत्स रामचन्द्र! तब तुम इनके ही सामने हमलोगोंके कौतुकको पूर्ण करो।

( राम विश्वामित्रको प्रणाम कर जाते हैं। )

**जनक**—शतानन्दजी! रामचन्द्रजीको यहाँके स्थानविशेषका परिचय नहीं है इस-लिए आप इनके साथ ही लें। हाथमें कमलमाला लेकर सीताको स्वयंवरस्थानमें अवतीर्ण करानेके लिए कञ्चुकीको आज्ञा दीजिए।

शतानन्दः—तथास्तु । ( इति निष्क्रान्तः )

( प्रविश्य )

कञ्चुकी—जयतु देवः, अनुष्ठित एव देवादेशः ।

विश्वामित्रः—( विलोक्य ) ( सहर्षम् ) आः, कथमुद्गतमेव रामचन्द्रयशःपताकाकेतुदण्डेन हरकोदण्डेन, ( पुनः सविस्मयम् ) अये,

राघवेण शिशुनापि किलायं लीलयैव नमितो हरचापः ।
दूरमुल्लसति यस्य समन्तादम्बरेऽपि गमितो गुणघोषः ॥ ४१ ॥

लक्ष्मणः—भगवन् ! एवमेतत्, तथाहि—

पूर्णा एव पुरारिचापकपटच्छन्नाचलग्रामणी-
गूढानेकगुहागभीरकुहरस्फारप्रतिध्वानिभिः ।

---

विश्वामित्र इति । रामचन्द्रयशः पताकाकेतुदण्डेन = रामचन्द्रयशःपताकायाः ( रामकीर्तिध्वजस्य ) केतुदण्डेन ( पताकाधारदण्डेन ) । उद्गतमेव = उत्थितमेव । हरधनुर्भञ्जनं प्रतिपादयति—राघवेणेति । शिशुनाऽपि राघवेण अयं हरचापो लीलयैव नमितः किल । यस्य अम्बरेऽपि गमितो गुणघोषः समन्तात् दूरमुल्लसतीत्यन्वयः । शिशुनाऽपि = बालेनाऽपि, राघवेण = रामचन्द्रेण, अयम् = एषः, हरचापः = शिवधनुः, लीलयैव = अनायासेनैव, नमितः = आरोपितः, किलेति निश्चये । यस्य = आरोपितस्य, हरचापस्य, अम्बरेऽपि = आकाशेऽपि, गमितः = प्रापितः, गुणघोषः = ज्यानिनादः, शौर्यादिप्रशंसारूपः शब्दो वा । समन्तात् = सर्वतः, दूरं = विप्रकृष्टप्रदेशम्, उल्लसति = आविर्भवति । रामनमितस्य हरधनुषो ज्यानिनादो न केवलं भूतलमेव, अपि तु व्योममण्डलमपि व्याप्नोतीति भावः । स्वागतावृत्तम् ॥ ४१ ॥

लक्ष्मणः कौशिकोक्तिं समर्थयति—पूर्णा एवेति । पुराऽरिचापकपटच्छन्नाऽचल

---

शतानन्द—ऐसा ही हो । ( ऐसा कहकर जाते हैं । )

( प्रवेशकर )

कञ्चुकी—महाराजकी जय हो । महाराजकी आज्ञाका पालन किया गया ।

विश्वामित्र—( देखकर हर्षपूर्वक ) ओह ! किस प्रकार रामचन्द्रकी यशःपताकाके ध्वजदण्डके समान शिवधनु उठही गया । ( फिर आश्चर्यपूर्वक ) अरे !

बालक होकर भी रामचन्द्रने इस शिवधनुको अनायास ही उठा लिया, जिसकी आकाशमें भी पहुंचाई गई प्रत्यञ्चाकी ध्वनि दूर तक फैल रही है ॥ ४१ ॥

लक्ष्मण—भगवन् ! आपका कहना ठीक है । जैसे कि—

शिवधनुके कपटसे प्रच्छन्न हिमालय पर्वतके गुप्त अनेक कन्दरोंके गम्भीर छिद्रोंमें

मौर्वीभूतभुजङ्गराजवदनश्रेणीविसर्पद्वचः–
प्रारब्धार्ययशःप्रशस्तिसदृशैर्ज्याघातघोषैर्दिशः ॥ ४२ ॥

जनकः—आः ! किमुच्यते, दिशः पूर्णा इति ? ननु

एतैः श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवै रवैः ।
चिरात्प्रतिज्ञया साकं पूर्णो मम मनोरथः ॥ ४३ ॥

---

ल्ग्रामणीगुहाऽनेकगुहागभीरकुहरस्फारप्रतिध्वानिभिः मौर्वीभूतभुजङ्गराजवदनश्रेणीविसर्पद्वचः प्रारब्धाऽऽर्ययशःप्रशस्तिसदृशैः ज्याऽऽघातघोषैः दिशः पूर्णा एवेत्यन्वयः ।

पुराऽरिचापेत्यादिः = पुराऽरेः ( शिवस्य ) चापस्य ( धनुषः ) कपटेन (छलेन) क्षुब्धः ( प्रचलुब्धः ) यः अचलग्रामणीः ( पर्वतश्रेष्ठः, हिमालय इति भावः ) तस्य गुहाः ( गुहाः ) या अनेकगुहाः ( बहुकन्दराणि ), तासां यानि गभीरकुहराणि ( गम्भीरच्छिद्राणि ) तेषु स्फारं ( प्रचुरं, यथा स्यात्तथा ) प्रतिध्वनन्ति ( प्रतिस्वनन्ति ) इति तच्छीलास्तैः । 'ज्याऽऽघातघोष'रित्यस्य विशेषणम् , एवमन्यत्रापि । मौर्वीभूतेत्यादिः = मौर्वीभूतः ( धनुर्गुणीभूतः ) यो भुजङ्गराजः ( सर्पराजः, शेष इति भावः ) तस्य या वदनश्रेणी ( मुखपङ्क्तिः ) तस्या विसर्पन्ति (प्रचलन्ति) यानि वचांसि ( वचनानि ) तैः प्रारब्धाः ( उपक्रान्ताः ) या आर्ययशःप्रशस्तयः ( आर्यस्य = पूज्यस्य रामस्येति भावः, या यशः-प्रशस्तयः = कीर्तिवर्णनानि ) ताभिः सदृशैः ( तुल्यैः ) । ज्याऽऽघातघोषैः = धनुर्गुणाऽऽहननशब्दैः, दिशः = आशाः पूर्णा एव = पूरिता एव, सन्तीति शेषः ।

कैतवाऽपह्नुतिरलङ्कारः, सोदाहरणं तल्लक्षणं यथा—'कैतवं व्यज्यमानत्वे व्याजाद्यैर्निह्नुतेः पदैः । निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥' इति । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

एतैरिति । श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवैः एतै रवैः चिरात् मम प्रतिज्ञया साकं मनोरथः पूर्ण इत्यन्वयः ।

श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवैः = श्रीकण्ठकोदण्डस्य ( शिवधनुषः ) चञ्चन्ती ( चलन्ती, त्रुट्यन्तीति भावः ) या मौर्वी ( ज्या ) तद्भवैः ( तदुत्पन्नैः ) । एतैः = सम्प्रत्येवाऽऽविर्भूतैः रवैः = शब्दैः, चिरात् = बहुकालात् , कृतयेति शेषः । मम =

---

प्रचुरतासे प्रतिध्वनित होनेवाले प्रत्यञ्चाभूत शेषनागकी मुखपङ्क्तिसे निकले हुए वचनोंसे प्रारब्ध आर्यकी यशःप्रशस्तियोंके तुल्य ज्याके आघात शब्दोंसे दिशाएँ पूर्ण ही हो गईं ॥

जनक—ओह ! दिशाएँ पूर्ण हो गईं यह क्या कहते हो ?

शिवजीके धनुकी टूटती हुई प्रत्यञ्चासे उत्पन्न इन शब्दोंसे बहुत समयसे की गई मेरी प्रतिज्ञाके साथ साथ अभिलाष भी पूर्ण हो गया ॥ ४३ ॥

प्रतीहारी—( कञ्चुकिनं प्रति ) आर्य, पश्य पश्य कौतूहलम् । सीतारामाभ्यां मिलित्वा पुनर्हरचापारोपणं समम्रीक्रियते । ( अज्ज, पेक्ख पेक्ख कोदूहलम् । सीतारामेहिं मिलिअ उण हरचावारोवणं समग्गीकरीअदि )

कञ्चुकी—( सकौतुकम् ) कथमिव । ( विमृश्य, विहस्य च ) आं, ज्ञातम् ।

करकिसलयलीलाचारु चण्डीशचापे
दशरथतनयेन स्वैरमाकृष्यमाणे ।
रससरसविकासी सीतया पुङ्खितोऽसौ
कुवलयदलदामश्यामकान्तिः कटाक्षः ॥ ४५ ॥

---

जनकस्य, प्रतिज्ञया = साध्याऽभिधायिकया वाचा, 'साक'मिति सहार्थकेन पदेन योगे 'सहयुक्तेऽप्रधाने' इति तृतीया । साकं = सह, मनोरथः = अभिलाषः, सीतोद्वाहसम्पादनरूप इति भावः । पूर्णः = पूरितः । सहोक्तिरलङ्कारः । अनुष्टुब्वृत्तम् ॥

प्रतीहारीति । समम्रीक्रियते = सकलीक्रियते, सीतारामाभ्यां मिथोऽवलोकनेन भ्रूयुगलमेलनेन हरचापारोपणं पुनः समम्रीक्रियत इति भावः ।

करकिसलयेति । दशरथतनयेन चण्डीशचापे करकिसलयलीलाचारु स्वैरम् आकृष्यमाणे ( सति ) सीतया रससरसविकासी कुवलयदलदामश्यामकान्तिः असौ कटाक्षः पुङ्खित इत्यन्वयः ।

दशरथतनयेन = दशरथसूनुना, रामेणेत्यर्थः । चण्डीशचापे = शिवधनुषि, करकिसलयलीलाचारु = करः ( हस्तः ) किसलयम् ( पल्लवम् ) इव, 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । करकिसलयस्य लीला ( विलासः ), तया चारु ( मनोहरम् ) यथा स्यात्तथेति क्रियाविशेषणम् । स्वैरं = यथेच्छं यथा स्यात्तथा । आकृष्यमाणे = आनम्यमाने सति, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । सीतया = जानक्या । रससरसविकासी = रसेन ( अनुरागेण ) सरसः ( आर्द्रः ) एवं च विकासी ( प्रफुल्लः ) । कुवलयदलदामश्यामकान्तिः = कुवलय-

---

प्रतीहारी—( कञ्चुकीसे ) आर्य ! कौतूहल देखिए देखिए । सीता और राम मिलकर फिर शिवधनुके आरोपणको समग्र कर रहे हैं ।

कञ्चुकी—( कौतुकके साथ ) कैसे ? ( विचारकर और हंसकर भी ) हाँ, जाना । पल्लवके सदृश हाथकी लीलासे सुन्दरतापूर्वक इच्छाके अनुसार रामचन्द्रके शिवधनुको खींचनेपर सीताने अनुरागसे आर्द्र और प्रफुल्ल नीलकमलके पत्तोंके सदृश श्यामकान्तिवाले कटाक्षको धनुर्बाणसे योजित किया ॥ ४४ ॥

लक्ष्मणः—भगवन् , अत्यद्भुतं वर्त्तते । नन्वयम्—

भिन्दन्निद्रां मुरारेः, सकलभुजभृतां म्लानयन् शौर्यदर्पं,
छिन्दन् दिक्कुम्भिकर्णाञ्चलचलनकलां, कम्पयन् कूर्मराजम् ।
आर्यश्लाघागभीरः प्रलयजलधरध्वानधिक्कारधीर-
ष्टाङ्कारः कृष्यमाणत्रिपुरहरधनुर्भङ्गभूराविरस्ति ॥ ४५ ॥

---

दलानां ( नीलोत्पलपत्राणाम् ) दाम ( माला ) तदिव श्यामकान्तिः श्यामलच्छविः, श्यामा कान्तिर्यस्य सः )। असौ = एषः, कटाक्षः = अपाङ्गदर्शनरूपः, शरः, पुङ्खितः = धनुर्मूलेन योजितः, सम्प्रीकृत इति भावः। रामेण हरधनुष्यनायासेन भग्ने सति सीतया नीलोत्पलदलद्युतिः कटाक्षरूपः शरः सम्प्रीकृत इति भावः। उपमाऽलङ्कारः । मालिनीवृत्तम् ॥ ४४ ॥

लक्ष्मणो धनुष्टाङ्कारं वर्णयति—भिन्दन्निति। मुरारेर्निद्रां भिन्दन् , सकलभुजभृतां शौर्यदर्पं म्लानयन् , दिक्कुम्भिकर्णाञ्चलचलनकलां छिन्दन् , कूर्मराजं कम्पयन् , आर्यश्लाघागभीरः प्रलयजलधरध्वानधिक्कारधीरः कृष्यमाणत्रिपुरहरधनुर्भङ्गभूः टाङ्कारः आविरस्तीत्यन्वयः। मुरारेः = विष्णोः, क्षीरसागरसुप्तस्येति भावः। निद्रां = स्वापं, भिन्दन् = निवारयन् , सकलभुजभृतां = सकलानां ( समस्तानाम् ) भुजभृतां ( बाहुशालिनां, वीराणामिति भावः ), शौर्यदर्पं = वीर्यगर्वं, म्लानयन् = म्लानं कुर्वन् , दिक्कुम्भिकर्णाञ्चलचलनकलां = दिक्कुम्भिनां ( दिग्गजानाम् ) यानि कर्णाञ्चलानि ( श्रोत्राग्रभागाः ) तेषां चलनकलां ( संचालनशिल्पम् ), छिन्दन् = परिहरन् , एवं च कूर्मराजं = कच्छपराजं, पृथिव्याधारभूतमिति भावः। कम्पयन् = कम्पितं कुर्वन्। आर्यश्लाघागभीरः = आर्यस्य ( पूज्यस्य, अग्रजन्मनः श्रीरामचन्द्रस्येति भावः ) श्लाघया ( प्रशंसया ) गभीरः ( गम्भीरः )। प्रलयजलधरध्वानधिक्कारधीरः = प्रलयजलधरस्य ( कल्पान्तमेघस्य ) यो ध्वानः ( शब्दः ) तस्य धिक्कारेण ( तिरस्कारेण ) धीरः ( गम्भीरः )। कृष्यमाणत्रिपुरहरधनुर्भङ्गभूः = कृष्यमाणं ( नम्यमानम् ) यत् त्रिपुरहरधनुः ( शिवकार्मुकम् ) तस्य यो भङ्गः ( त्रोटनम् ) तद्भूः ( तदुत्पन्नः ) । तादृशः टाङ्कारः = 'टाम्' इत्यनुकृतिरूपः

---

लक्ष्मण—भगवन् ! अतिशय आश्चर्य हो रहा है । यह—

भगवान् विष्णुकी निद्राको हटाता हुआ, सकल वीरोंके शौर्यदर्पको म्लान बनाता हुआ, दिग्गजोंके कर्णाञ्चलोंके संचालनरूप शिल्पको मिटाता हुआ और कच्छपराजको कम्पित करता हुआ आर्यकी प्रशंसासे गम्भीर, प्रलयमेघके शब्दको धिक्कार कर धीर, खींचे गये शिवधनुके टूटनेसे उत्पन्न टाङ्कारशब्द आविर्भूत हो रहा है ॥ ४५ ॥

**प्रतीहारी—**

त्रैलोक्यं लङ्घयन् गिरिगभीरगुहासुप्तजाग्रत्सिंह-

स्फारोन्मीलत्कण्ठस्तनितप्रतिरवोद्गारपूर्यमाणे ।

ब्रह्माण्डे भज्यमाने बहुविकटकटत्कारप्राग्भारभीमो

अहो ! भज्यच्चण्डीश्वरधनुष्टणत्कार उद्गच्छति ॥ ४६ ॥

( तेल्लोक्कं लङ्घअन्तो गिरिगहिरगुहासुत्तजग्गन्तसीह

प्फारुम्मिल्लन्तकण्ठत्थणिदपडिरवुग्गारपूरिज्जमाणे ।

बह्मण्डे भज्जमाणे बहुविअडकडक्कारपब्भारभीमो

अम्मो ! भज्जन्तचण्डीसरधणुवटणक्कारओ उग्गमेदि ॥ )

---

शब्दः । आविरस्ति = प्रादुर्भवति । अत्र धनुष्टङ्कार आलम्बनविभावः, तस्य दिव्यापकत्वोद्दीपनविभावः, तस्य वर्णनमनुभावः, हर्षादयश्च व्यभिचारिभावाः, विस्मयः स्थायिभावः । इत्थं च सामाजिकेष्वद्भुतरसो व्यज्यते । स्रग्धरावृत्तम् ॥ ४५ ॥

त्रैलोक्यमिति । अहो ! त्रैलोक्यं लङ्घयन् गिरिगभीरगुहासुप्तजाग्रत्सिंहस्फारोन्मीलत्कण्ठस्तनितप्रतिरवोद्गारपूर्यमाणे ब्रह्माण्डे भज्यमाने बहुविकटकटत्कारप्राग्भारभीमो भज्यच्चण्डीश्वरधनुष्टणत्कार उद्गच्छतीत्यन्वयः ।

अहो = आश्चर्यम् । त्रैलोक्यं = त्रिलोकीं, स्वर्गमर्त्यपातालात्मिकामिति भावः । लङ्घयन् = अतिक्रामन्, व्याप्नुवन्निति भावः । गिरिगभीरेत्यादिः = गिरिगभीरगुहासु ( पर्वतगम्भीरगह्वरेषु ) प्राक् सुप्ताः ( निद्राणाः ) पश्चाज्जाग्रतः ( जागरणभावं प्राप्नुवन्तः ) ये सिंहाः ( मृगेन्द्राः ) तेषां स्फारं ( भूरि ) उन्मीलन्ति ( प्रादुर्भवन्ति ) यानि कण्ठस्तनितानि ( गलशब्दाः, गर्जनध्वनय इति भावः ) तेषां ये प्रतिरवाः ( प्रतिध्वनयः ) तेषामुद्गारेण ( उद्गमेन ) आपूर्यमाणे ( समन्तात् ध्रियमाणे ) । ब्रह्माण्डे = संसारे, भज्यमाने = आमर्द्यमाने सति, बहुविकटकटत्कारप्राग्भारभीमः = बहुविकटः ( अतिशयभयानकः ) यः कटत्कारः ( कटदिति शब्दः ) तस्य यः प्राग्भारः ( विस्तारः ), तेन भीमः ( भयानकः ) । भज्यच्चण्डीश्वरधनुष्टणत्कारः = भज्यत् ( भङ्गं प्राप्नुवत् ) यच्चण्डीश्वरधनुः ( हरकार्मुकम् ) तस्य यः टणत्कारः ( टणदितिशब्दः ) सः, उद्गच्छति = उद्गमं प्राप्नोति । धनुर्भङ्गशब्दस्थि-

---

**प्रतीहारी**—आश्चर्य है । त्रैलोक्यको व्याप्त करता हुआ, पर्वतकी गम्भीर गुफाओंमें सोकर जगे हुए सिंहोंके प्रादुर्भूत गर्जन शब्दोंकी प्रतिध्वनियोंके उद्गमसे भरे हुए ब्रह्माण्डके भग्न होनेपर अतिशय भयानक शब्दके विस्तारसे भयङ्कर टूटनेवाले शिवधनुका शब्द प्रकट हो रहा है ॥ ४६ ॥

कञ्चुकी—पश्य कौतुकम्—

क्रीडाभग्नमृगाङ्कमौलिधनुषं सीतार्पितां वक्षसा
बिभ्राणं कमलस्रजं निजगृहं शृङ्गारवीरश्रियोः।
रामं व्रीडवशादवाञ्चितमुखं भूमीभुजां पश्यतां
चेतः क्रोधविषादविस्मयमुदामूर्मीः समालिङ्गति ॥४७॥

( प्रविश्य )

लोकीं व्याप्नोति, ततः सुप्ताः सिंहा जाग्रति गर्जन्ति च ब्रह्माण्डं च भज्यत इवेति भावः। स्रग्धरावृत्तम् ॥ ४६ ॥

क्रीडाभग्नेति। क्रीडाभग्नमृगाङ्कमौलिधनुषं सीताऽर्पितां कमलस्रजं वक्षसा बिभ्राणं शृङ्गारवीरश्रियोः निजगृहं व्रीडवशात् अवाञ्चितमुखं रामं पश्यतां भूमीभुजां चेतः क्रोधविषादविस्मयमुदाम् ऊर्मीः समालिङ्गतीत्यन्वयः।

क्रीडाभग्नमृगाङ्कमौलिधनुषं = क्रीडया ( खेलया, अनायासेनेति भावः ) भग्नम् ( आमर्दितम् ) मृगाङ्कमौलेः ( चन्द्रशेखरस्य ) धनुः ( कार्मुकम् ) येन, तम्। सीताऽर्पितां = जानकीन्यस्ताम् )। कमलस्रजं = पद्ममालां, वक्षसा = उरसा, बिभ्राणं धारयन्तं, शृङ्गारवीरश्रियोः = रत्युत्साहस्थायिभावरसलक्ष्म्योः निजगृहं = स्वसदनम्, आधारस्थानमिति भावः। एवं च व्रीडवशात् = लज्जापारतन्त्र्यात्, व्रीडनं व्रीडः, भावे घञ्। 'गुरोश्च हलः' इत्यप्रत्यये तु व्रीडा। अवाञ्चितमुखम् = अवनतवदनं, तादृशं रामं = रामचन्द्रं, पश्यतां = विलोकयतां, भूमीभुजां = राज्ञां, 'कृदिकारादक्तिनः' इति ङीषि भूमीशब्दः। भूमीं भुञ्जन्तीति भूमीभुजस्तेषाम्। चेतः = चित्तं, कर्तृ। क्रोधविषादविस्मयमुदां = कोपखेदाऽऽश्चर्यहर्षाणां, तत्र चापाकर्षणे स्वशक्तिप्रतिहतेः क्रोधः, सीताप्राप्तिनैराश्याद्विषादः, अप्राप्तयौवनस्य रामस्य लोकाऽतिशायिविक्रमदर्शनाद्विस्मयः, योग्ययोः सीतारामयोर्वैवाहिकसम्बन्धसम्भावनायामुच्चेति यथायथं भावसाङ्कर्यं बोध्यम्। एवं च तादृशां भावानाम्, ऊर्मीः = तरङ्गान्, समूहानिति भावः। समालिङ्गति = सम्बध्नाति। रामपराक्रमदर्शनाद्राजचित्तं कोपखेदाश्चर्यहर्षवशं भवतीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

कञ्चुकी—कौतुक देखिए—

अनायास ही शिवधनुके तोड़नेवाले, सीतासे समर्पित कमलोंकी मालाको छातीसे धारण करनेवाले, शृङ्गारलक्ष्मी और वीरलक्ष्मीके आधार स्थान और लज्जासे अधोमुख होनेवाले रामको देखनेवाले राजाओंका चित्त क्रोध, खेद, आश्चर्य और हर्ष इन भावोंकी तरङ्गोंको आलिङ्गन कर रहा है ॥ ४७ ॥

( प्रवेशकर )

शतानन्दः—राजर्षे, विषीद वा प्रसीद वा, इदं यथादृष्टमुपवर्ण्यते ।

ज्यावल्लीं ललिताङ्गुलीकिसलयैराकर्णमाकर्षतो-
न भ्रूर्भङ्गुरतां गता रघुशिशोर्भग्नं धनुर्धूर्जटेः ।
नाहङ्कारतरङ्गितो ध्वनिरभूत् कण्ठेऽस्य दीर्यद्धनु-
ष्टङ्कारस्तु चकार तारतरलः शब्दाद्वितीयं जगत् ॥ ४८ ॥

जनकः—कथं पुनरेतावतीमतिभूमिमवगाहमानोऽपि वत्सो रामभद्रो भवता न निवारितः ।

---

शतानन्द इति । विषीद = विषादमनुभव, धनुर्भङ्गश्रवणादिति शेषः । प्रसीद वा = प्रसन्नो भव वा, चिरकाङ्क्षितयोग्यजामातृलाभादिति शेषः ।

ज्यावल्लीमिति । ललिताऽङ्गुलीकिसलयैः ज्यावल्लीम् आकर्णम् आकर्षतो रघुशिशोः भ्रूः भङ्गुरतां न गता । धूर्जटेः धनुः भग्नम् । अस्य कण्ठे अहङ्कारतरङ्गितो ध्वनिः न अभूत्, तु तारतरलः अस्य दीर्यद्धनुष्टङ्कारो जगत् शब्दाऽद्वितीयं चकारेत्यन्वयः ।

ललिताऽङ्गुलीकिसलयैः = कोमलकरशाखापल्लवैः, ज्यावल्लीं = मौर्वीलताम्, आकर्णं = कर्णपर्यन्तम्, आकर्षतः = नमयतः, रघुशिशोः = रघुकुलबालकस्य, रामस्येत्यर्थः । भ्रूः = नयनरोमराजिः, भङ्गुरतां = कुटिलतां, न गता = प्राप्ता । परं— धूर्जटेः = शिवस्य, धनुः = कार्मुकं, भग्नं = खण्डितम् । अस्य = रघुशिशोः, कण्ठे = गले, अहङ्कारतरङ्गितः = अभिमानतरङ्गितः, ध्वनिः = शब्दः, न अभूत् = न संजातः, तु = परन्तु, तारतरलः = अत्युन्नतचञ्चलः, अस्य = रामस्य, दीर्यद्धनुष्टङ्कारः = दीर्यतः (त्रुट्यतः) धनुषः (कार्मुकस्य) टङ्कारः (टमित्यनुकृतिशब्दः), कर्तृरूपः । जगत् = लोकं, शब्दाऽद्वितीयं = शब्दे (ध्वनौ विषये) अद्वितीयं (द्वितीयरहितम्) प्रचुरशब्दपरिपूर्णमिति भावः । चकार = कृतवान् । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

जनक इति । एतावतीम् = एतत्परिमाणाम्, अतिभूमिम् = अतिक्रमणकोटिम्,

---

शतानन्द—राजर्षे ! आप विषण्ण हों या प्रसन्न हों, जैसा देखा है, वैसा वर्णन करता हूं। पल्लवोंके सदृश सुन्दर अङ्गुलियोंसे लताके सदृश प्रत्यञ्चाको कानतक खींचनेवाले राघवबालक ( राम ) की भौंह भी कुटिल नहीं हुई, पर शिवधनु टूट गया। इनके कण्ठमें अहङ्कारसे तरङ्गित शब्द नहीं हुआ, परन्तु अत्युन्नत और चञ्चल रामसे टूटे गये धनुके टङ्कारने, लोकको शब्दमें अद्वितीय कर दिया ॥ ४८ ॥

जनक—वत्स रामभद्रके यहां तक बढ़नेको उतारू होनेपर भी आपने क्यों निवारण नहीं किया ?

शतानन्दः—कथङ्कारं वारयामः ?
यावत्कन्दुकलाञ्छनाञ्चितकरः शोणाब्जनालाकृतिः
कौसल्यार्पितमङ्गलप्रतिसरो वत्सस्य दोःकन्दलः ।
किञ्चिच्चञ्चति, तावदेव हि दलच्चण्डीशचापोच्छल-
च्छब्दैकार्णवमग्नमेतदखिलं जातं त्रिलोकीतलम् ॥ ४९ ॥

---

धनुषश्चाकर्षणमात्रस्य कर्तव्यत्वे मङ्गलरूपं व्यापारमिति भावः । अवगाहमानोऽपि= प्रविशन्नपि ।

वारणाऽवसराऽभावं प्रतिपादयति—यावदिति । यावत् कन्दुकलाञ्छनाऽञ्चितकरः शोणाऽब्जनालाऽऽकृतिः कौसल्याऽर्पितमङ्गलप्रतिसरः वत्सस्य दोः कन्दलः किञ्चित् चञ्चति, तावदेव एतत् अखिलं त्रिलोकीतलं दलच्चण्डीशचापोच्छलच्छब्दैकार्णवमग्नं जातमित्यन्वयः ।

यावत् = यस्मिन्समये, कन्दुकलाञ्छनाऽञ्चितकरः = कन्दुकलाञ्छनेन ( गेन्दुकचिह्नेन ) अञ्चितः ( पूजितः, चिह्नित इति भावः ) करः ( हस्तः ) यस्य सः । शोणाऽब्जनालाऽऽकृतिः = शोणाऽब्जस्य ( रक्तकमलस्य ) नालस्य ( दण्डस्य ) इव आकृतिः ( आकारः ) यस्य सः । पुनः कौसल्याऽर्पितमङ्गलप्रतिसरः = कौसल्यया ( दशरथमहिष्या ) अर्पितः ( समर्पितः ) मङ्गलप्रतिसरः ( कल्याणकारकहस्तसूत्रम् ) यस्मिन् सः । 'ना चमूजघने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् ।' इत्यमरः । तादृशो वत्सस्य = वात्सल्यभाजनस्य, रामस्येति भावः । दोः कन्दलः = बाहुदण्डः, 'भुजबाहू प्रवेष्टो दोः' इत्यमरः । किञ्चित् = ईषत् , चञ्चति = चलति, धनुराकर्षणाऽर्थमिति शेषः । तावदेव = तस्मिन्समय एव, एतत् = इदम् , अखिलं = समस्तं, त्रिलोकीतलं = लोकत्रितयीतलं, दलच्चण्डीशचापोच्छलच्छब्दैकार्णवमग्नं = दलन् ( त्रुटयन् ) यश्चण्डीशचापः ( हरधनुः ) तस्मादुच्छलन् ( उद्गच्छन् ) यः शब्दः ( ध्वनिः ) स एव एकः ( अद्वितीयः ) अर्णवः ( समुद्रः ), तस्मिन्मग्नं ( निमग्नम् ), जातं = सम्पन्नम् । यावद्धरचापाकर्षणाऽर्थं रामभुजदण्डः किञ्चिच्चलितस्तस्मिन्नेव समये समस्तमेव जगत्त्रयं हरकार्मुकोद्भूतशब्दव्याप्तं संजातमतो निवारणकालो नाऽऽसा-

---

शतानन्द—हम कैसे रोकें ?

जब तक गेंदके चिह्नसे युक्त हाथ वाला, रक्तकमलके दण्डके सदृश आकारवाला और कौसल्यासे समर्पित मङ्गल हस्तसूत्रसे सम्बद्ध वत्स रामभद्रका बाहुदण्ड कुछ ही चला, उसी समय समस्त त्रैलोक्य, टूटते हुए शिवधनुसे उद्गत शब्दरूप एक समुद्रमें डूब ही गया ॥ ४९ ॥

जनकः—तदलं कालातिपातेन, याच्यतामनुमतिर्भगवतो विश्वामित्रस्य जानकीरामभद्रयोः पाणिसङ्घट्टनाय ।

शतानन्दः—

सद्योऽविघट्टमानेन धनुषैव पिनाकिनः ।
ननु सङ्घट्टितौ पाणी जानकीरामभद्रयोः ॥ ५० ॥

तदूर्मिलालक्ष्मणयोरेव पाणिसङ्घट्टनाय भगवानभ्यर्थनीयः ।

विश्वामित्रः—अस्त्वेतत्, परन्तु—

पाणीञ्जनककन्यानां पीडयद्भिः सहानुजैः ।

---

दित इति भावः । अत्र क्रमाऽतिशयोक्तिरलङ्कारः, सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'अक्रमाऽतिशयोक्तिः स्याद्युगपत्कार्यकारणे आलिङ्गन्ति समं देव ! ज्यां शराश्च पराश्च ते ॥' इति शार्दूलविक्रीडितं वृत्तम् ॥ ४९ ॥

जनक इति । कालाऽतिपातेन = समययापनेन । अनुमतिः = अनुज्ञा ।

सद्य इति । सद्यो विघट्टमानेन पिनाकिनो धनुषा एव जानकीरामभद्रयोः पाणी संघट्टितौ ननु इत्यन्वयः । सद्यः = सपदि, विघट्टमानेन = विश्लिष्यता, त्रोटने-नेति शेषः । 'सम्यक् संघट्टमानेने'ति पुस्तकान्तरपाठस्तत्र सम्यक् = समीचीनं यथा स्यात्तथा, संघट्टमानेन = संश्लिष्यता, रामकरेण सममिति शेषः । पिनाकिनः = हरस्य, धनुषैव = कार्मुकेणैव, जानकीरामभद्रयोः = सीतारामवत्सयोः, पाणी = हस्तौ, संघट्टितौ = संश्लिष्टौ, ननु = एव, 'प्रश्नाऽवधारणाऽनुज्ञाऽनुनयाऽऽमन्त्रणे ननु ।' इत्यमरः । अत्र विघट्टमानेन कथं संघट्टिताविति विरोधस्तत्परिहारस्तु विघट्टमानेन हरधनुषा, जनकस्य प्रतिज्ञापूर्त्तेः सीतारामयोः पाणी संघट्टिताविति । अत एव विरोधाभासाऽलङ्कारः । अनुष्टुब्वृत्तम् ॥ ५० ॥

पाणीनिति । जनककन्यानां पाणीन् पीडयद्भिः अनुजैः सह मे रामभद्रः सीतायाः पाणिपीडनम् इच्छतीत्यन्वयः ।

---

जनक—इस कारण अब समय बितानेकी आवश्यकता नहीं है । सीता और रामके पाणिग्रहणके लिए विश्वामित्रमुनिकी अनुमति माँगिए ।

शतानन्द—तत्क्षण विघटित होनेवाले शिवधनुने ही सीता और रामके हाथोंको संघटित कर दिया ॥ ५० ॥

इसलिए ऊर्मिला और लक्ष्मणके ही पाणिग्रहण करनेके लिए भगवान्से अभ्यर्थना करनी चाहिए ।

विश्वामित्र—यह हो, परन्तु—

मेरे रामभद्र, जनककी अन्य कन्याओंसे भाइयोंके विवाहके साथ सीताके पाणिग्रहणकी

सीताया रामभद्रो मे पाणिपीडनमिच्छति ॥ ५१ ॥

जनकः—( सहर्षम् ) कथं माण्डवी-श्रुतकीर्त्तिभ्यां भरत-शत्रुघ्नयोरपि परिणयमनुसन्धत्ते भगवान् ?

विश्वामित्रः—अथ किम् ?

जनकः—तद्गृहीतमिदमधिशेखरमाज्ञाकुसुमं भगवतः । तदागच्छत । समीहितं निष्पादयामः ।

( इति निष्क्रान्ताः सर्वे । )

इति तृतीयोऽङ्कः ।

---

जनककन्यानां = जनककुमारीणाम् , ऊर्मिलाऽऽदीनामिति भावः । पाणीन्= करान् , पीडयद्भिः = संश्लिष्यद्भिः, अनुजैः = अवरजैः, लक्ष्मणादिभिरिति भावः । सह = समं, मे = मम, रामभद्रः = रामवत्सः, सीतायाः = मैथिल्याः, पाणिपीडनं = हस्तसंघट्टनम् , इच्छति = वाञ्छति । रामो भ्रातृभिः सममेव स्वविवाहं कामयत इति भावः । अनुष्टुब्वृत्तम् ॥ ५१ ॥

जनक इति । अनुसन्धत्ते = अन्विष्यति । आज्ञाकुसुमम् = अनुज्ञापुष्पम् । अधिशेखरं = शिरोभूषणे, विभक्त्यर्थेऽव्ययीभावः समीहितम् = अभीष्टम् ।

इति श्रीदेवराजशर्मप्रणीतायां चन्द्रकलाऽभिख्यायां प्रसन्नराघव-व्याख्यायां तृतीयोऽङ्कः ।

---

इच्छा करते हैं ॥ ५१ ॥

जनक—( हर्षपूर्वक ) भगवान् , क्या माण्डवी और श्रुतकीर्तिके साथ भरत और शत्रुघ्नका भी विवाह कराना चाहते हैं ?

विश्वामित्र—और क्या ?

जनक—तब भगवान्‌का आज्ञापुष्प शिरोभूषणमें ग्रहण कर लिया । अतः आइए । अभीष्टकार्यको निष्पन्न करें ।

( सब बाहर जाते हैं । )

इति तृतीय अङ्क ।

# चतुर्थोऽङ्कः

( नेपथ्ये ध्रुवा गीयते )

मणिमयमङ्गलदीपो जनकनरेन्द्रस्य मण्डपे ज्वलति ।
चण्डानिलोऽपि प्राप्तो यस्मिन् विफलागमो भवति ॥ १ ॥

( मणिमयमङ्गलदीवो जणअणरेन्दस्स मण्डवे ज्जलइ ।
चण्डाणिलो वि पत्तो जस्सिं विफलाअमो होइ ॥ )

( पुनर्नेपथ्ये )

अरे क्षत्रियाः, अपसरत लोचनपथात् । नन्वयम्—

कुर्वन् कोपादुदञ्चद्रविकिरणसटापाटलैर्दृष्टिपातै-
रद्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।

---

नेपथ्य इति । ध्रुवा = गीतिविशेषः, तल्लक्षणमुक्तं राजशेखरेण—

'प्रथयति पात्रविशेषान्सामाजिकजनमनांसि रञ्जयति ।
अनुसन्दधाति च रसान्नाट्यविधाने ध्रुवा गीतिः ॥' इति ।

मणिमयेति । जनकनरेन्द्रस्य मण्डपे मणिमयमङ्गलदीपो ज्वलति, यस्मिन् प्राप्तः चण्डाऽनिलोऽपि विफलाऽऽगमो भवतीत्यन्वयः । जनकनरेन्द्रस्य = जनकनरेशस्य, मण्डपे = सौधे, मणिमयमङ्गलदीपः = रत्ननिर्मितमाङ्गलिकप्रदीपः, ज्वलति= दीप्यते । यस्मिन् = मणिमयमङ्गलदीपे, प्राप्तः = समायातः, चण्डाऽनिलोऽपि = प्रबलवायुरपि, विफलागमः = निष्फलागमनः, मणिमयदीपनिर्वापण इति शेषः । भवति = वर्तते । अत्र मणिमयमङ्गलदीपत्वेन रामस्य चण्डानिलत्वेन परशुरामस्य व्यङ्ग्यत्वं भवत्येव च तस्य भार्गवस्य दण्डप्रदानायाऽऽगमेऽपि वैफल्यं च व्यज्यते । गाथा ( आर्या ) जातिः ॥ १ ॥

जामदग्न्यं वर्णयति—कुर्वन्निति । कोपात् उदञ्चद्रविकिरणसटापाटलैः दृष्टिपातैः

---

( नेपथ्यमें ध्रुवा गीति गाई जाती है । )

महाराज जनकके प्रासादमें रत्ननिर्मित माङ्गलिकदीप जलता है, जिसमें बहती हुई प्रचण्ड हवा भी ( दीप बुझानेमें ) निष्फल हो जाती है ॥ १ ॥

( फिर नेपथ्यमें )

अरे क्षत्रियो ! नेत्रमार्गसे हट जाओ । ये—

कोपसे जटाकी नाईं उगती हुई रविकिरणोंके समान लाल दृष्टिपातोंसे आज भी कुठार को क्षत्रियकण्ठोंसे च्युत रक्तनदीकी धारासे अभिषिक्त करते हुए फिर भी लोकोपद्रवको

तीव्रैर्निःश्वासपातैः पुनरपि भुवनोत्पातमासूचयद्भि-
र्गर्जन्मौर्वीकचापस्त्रिभुवनविजयी जामदग्न्यः समेति ॥२॥

( ततः प्रविशति जामदग्न्यः )

जामदग्न्यः—( साटोपं परिक्रम्य ) अहो ! धृष्टता जनकस्य ! यदयं हरचापारोपणेन कन्यादानं प्रतिजानीते । ( परशुं विलोक्य )

सकलनृपकठोरकण्ठपीठीबहलगलद्रुधिरौघधौतधारः ।

---

अद्याऽपि कुठारं क्षत्रकण्ठच्युतरुधिरसरिल्लिप्तधारं कुर्वन् पुनरपि भुवनोत्पातम् आसूचयद्भिः तीव्रैः निःश्वासपातैः गर्जन्मौर्वीकचापः त्रिभुवनविजयी जामदग्न्यः समेतीत्यन्वयः ।

कोपात्=क्रोधात्, उद्भ्रान्तरविकिरणसटापाटलैः=उद्भ्रान्ताः(उद्गच्छन्तः) रविकिरणाः (सूर्यरश्मयः) सटाः(जटा) इव, प्रोद्भ्रान्तरविकिरणानां प्रतिजटासादृश्यादियमुक्तिः (उद्भ्रान्तरविकिरणसटा इव पाटलाः ( श्वेतरक्ताः ), तैः । तादृशैर्दृष्टिपातैः=नयननिक्षेपैः, अद्याऽपि=अधुनाऽपि, कुठारं=परशुं, क्षत्रकण्ठच्युतरुधिरसरिल्लिप्तधारं=क्षत्राणां ( क्षत्रियभूपालानाम् ) कण्ठेभ्यः (गलेभ्यः) च्युता (निःसृता) या रुधिरसरित् ( रक्तनदी ) तया लिप्ता ( रञ्जिता ) धारा ( सन्ततिः ) यस्मिंस्तम् । कुर्वन् = विदधत्, पुनरपि = भूयोऽपि, भुवनोत्पातं = लोकोपद्रवम् , आसूचयद्भिः = प्रकाशयद्भिः, तीव्रैः = दृढैः, निःश्वासपातैः = निःश्वसितोद्भवैः, उपलक्षित इति शेषः । 'इत्थंभूतलक्षणे' इति तृतीया । गर्जन्मौर्वीकचापः = गर्जन्ती ( शब्दायमाना, आस्फालन इति शेषः ) मौर्वी ( ज्या ) यस्मिन्स गर्जन्मौर्वीकः, 'नद्यृतश्च' इति समासान्तः कप् । गर्जन्मौर्वीकः चापः ( धनुः ) यस्य सः एवं च त्रिभुवनविजयी = लोकत्रयविजेता, तादृशो जामदग्न्यः = परशुरामः, समेति = सम्मुखमागच्छति । अत्र कुर्वन्नित्यत्र इव पदाऽभावात्प्रतीयमानोत्प्रेक्षाऽलङ्कारः । स्रग्धरावृत्तम् ॥ २ ॥

जामदग्न्य इति । साटोपं=सगर्वं यथा स्यात्तथा । प्रतिजानीते=प्रतिज्ञां करोति ।

सकलेति । सकलनृपकठोरकण्ठपीठीबहलगलद्रुधिरौघधौतधारो जमदग्निनन्द-

---

सूचित करनेवाले तीव्र निश्वासपातोंसे उपलक्षित, गर्जन करती हुई प्रत्यञ्चावाले धनुको लेनेवाले, त्रिलोकविजेता परशुरामजी सामने आ रहे हैं ॥ २ ॥

( तब परशुराम प्रवेश करते हैं । )

जामदग्न्य—( गर्वपूर्वक घूमकर ) अहो ! जनककी कैसी ढिठाई है । जो कि ये शिवधनुको उठानेसे कन्यादानकी प्रतिज्ञा करते हैं । ( परशुको देखकर ).

सकल राजाओंके कठोर कण्ठस्थानोंसे पर्याप्त गिरे हुए रुधिरसमूहसे जिसकी नोक

तदिदमजनकं जगद्विधत्ते परशुरयं जमदग्निनन्दनस्य ॥ ३ ॥

( विमृश्य )

उदितोऽर्जुनभुजविपिने, ज्वलितस्तुङ्गेषु नृपतिवंशेषु ।
निमिकुलकमलकलापं कोपानल ! किं पुनः स्पृशसि ॥४॥

( पुनर्विचिन्त्य ) अलमस्मिन्नुपेक्षया । मनोरथोपनीतजामातृभुजबला-

---

नस्य अयं परशुः तत् इदं जगत् अजनकं विधत्त इत्यन्वयः ।

सकलेत्यादिः = सकलाः ( समग्राः ) ये नृपाः ( राजानः ) तेषां कठोराः ( कठिनाः ) याः कण्ठपीठ्यः ( गलस्थानानि ) ताभ्यो बहुलं ( बहु यथा स्यात्तथा ) गलन् ( स्रवन् ) यो रुधिरौघः ( रक्तसमूहः ) तेन धौता ( प्रक्षालिता ) धारा ( अग्रभागः ) यस्य सः । जमदग्निनन्दनस्य = जामदग्न्यस्य, परशुरामस्येत्यर्थः, ममेति शेषः । अयं = निकटवर्ती, परशुः = परश्वधः, तत् = प्रसिद्धम् , इदम् = एतत् जगत् = लोकम् , अजनकं = जनकरहितं, विधत्ते = विधास्यति, 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । पुष्पिताग्रावृत्तम् ॥ ३ ॥

विमृश्य = भावयित्वा ।

उदित इति । हे कोपाऽनल ! अर्जुनभुजविपिन उदितः, तुङ्गेषु नृपतिवंशेषु ज्वलितः पुनः किं निमिकुलकमलकलापं स्पृशसीत्यन्वयः ।

हे कोपानल = हे क्रोधाऽग्ने, मामकेति शेषः । अर्जुनभुजविपिने = कार्तवीर्यबाहुवने, उदितः = उत्पन्नः, अनन्तरं तुङ्गेषु = उन्नतेषु, नृपतिवंशेषु = क्षत्रियनरेशकुलेषु, अथवा नृपतयः ( क्षत्रियनरेशाः ) एव वंशाः ( वेणवः ), तेषु । ज्वलितः = प्रज्वलितः, त्वमिति शेषः । पुनः = भूयः, किं = किमर्थं, निमिकुलकमलकलापं = निमिकुलम् ( निमिभूपवंशः ) एव कमलकलापः ( पद्मसमूहः ) तम् । स्पृशसि = आमृशसि, दाहाऽर्थमिति शेषः । विपिने प्रादुर्भूतस्य वंशेषु प्रज्वलितस्य तव मत्कोपाऽग्नेः दाहार्थं निमिकुलकलापस्पर्शोऽनुचित इति भावः । अत्र रूपकालङ्कारः । आर्या जातिः ॥ ४ ॥

पुनरिति । अस्मिन् = निमिकुले, उपेक्षया = अवहेलया । अयं = जनकः, मनो-

---

धोई गई है, परशुरामका वैसा परशु प्रसिद्ध इस लोकको जनकशून्य बना देगा ॥ ३ ॥

( विचार कर )

हे मेरा कोपानल ! तू कार्तवीर्यके बाहुवनमें उत्पन्न हुआ और उन्नत राजवंशोंमें प्रज्वलित हुआ, तब फिर क्यों कोमल कमलसमूहके सदृश निमिकुलको स्पर्श करता है ? ॥ ४ ॥

( फिर विचार कर ) इसमें उपेक्षा नहीं करनी चाहिए । यह अभिलाषसे उपनीत

वलेपदुर्ललितः खल्वयम् । तथाहि—सन्दिष्टमनेनास्मत्परशोः—( त्वं मिथ्रम् ३।२९ पुनः पठति ) अहो अस्य दुरवलेपः ।

> यस्योद्यद्घोरधाराञ्चलदलितगलद्बाहुशाखासहस्र-
> प्रोद्गच्छद्रक्तधारानिवहजितनवोन्मीलदर्कांशुजालः ।
> क्ष्मापालः कार्त्तवीर्यः सुरपुरसुदृशां पुष्पिताशोकशाखि-
> भ्रान्तिं दत्त्वापि चित्ते निजपुरसुदृशां शोकशाखी बभूव ॥५॥

---

रथोपनीतजामातृभुजबलाऽवलेपदुर्ललितः = मनोरथोपनीतः ( इच्छाप्रापितः ) यो जामाता ( दुहितृपतिः, भाविनीं क्रियामाश्रित्यैव प्रयोगः, राम इति भावः ) तस्य यद्भुजबलं ( बाहुशक्तिः ) तस्य अवलेपेन ( गर्वेण ) दुर्ललितः ( दुर्विनीतः )। अस्य = जनकस्य, दुरवलेपः = दुष्टो गर्वः, दुष्टोऽवलेपो दुरवलेपः, 'कुगतिप्रादय' इति समासः ।

यस्योद्यदिति । यस्य उद्यद्घोरधाराऽञ्चलदलितगलद्बाहुशाखासहस्रप्रोद्गच्छद्रक्तधारानिवहजितनवोन्मीलदर्कांशुजालः क्ष्मापालः कार्तवीर्यः सुरपुरसुदृशां चित्ते पुष्पिताऽशोकशाखिभ्रान्तिं दत्त्वा अपि निजपुरसुदृशां शोकशाखी बभूवेत्यन्वयः ।

यस्य = मम परशोः, उद्यदित्यादिः = उद्यत् ( प्रोद्गच्छत् ) यत् घोरधाराऽञ्चलं ( भयङ्कराऽग्रभागप्रान्तः ) तेन दलितं ( छिन्नम् ) अत एव गलत् ( पतत् ) यद्बाहुशाखासहस्रं ( भुजविटपदशशती ) ततः प्रोद्गच्छन् ( प्रोच्छलन् ) यो रक्तधारानिवहः ( रुधिरसन्ततिसमूहः ) तेन जितम् ( अभिभूतम् ) नवोन्मीलतः ( नूतनोदयमानस्य ) अर्कस्य ( सूर्यस्य ) अंशुजालं ( किरणसमूहः ) येन सः । तादृशः क्ष्मापालः = भूपालः, कार्तवीर्यः = अर्जुनः, सुरपुरसुदृशां = स्वर्गसुन्दरीणां, चित्ते = चेतसि, पुष्पिताऽशोकशाखिभ्रान्तिं = पुष्पितस्य ( सञ्जातकुसुमस्य, प्रफुल्लस्येति भावः ) अशोकशाखिनः ( वञ्जुलतरोः ) भ्रान्तिं ( भ्रमम् ), दत्त्वाऽपि = वितीर्योऽपि, भुजबाहुस्याच्छाखित्वं रक्तप्लावितत्वात्पुष्पितत्वमिति भावः । निजपुर-

---

जामाताके बाहुबलके गर्वसे दुर्विनीत हो रहा है। जैसा कि इसने हमारे परशुको सन्देश भेजा है—'त्वं मिथ्रम् ३।२९' इत्यादि फिर पढ़ते हैं। अहो ! इसका कैसा दुष्ट गर्व है। जिस मेरे परशुकी प्रकट भयङ्कर नोकसे छिन्न होकर गिरते हुए शाखासदृश हजारों बाहुसे उत्पन्न रक्तप्रवाहसे नये उगते हुए सूर्यके किरणसमूहको जीतनेवाला राजा कार्तवीर्य, स्वर्गकी सुन्दरियोंके चित्तमें पुष्पित अशोकवृक्षकी भ्रान्तिको देकर भी अपने शहरकी सुन्दरियोंके लिए शोकवृक्ष हो गया ॥ ५ ॥

अपि च—

येनाबध्यत नर्मदाम्बुनिवहः संख्ये च लङ्केश्वर-
स्तद्यस्मिन्निरमज्जदर्जुनभुजश्रोणीरुहां मण्डलम् ।
क्षत्रस्त्रीनयनाम्बुपूरमिषतः खेलन्ति यत्कीर्तय-
स्तत्तादृक्परशुर्ममायमधुना धाराजलं मुञ्चति ॥ ६ ॥

---

सुदृशां = स्वनगरसुन्दरीणां, शोकशाखी = शोकमहाविटपी, बभूव = संभूतः । अत्र विरोधाभासाऽलङ्कारो व्यङ्ग्यः । स्रग्धरावृत्तम् ॥ ५ ॥

येनाऽबध्यतेति । येन नर्मदाऽम्बुनिवहः संख्ये लङ्केश्वरश्च अबध्यत । अर्जुनभुजश्रोणीरुहां तद् मण्डलं यस्मिन् निरमज्जत् । यत्कीर्तयः क्षत्रस्त्रीनयनाऽम्बुपूरमिषतः खेलन्ति । तत् तादृक् अयं मम परशुः अधुना धाराजलं मुञ्चतीत्यन्वयः ।

येन = अर्जुनभुजमण्डलेन, नर्मदाऽम्बुनिवहः = रेवाजलप्रवाहः, रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।' इत्यमरः । संख्ये = संग्रामे, लङ्केश्वरस्य = रावणस्य, अबध्यत = बद्धः । पुरा नर्मदातीरे ललनाभिः समं क्रीडतो दशकन्धरस्य सहस्रबाहुना कार्तवीर्येण नर्मदाजलप्रवाहो निरुद्धः, ततः कोपाक्रान्तेन दशाननेन साकं सहस्रभुजस्य संग्रामो जातः, पश्चात्कार्तवीर्येण रावणश्च बद्ध इति पौराणिकी कथाऽत्राऽनुसन्धेया । अर्जुनभुजश्रोणीरुहां = कार्तवीर्यबाहुशाखिनां, तत् = नर्मदाजलप्रवाहस्य रावणस्य च निरोधकं, मण्डलं = समूहः, यस्मिन् = मम परशौ, निरमज्जत् = निमज्जनं कृतवत्, अस्तमगादिति भावः । यत्कीर्तयः = यस्य ( मत्परशोः ) कीर्तयः ( यशांसि ), क्षत्रस्त्रीनयनाऽम्बुपूरमिषतः = क्षत्रस्त्रीणां ( क्षत्रियललनानाम् ) नयनाऽम्बुपूरस्य ( अश्रुजलप्रवाहस्य ) मिषतः ( छलात् ), अत्र 'अपादाने चाऽहीयरुहोः' इति अपादाने तसिः । खेलन्ति = क्रीडन्ति, तत् = प्रसिद्धं तादृक् = तादृशः, नर्मदाजलप्रवाहस्य रावणस्य बाधकोऽर्जुनभुजमण्डलस्य विनाशकः क्षत्रस्त्रीनयनजलप्रसारकश्चेति भावः । अयं = पुरोवर्ती, मम = जामदग्न्यस्य, परशुः = कुठारः, अधुना = सम्प्रति, धाराजलं = धारा ( तीक्ष्णाऽग्रभागः ) एव जलम् ( नीरम् ), मुञ्चति = त्यजति प्रदर्शयति । पुनरपि युद्धार्थं प्रवर्तत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

---

और भी—जिसने नर्मदाके जलप्रवाहको और संग्राममें रावणको भी बद्ध कर दिया, कार्तवीर्यके वृक्ष सदृश बाहुओंका वैसा समूह भी जिस ( मेरे परशुमें ) डूब गया । जिसकी कीर्तियां क्षत्रिय स्त्रियोंके अश्रुप्रवाहके बहानेसे खेलती हैं, प्रसिद्ध वैसा यह मेरा परशु अभी नोकके पानीको प्रदर्शित करता है ॥ ६ ॥

( विलोक्य ) कथमयं शतानन्दशिष्यस्ताण्ड्यायनः ।

( प्रविश्य )

ताण्ड्यायनः—भगवन् , अभिवादये ।

जामदग्न्यः—आयुष्मान् भूयाः । कथय तावत् । अपि नाम भवदुपाध्याययजमानस्य निवृत्ता हरचापारोपणश्रद्धा ? ।

ताण्ड्यायनः—निवृत्ता ।

जामदग्न्यः—( सहर्षम् ) निवृत्ता ?

ताण्ड्यायनः—भगवन् , निवृत्ता सहैव चापेन ।

जामदग्न्यः—( ससंभ्रमम् ) किमात्थ, सहैव चापेन निवृत्तेति ।

ताण्ड्यायनः—अथ किम् ।

जामदग्न्यः—स्फुटं कथय तावत् किं वृत्तमिति ?

ताण्ड्यायनः—कस्यचिद्—

अखण्डचण्डिमोद्दण्डभुजदण्डनिपीडितम् ।
भगवन् ! भृगुमार्त्तण्ड ! भग्नं भर्गशरासनम् ॥ ७ ॥

---

जामदग्न्य इति । अपि = प्रश्नद्योतको निपातः । निवृत्ता = अपगता ।

धनुर्भङ्गं द्योतयति—अखण्डेति । भगवन् ! भृगुमार्तण्ड ! अखण्डचण्डिमोद्दण्डभुजदण्डनिपीडितं भर्गशरासनं भग्नमित्यन्वयः ।

भगवन् = षड्विधैश्वर्यसम्पन्न, भृगुमार्तण्ड = भृगुवंशसूर्य, अखण्डचण्डिमोद्-

---

( देखकर ) कैसे यह शतानन्दका शिष्य ताण्ड्यायन आ गया ?

( प्रवेश कर )

ताण्ड्यायन—भगवन् ! अभिवादन करता हूँ ।

जामदग्न्य—चिरजीव हो । यह बतलाओ । तुम्हारे गुरुजीके यजमानकी शिवधनुके आरोपणकी श्रद्धा मिट गई है क्या ?

ताण्ड्यायन—मिट गई ।

जामदग्न्य—( हर्षके साथ ) क्या मिट गई ?

ताण्ड्यायन—भगवन् ! धनुके साथ ही मिट गई !

जामदग्न्य—( जल्दीके साथ ) क्या कहते हो ? धनुके साथ ही मिट गई ?

ताण्ड्यायन—और क्या ?

जामदग्न्य—साफ कहो, क्या हो गया ?

ताण्ड्यायन—किसीके

भगवन् ! भृगुवंशसूर्य ! पूर्ण चण्डत्वसे उद्धत बाहुदण्डसे निपीडित होकर शिवधनु टूट गया ॥ ७ ॥

जामदग्न्यः—( सक्रोधम् ) कस्य ?

ताण्ड्यायनः—

सुबाहुमारीचपुरस्सरा अमी
निशाचराः कौशिकयज्ञघातिनः ।
वशे स्थिता यस्य ...

जामदग्न्यः—अलम्, अतः परं ज्ञातः खलु खलानामग्रणीर्निशाचरग्रामणीः ।

ताण्ड्यायनः—( स्वगतम् ) कथं दशकण्ठेन धनुर्भग्नमिति प्रतीतं भगवता ? भवतु तावत् ।

---

चण्डभुजदण्डनिपीडितम् = अखण्डः ( पूर्णः ) यश्चण्डिमा ( चण्डत्वम् ) तेनोद्दण्डः ( उद्धतः ) यो भुजदण्डः ( बाहुदण्डः ) तेन निपीडितम् ( आकृष्टम् ) । 'समग्रं सकलं पूर्णमखण्डं स्यादनूनके' इत्यमरः । भर्गशरासनं = भर्गस्य ( हरस्य ) शरासनं ( चापः ), भग्नं = खण्डितम् । अनुष्टुब्वृत्तम् ॥ ७ ॥

जामदग्न्य इति । कस्य = पुरुषस्य, भुजदण्डेनेति शेषः । धनुर्भञ्जकं सूचयति—सुबाह्विति । कौशिकयज्ञघातिनः सुबाहुमारीचपुरःसरा अमी निशाचरा यस्य वशे स्थिताः, अपूर्णश्लोकस्य प्रथममयमन्वयः ।

कौशिकयज्ञघातिनः = विश्वामित्रमखध्वंसनशीलाः, सुबाहुमारीचपुरःसराः = सुबाहुमारीचाऽग्रसराः, सुबाहुमारीचप्रभृतय इति भावः । अमी = पुरातनकालवर्तिनः, निशाचराः = राक्षसाः, यस्य = ताण्ड्यायनविवक्षया रामस्य, परशुरामबुद्धौ तु—रावणस्येत्यर्थः । वशे = आधीन्ये, स्थिताः = संवृत्ताः, इत्यपूर्णश्लोकार्थः ।

जामदग्न्य इति । अलं = पर्याप्तम्, अतः परं कथनस्याऽऽवश्यकता नाऽस्तीति भावः । खलानां = दुर्जनानाम् । अग्रणीः = अग्रगण्य इत्यर्थः । अग्रं नयतीति,

---

जामदग्न्य—( क्रोधपूर्वक ) किसके ?

ताण्ड्यायन—

विश्वामित्रके यज्ञको विध्वस्त करनेवाले सुबाहु और मारीच आदि वे राक्षस जिसके वशमें रहे थे··· ··· ··· ··· ··· ···

जामदग्न्य—बस करो, इसके अनन्तर जान लिया कि वह दुर्जनोंका अग्रगण्य राक्षसाधीश्वर रावण होगा ।

ताण्ड्यायन—( मन ही मन ) रावणने धनु तोड़ दिया किस प्रकार भगवान्‌ने ऐसा समझ लिया ! अच्छा ।

जामदग्न्यः—( सक्रोधम् ) अयमिदानीम् ।

नृपशतसुकुमारकण्ठनालीकदनकलाकुशलः परश्वधो मे ।
दशवदनकठोरकण्ठपीठीकदनविनोदविदग्धतां दधातु ॥ ९ ॥

( विमृश्य ) अथवा—

यः कर्त्ताऽर्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदां
दम्भोलेर्गिरिकूटपाटनपटोः शौण्डीर्यतो लज्जते ।

---

'सत्सूद्विषे'त्यादिना क्विप्, 'अग्रग्रामाभ्यां नयतेर्णो वाच्य' इति णत्वम् । निशाचरग्रामणीः=राक्षसाऽधिपः, रावण इति भावः । 'ग्रामणीर्नापिते पुंसि त्रिषु श्रेष्ठेऽधिपे त्रिषु ।' इत्यमरः । ताण्ड्यायन इति । प्रतीतं=ज्ञातम् ।

नृपशतेति । नृपशतसुकुमारकण्ठनालीकदनकलाकुशलो मे परश्वधो दशवदनकठोरकण्ठपीठीकदनविदग्धतां दधात्वित्यन्वयः ।

नृपशतसुकुमारकण्ठनालीकदनकलाकुशलः=नृपशतस्य ( राजशतस्य, बहूनां राज्ञामिति भावः ) सुकुमाराः ( कोमलाः ) याः कण्ठनाल्यः ( डलयोरभेदात् गलनालयः ) तासां कदने ( मारणे ) या कला ( निपुणता ) तस्यां कुशलः ( पटुः ) । मे=मम, परश्वधः=कुठारः । दशवदनकठोरकण्ठपीठीकदनविदग्धतां=दशवदनस्य ( रावणस्य ) कठोराः ( दृढाः ) याः कण्ठपीठ्यः ( गलप्रदेशाः ) तासां कदने (छेदने) विदग्धतां ( प्रवीणताम् ) दधातु=धारयतु । पुष्पिताग्रावृत्तम् ॥ ९ ॥

पुनः स्वपरशुं श्लाघते—यः कर्त्तेति । अर्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदां कर्त्ता यो गिरिकूटपाटनपटोः दम्भोलेः शौण्डीर्यतो लज्जते । परेतराजसदनद्वारः तस्य एतस्य मे कुठारस्य दशकण्ठकण्ठकदलीकाण्डाऽऽवलीखण्डने का श्लाघेत्यन्वयः ।

अर्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदाम् = अर्जुनः ( कार्तवीर्यः ) एव भूरुहः ( वृक्षः ) तस्याऽद्भुताः ( आश्चर्यरूपाः ) भुजाः ( बाहवः ) एव शाखाः ( विटपाः ) तासां सहस्रं ( दशशती ) तस्य छिदां ( छेदनम् ) 'कर्त्ते'ति तृजन्तपदेन योगात् 'न लोकाऽव्ययनिष्ठाखलर्थतृनाम्' इति कर्मणि षष्ठी न । 'अथो भुजा । द्वयोर्बाहौ करे' इति मेदिनी कोशात्स्त्रीलिङ्गेऽपि भुजाशब्दः प्रामाणिकः । कर्त्ता=विधा-

---

जामदग्न्य—( क्रोधके साथ ) यह अभी—

सैकड़ों राजाओंकी सुकुमार ( मुलायम ) कण्ठनालियोंको विनष्ट करनेकी कलामें निपुण मेरा परशु रावणके कठोर कण्ठोंके छेदनमें निपुणताको धारण करे ॥ ९ ॥

( विचार कर ) अथवा—

कार्तवीर्यरूप वृक्षके अद्भुत बाहुरूप हजारों शाखाओंको काटनेवाला जो ( परशु )

तस्यैतस्य परेतराजसदनद्वारः कुठारस्य मे
का श्लाघा दशकण्ठकण्ठकदलीकाण्डावलीखण्डने ? ॥१०॥

( पुनर्विचिन्त्य ) तथाप्यनुचितमुदासितुमेतस्मिन् कृतागसि रक्षसि । तदिदानीं

दक्षिणस्याम्बुधेर्मध्ये कृत्वा कौङ्कणमष्टमम् ।
मद्बाणजन्मा दहनो लङ्कातङ्काय जायताम् ॥ ११ ॥

---

ता, यः=मम कुठारः, गिरिकूटपाटनपटोः=गिरिकूटस्य (पर्वतसमूहस्य) पाटने (विदारणे) पटोः (कुशलस्य)। दम्भोलेः=वज्रस्य, 'दम्भोलिरशनिर्द्वयो'रित्यमरः। शौण्डीर्यतः=अहङ्कारात्, लज्जते=त्रपते, दम्भोलिना गिरिकूटपाटने यथाऽसाधारणविक्रमप्रदर्शनाऽवसरः प्राप्तो न मया तथाऽप्राप्ति इति मत्वेति भावः। परेतराजसदनद्वारः=परस्मिन् ( लोके ) इताः ( गताः ) इति परेताः ( प्रेताः ) तेषां राजा ( स्वामी ) यमराजः, तस्य सदनस्य ( गृहस्य ) द्वारः ( प्रतीहारभूतस्य )। 'स्त्री-द्वार्द्वारं प्रतीहारः' इत्यमरः। तस्य=तादृशस्य, एतस्य=अतिसमीपवर्तिनः, मे=मम, कुठारस्य=परशोः, दशकण्ठकण्ठकदलीकाण्डाऽऽवलीखण्डने=दशकण्ठस्य (रावणस्य) कण्ठाः ( गलाः ) एव कदलीकाण्डाः ( रम्भास्तम्भाः ) तेषामावली (पङ्क्तिः), तस्याः खण्डने ( छेदने )। का=कीदृशी, श्लाघा=प्रशंसा, न काऽपीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

पुनरिति । तथाऽपि = दशकण्ठकण्ठच्छेदने मत्कुठारस्य श्लाघाऽभावेऽपीति भावः। कृताऽऽगसि=कृतम् ( विहितम् ) आगः ( अपराधः ) येन, तस्मिन्। अपराधकारिणीति भावः। रक्षसि=राक्षसे रावण इत्यर्थः। उदासितुम्=औदासीन्येन वर्तितुमिति भावः।

दक्षिणस्येति । दक्षिणस्य अम्बुधेः मध्ये अष्टमं कौङ्कणं कृत्वा मद्बाणजन्मा दहनो लङ्काऽऽतङ्काय जायतामित्यन्वयः। दक्षिणस्य=दक्षिणदिग्भवस्य, अम्बुधेः=समुद्रस्य, मध्ये=अन्तरे, अष्टमम्=अष्टसंख्यापूरणं, सप्तद्वीपाऽतिरिक्तमिति भावः। कौङ्कणं=तदाख्यदेशविशेषं, कृत्वा=विधाय, मद्बाणजन्मा=मच्छरोत्पन्नः, मद्बाणा-

---

पर्वतसमूहके विदारणमें निपुण वज्रके अहङ्कारसे लजाता है। यमराजभवनके द्वारभूत इस मेरे परशुके रावणके कण्ठरूप कदली स्तम्भोंको खण्डित करनेमें क्या प्रशंसा है ? ॥ १० ॥

( फिर विचार कर ) तथापि इस अपराधी राक्षसके विषयमें उदासीन होना अनुचित है। इसलिए अभी—

दक्षिण समुद्रके बीचमें आठवाँ कोङ्कण देश बनाकर मेरे बाणसे उत्पन्न अग्नि लङ्काके आतङ्कके लिए प्रवृत्त हो ॥ ११ ॥

( इति साटोपं परिक्रामति )

ताण्ड्यायनः—( स्वगतम् ) दिष्ट्या स्वस्ति क्षत्रियकुलाय ।

( नेपथ्ये )

अहो नियोगिनः, कृतविवाहमङ्गलयोः सीतारामचन्द्रयोः स्वस्तिवाचनिका द्विजा आहूयन्ताम् ।

जामदग्न्यः—( परिवृत्य, सक्रोधम् ) आः ब्रह्मबन्धो, कथमलीकदशकण्ठकीर्तिदानेन प्रतारितोऽस्मि । नन्वयमन्यः कोपि जनकजामाता ।

ताण्ड्यायनः—भगवन् , मम को वापराधः ? अर्धोक्त एव भगवता

---

ज्जन्म यस्य सः, तादृशो दहनः=अग्निः, लङ्काऽऽतङ्काय = लङ्कातापशङ्कायै, जायतां= भवेत् । मद्बाणः समुद्रशोषणोत्तरं प्राक्स्थितेषु सत्सु कोङ्कणेष्वहमं कोङ्कणं निर्माय लङ्कां दहरिष्यति भावः । कश्यपाय भूमिं दत्त्वा परशुरामः स्वनिवासार्थं समुद्रशोषणपुरस्सरं कोङ्कणदेशं निर्मितवानिति पौराणिकी कथाऽत्राऽनुसन्धेया ॥ ११ ॥

ताण्ड्यायन इति । दिष्ट्या = भाग्येन, अव्ययमिदम् । स्वस्ति = कल्याणं, 'स्वस्तीत्यविनाशिनामे'ति निरुक्तम् । रावणं प्रति परशुरामकोपद्योतनाद्वियं क्षत्रियकल्याणाशंसा ।

नेपथ्य इति । नियोगिनः = कार्यनियुक्ताः पुरुषाः । स्वस्तिवाचनिकाः = स्वस्तिवाचनकारिणः । आहूयन्ताम् = आकार्यन्ताम् ।

जामदग्न्य इति । आः = कोपद्योतकमव्ययमिदम् । ब्रह्मबन्धो = ब्राह्मणबान्धव, त्वमसि ब्राह्मणस्य बान्धव एव न तु प्रकृतब्राह्मण इति भावः । अलीकदशकण्ठकीर्तिदानेन = मिथ्यारावणयशोवितरणेन । प्रतारितः = वञ्चितः । रावणेन धनुर्भङ्गः कृत इति मदीया भ्रान्तिस्त्वया जनितेति भावः ।

ताण्ड्यायन इति । भ्रान्तम्=अनवस्थितं, दशकण्ठेन धनुः खण्डितमिति मदीय-

---

( ऐसा कहकर गर्वके साथ परिक्रमण करते हैं । )

ताण्ड्यायन—( मन ही मन ) भाग्यसे क्षत्रियकुलका कल्याण हुआ ।

( नेपथ्यमें )

अहो ! काम करनेवालों ! सीता और रामचन्द्रके विवाहके अनन्तर स्वस्तिवाचन करनेवाले ब्राह्मणोंको बुलाओ ।

जामदग्न्य—( लौट कर, कोपपूर्वक ) ओह ! ब्राह्मणके बान्धव ! झूठमूठमें रावणकी कीर्तिके वर्णनसे मैं ठगा गया हूं । अरे ! यह कोई दूसरा ही जनकका जामाता (दामाद) है ।

ताण्ड्यायन—भगवन् ! मेरा क्या अपराध है ? आधा ही कहने पर आपने भी

भ्रान्तं, मयापि संभ्रान्तम् ।

**जामदग्न्यः**—तन्निःशेषं तावत् कथय ।

**ताण्ड्यायनः**—

···शराग्रवर्तिनः
प्रतापलेशस्य गताः पराभवम् ॥ ८ ॥

( तथैव अखण्डचण्डिमा ४।७ पुनः पठति )

**जामदग्न्यः**—कः पुनरयं मारीचदमनः ?

**ताण्ड्यायनः**—

ये ऋष्यशृङ्गचरुभागभुवः कुमाराः
सञ्जज्ञिरे दशरथस्य वधूजनेन ।

---

मिति भावः । संभ्रान्तं = संभ्रमः कृतः, मया च भयात्तवभ्रान्तेः प्रतिवादो न व्यधा-यीति भावः ।

जामदग्न्य इति । निःशेषं = संपूर्णं, कथय = ब्रूहि, स्वोक्तं पूरयेति भावः ।

ताण्ड्यायनः सुबाह्वित्यादिपूर्वोक्तं पूरयति—शराग्रवर्तिन इति । शराऽग्रवर्तिनः प्रतापलेशस्य ( वशे स्थिताः सन्तः ) पराभवं गताः इत्यन्वयः ।

( कौशिकयज्ञघातिनः सुबाहुमारीचपुरःसरा अमी निशाचराः यस्य = रामस्य ) शराऽग्रवर्तिनः = शरस्य ( बाणस्य ) अग्रे ( पुरोभागे ) वर्तते ( विद्यते ) तच्छील-स्तस्य, तादृशस्य प्रतापलेशस्य = विक्रमलवस्य, ( वशे स्थिताः सन्तः ) पराभवं = विनाशं, गताः = प्राप्ताः । वंशस्थं वृत्तम् ॥ ८ ॥

रामोत्पत्तिं वर्णयति—ये ऋष्यशृङ्गेति । दशरथस्य वधूजनेन ऋष्यशृङ्गचरुभाग-भुवो ये कुमाराः संजज्ञिरे । तेषां प्रथमः निरुपमः कुशिकराजतनूजशिष्यः अयं रामा-भिधः कुमार इत्यन्वयः । दशरथस्य = तदाख्यस्याऽयोध्याधिपस्य, वधूजनेन = पत्नी-गणेन, ऋष्यशृङ्गचरुभागभुवः = ऋष्यशृङ्गस्य ( तदाख्यर्षेः ) चारुभागभुवः ( हव्य-

---

भ्रान्तिकी मैंने भी जल्दबाजी की ।

**जामदग्न्य**—उस सभी बात बतलाओ ।

**ताण्ड्यायन**—बाणके अग्रभागमें रहनेवाले पराक्रमलेशके वशवर्ती होकर विनाशको प्राप्त हो गये ॥ ८ ॥

( वही प्रकार अखण्डचण्डिमा आदि ४।७ पद्य फिर पढ़ते हैं । )

**जामदग्न्य**—यह मारीचको दमन करनेवाला कौन है ?

**ताण्ड्यायन**—दशरथकी पत्नियोंने ऋष्यशृङ्गके हव्यपाकसे होनेवाले जिन कुमारोंको

तेषामयं निरुपमः प्रथमः कुमारो
रामाभिधः कुशिकराजतनूजशिष्यः ॥ १२ ॥

**जामदग्न्य**—( क्षणं विभाव्य, सामर्षम् )

दुर्धर्षाः सुरसिद्धकिन्नरनरैस्त्यक्तक्रमं वक्रतां
प्राप्ते यत्र विधातरीव तरसा तिस्रोपि दग्धाः पुरः।
तद्भग्नं यदि राघवेण शिशुना चण्डीपतेः कार्मुकं

---

पाकोत्पन्नाः )। ये, कुमाराः = पुत्राः, सञ्जज्ञिरे = उत्पादिताः। तेषां = संजातानां कुमाराणां मध्ये, प्रथमः = आद्यः, निरुपमः = उपमारहितः, असाधारण इति भावः। कुशिकराजतनूजशिष्यः = कुशिकराजः ( कुशिकभूपः, गाधिरिति भावः ) तत्तनूजः ( विश्वामित्रः ) तच्छिष्यः (तदन्तेवासी)। अयं = निकटवर्ती, रामाऽभिधः=रामाऽभिधानः, कुमारः = पुत्रः, अस्तीति शेषः स एव मारीचदमन इति भावः। वसन्ततिलकं वृत्तम् ॥ १२ ॥

जामदग्न्य इति। विभाव्य = विमृश्य।

दुर्धर्षा इति। सुरसिद्धकिन्नरनरैः दुर्धर्षाः तिस्रोऽपि पुरः विधातरीव यत्र वक्रतां प्राप्ते त्यक्तक्रमं दग्धाः। चण्डीपतेः तत् कार्मुकं शिशुना राघवेण तरसा भग्नं यदीत्यपूर्णश्लोकस्याऽन्वयः।

सुरसिद्धकिन्नरनरैः = सुराः ( देवाः ) सिद्धाः ( देवयोनिविशेषाः ) किन्नराः ( किम्पुरुषाः, देवयोनिविशेषाः ) नराः ( मनुष्याः ), तैः। दुर्धर्षाः = अनतिक्रमणीयाः, तिस्रोऽपि = त्रिसंख्याका अपि, पुरः = पुर्यः, त्रिपुरनगर्य इति भावः। विधातरि इव = विधौ इव, यत्र = यस्मिन्, चण्डीशचाप इति भावः। वक्रतां = कुटिलतां प्राप्ते = आसादिते सति, त्यक्तक्रमं = क्रममनपेक्ष्य, युगपदिति भावः। दग्धाः = भस्मीकृताः। चण्डीपतेः = गौरीशस्य, हरस्येत्यर्थः। तत् = तादृशं, कार्मुकं = धनुः, शिशुना = बालकेन, राघवेण=रामचन्द्रेण, तरसा=बलेन, भग्नं यदि=खण्डितं चेत्।

---

पैदा किया। उनमें पहले और अनुपम ( बेजोड़ ) विश्वामित्रशिष्य ये राम नामक कुमार ( मारीचदमन ) हैं ॥ १२ ॥

**जामदग्न्य**—( कुछ समय तक विचार कर, कोपपूर्वक ) देवता, सिद्ध, किन्नर और मनुष्योंसे अनतिक्रमणीय तीनों पुरियां भाग्यके समान जिस धनुके वक्र होनेपर क्रमको छोड़कर ( एक ही बार ) जल गईं। महादेवके उस धनुको बालक रामने यदि बलसे तोड़ दिया है··· ··· ··· ···

ताण्ड्यायनः—( स्वगतम् ) किमधुना वक्ष्यति ?

जामदग्न्यः—

तन्मग्नं कुलमेव तर्कय रघोर्मच्छस्त्रधाराम्भसि ॥१६॥

ताण्ड्यायनः—संरब्धोऽयं भगवान् । तमिमं वृत्तान्तमुपाध्यायस्य कथयामि॥

( इति निष्क्रान्तः )

जामदग्न्यः—( विलोक्य ) अभिनवविवाहमङ्गलतया तर्कयामि स

---

ताण्ड्यायन इति । वक्ष्यति=कथयिष्यति, 'वच परिभाषणे' इति धातोर्लृट् । शिशुनेति पदं श्रुत्वा रामं प्रति परशुरामस्य कलहोद्भवमाशङ्क्य ताण्ड्यायनस्यैवं स्वगतोक्तिः ।

परशुरामः श्लोकं पूरयति—तन्मग्नमिति । तत् मच्छस्त्रधाराऽम्भसि रघोः कुलम् एव मग्नं तर्कयेत्यन्वयः । तत्=तर्हि, मच्छस्त्रधाराऽम्भसि=मच्छस्त्रस्य ( मत्परशवस्य ) धाराऽम्भसि=धारा ( अग्रभागः ) एव अम्भः ( जलम् ) तस्मिन् । रघोः कुलं=रघुवंशः, एव, मग्नं=निमग्नम् , इति, तर्कय=विचारय । एकस्य रामस्याऽपराधेन सर्वं रघुकुलमेव स्वायुधलक्ष्यं करोमीति भावः । उपमाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

ताण्ड्यायन इति । संरब्धः=कुपितः । उपाध्यायस्य=वेदैकदेशाऽध्यापकस्य शतानन्दस्येति भावः । उपेत्याऽधीयतेऽस्मादिति उपाध्यायः, 'इङश्चेति घञ् । उपाध्यायलक्षणमाह मनुः—

'एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुनः ।
योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते ॥' इति ।

जामदग्न्य इति । जनः=लोकः, अर्धमुग्धः=अर्धमूढः, पूर्णविचाराऽसमर्थ इति भावः । 'मुग्धः सुन्दरमूढयो'रित्यमरः ।

---

ताण्ड्यायन—( मन ही मन ) अब ये क्या कहेंगे ?

जामदग्न्यः—तो मेरे शस्त्रकी नोकके पानीमें रघुवंश ही डूब जायेगा समझो ॥१६॥

ताण्ड्यायन—( मन ही मन ) ये महर्षि कुपित हो गये । इसलिए इस वृत्तान्तको उपाध्यायसे कहता हूँ ।

( ऐसा सोचकर जाते हैं । )

जामदग्न्य—( देखकर ) नये वैवाहिक मङ्गलकर्मको धारण करनेसे मैं विचारता

एष रामः सानुज इति ( सहर्षम् , निर्वर्ण्य ) अर्धमुग्धः खल्वयं जनो यदेनं काम इति वक्तव्ये राम इति जल्पति । ( पुनर्निर्वर्ण्य )

सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं, पुरां
भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् ।
मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते
मूर्त्तैस्तत् किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥१४॥

रामस्य सौन्दर्यादिकं वर्णयति—सौन्दर्यमिति । सौन्दर्यं मदनादपि प्रौढिप्रकर्षं प्रथयति । उद्दामदोः क्रीडितं पुरां भेत्तारं मदनाऽरिमपि अधरयति । मुग्धत्वं मदनाऽरिमौलिशशिनोऽपि उत्कर्षम् आलम्बते । तत् असौ मूर्तैः शृङ्गारवीराऽद्भुतैः रसैः विरचितः किमित्यन्वयः ।

सौन्दर्यं = मनोरमत्वं, मदनादपि = कामादपि, प्रौढिप्रकर्षं = प्रौढतोत्कर्षं, लावण्याऽतिशयमिति भावः । प्रथयति = प्रकाशयति । सौन्दर्ये रामोऽयं कन्दर्पदर्पाऽपहारक इति भावः । उद्दामदोःक्रीडितम् = उद्दामं ( महत् ) यत् दोःक्रीडितं ( बाहुक्रीडा, भुजविक्रम इति भावः ) । पुरां = त्रिपुरनगरीणां, भेत्तारं = भेदकं, दाहकमिति भावः । मदनाऽरिमपि = कामशत्रुमपि, महादेवमपीति भावः । अधरयति = अधरं करोति, तिरस्करोतीति भावः । असौ विक्रमे कपर्दिनमप्यतिशेत इति भावः । मुग्धत्वं = बालत्वं, मदनाऽरिमौलिशशिनोऽपि = शिवशेखरबालचन्द्रादपि, उत्कर्षं = प्रकर्षम् , आलम्बते = आश्रयति । मार्दवे चाऽयं बालः शङ्करशेखरं बालचन्द्रमप्यभिभवतीति भावः । निष्कर्षं व्यनक्ति—मूर्तैरिति । तत् = तस्मात्कारणात् , असौ = रघुकुमारो रामः, मूर्तैः = मूर्तिमद्भिः, शृङ्गारवीराऽद्भुतैः = रत्युत्साहविस्मयस्थायिभावकैः, रसैः, विरचितः किं = निर्मितः किमु । कुमारस्याऽस्य मदनाऽतिशायिसौन्दर्येण शृङ्गारस्य, भवाऽभिभाविभुजविक्रमेण वीरस्य शिवशेखरबालचन्द्रमार्दवाऽतिक्रमेण चाऽद्भुतस्य च रसस्योत्पादकता व्यज्यत इति भावः । तथा चाऽत्रोपमानादुपमेयस्याऽऽधिक्यवर्णनाद्व्यतिरेकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥

हूं कि भाईके साथ ये ही राम हैं । ( हर्षके साथ, देखकर ) यह लोक अर्धमूर्ख है जो कि इसको 'काम' कहनेके स्थानमें 'राम' कहता है । ( फिर देखकर ) ( इसका ) सौन्दर्य, कामदेवसे भी प्रौढताके उत्कर्षको प्रकाशित कर रहा है, महान् बाहुपराक्रम, त्रिपुरनगरियोंके दाहक शङ्करको भी न्यून बना रहा है, बालभाव, शङ्करके मस्तकस्थित बालचन्द्रसे भी उत्कर्षका आश्रय कर रहा है । इस कारणसे यह बालक मूर्तिमान् शृङ्गार, वीर, और अद्भुत इन तीनों रसोंसे बना है क्या ? ॥ १४ ॥

( ततः प्रविशतो राम-लक्ष्मणौ )

**लक्ष्मणः**—( सकौतुकम् )

**मौर्वीं धनुस्तनुरियं च बिभर्ति मौञ्जीं,**
**बाणाः कुशाश्च विलसन्ति करे, सितायाः ।**
**धारोज्ज्वलः परशुरेव कमण्डलुश्च,**
**तद्वीरशान्तरसयोः किमयं विकारः ? ॥ १५ ॥**

आर्य, किं पुनरिदं ब्रह्मक्षत्रवर्णात्मकं चित्रमिव स्फुरति ?

---

जामदग्न्यं वर्णयति—मौर्वीमिति । धनुः मौर्वीम् , इयं तनुश्च मौञ्जीं बिभर्ति । करे बाणाः कुशाश्च विलसन्ति । सिताऽयाः धारोज्ज्वल एव परशुः कमण्डलुश्च । तत् वीरशान्तयोः अयं विकारः किमित्यन्वयः ।

धनुः = कार्मुकं, मौर्वीं = गुणं, 'मौर्वी ज्या शिञ्जिनी गुण' इत्यमरः । बिभर्ति= धारयति आरोपितगुणं धनुर्वर्तत इति भावः । इयं = निकटवर्त्तिनी, तनुश्च = शरीरं च, मौञ्जीं = मुञ्जमयीं मेखलां, बिभर्ति । एवं च करे = हस्ते, बाणाः = शराः, कुशाश्च = दर्भाश्च, विलसन्ति = शोभन्ते । तथा सितायाः = सितम् ( शुक्लम् ) अयः ( लौहम् ) यस्य सः, तादृशः 'शिताऽग्र' इति पुस्तकान्तरपाठे शितम् ( तीक्ष्णम् ) अग्रम् ( अग्रभागः ) यस्य स इत्यर्थो बोध्यः । धारोज्ज्वलः = धारायाम् ( अग्रभागे ) परशुपक्षे, धारया = जलधारया, कमण्डलुपक्षे उज्ज्वलः ( देदीप्यमानः ) । एषः = अतिनिकटवर्ती, परशुः = कुठारः, कमण्डलुश्च = कुण्डी च, 'अथो कमण्डलुः कुण्डी'त्यमरः । विलसतीति शेषः । निगमयति—तत् = तस्मात्कारणात् , वीरशान्तयोः = उत्साहनिर्वेदस्थायिभावयोः रसविशेषयोः, अयं = पुरोवर्ती जनः, जामदग्न्य इति भावः । विकारः किं = परिणामः किमु । आरोपितमौर्विकेण धनुषा बाणैः परशुना च वीररसस्य मौञ्ज्या मेखलया कुशैः कमण्डलुना च शान्तरसस्य च परिणामः प्रतीयत इति भावः । अत्र श्लेषाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥१५॥

आर्येति । ब्रह्मक्षत्रवर्णात्मकं = ब्रह्मक्षत्रवर्णौ आत्मा ( देहः ) यस्मिंस्तत् । चित्रमिव = आलेख्यमिव ।

---

( तब राम और लक्ष्मण प्रवेश करते हैं । )

**लक्ष्मण**—( कुतूहलके साथ )

धनु प्रत्यञ्चाको और यह शरीर मौञ्जी मेखलाको धारण कर रहा है । हाथमें बाण और कुश शोभित हो रहे हैं । सफेद लोहवाली नोकमें उज्ज्वल यह परशु और जलधारासे उज्ज्वल कमण्डलु भी है । इस कारण वीर और शान्त रसके ये परिणाम हैं क्या ? ॥ १५ ॥

आर्य ! ये क्या ब्राह्मण क्षत्रियवर्णात्मक चित्रके समान प्रकाशित हो रहे हैं ?

रामः—वत्स, न विदितं ते, नन्वयं स भगवान् भार्गवः—

वेध्यं क्रौञ्चमहीधरस्य शिखरं, देयं धरित्रीतलं,
प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयोऽम्बुधिः ।
जेयस्तारकसूदनो युधि, करक्रीडाकुठारस्य च
च्छेद्यं यस्य बभूव हैहयपतेरुद्दामदोःकाननम् ॥१६॥

लक्ष्मणः—तर्हि विस्मयनीयशीलोऽयं भगवान् ।

---

राम इति । ते = तव, 'विदित'मित्येति 'मतिबुद्धिपूजार्थेभ्यश्चे'ति क्तप्रत्ययान्तपदेन योगे 'क्तस्य च वर्तमान' इति षष्ठी ।,

परशुरामं वर्णयति—वेध्यमिति । यस्य क्रौञ्चमहीधरस्य शिखरं वेध्यं, धरित्रीतलं देयम् , अम्बुधिः प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयः, युधि तारकसूदनो जेयः, हैहयपतेः उद्दामदोः काननं करक्रीडाकुठारस्य छेद्यं बभूवेत्यन्वयः । यस्य = परशुरामस्य, क्रौञ्चमहीधरस्य = क्रौञ्चपर्वतस्य, शिखरं = शृङ्गं, वेध्यं = वेधार्हं, 'भेद्य'मिति पाठान्तरेऽप्ययमेवाऽर्थः । बभूव, एवं परत्राऽपि । धरित्रीतलं = भूतलं, देयं = दानयोग्यम् । अम्बुधिः = समुद्रः, प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयः= प्रत्यग्रं ( नूतनम् ) यत् क्षितिखण्डं ( भूमिशकलं, समुद्रशोषणेन विधीयमानमिति भावः ) तेन दण्डनविधिः ( दण्डकरणविधानम् ) स एव क्रीडा ( खेला ), तस्या विधेयः ( वचनोत्थितः ), पुरा कश्यपाय भूमिं प्रदाय स्वबाणेन समुद्रस्य कियन्तं भागं शोष्य स्ववासाऽर्थं परशुरामो नूतनं भूमिखण्डं निर्मितवानिति पौराणिकी कथाऽत्राऽर्थेऽनुसन्धेया । युधि = संग्रामे, तारकसूदनः = तारकजित् , कार्त्तिकेय इत्यर्थः । जेयः = जेतव्यः । हैहयपतेः = कार्तवीर्यस्य, उद्दामदोः काननम्—महाभुजवनं, करक्रीडाकुठारस्य = भुजविलासपरशुधरस्य, 'छेद्य'मिति कृत्यप्रत्ययान्तपदेन 'कृत्यानां कर्तरि वे'ति वैकल्पिकी षष्ठी, पक्षे तृतीयाऽपि । छेद्यं = छेत्तव्यं, बभूव = अभवत् । सोऽयं भगवान् भार्गव इति परशुरामस्य परिचयः प्रतिपाद्यते । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

लक्ष्मण इति । विस्मयनीयशीलः = विस्मयनीयं ( विस्मययोग्यम् ) शीलं ( स्वभावः ) यस्य सः ।

---

राम—वत्स ! तुम नहीं जानते हो, ये भगवान् भार्गव हैं—जिनका क्रौञ्च पर्वतका शिखर ( चोटी ) वेधनीय था, भूतल देय था, समुद्र नया भूमिखण्ड बनाकर दण्ड देनेकी क्रीडाका विधेय था, युद्धमें तारकजेता ( कार्त्तिकेय ) जेतव्य थे और हैहयपति ( कार्त्तवीर्य ) का विशाल बाहुवन जिनके हस्तविलास परशुका छेदनीय था ॥ १६ ॥

लक्ष्मण—तब भगवान् परशुराम आश्चर्य करनेके लिए योग्य स्वभाववाले हैं ।

रामः—विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम् । अयं हि—

एकः स्वर्णमहीधरां क्षितिमिमां स्वर्णैकशृङ्गीं यथा
गामेकां प्रतिपाद्य कश्यपमुनौ न स्वात्मने श्लाघते ।
किञ्च क्रौञ्चगिरिं गिरीशतनयस्याविद्धशक्तिक्षतं
विद्ध्वा बाणगणैरुदारहृदयो वैलक्ष्यमालम्बते ॥१७॥

---

राम इति । शिखामणिः = चूडारत्नम् ।

जामदग्न्यस्याऽनुपमां दानवीरतां प्रतिपादयति—एक इति । एकः स्वर्णमही-धराम् इमां क्षितिं स्वर्णैकशृङ्गीम् एकां गां यथा कश्यपमुनौ प्रतिपाद्य स्वात्मने न श्लाघते । किञ्च गिरीशतनयस्य आविद्धशक्तिक्षतं क्रौञ्चगिरिं बाणगणैर्विद्ध्वा उदारहृदयः ( सन् ) वैलक्ष्यम् आलम्बत इत्यन्वयः । एकः = अद्वितीयः, जामदग्न्य इति भावः । स्वर्णमहीधरां = सुवर्णाकरयुक्तपर्वतोपेतां–स्वर्णमस्ति येषु ते स्वर्णाः, 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । स्वर्णा महीधराः ( पर्वताः ) यस्यां, तामिति क्षितिविशेषणम् । इमां = बुद्धिसन्निकृष्टां, क्षितिं = पृथिवीं, स्वर्णैकशृङ्गीम् = एक-सुवर्णविषाणोपेताम् , एकाम् = एककां, गां यथा = धेनुमिव, कश्यपमुनौ = कश्य-पर्षौ, कारकस्य विवक्षाधीनत्वात्सम्प्रदानेऽधिकरणत्वविवक्षा । प्रतिपाद्य = दत्त्वा, स्वात्मने = निजबुद्धये, 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान' इति चतुर्थी । न श्लाघते = न प्रशंसति । किञ्च, गिरीशतनयस्य = शङ्करपुत्रस्य, कार्त्तिकेयस्येति भावः । आवि-द्धशक्तिक्षतम् = आविद्धा ( आ = समन्तात् , विद्धा = प्रहृता ) या शक्तिः ( कासूः, शस्त्रविशेष इति भावः ), तया क्षतं ( किञ्चिद्व्रणितम् ) क्रौञ्चगिरिं = क्रौञ्चपर्वतं, बाणगणैः = बाणसमूहैः, विद्ध्वा = भित्त्वा, उदारहृदयः = उन्नतचित्तः सन् , वैलक्ष्यं= लज्जाऽन्वितत्वम् , आलम्बते = अवलम्बते । कार्त्तिकेयशक्तिव्रणितं क्रौञ्चपर्वतं स्व-शरनिकरैर्विद्ध्वोदारहृदयत्वेन जामदग्न्यो लज्जां भजतीति भावः । शार्दूलविक्री-डितं वृत्तम् ॥ १७ ॥

---

राम—आश्चर्य करनेके लिए योग्य स्वभाव वालोंके भगवान् परशुराम शिरोमणि हैं, ऐसा कहना चाहिए ।

क्योंकि ये—

अद्वितीय ( श्री परशुराम ) सुवर्ण सम्पन्न पर्वतोंसे युक्त इस पृथ्वीको एक सुवर्ण शृङ्गसे अलङ्कृत एक गायकी तरह कश्यप ऋषिको देकर आत्मश्लाघा नहीं करते हैं । और भी—कार्तिकेय की छोड़ी गई शक्तिसे क्षत क्रौञ्च पर्वतको बाणसमूहसे विद्ध करके भी उन्नतचित्त होनेसे लज्जाका अवलम्बन करते हैं ॥ १७ ॥

( उभ परिक्रामतः )

रामः—( अञ्जलिं बद्ध्वा ) भगवन् ! भृगुकुलशिरःशेखरशिखण्डक ! एष सानुजस्य मे परमोन्नतिरमणीयपरिणामः प्रणामः ।

जामदग्न्यः—समरविजयी भूयाः ।

रामः—भगवन् , भृगुकुलमौलिमाणिक्य, अनुगृहीतोऽस्मि ।

भार्गवः—( स्वगतम् )

( सकरुणम् ) रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्यातिमात्रं
( विमृश्य सक्रोधम् ) हुं चापं चन्द्रमौलेश्चपलमतिरसाविक्षुदण्डं बभञ्ज ।

---

राम इति । भृगुकुलशिरः शेखरशिखण्डक = भृगुकुलस्य ( भृगुवंशस्य ) शिरः शेखरस्य ( शिरोभूषणस्य ) शिखण्डक ( काकपक्षस्थानीय ) । परमोन्नतिरमणीय-परिणामः = परमोन्नतिः ( उत्कृष्टाऽभ्युदयः ) एव रमणीयः ( मनोहरः ) परिणामः ( परिपाकः ) यस्य सः, तादृशः । प्रणामः = नमस्कारः ।

राम इति । चन्द्राऽभिरामे विनयवति शिशौ रामे अतिमात्रं किं प्रकुप्य किमि-त्येकचरणस्याऽन्वयः । चन्द्राऽभिरामे = चन्द्रः ( इन्दुः ) इव अभिरामः ( सुन्दरः ) इति चन्द्राऽभिरामस्तस्मिन् , तादृशे । विनयवति = विनीते, शिशौ = बाले, रामे = रामचन्द्रे, अतिमात्रम् = अत्यर्थं, प्रकुप्य = प्रकोपं कृत्वा, किं = किं प्रयोजनं, भविष्य-तीति शेषः । एतेन करुणा द्योतिता ।

हुं चापमिति । हुं चपलमतिः असौ चन्द्रमौलेः चापम् इक्षुदण्डं बभञ्जेति द्वितीय-चरणस्याऽन्वयः । हुमिति क्रोधद्योतकमव्ययम् । चपलमतिः = चञ्चलबुद्धिः असौ = अयं, राम इति भावः । चन्द्रमौलेः = चन्द्रशेखरस्य, शिवस्येत्यर्थः । चापं = धनुः,

---

( दोनों परिक्रमण करते हैं । )

राम—( अञ्जलि बांधकर ) भगवन् ! भृगुवंशके शिरोभूषणस्थानीय ! मैं भाईके साथ परमोन्नतिरूप मनोहर परिणामसे युक्त प्रणाम करता हूं ।

जामदग्न्य—युद्धविजयी बनो ।

राम—भगवन् ! भृगुवंशके मुकुटके माणिक्य ! मैं अनुगृहीत हूं ।

भार्गव—( मन ही मन )

( करुणापूर्वक ) चन्द्रतुल्य सुन्दर और विनयसम्पन्न बालक राममें ज्यादा कोप करके क्या होगा ?

( विचार कर क्रोधपूर्वक ) ओह ! चञ्चल बुद्धिवाले इन्होंने शिवधनुको इक्षुदण्डके समान तोड़ दिया ।

(पुनः सानुक्रोशम्) बाला वैधव्यदीक्षां जनकनृपसुता नार्हतीयं मदस्त्रात्
( पुनर्विचिन्त्य, सामर्षम् )

आः ! शान्तो मे कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः ॥ १८ ॥

(प्रकाशम्) दाशरथे, इयमसौ मे त्वयि सदाचारानुसारिणी वाग्वृत्तिरेव ।

---

इक्षुदण्डं = रसालदण्डम् , इवेति शेषः । 'इक्षुभञ्जम्' इति पुस्तकान्तरस्थः साधीयान्पाठस्तदर्थस्तु इक्षुमिव भङ्क्त्वा, णमुल्प्रत्ययः । बभञ्ज = भग्नवान् , भार्गवस्य रामकर्तृकहरधनुर्भङ्गस्य परोक्षत्वात् 'परोक्षे लिट्' इति लिट् । हरधनुर्भञ्जकत्वाद्रामेऽयं परशुरामस्य कोपमूलको दण्डयुद्धयवतारः ।

पुनरिति । साऽनुक्रोशं = सकृपमिति । क्रियाविशेषणमिदम् ।

बालेति । बाला इयं जनकसुता मदस्त्रात् वैधव्यदीक्षां नाऽर्हतीति तृतीयचरणस्याऽन्वयः । बाला = बालिका, इयम् = एषा, जनकसुता = जानकी, सीतेति भावः । मदस्त्रात् = मदायुधात् , परशुरूपादिति शेषः । वैधव्यदीक्षां = विधवात्वव्रतादेशं, विगतोधवो यस्याः सा विधवा, तस्या भावो वैधव्यं, तद्दीक्षां, प्राप्तुमिति शेषः । न अर्हति = योग्या न भवति । जानक्या बालभावाचद्वल्लभे रामे परशुरामस्याऽयं करुणाऽऽविर्भावः ।

आ इति । आः ! रेणुकाकण्ठशत्रुः अयं मे कुठारः अधुना कथं शान्त इति चतुर्थचरणस्याऽन्वयः । आ इति कोपद्योतकमव्ययम् । रेणुकाकण्ठशत्रुः = रेणुकायाः ( तदाख्याया मन्मातुः ) कण्ठशत्रुः ( गलाऽरातिः, पितुर्जमदग्ने राज्ञया चछेदकत्वादिति भावः ) । अयं = निकटवर्ती, मे=मम, कुठारः = परशुः, अधुना=सम्प्रति, कथं= केन प्रकारेण, शान्तः = शान्तिसम्पन्नः, दण्डव्यापारनिवृत्त इति भावः । अस्तीति शेषः । गुरुचापच्छेदके रामेऽपि मदीयोऽयं कुठारः कथं निवृत्तदण्डव्यापार इति भावः । श्लोकेऽस्मिन्करुणाक्रोधोग्रतारूपाणां भावानां शबलताऽवसेया । स्रग्धरावृत्तम् ॥ १८ ॥

प्रकाशमिति । वाग्वृत्तिरेव = वचनव्यापार एव, समरविजयी भूया' इत्याकारकः सदाचाराऽनुसारी वचनव्यापार एव, न तु मे त्वयि शरीरमनोवृत्तिरनुकूलेति भावः ।

---

( फिर करुणापूर्वक ) बालिका यह सीता मेरे अस्त्रसे वैधव्यदीक्षा पानेको योग्य नहीं है ।
( फिर विचारकर, क्रोधके साथ ) ओह ! रेणुका का कण्ठशत्रु यह मेरा परशु अभी क्यों शान्त रह रहा है ? ॥ १८ ॥

( सुनाकर ) दाशरथे ! तुम पर सदाचारका अनुसरण करनेवाला यह मेरा वचन व्यापारमात्र है ।

रामः—( विहस्य ) मनोवृत्तिस्तु कीदृशी ?

भार्गवः—

> चण्डीशकार्मुकविमर्दविवर्धमान-
> दर्पावलेपसविशेषविकासभाजोः ।
> बाह्वोस्तवाहमधुना मधुना समानै-
> राराधयामि रुधिरैः कठिनं कुठारम् ॥ १९ ॥

रामः—भगवन्, निग्रहानुग्रहयोः स्वाधीनोऽयं जनः; परं ते कोप-बीजं ज्ञातुमिच्छामि ।

---

राम इति । मनोवृत्तिस्तु = मानसव्यापारस्तु ।

कोपाऽनुसारिणीमात्ममनोवृत्तिमाह—चण्डीशेति । चण्डीशकार्मुकविमर्दविवर्धमानदर्पाऽवलेपसविशेषविकासभाजोः तव बाह्वोः मधुना समानैः रुधिरैः अधुना अहं कठिनं कुठारम् आराधयामीत्यन्वयः ।

चण्डीशकार्मुकेत्यादिः = चण्डीशस्य ( शिवस्य ) कार्मुकस्य ( धनुषः ) विमर्दः ( भञ्जनम् ) तेन विवर्धमानः ( समेधमानः ) यो दर्पावलेपः ( गर्वसम्बन्धः ) तेन सविशेषं ( साधिकम् ) यथा स्यात्तथा यो विकासः ( प्रफुल्लता ) तं भजतः ( आश्रयतः ) इति तयोः, तादृशयोः । तव = भवतः, रामस्येत्यर्थः । बाह्वोः = भुजयोः, मधुना = क्षौद्रेण, समानैः = सदृशैः, निबिडैरिति भावः । रुधिरैः = रक्तैः, अधुना = सम्प्रति, अहं = भार्गवः, कठिनं = कठोरं, कुठारं = परशुम्, आराधयामि = परिचरामि, हरकार्मुकभञ्जनजनितदर्पविकसितयोस्तवबाह्वोरुधिरेणाऽहमिदानीं स्वपरशुं परिचराम्येतादृशी महीमा मनोवृत्तिरिति भावः । अत्रोपमाऽलङ्कारः । वसन्ततिलकं वृत्तम् ॥ १९ ॥

राम इति । अयं जनः एष मानवः, अहमिति भावः । निग्रहाऽनुग्रहयोः = दण्डप्रसादयोः, स्वाऽधीनः = आत्मायत्तः, अहं दण्डे प्रसादे च विषये भवदधीनोऽस्मीति भावः । कोपबीजं = क्रोधकारणम् ।

---

राम—( हँसकर ) और मानसव्यापार कैसा है ?

भार्गव—शिवधनुको तोड़नेसे बढ़े हुए गर्वसम्बन्धसे सविशेष प्रफुल्ल तुम्हारे बाहुओंके मधु ( शहद ) के सदृश रुधिरोंसे इस समय मैं कठोर परशुकी सेवा करता हूँ ॥ १९ ॥

राम—यह जन आपके दण्ड और प्रसादके विषयमें अधीन है, परन्तु मैं आपके क्रोधका कारण जानना चाहता हूँ ।

भार्गवः—अहो ! दर्पान्धता, यदात्मना कृतमस्माभिरुक्तमपि नावधारयति निजदुर्विनयम् । ननु रे—

येनोपदिष्टमद्यापि पुरस्त्रीविरहव्रतम् ।
न भुग्नं, तत्त्वया भग्नं जगद्गुरुशरासनम् ॥ २० ॥

रामः—भगवन् ! अलीकलोकवार्तया निरपराधे मयि मुधा कोपकलङ्कितोऽसि ।

भार्गवः—तत् किं स्वस्ति हरकार्मुकाय, ?

रामः—नहि नहि ।

---

भार्गव इति । निजदुर्विनयं = स्वदुर्नीतिम् । न अवधारयति = नो निश्चिनोति ।

भार्गवः स्वकोपबीजं दर्शयति—येनोपदिष्टमिति । येन अद्याऽपि पुरस्त्रीविरहव्रतम् उपदिष्टम् । न भुग्नं तत् जगद्गुरुशरासनं त्वया भग्नमित्यन्वयः ।

येन = जगद्गुरुशरासनेन, अद्यापि = साम्प्रतमपि, पुरस्त्रीविरहव्रतं = त्रिपुरनारीवियोगव्रतम्, उपदिष्टम् = आदिष्टम् । न भुग्नं = केनाऽपि न भग्नं, तत् = तादृशं, जगद्गुरुशरासनं = जगद्गुरोः ( हरस्य ) शरासनं = ( धनुः ), शरा अस्यन्तेऽनेनेति' 'करणाऽधिकरणयोश्चे'ति करणे ल्युट् । त्वया = रामेण, भग्नं = खण्डितम् । त्वत्कर्तृकहरधनुर्भङ्ग एव मत्कोपहेतुरिति भावः । अनुष्टुब्वृत्तम् ॥ २० ॥

राम इति । अलीकलोकवार्तया = मिथ्यारूपजनवचनेन । मुधा = व्यर्थम्, अव्ययमिदम् ।

भार्गव इति । हरकार्मुकाय = शिवधनुषे, 'स्वस्ती'ति पदेन योगे 'नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्चे'ति चतुर्थी । स्वस्ति = कल्याणं, हरकार्मुकं न खण्डितं किमिति भावः । रामो धनुषोऽनायासभङ्गं प्रतिपादयति—मया स्पृष्टमिति । पुरवैरिणः कार्मुकं मया स्पृष्टं वा न स्पृष्टम् । हे भगवन् ! स्वयम् आत्मना एव अभज्यत । किं करोमीत्यन्वयः ।

---

भार्गव—अहो ! कैसी तुम्हारी गर्वान्धता है, जो कि तुम अपनेसे किये गये दुर्विनयको हमारे कहनेपर भी नहीं-मान रहे हो । देखो रे ! जिसने आजतक त्रिपुराऽसुरकी स्त्रियोंको विरह व्रतका उपदेश दे रक्खा है । अखण्डित वैसे शिवधनुको तुमने खण्डित कर दिया ॥२०॥

राम—भगवन् ! मिथ्या लोकवार्तासे निरपराध ( बेगुनाह ) मेरे ऊपर आप व्यर्थ ही क्रोधसे कलङ्कित हो रहे हैं ।

भार्गव—तब क्या शिवधनु कुशल ( सुरक्षित ) है ?

राम—नहीं नहीं ।

भार्गवः—तत् कथं निरपराधोऽसि ?

रामः—

मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः।
भगवन्नात्मनैवेदमभज्यत करोमि किम् ?॥ २१ ॥

भार्गवः—आः, कथं रे चन्दनदिग्धं नाराचं निधाय हृदयं मे शीतलयसि। तदलमनेन। ( कुठारमुद्यम्य )।

हे राम ! कामरिपुकार्मुकमर्मघात-
सञ्जातपातक ! तवैष कठोरधारः।
सीताकरव्यतिकरप्रतिकूलबन्धुः

---

पुरवैरिणः=त्रिपुरशत्रोः, शिवस्येत्यर्थः। कार्मुकं=धनुः, मया=रामेण, स्पृष्टम्=आस्पृष्टं, वा=अथवा, न स्पृष्टं=नाऽऽस्पृष्टं, किञ्चिदेव स्पृष्टमिति भावः। अत्रैवाऽन्तरे, हे भगवन् ! इदं=पुरवैरिकार्मुकम्, आत्मना एव=स्वतः एव, मत्प्रयत्नं विनैवेति भावः, अभज्यत=भग्नम्। एतादृशे व्यतिकरे जाते, किं, करोमि=विदधामि, अहमिति शेषः। अतिजीर्णत्वान्मया स्पृष्टमात्रं धनुः स्वत एव भग्नमतोऽस्मिन्विषये न मदीयोऽपराध इति भावः। अनुष्टुब्वृत्तम् ॥ २१ ॥

भार्गव इति। आः=कोपद्योतकमव्ययमिदम्। चन्दनदिग्धं=श्रीखण्डलिप्तं, शीतलयसि=शीतलं करोषि, 'तत्करोति तदाचष्टे' इति णिजन्ताल्लट्। हरधनुर्भञ्जनोत्तरं विनयोपेतं त्वदीयमेतद्वचनं चन्दनदिग्धनाराचसदृशमिति सदृशयोर्वाक्यार्थयोरैक्यारोपान्निदर्शनाऽलङ्कारः।

हे राम इति। कामरिपुकार्मुकमर्मघातसञ्जातपातक हे राम ! कठोरधारः सीताकरव्यतिकरप्रतिकूलबन्धुः निष्करुणः एष कुठारः तव एव कण्ठं पुरा विशरिष्यन्वयः।

कामरिपुकार्मुकमर्मघातसञ्जातपातक=कामरिपोः ( मदनाऽरातेः शिवस्येत्यर्थः ) कार्मुकस्य ( धनुषः ) यो मर्मघातः ( भञ्जनम् ) तेन सञ्जातं ( समुत्पन्नम् ) पातकं ( पापम् ) यस्य सः, तत्सम्बुद्धौ। तादृक् हे राम=हे रामचन्द्र !, कठोरधारः=कठिनाऽग्रभागः, सीताकरव्यतिकरप्रतिकूलबन्धुः=सीताकरस्य ( जानकीपाणेः )

---

भार्गव—तब तुम कैसे निरपराध हो ?

राम—हे भगवन् ! शिवधनुका स्पर्श मैंने किया या नहीं किया, यह अपने आप टूट गया। मैं क्या करूँ ? ॥ २१ ॥

भार्गव—ओह ! क्यों रे ! चन्दनलिप्त नाराचको रखकर मेरे हृदयको शीतल कर रहे हो ? ऐसा करना नहीं चाहिए। ( परशुको उठाकर )। शिवधनुको तोड़नेसे पातक

कण्ठं पुरा विशतु निष्करुणः कुठारः ॥ २२ ॥

तत्प्रवीरो भव ।

रामः—

हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः,
स्त्रीणां नेत्राण्यधिवसतु वः कज्जलं वा जलं वा ।
सम्पश्यामो ध्रुवमिव सुखं प्रेतभर्तुर्मुखं वा,
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ २३ ॥

---

व्यतिकरस्य ( परस्परमेलनस्य, सीतापाणिग्रहणस्येति भावः ) प्रतिकूलबन्धुः ( विरोधसम्बन्धी ), अत एव निष्करुणः=निर्दयः, एषः=अयं, कुठारः=परशुः, तव=एव भवत एव कण्ठं = गलं, पुरा = पूर्वं, 'निकटागामिके पुरा' इत्यमरः । विशतु = प्रविशतु । वसन्ततिलकं वृत्तम् ।

तदिति । प्रवीरः=सुभटः । प्रकृष्टो वीरः, 'कुगतिप्रादय' इति समासः ।

हार इति । हारो यदि वा तीक्ष्णधारः कुठारः कण्ठं विशतु । कज्जलं वा जलं वा स्त्रीणां नेत्राणि अधिवसतु । इह ध्रुवं सुखं वा प्रेतभर्तुः मुखं संपश्यामः । यद्वा तद्वा भवतु । वयं ब्राह्मणेषु प्रवीरा नेत्यन्वयः ।

हारः=मुक्तामाल्यं, विवाहोचितमिति भावः । यदि वा=अथ वा, तीक्ष्णधारः=निशिताऽग्रभागः, कुठारः=परशुः, संग्रामोचित इति भावः । कण्ठं=गलं, विशतु=प्रविशतु । विवाहोत्सवं वा परशुप्रहारमनुभवानीति भावः । कज्जलं वा=अञ्जनं वा, जलं वा=नीरं वा, अश्रु वेति भावः । स्त्रीणां=नारीणां, नेत्राणि=नयनानि, अधिपूर्वकवसधातोर्योगे 'उपान्वध्याङ्वस' इत्याधारस्य कर्मत्वम् । अधिवसतु=अधिवासं करोतु, अस्माकं नार्यः सौभाग्योचितं कज्जलं नयनयोरनुभवन्तु, वैधव्यान्नयनजलं मुञ्चन्तु वेत्यभिप्रायः । इह=अस्मिंल्लोके, ध्रुवं=नित्यम् । अधिककालस्थायीति भावः । सुखम्=आनन्दं, यद्वा सुखं=आनन्दपूर्वकं, ध्रुवं=विवाहदर्शनीयं नक्षत्रविशेषमित्यर्थः । वा=अथ वा, प्रेतभर्तुः=परेतराजः, यमराजस्येति भावः । मुखम्=आननं, संपश्यामः=अवलोकयामः । यद्वा तद्वा भवतु=

---

तुम्हारे ही गले पर पहले प्रवेश करे ॥ २२ ॥

इस कारण खूब शौर्यका अवलम्बन करो ।

राम—हार वा तीक्ष्ण नोकवाला परशु कण्ठमें प्रवेश करे । कज्जल वा जल ( आँसू ) स्त्रियोंके नेत्रोंमें रहे । हमलोग इस लोकमें अधिककालस्थायी आनन्द वा यमराजका मुख देखें । और भी जो हो सो हो, परन्तु हमलोग ब्राह्मणों में शौर्यका अवलम्बन नहीं करेंगे ॥२३॥

जामदग्न्यः—आः, कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे ( पुनः सामर्षम् )

जानीषे नहि जामदग्न्यमपि रे ! यद्दीर्घदोःकन्दल-
द्वन्द्वास्कन्दितबाहुना रणभुवि स्कन्देन मन्दौजसा ।
नास्राक्षीद् भुजसम्पदं मम कथं वक्त्रानुसारादिति
क्रुद्धेनोद्धतमैक्षि शङ्करकरन्यस्तं विधातुः शिरः ॥ २५ ॥

अन्यद्भवतु तद्भवतु, परं—वयं क्षत्रियाः, ब्राह्मणेषु=विप्रेषु भवत्सदृशेषु, प्रवीराः= सुभटाः, न=नो भविष्यामः, अस्माकमनुकूलं प्रतिकूलं वा भवतु परं न वयं ब्राह्मणेषु शौर्यं प्रदर्शयिष्याम इति भावः । मन्दाक्रान्ता वृत्तम् ॥ २४ ॥

जामदग्न्य इति । मां=भार्गवम्, एकविंशतिकृत्वः पृथिवीं क्षत्रियरहितां कुर्वन्त-मिति भावः । प्रणतिपात्रं=प्रणाममात्रभाजनम् ।

जानीष इति । रे ! रणभुवि यद्दीर्घदोःकन्दलद्वन्द्वास्कन्दितबाहुना मन्दौजसा 'मम वक्त्राऽनुसारात् भुजसम्पदं कथं न अस्राक्षीत्' इति क्रुद्धेन स्कन्देन शङ्करकरन्यस्तं विधातुः शिरः उद्धतम् ऐक्षि, (तादृशम्) जामदग्न्यम् अपि नहि जानीष इत्यन्वयः ।

रे=अनादरद्योतकं सम्बोधनपदमिदम् । रणभुवि=युद्धप्रदेशे । यद्दीर्घदोःकन्द-लद्वन्द्वास्कन्दितबाहुना = यस्य=मम परशुरामस्य, दीर्घम् ( आयतम् ) यद्दोः कन्दलद्वन्द्वं ( बाहुनवाङ्कुरयुगलम् ) तेन आस्कन्दितौ ( पराजितौ ) बाहू ( भुजौ ) यस्य, तेन । अतएव मन्दौजसा=मन्दम् ( अल्पम् ) ओजः ( बलम् ) यस्य, तेन । मम=स्कन्दस्य, वक्त्राऽनुसारात्=मुखाऽनुक्रमात्, भुजसम्पदं=बाहुसम्पत्तिं, कथं= केन प्रकारेण, न अस्राक्षीत्=न सृष्टवान्, इति=विधाता मम मुखषट्कं सृष्टवान्, तत्सङ्ख्याऽनुसारेण द्वादश भुजान् कथं न समुत्पादितवान्, येन भार्गवेण समं समरे जयं लभेये'ति विचार्य, क्रुद्धेन=कुपितेन, स्कन्देन=गुहेन, शङ्करकरन्यस्तं=शिव-पाणिस्थापितं, विधातुः=ब्रह्मणः, शिरः=मस्तकः, पञ्चम इति भावः । उद्धतम्= अविनयपूर्वकं क्रियाविशेषणम् । ऐक्षि=ईक्षितम्, तादृशं जामदग्न्यम् अपि=

जामदग्न्य—ओह ! कैसे मुझे भी प्रणामपात्र सामान्य ब्राह्मणके समान जान रहे हो ।
( फिर क्रोधके साथ )

अरे ! युद्धभूमिमें जिसके दीर्घ बाहुयुगलसे पराजित होकर मन्द तेजवाले कार्त्तिकेयने 'मेरे मुखोंके अनुसार बाहुसम्पत्तिका क्यों नहीं निर्माण किया' ऐसा सोच क्रुद्ध होकर शिवजीके हाथमें रखे गये ब्रह्माजीके मस्तकको अविनयपूर्वक देखा, वैसे जामदग्न्य को भी नहीं जानते हो ! ॥ २४ ॥

( पुनः सामर्षम् ) किमात्थ रे किमात्थ ? । 'न वयं ब्राह्मणेषु प्रवीराः' इति । कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे । तदिदानीमावयोः का गरीयसीति सङ्ग्रामतुलैव निर्णेष्यते ।

रामः—

भो ब्रह्मन् ! भवता समं न घटते सङ्ग्रामवार्त्तापि नः,
सर्वे हीनबला वयं, बलवतां यूयं स्थिता मूर्द्धनि ।

लक्ष्मणः—जामदग्न्य, एवमेतत् ।

---

भार्गवम् अपि, नहि जानीषे = न बोधसि । कदाचित्कृतापराधस्य विधातुः पञ्चमं शिरो हरश्छित्त्वा स्वकरे स्थापितवानिति पौराणिकमाख्यानमत्राऽर्थेऽनुसन्धेयम् । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

पुनरिति । आत्थ = भाषसे । तृणाय मन्यसे = तृणवज्जानीषे, 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' इति चतुर्थी । आवयोः = मम तव च । का=कतरा जातिः, ब्राह्मणजातिः क्षत्रियजातिर्वेति भावः । गरीयसी = गुरुतरा । संग्रामतुलैव = युद्धघट एव । निर्णेष्यते = निर्णयं करिष्यति ।

भो ब्रह्मन्निति । भो ब्रह्मन् ! भवता समं नः संग्रामवार्ताऽपि न घटते । सर्वे वयं हीनबलाः । यूयं बलवतां मूर्धनि स्थिता इति पूर्वार्द्धस्याऽन्वयः ।

भो ब्रह्मन् = हे ब्राह्मण !, भवता समं = त्वया सह, नः = अस्माकं, क्षत्रियजात्युत्पन्नानामिति भावः । संग्रामवार्ताऽपि = युद्धप्रवृत्तिरपि, न घटते=न युज्यते, संग्रामवार्ताया अपि संघटनायोगात्का कथा संग्रामस्येति भावः । अत्र हेतुमाह—सर्व इति । सर्वे = सकलाः, वयं = रामादयः, क्षत्रियजात्युत्पन्ना इति भावः । हीनबलाः = मन्दशक्तयः । एतद्वैपरीत्येन—यूयं = भवन्तः, जामदग्न्यादयो ब्राह्मणा इति भावः । बलवतां = शक्तिसम्पन्नानां, मूर्धनि = शिरसि, स्थिताः = अवस्थिताः, अतस्त्वया सह मदीय संग्रामवार्ता न संघटते । इति पूर्वार्द्धाऽर्थः । लक्ष्मणः सोपहासं रामोक्ति

---

( फिर क्रोधपूर्वक ) अरे ! क्या कहते हो, क्या कहते हो ? 'हमलोग ब्राह्मणोंमें शौर्यका अवलम्बन नहीं करेंगे ।' क्षत्रियजातिमें गर्व कर कैसे ब्राह्मणजातिको तृणके बराबर जान रहे हो ? इस कारण अभी हम दोनोंकी जातियोंमें कौन सी जाति श्रेयसी है युद्धतुला ही इस बात का निर्णय कर लेगी ।

राम—हे ब्राह्मन ! आपके साथ हमलोगोंकी युद्ध करनेकी बात भी योग्य नहीं है, क्योंकि हम सभी मन्द शक्तिवाले और आप बलसम्पन्नोंमें मूर्धन्य हैं ।

लक्ष्मण—जामदग्न्यजी ! यह ठीक है ।

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुता-
मस्माकं, भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥ २५ ॥

रामः—अलमिह माननीये मुनौ दुर्विनयवैदग्ध्येन ।

जामदग्न्यः—अस्य को दोषः ?

दारैर्मुक्तकुचांशुकैः परिवृतं प्राचीनमेषां नृपं
नाहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम् ।

---

समर्थयते—यस्मादेकगुणमिति । यस्मात् उर्वीभुताम् अस्माकम् इदं शरासनम् एकगुणं सुव्यक्तम् । पुनः भवतां नवगुणं यज्ञोपवीतं बलमित्युत्तरार्द्धान्वयः ।

यस्मात् = कारणात् , उर्वीभुतां = राज्ञाम् , अस्माकं = रामलक्ष्मणादीनाम् , इदं = निकटस्थं, शरासनं = धनुः, एकगुणम् = एकमौर्वीकम् , 'मौर्वीज्या शिञ्जिनीगुण' इत्यमरादत्रगुणपदं मौर्वीवाचकम् । सुव्यक्तं = सुस्फुटम् । एतद्वैपरीत्येन पुनः = भूयः, भवतां = युष्माकं, ब्राह्मणानामिति भावः । नवगुणं = नवसूत्रं, 'गुणो-ज्यासूत्रतन्तुषु' इति हैमाऽनुशासनात् नवसूत्ररचितमिति भावः । तादृशं यज्ञोपवीतं = ब्रह्मसूत्रं, बलं = सामर्थ्यम् , एकगुणशरासनवतामस्माकं नवगुणब्रह्मसूत्रोपेतैर्युष्माभिःसममसमबलत्वाद्धेतोः संग्रामवार्ताऽपि न घटते संग्रामस्य का कथेति भावः । इत्युत्तरार्द्धार्थः ॥ २५ ॥

राम इति । दुर्विनयवैदग्ध्येन = अविनयचातुर्येण ।

दारैरिति । मुक्तकुचांशुकैः दारैः परिवृतम् एषां प्राचीनं नृपं यत् असौ कुठारहतकः न अहिंसीत् । तस्य एतत् उज्जृम्भितम् । यत् नारीकवचाऽन्वयप्रणयिनां श्लाघमानाम् इमाः दुर्वाचो मे श्रवणयोः प्रविशन्ति । छत्रगोत्रे कृपां धिगित्यन्वयः । मुक्तकुचांशुकैः=त्यक्तपयोधरवस्त्रैः, सूर्यवंशीयमूलकराजरक्षणार्थं संभ्रमेणेति भावः । तादृभिः दारैः = पत्नीभिः, 'भार्याजायाऽथ पुंभूम्नि दाराः' इत्यमरः । परिवृतं = वेष्टितम्, एषां = सूर्यवंशोत्पन्नानां लक्ष्मणादीनां, प्राचीनं = पूर्वपुरुषं, नृपं = राजानं, मूलकाख्यं नृपमिति भावः । यत्, असौ = एषः कुठारहतकः = न निन्दितः

---

क्योंकि हम राजाओंका यह धनु एकगुन ( मौर्वी ) वाला है यह बात स्पष्ट है। परन्तु आप ( ब्राह्मण ) लोगोंका नौ गुन ( सूत्र ) वाला यज्ञोपवीत बल है ॥ २५ ॥

राम—पूजनीय इन मुनिमें अविनयका चातुर्य नहीं करना चाहिए ।

जामदग्न्य—इसका क्या दोष है ?

पयोधरोंसे वस्त्र हटानेवाली पत्नियोंसे घिरे हुए इनके प्राचीन राजा ( मूलक ) को, जो कि इस निन्दित परशु ने नहीं मारा । उसीका यह विकसित फल है । जो कि नारी

यन्नारीकवचान्वयप्रणयिनां क्षत्राधमानामिमा
दुर्वाचः प्रविशन्ति मे श्रवणयोर्धिक् क्षत्रगोत्रे कृपाम् ॥२६॥

रामः—अलमिह क्षीरकण्ठे कठोरकोपतया, तत्क्षम्यताम् ।

जामदग्न्यः—आः, किमुच्यते क्षीरकण्ठ इति । विषकण्ठः खल्वसौ ।

लक्ष्मणः—भगवन् ! शितिकण्ठशिष्येण विशेषतः क्षन्तव्यम् ।

---

परशुः । अहिंसीत् = नो हिंसितवान् , तस्य=हिंसाऽभावस्य, एतत् = पुरः स्थितम् , उज्जृम्भितम् = विकसितं फलम् । किं तदुज्जृम्भितमित्यत आह—यदिति । यत् नारीकवचाऽन्वयप्रणयिनां = नार्यः ( स्त्रियः ) एव कवचः ( उरश्छदः, रक्षाकारणमिति भावः ) यस्य सः, मूलकराज इति भावः, तस्य योऽन्वयः ( वंशः ) तस्मिन् प्रणयिनां ( प्रणयवताम् , जन्मार्थमिति शेषः ) नारीकवचाऽपरपर्यायमूलकराजवंशोत्पन्नानामिति भावः । तादृशानां क्षत्राऽधमानां = दुष्टक्षत्रियाणां, लक्ष्मणसदृशानामिति भावः । इमाः = ईदृश्यः, दुर्वाचः = दुरुक्तयः, 'यस्मादेकगुणमि'त्याकारिका इति भावः । मे = मम, एकविंशतिवारं पृथ्वीं निःक्षत्रियां कृतवतः परशुरामस्येति तात्पर्यम् । श्रवणयोः = श्रोत्रयोः, श्रुतिः स्त्री श्रवणं श्रव 'इत्यमरः । प्रविशन्ति = प्रवेशं कुर्वन्ति । अत एव क्षत्रगोत्रे = क्षत्रियवंशे, कृपां=दयां, धिक् = इतीदं क्षत्रियगोत्रे कृपाया दोषकीर्तनम् । पुरा परशुरामे निःक्षत्राऽऽचरणप्रवृत्ते सूर्यवंशोद्भूतः सौदासपौत्रोऽश्मकपुत्रो मूलकाऽभिधानो राजा स्त्रीभी रक्षितः सन्नारीकवचाऽभिख्यामवापेति पौराणिकमाख्यानमनुसन्धेयम् । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

राम इति । क्षीरकण्ठे—स्तन्यपायिशिशुसदृश इति भावः । इह = अस्मिन् , लक्ष्मण इत्यर्थः ।

जामदग्न्य इति । विषकण्ठः = गरलगलः, कटुभाषित्वादिति भावः ।

लक्ष्मण इति । शितिकण्ठशिष्येण = नीलकण्ठाऽन्तेवासिना, विषकण्ठो नीलकण्ठस्तव गुरुस्तदुक्त्याऽहमपि विषकण्ठ ते गुरुसाम्याख्यया ऽहं क्षन्तव्य इति भावः ।

---

कवच ( राजा मूलक ) के वंशमें उत्पन्न अधम क्षत्रियोंका ये दूषित वचन मेरे कानोंमें प्रवेश कर रहे हैं । क्षत्रियवंशमें दयाको धिक्कार है ॥ २६ ॥

राम—इस दूधमुँहे बच्चेपर कठोर क्रोध नहीं करना चाहिए, इस कारण क्षमा कीजिए ।

जामदग्न्य—ओह ! 'दूधमुँहा' यह क्या कहते हो । यह विषकण्ठ है ।

लक्ष्मण—भगवन् ! शितिकण्ठशिष्य आपको इस बात पर विशेष रूपसे क्षमा करनी चाहिए ।

जामदग्न्यः—आः, कथं विषकण्ठनामसाम्येन त्वमपि मे गुरुः ।

लक्ष्मणः—( विहस्य ) अन्याभिसन्धानेन मयेदमुक्तं यत् किल—

किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि ।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम् ? ॥ २७ ॥

भवांस्तदन्तेवासीति विशेषतः क्षन्तुमर्हति ।

जामदग्न्यः—( स्वगतम् ) अहो ! अस्य क्षत्रियबटोर्वाक्परिपाटीपाटवम्, भवतु । ( प्रकाशम् ) तदिदं क्षान्तमेव मया, अयं तु न क्षमते प्रकृतिकठोरः कुठारः । शीलं न वेत्सि कथमस्य,

---

जामदग्न्य इति । आः = कोपाऽतिशयद्योतकमव्ययमिदम् ।

लक्ष्मण इति । अन्याऽभिसन्धानेन = अभिप्रायान्तरेणेति भावः । तदेवाऽभिसन्धानं प्रदर्शयति—किरीटमिति । बाले प्रालेयरोचिषि किरीटम् अधिरूढेऽपि शितिकण्ठस्य चित्ते कोपाऽङ्कुरः पदं धत्ते किमित्यन्वयः ।

बाले = शिशौ, अर्धरूप इति भावः । प्रालेयरोचिषि = हिमांऽशौ, चन्द्रमसीत्यर्थः । 'प्रालेयं मिहिकाचे'ति 'रोचिः शोचिरुभे क्लीबे' इत्यप्यमरः । किरीटं = शिरोदेशम्, अधिरूढेऽपि = आरूढेऽपि, शितिकण्ठस्य = नीलकण्ठस्य, शिवस्येत्यर्थः । 'उग्रः कपर्दी श्रीकण्ठः शितिकण्ठः कपालभृत् ।' इत्यमरः । चित्ते = मानसे, कोपाऽङ्कुरः = क्रोधप्ररोहः, पदं = स्थानं, धत्ते किं = धारयति किं, नो धारयतीति भावः । बालचन्द्रे शेखररूपेण स्वमूर्धाऽवस्थितेऽपि यथा शङ्करः कोपाक्रान्तस्वान्तो न भवति तथैव तच्छिष्येण त्वयाऽपि मम बालस्य वचने क्रोधो न विधेय इति भावः । अनुष्टुब्वृत्तम् ॥ २७ ॥

जामदग्न्य इति । वाक्परिपाटीपाटवं = वचनक्रमकौशलम्, प्रकृतिकठोरः = प्रकृत्या ( स्वभावेन ) कठोरः=कठिनः 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया, ततः समासः ।

---

जामदग्न्य—ओह ! विषकण्ठ नामकी समतासे तू भी मेरा गुरु हुआ ।

लक्ष्मण—( हंसकर ) दूसरे ही अभिप्रायसे मैंने ऐसा कहा है । जो कि बालचन्द्रके अपने शिरोदेशमें आरूढ होने पर भी शिवजीके चित्तमें क्या क्रोधाङ्कुर स्थान लेता है ? ॥

आप उन शिवजीके शिष्य हैं इसलिए आप विशेषतः क्षमा करनेके लिए योग्य हैं ।

जामदग्न्य—( मन ही मन ) अहो ! इस क्षत्रिय बालकका कैसा वचनक्रमका कौशल है । अच्छा ( सुनाकर ) मैंने क्षमा ही की परन्तु स्वभावकठोर यह परशु क्षमा नहीं करता है । इसका शील कैसे तुम नहीं जान रहे हो ?

क्रीडाविनिर्मितसुदुर्मददोर्विलास-
निःशेषराजकवधस्य परश्वधस्य ।
कीलालकीकसकचैः परितो विचित्य
येन द्विधापि विदधे पृथिवी त्रिवर्णा ॥ २८ ॥

( पुनः सामर्षम् ) कथमस्य हरप्रसादपरशोः शीलमपरिशीलितं ते ?
यत्र क्रामति सङ्गराङ्गणभुवं दुर्वारधाराञ्चल-

स्वपरशुशीलं वर्णयति—क्रीडेति । क्रीडाविनिर्मितसुदुर्मददोर्विलासनिःशेष-राजकवधस्य परश्वधस्य ( अस्य शीलं कथं न वेत्सीति पूर्वेण वाक्येन सम्बन्धः ) कीलालकीकसकचैः परितो विचित्य येन द्विधाऽपि त्रिवर्णा पृथिवी विदध इत्यन्वयः ।

क्रीडाविनिर्मितेत्यादिः । क्रीडया ( खेलया, अनायासेनेति भावः ) विनिर्मितः ( विहितः ) सुदुर्मदः ( अतिशयदुष्टमदोपेतः ) दोर्विलासः ( भुजक्रीडा ) यस्य तत्, तादृशं यन्निःशेषं ( समस्तम् ) राजकं ( राजसमूहः ), तस्य वधः ( हिंसा ) क्रीडाविनिर्मितः सुदुर्मददोर्विलासनिःशेषराजकवधो येन, तस्य । तादृशस्य परश्वधस्य = कुठारस्य, शीलं कथं न वेत्सीति पूर्वगद्यवाक्येन सम्बन्धः । कीलालकीकसकचैः = रुधिराऽस्थिकेशैः, कीकसं कुल्यमस्थि चे'त्यमरः । परितः = सर्वतः, विचित्य = व्याप्य, येन = परश्वधेन, द्विधाऽपि = द्वाभ्यां प्रकाराभ्यामपि, 'संख्याया-विधाऽर्थे धा' इति धाप्रत्ययः । त्रिवर्णा = वर्णत्रयोपेता, पृथिवी = भूमिः, विदधे = कृता । येन परशुना सकलक्षत्रियसंहारेणाऽवशिष्टैर्ब्राह्मणवैश्यशूद्रैस्त्रिवर्णाऽथवा प्रकारान्तरेण रुधिराऽस्थिकेशव्याप्त्या रक्तशुक्लकृष्णाऽऽख्यवर्णत्रययुक्ता पृथिवी विहितेति भावः । वसन्ततिलकं वृत्तम् ॥ २८ ॥

पुनरिति । ते = त्वयेति भावः, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवे'ति नियमात् षष्ठी । अपरिशीलितम् = अपरिचितम् ।

परशुशीलं वर्णयति—यत्र क्रामतीति । यत्र सङ्गराऽङ्गणभुवं क्रामति दुर्वारधाराऽ-

दुष्टमदयुक्त बाहुविलासवाले समस्त राजाओंका वध अनायास ही करनेवाले परशुका शील कैसे तुम नहीं जान रहे हो ?

लोहू, हड्डी और केशोंसे चारों ओर व्याप्त करके जिस परशुने दोनों प्रकारोंसे पृथ्वीको त्रिवर्णा ( क्षत्रिय वधसे—ब्राह्मण, वैश्य और शूद्र इन तीन वर्णोंसे युक्त अथवा लोहू, हड्डी और केशोंसे लाल, सफेद और काली ) बना डाली ॥ २८ ॥

( फिर क्रोधपूर्वक ) कैसे तुमने शिवजीके प्रसाद रूप इस परशुके शीलका परिशीलन नहीं किया ?

जिसके संग्रामभूमिमें प्राप्त होनेपर दुर्वार धाराञ्चलसे चूर्णित क्षत्रिय राजाओंके कण्ठोंके

क्षुण्णक्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत् ।
ताहग्वीरवरस्वयंवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद्द्यौरेव रेणूत्कटा ॥ २१ ॥

लक्ष्मणः—भगवन्! एतत्सत्यम्, यत्किल भवत्कुठारधाराञ्चलविल-सितेन नीरेणुका भूरभूदिति।

---

अत्र क्षुण्णक्षत्रकिशोरकण्ठरुधिरैः भूः नीरेणुकाऽभूत्। ताहग्वीरवरस्वयंवरपरस्वर्लोककन्याकरक्रीडापुष्करदामरेणुभिः द्यौरेव रेणूत्कटाऽभूदित्यन्वयः।

यत्र=यस्मिन्, परशाविति भावः। सङ्गराऽङ्गणभुवं=युद्धाऽजिरभूमिम्, 'अङ्गणं चत्वराऽजिरे।' इत्यमरः। क्रामति=प्राप्ते सति, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी। दुर्वारेत्यादिः=दुर्वारं (दुर्निवारम्) यत् धाराऽञ्चलम् (अग्रभाग-प्रान्तः) तेन क्षुण्णाः (चूर्णिताः) ये क्षत्रकिशोराणां (क्षत्रियतरुणानाम्) कण्ठाः (गलाः) तेषां रुधिरैः (लोहितैः), भूः=पृथिवी, नीरेणुका=धूलिरहिता, निर्गता रेणवो यस्याः सा। अभूत्=अभवत्। ताहग्वीरवरेत्यादिः=तादृशाः (तत्सदृशाः, युद्धनिषूदिता इति भावः) ये वीरवराः (शूरश्रेष्ठाः) तेषां स्वयंवरपराः (स्वयं-वरणतत्पराः) याः स्वर्लोककन्याः (स्वर्भुवनकुमार्यः) तासां करेषु (हस्तेषु) यानि क्रीडापुष्करदामानि (विलासकमलमाल्यानि) तेषां रेणुभिः (परागैः)। द्यौरेव=स्वर्ग एव, 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' इत्यमरः। रेणूत्कटा=परागव्याप्ता, अभूत्=सञ्जाता मदीयपरशोस्तीक्ष्णाऽग्रभागेन रणे निपातितानां क्षत्रकिशोरगल-रुधिरेण भुवो रेणुर्दूरीकृतः। नीरेणुकेत्यत्र परशुधारया रेणुकाकण्ठच्छेदरूपोऽर्थोऽपि ध्वन्यते। रणहतान् वीरान्स्वर्ललनाः पतित्वेन वृण्वत इति हि शास्त्रप्रसिद्धि-स्तत्तेषां मत्परशुधाराञ्चलनिपातितानां देवभूयंगतानां वीरक्षत्रियाणां वरणार्थं स्वर्ग-कुमारीकरक्रीडाकमलमालापरागैः स्वर्ग एव परागव्याप्तः संजातः। मत्परशोः कीदृश-मलौकिकं शीलमिति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

लक्ष्मण इति। नीरेणुका=निर्गता रेणुका यस्याः सा, रेणुकारहितेति भावः।

---

रुधिरोंसे भूमि नीरेणुका ( धूलिसे रहित, वा रेणुकासे रहित ) हो गई। युद्धनिहत वैसे वीरवरोंको स्वयंवरण करनेमें तत्पर देवकुमारियोंके क्रीडाकमलोंकी मालाओंके परागोंसे स्वर्ग ही व्याप्त हो गया ॥ २१ ॥

**लक्ष्मण**—भगवन्! यह सच है, जो कि आपके परशुके धाराञ्चलके विलाससे भूमि रेणुकारहित हो गई।

**जामदग्न्य**—आः, कथं रेणुकावृत्तान्तेन मर्म विध्यति । भवतु । (प्रकाशम्) अये क्षत्रियपोत ! अलमिह निरपराधे भवति मुधा परश्वधपातेन, तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव शातयति कुठारः ।

(नेपथ्ये)

अये जामदग्न्य, कथमतिप्रगल्भसे, तदिदमिदानीं भवच्छासनाय शरासनमानीयते ।

**जामदग्न्यः**—(विहस्य) कथमयं जनकः ? (उच्चैः) अये याज्ञवल्क्यशिष्य ! किं भवतः शरासनेन ? पद्मासनमेवावलम्बस्व । (पुनः सोल्लासम्) ।

---

जामदग्न्य इति । विध्यति = ताडयति । 'व्यध ताडने' इति धातोर्लट्, सम्प्रसारणम् ।

नेपथ्य इति । अतिप्रगल्भसे = अतिशयधाष्टर्यं दर्शयसि, भवच्छासनाय = त्वद्दण्डनाय ।

जामदग्न्य इति । उच्चैः = तारस्वरेण । याज्ञवल्क्यशिष्य = याज्ञवल्क्यान्तेवासिन्, अनेन सम्बोधनेन त्वं योगविद्यापर एव न तु वीरधर्मनिर्वहण पर इति द्योत्यते । शरासनेन = धनुषा, शरा अस्यन्तेऽनेनेति शरासनं, तेन, 'करणाऽधिकरणयोश्चे'ति करणे ल्युट् । पद्मासनं = चतुरशीतिसंख्यकेषु योगशास्त्रीयेष्वासनेष्वन्यतमासनं, तल्लक्षणं यथा—

'ऊर्वोरुपरि विन्यस्य सम्यक्पादतले उभे ।
अङ्गुष्ठौ च निबध्नीयाद्धस्ताभ्यां व्युत्क्रमात्तथा ॥
पद्मासनमिति प्रोक्तं योगिनां हृदयङ्गमम् ॥' इति ।

सोल्लासम् = सोपहासम् ।

---

जामदग्न्य—ओह ! यह किस प्रकारसे रेणुकाके वृत्तान्तसे मेरे मर्मस्थलमें ताडन करता है, अच्छा । (सुनाकर) अरे क्षत्रियबालक ! निरपराध तुम्हारे ऊपर व्यर्थ ही परशुप्रहारकी आवश्यकता नहीं है, इसलिये यह मेरा परशु स्वभावसे ही कठोरभाषी तुम्हारे गलेको ही छिन्न कर देता है ।

(नेपथ्यमें)

अरे जामदग्न्य ! आप बहुत ही ढिठाई दिखा रहे हैं, इस कारण आपको दण्ड देनेके लिए धनु लाया जाता है ।

**जामदग्न्य**—(हंसकर) क्या ये जनक हैं ? (ऊंचे स्वरसे) अरे याज्ञवल्क्यशिष्य ! आपको धनुसे क्या प्रयोजन है ? आप पद्मासन का ही अवलम्बन कीजिए । (फिर

युष्माकं भोः सुघटितबहुन्यस्तपद्माक्षकण्ठा
मिथ्योत्कण्ठा किमिति समिति क्षत्रियश्रोत्रियाणाम् ।
तेऽन्ये चञ्चत्करतलचलच्चण्डनिस्त्रिंशधारा-
धौताराातिद्विपमदमसीपङ्कपूराः प्रवीराः ॥ २० ॥

तदलं भवता, एतावेव तावत् क्षत्रियप्रवीरौ निर्वापयामि ।

युष्माकमिति । भोः सुघटितबहुन्यस्तपद्माक्षकण्ठाः ! क्षत्रियश्रोत्रियाणां युष्माकं समिति किमिति मिथ्योत्कण्ठा । चञ्चत्करतलचलच्चण्डनिस्त्रिंशधाराधौताऽरातिद्विपमदमसीपङ्कपूराः ते अन्ये प्रवीरा इत्यन्वयः ।

भोः = हे, सुघटितबहुन्यस्तपद्माक्षकण्ठाः = सुघटितानि ( सुसम्बद्धानि ) बहूनि ( अदभ्राणि ) न्यस्तानि ( स्थापितानि ) यानि पद्माक्षाणि ( पद्मबीजानि ), तानि सन्ति यस्मिन् सः, 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । तादृशः=कण्ठः (गलः) येषां ते, तत्सम्बोधने । हे पद्मबीजभूषितकण्ठदेशा योगाभ्यासिन इति भावः । क्षत्रियश्रोत्रियाणां = क्षत्रियेषु ( राजन्येषु ) श्रोत्रियाणां ( वैदिकानाम् ) युष्माकं = भवतां, समिति = संग्रामे, किमिति = किमर्थं, मिथ्योत्कण्ठा = मुधोत्कलिका, निष्फलमौत्सुक्यमिति भावः ।

हे वैदेहाः ! भवन्तो योगाऽभ्यासिनः तत्राऽपि श्रोत्रिया अतो भवतां संग्रामविषयकोऽभिलाषो निरर्थक इत्याकूतम् । तर्हि समिति के वीरा इति पृच्छां शमयति—तेऽन्य इति । चञ्चत्करतलेत्यादिः = चञ्चत् ( चलत् ) यत् करतलं ( हस्ततलम् ) तस्मिश्चलन् ( संचलन् ) चण्डः ( तीक्ष्णः ) यो निस्त्रिंशः ( खड्गः ) तस्य धारा ( अग्रभागः ) तया धौतः ( प्रक्षालितः ) अरातीनां ( शत्रूणाम् ) द्विपानां ( हस्तिनाम् ) मदः ( दानजलम् ) एव मसीपङ्कः ( कज्जलकर्दमः ) तस्य पूरः ( प्रवाहः ) यैस्ते । ते = तादृशाः अन्ये = अपर एव, न भवन्त इति भावः । प्रवीराः = महावीराः । अत्र रूपकाऽलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ २० ॥

तदलमिति । क्षत्रियप्रवीरौ=राजन्यमहावीरौ, रामलक्ष्मणाविति भावः । निर्वापयामि = निर्वाणौ करोमि, हन्मीति भावः ।

उपहासके साथ ) पद्मबीजोंकी मालाको गलेमें धारण करनेवाले हे महाराज ! क्षत्रियोंमें वैदिक होकर आपको फिर क्यों युद्धमें झूठमूठ उत्सुकता हो रही है ? चञ्चल करतलमें चलते हुए प्रचण्ड खड्गकी नोकसे शत्रुगजोंके मदजलरूप कज्जलकर्दमके प्रवाहको धोनेवाले वे दूसरे ही महावीर हैं ( आप नहीं ) ॥ २० ॥

इस कारणसे आपकी आवश्यकता नहीं है । इन दोनों क्षत्रिय महावीरोंको ही शान्त कर देता हूं ।

( पुनर्नेपथ्ये )

अये जामदग्न्य, कथं तथा शमधनसमृद्धस्य जमदग्नेस्तनयोऽपि शमदुर्गतोऽसि संवृत्तः ?

जामदग्न्य—कथमयमाङ्गिरसः ? ( उच्चैः ) अये शतानन्द, कथय तावत् , इदमेवं विधं शमाभिधानं कस्मादुपात्तम् ? भगवतो गौतमाद्वा गोत्रभिदो वा ? ( नेपथ्ये )

अये क्षत्रियापुत्र ! निजजननीकण्ठताण्डवितकुठार, कुलाङ्गार, कथं तपस्तुङ्गमाङ्गिरसमपि कुलं कलङ्कयसि ?

जामदग्न्य—आः, पाप ! कुलपांसन ! पांसुलापुत्र ! कथं भृगूणामग्रे तपस्ताण्डवं मण्डयसि ?

---

पुनरिति । शमधनसमृद्धस्य=शमः ( शान्तिः, अन्तरिन्द्रियनिग्रह इति यावत् ) एव धनं ( द्रव्यम् ) तेन समृद्धस्य (सुसम्पन्नस्य)। शमदुर्गतः=शान्तिदरिद्रः ।

जामदग्न्य इति । उपात्तम् = गृहीतम् गौतमात् = स्वपितुः । गौतमः कोपाकुलः सन् इन्द्रदूषितां स्वपत्नीमहल्यां शापात्पाषाणमयीं चकारेत्यर्थस्य ध्वनेः शतानन्द-स्य व्यभिचारिणीपुत्रत्वं द्योत्यते । गोत्रभिदः = इन्द्रात् ।

नेपथ्य इति । क्षत्रियापुत्र = क्षत्रजातीयासुत, परशुरामस्य मातुः रेणुकाया क्षत्रिया-त्वाद्विप्रसूक्तिः । निजजननीकण्ठताण्डवितकुठार = निजजनन्याः ( स्वमातुः रेणुका-याः ) कण्ठे ( गळे ) ताण्डवितः ( हननार्थं नर्तितः ) कुठारः ( परशुः ) येन, तत्स-म्बुद्धौ । तपस्तुङ्गं = तपश्चरणोन्नतम् । कलङ्कयसि = कलङ्कितं करोषि ।

जामदग्न्य इति । पाप = पापमस्याऽस्तीति पापः = पापी, तत्सम्बुद्धौ, 'अर्श-

---

( फिर नेपथ्यमें )

अरे जामदग्न्य ! उस प्रकारसे शान्तिरूप धनसे समृद्ध जमदग्निके पुत्र होकर भी आप कैसे शान्तिमें दरिद्र बन गये हैं ?

जामदग्न्य—क्या ये आङ्गिरस ( शतानन्द ) हैं ! ( ऊँचे स्वरसे ) अरे शतानन्द ! यह तो बतलाओ, यह ऐसा शान्तिनामक पदार्थ तुमने किससे पाया ? भगवान् गौतमसे पाया ? भगवान् गौतमसे या इन्द्रसे ? ( नेपथ्यमें )

अरे क्षत्रियापुत्र ! अपनी माताके कण्ठमें परशुका प्रहार करनेवाले ! कुलाङ्गार ! तुम कैसे तपस्यासे उन्नत आङ्गिरस वंशको भी कलङ्कित कर रहे हो ?

जामदग्न्य—ओह पापिन् ! वंशकलङ्क ! स्वैरिणीतनय ! कैसे भार्गवके आगे तपस्याके ताण्डवनृत्यको भूषित कर रहे हो ?

रामः—भगवन्, सकललोकविख्यातमिदं भृगूणामङ्गिरसां च कुलम्, तपोविशेषतस्तु भर्गशिष्यस्य । अत एव विज्ञापयामि—

तपः शान्तं चेतः, स्फटिकमणिमालापरिकरः
कुशाः कुण्डी दण्डः, सततमुटजावासनिरतिः ।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषी नाऽपि परशुः ॥ २१ ॥

---

आदिभ्योच्' इत्यच् । कुलपांसन = वंशकलङ्क । पांसुलापुत्र = स्वैरिणीतनय । भृगूणां = भृगोः गोत्राऽपत्यानि पुमांसो भृगवस्तेषां, भृगुवंशोत्पन्नानाम्, अस्माकमिति शेषः । अत्र 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'ति सूत्रेण प्राप्तस्याऽणो बहुत्वे 'अत्रिभृगुकुत्सवसिष्ठगोतमाऽङ्गिरोभ्यश्चे'ति लुक् । मण्डयसि = भूषयसि ।

राम इति । भर्गशिष्यस्य = शिवाऽन्तेवासिनः, 'हरः स्मरहरो भर्गः' इत्यमरः ।

तपः शान्तमिति । चेतः तपःशान्तं, स्फटिकमणिमालापरिकरः, कुशाः कुण्डी दण्डः, सततम् उटजावासनिरतिः । मुनीनां व एतत् समुचितम्, उदग्रं वचनं न (समुचितम्), वक्रभ्रूभङ्गो न (समुचितः) शरधनुषी न (समुचिते) परशुरपि न (समुचितः) इत्यन्वयः । चेतः = चित्तं, तपःशान्तं = तपसा (तपश्चरणेन) शान्तं (शान्तिसम्पन्नम्), स्फटिकमणिमालापरिकरः = विमलमणिमालाग्रहणयत्नः, 'यत्नाऽऽरम्भौ परिकरौ' इति त्रिकाण्डशेषः । कुशाः = दर्भाः, कुण्डी = कमण्डलुः, जलपात्रविशेषः । 'अस्त्री कमण्डलुः कुण्डी'त्यमरः । दण्डः = लगुडः, पलाशसम्बन्धीति भावः । एवं च—सततम् = अनारतम्, उटजाऽऽवासनिरतिः = उटजाऽऽवासे = (पर्णशालारूपनिवासस्थाने) निरतिः (तत्परता) । मुनीनाम् = ऋषीणां, वः = युष्माकम्, एतत् = इदं, पूर्वोक्तं तपःशान्तचेतस्त्वादिकमिति भावः, समुचितम् = उपयुक्तम्, एतत्प्रातिलोम्येन उदग्रम् = उन्नतं, तीक्ष्णमिति भावः, तादृशं वचनं = भाषितं, न = न समुचितं, वक्रभ्रूभङ्गः=कुटिलाक्षिलोमविकारः,

---

राम—भगवन्! भार्गव और आङ्गिरस इन दोनोंका कुल सब लोकोंमें प्रसिद्ध है, उसपर भी तपस्याविशेषसे शिवशिष्य परशुरामजीका कुल सब लोकोंमें प्रसिद्ध है । इसीसे विज्ञापन करता हूँ ।

चित्त तपश्चरणसे शान्त स्फटिकमणियोंकी मालाको लेनेमें यत्न, कुश, कमण्डलु, दण्ड और निरन्तर पर्णशालानिवासमें तत्परता आप ऐसे मुनियोंको यह उचित है न कि तीक्ष्ण वचन, न कुटिल भ्रूविकार और न बाण और धनु इसी प्रकार परशु भी उचित नहीं ॥ २१ ॥

( पुनः सविस्मयम् ) भवानेव तावद्विचारयतु ।

क्व परशुरशुभस्ते ? कुत्र गोत्रं पवित्रं ?
क्व धनुरिदमुदग्रं ? निर्मलं कुत्र शीलम् ? ।
घनसमरकराला कुत्र नाराचहेला ?
कुशकिसलयलीला कुत्र वा पर्णशाला ? ॥ ३२ ॥

जामदग्न्यः—कथमन्यमिव मां प्रणतिपात्रं मुनिमात्रं मन्यसे ?

---

न = न समुचितः, इत्थमेव—शरधनुषी = बाणकार्मुके, न = न समुचिते, उपसंहरति—परुषरपि = परुषवचोऽपि, न = नो समुचितः, मुनीनां भवतां मुनियोग्यं तपः शान्तचेतस्त्वादिकमेव परिग्राह्यं न तु कटुभाषिताप्रभृतिः क्षत्रियजनपरिग्रहयोग्यो व्यवहार इति भावः । शिखरिणी वृत्तम् ॥ ३१ ॥

पूर्वोक्तमेव द्रढयति—क्व परशुरिति । ( हे मुने ! ) अशुभः परशुः क्व ? पवित्रं ते गोत्रं कुत्र ? उदग्रम् इदं धनुः क्व ? निर्मलं शीलं कुत्र ? घनसमरकराला नाराचहेला कुत्र ? वा कुशकिसलयलीला पर्णशाला कुत्रेत्यन्वयः ।

हे मुने ! इति सम्बोधनपदमध्याहार्यम् । अशुभः = अमङ्गलरूपः, परशुः = कुठारः, क्व = कुत्र, एतद्वैपरीत्येन पवित्रं = पूतं, ते = तव, जामदग्न्यस्येति भावः । गोत्रं = कुलं, 'सन्ततिर्गोत्रजननकुलान्यभिजनाऽन्वयौ ।' इत्यमरः । कुत्र = क्व, उभयोर्महदन्तरमिति भावः, एवं परत्राऽपि । उदग्रम् = उन्नतम् , इदं = निकटस्थं, धनुः कार्मुकं, क्व = कुत्र, एतद्वैपरीत्येन निर्मलं = कलङ्करहितं, शीलं = पवित्रचरितं, 'शुचौ तु चरिते शीलम् , इत्यमरः । कुत्र = क्व । घनसमरकराला = घनसमरे ( भयङ्करयुद्धे ) कराला (कठोरा) नाराचहेला = शस्त्रक्रीडा, कुत्र = क्व, वा=अथवा, कुशकिसलयलीला = कुशानां ( दर्भाणाम् ) किसलयानां ( पल्लवानाम् ) लीला ( विलासः, निर्माणाऽर्थमिति शेषः ) यस्यां सा । तादृशी पर्णशाला = उटजः ) कुत्र = क्व । अतः क्षत्रयोग्यात्समरोद्यमान्निवर्ततां भवानिति भावः । अत्र विषमाऽलङ्कारः, तल्लक्षणमुदाहरणं च यथा चन्द्रालोके—'विषमं यद्यनौचित्यादनेकाऽन्वयकल्पनम् । क्वाऽतितीव्रतमाः सर्पाः क्वाऽसौ चन्दनभूरुहः ॥' इति । मालिनी वृत्तम् ॥ ३२ ॥

जामदग्न्य इति । प्रणतिपात्रं = प्रणामभाजनम् , अभिवादनीयमात्रमिति भावः ।

---

( फिर आश्चर्य पूर्वक ) आप ही विचार कीजिए ।

हे मुने ! अमङ्गल परशु कहाँ ? और पवित्र आपका गोत्र कहाँ ? उन्नत यह धनु कहाँ ? और निर्मल शील कहाँ ? भयङ्कर युद्धमें कठोर नाराचशस्त्रकी क्रीडा कहाँ ? और कुशों और पल्लवोंके विलाससे सम्पन्न पर्णशाला ही कहाँ ? ॥ ३२ ॥

जामदग्न्य—कैसे मुझे भी अन्य प्रणामपात्र ब्राह्मणके समान मान रहे हो ?

स एष जामदग्न्यः खल्वहं—

क्षुण्णक्षत्रकठोरकण्ठविगलत्कीलालधारासरि-
न्निर्वृत्ताभिषवस्य कृत्तशिरसां केशान्कुशान्कुर्वतः ।
गृह्णन् रक्तजलाञ्जलीन् पितृगणो यस्य क्षणं विस्मितः
सन्तोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥ ३३ ॥

तदलमिदानीमपि—

कृत्वा त्रिःसप्तकृत्वः समिति विशसनं पूर्वमुर्वीपतीनां
कृत्वान्यत्सप्तकृत्वः पुनरपि कदनं दुर्मदानां नृपाणाम् ।

---

आत्मपौरुषं वर्णयति—क्षुण्णक्षत्रेति । क्षुण्णक्षत्रकठोरकण्ठविगलत्कीलालधारास-रिन्निर्वृत्ताऽभिषवस्य कृत्तशिरसां केशान् कुशान् कुर्वतो यस्य पितृगणो रक्तजलाऽञ्ज-लीन् गृह्णन् सन्तोषेण जुगुप्सया करुणया त्रासेन हासेन च क्षणं विस्मित इत्यन्वयः ।

क्षुण्णक्षत्रेत्यादिः = क्षुण्णाः ( चूर्णिताः ) क्षत्राणां ( क्षत्रियाणाम् ) ये कठोरकण्ठाः ( कठिनगलाः ) तेभ्यो विगलन्ती ( प्रस्रवन्ती ) या कीलालधारासरित् ( रक्तप्रवाह-नदी ) तया निर्वृत्तः ( निष्पादितः ) अभिषवः ( स्नानम् ) येन, तस्य । कृत्तशिर-सां = कृत्तानि ( छिन्नानि ) यानि शिरांसि ( मूर्धानः ), तेषाम् । केशान्=वालान्, कुशान् = दर्भान् , कुर्वतः = विदधतः, यस्य = मम, पितृगणः = पित्रादिपूर्वजसमूहः, रक्तजलाऽञ्जलीन् = शोणिताऽञ्जलीन् , गृह्णन् = आददानः, सन्तोषेण = वरप्रतीकार-जनितया प्रीत्या, जुगुप्सया = हिंसादर्शनजनितया घृणया, करुणया = क्षत्रदुर्दशा-जनितया दयया, त्रासेन = बहुसूतक्षत्रियदर्शनोत्थेन भयेन, हासेन च = तृप्तिजनि-तेन यद्वा स्ववंशजजनपराक्रमाऽतिशयविलोकनजनितेन हास्येन च । क्षणं=कञ्चि-त्कालं, 'कालाऽध्वनोरत्यन्तसंयोग' इति द्वितीया । विस्मितः = विस्मययुक्तः, संजा-त इति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ३३ ॥

कर्तव्यं निरूपयति—कृत्वेति । पूर्वं समिति उर्वीपतीनां त्रिःसप्तकृत्वो विशसनं

---

मैं वह जामदग्न्य हूँ—

चूर्णित क्षत्रियोंके कठोर कण्ठोंसे बहती हुई रक्तप्रवाह नदीसे स्नान करनेवाले, काटे गये शिरोंके केशोंको कुश बनानेवाले जिस मेरे पितृगण रक्ताञ्जलियोंको ग्रहण करते हुए सन्तोषसे, घृणासे, दयासे 'त्राससे और हास्यसे भी कुछ समय तक आश्चर्ययुक्त हो गये थे ॥ ३३ ॥

उस बातको छोड़ दें, अभी भी—

पहले युद्धमें इक्कीस बार राजाओंका संहार कर फिर भी दुष्ट मदवाले राजाओंका

निर्माय क्ष्मापतीनां प्रतिसमरहतैरुत्तमैरुत्तमाङ्गैः-
कापालीमक्षमालां झटिति भगवतो भैरवस्यार्पयामि ॥३४॥

रामः—
प्रसीद त्वं, रोषाद्विरम, कुरु मे चेतसि गिरं,
चिरं यत्नायासैर्बहुभिरिह वारैर्जितमभूत् ।

कृत्वा पुनरपि दुर्मदानां नृपाणाम् अन्यत् सप्तकृत्वः कदनं कृत्वा प्रतिसमरहतैः क्ष्मापतीनाम् उत्तमैः उत्तमाङ्गैः भगवतो भैरवस्य कापालीम् अक्षमालां झटिति अर्पयामीत्यन्वयः ।

पूर्वं = प्राक्, समिति = सङ्ग्रामे, उर्वीपतीनां = भूपतीनां, त्रिःसप्तकृत्वः=एकविंशतिवारं, विशसनं = हिंसनं, कृत्वा = विधाय, पुनरपि = भूयोऽपि, दुर्मदानां = दर्पोद्धतानां, नृपाणां = राज्ञाम्, अपरम् =अन्यत्, पूर्वविलक्षणमिति भावः । सप्तकृत्वः=सप्तवारं, 'संख्यायाः क्रियाऽभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुच् । कदनं= वधं, कृत्वा = विधाय, प्रतिसमरहतैः=प्रतियुद्धाकृष्टैः, क्ष्मापतीनां=राज्ञाम्, उत्तमैः= उत्कृष्टैः, उत्तमाङ्गैः = शिरोभिः, भगवतः = ऐश्वर्यादिसम्पन्नस्य, भैरवस्य=शङ्कराऽवतारस्य, भैरवायेति भावः, 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येवे'ति नियमाच्चतुर्थ्यर्थे षष्ठी । कापालीं = नरकपालमयीम्, अक्षमालां = रुद्राक्षमालां, झटिति = शीघ्रम्, अर्पयामि = समर्पयिष्यामि, 'वर्तमानसामीप्ये वर्तमानवद्वे'ति भविष्यत्यर्थे लट् । अहं पुनरपि वारसप्तकं यावत् दुर्मदान् नृपतीन् हत्वा तन्मुण्डमालां भगवते भैरवाय समर्पयिष्यामीति भावः । स्रग्धरा वृत्तम् ॥ ३४ ॥

रामः पुनः परशुरामं प्रसादयितुं यतते—प्रसीदेति । हे भृगुतिलक ! त्वं प्रसीद, रोषात् विरम, चेतसि मे गिरं कुरु, चिरम् आयासैः बहुभिः वारैः यत् यशोवृत्तं जितम् अभूत्, तत् कितवो वित्तम् इव एतस्मिन् वारे विक्षोभतरलं मुधा मा हारयेत्यन्वयः ।

हे भृगुतिलक = हे भार्गववंशभूषण !, त्वं, प्रसीद प्रसन्नो भव, अतो रोषात् = कोपात्, 'विरमे'ति पदेन योगे 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति पञ्चमी । विरम = विरतो भव, एवं च चेतसि = चित्ते, मे = मम, गिरं = वाणीम्, अनुनयात्मिकामिति भावः । कुरु = विधेहि, निधेहीति भावः । अचिरं = बहुकालं

सात बार वधकर प्रतियुद्धमें आकृष्ट राजाओंके उत्तम शिरोंसे भगवान् भैरवजीको नरकपालमयी अक्षमाला झटपट समर्पित करता हूँ ॥ ३४ ॥

राम—हे भार्गववंशभूषण ! आप प्रसन्न हों, क्रोधसे विरत हों, चित्तमें मेरी बात रक्खें । बहुत कालतक अनेक प्रयत्नोंसे और कई बार भी आपने यशः पूर्ण चरित्रको

यशोवृत्तं, वित्तं कितव इव विक्षोभतरलं
तवैतस्मिन्वारे भृगुतिलक ! मा हारय मुधा ॥ ३५ ॥

जामदग्न्यः—कथं रे हारयिष्यामि ? ( विमृश्य ) अथवा—
किं नाम वाग्डम्बरपण्डितेषु युष्मासु वाणीः प्रचुराः प्रयुञ्जे।
बाणान् रिपुप्राणहरान्मदीयान् सर्वेऽपि यूयं सहिताः सहध्वम् ॥३६॥

रामः—किमन्यैः, नन्वहमेव हरशरासनारोपणोपनीतजानकीकरकि-

---

यावत्, आयास क्रियाविशेषणमिदम्। आयासैः=प्रयत्नैः, बहुभिः=अधिकैः, वारैः=पर्यायैः, यत्, यशोवृत्तं=यशः पूर्ण चरित्रं, जितं=स्वायत्तीकृतम्, अभूत्, तत्=यशोवृत्तं, कितवः=द्यूतकृत्, 'धूर्तोऽक्षदेवी कितवोऽक्षधूर्तो द्यूतकृत्समाः। इत्यमरः। वित्तम् इव=धनम् इव, एतस्मिन्=अस्मिन्, वारे=अवसरे' 'निवहाऽवसरौ वारौ' इत्यमरः। विक्षोभतरलं=विक्षोभेण (मनश्चाञ्चल्येन) तरलं (चञ्चलम्) यथा स्यात्तथा। मुधा=व्यर्थं, मा हारय=नो विनाशय, अथ यावत्प्रयासाऽतिशयैः बहुवारैश्च सञ्चितं यशोवृत्तमस्मिन्नवसरे चाञ्चल्याऽतिशयप्रदर्शनेन मा विनाशं नैषीरिति भावः। अत्रोपमाऽलङ्कारः। शिखरिणी वृत्तम् ॥ ३५ ॥

किं नामेति। वाग्डम्बरपण्डितेषु युष्मासु प्रचुरा वाणीः किं नाम प्रयुञ्जे? सर्वेऽपि यूयं सहिताः (सन्तः) रिपुप्राणहरान् मदीयान् बाणान् सहध्वमित्यन्वयः।

वाग्डम्बरपण्डितेषु=वाचां (वाणीनाम्) डम्बरः (आडम्बरः) तस्मिन् पण्डिताः (कुशलाः), तेषु। तादृशेषु युष्मासु=भवत्सु रामादिष्विति भावः। प्रचुराः=बह्वीः, वाणीः=वाचः, किं नाम=किमर्थं, प्रयुञ्जे=प्रयुनज्मि, सर्वेऽपि=सकला अपि, यूयं=रामादयः, सहिताः=समवेताः सन्तः, रिपुप्राणहरान्=शत्रुप्राणहरान्, मदीयान्=मत्सम्बन्धिनः, बाणान्=शरान्, सहध्वं=मर्षत। वागाडम्बरमात्रनिपुणान्सर्वानपि युष्मान्क्षणेनैव निपातयिष्यामीति भावः। इन्द्रवज्रा वृत्तम् ॥ ३६ ॥

राम इति। हरेत्यादिः=हरशरासनस्य (शिवकार्मुकस्य) आरोपणेन (सज्जी

---

स्वाधीन किया था, उसे जुआरी जैसे धनको गंवाता है उसीतरह इसबार चञ्चलतासे विनष्ट मत करें ॥ ३५ ॥

जामदग्न्य—क्यों रे! मैं कैसे विनष्ट कराऊंगा ? (विचार कर) अथवा—
वचनोंके आडम्बरमें पण्डित तुमलोगोंसे अधिक बात क्या करूं? तुमलोग सबके सब इकट्ठे होकर शत्रुके प्राणोंको हरण करनेवाले मेरे बाणोंको सह लो ॥ ३६ ॥

राम—औरोंका क्या प्रयोजन है ? मैं ही शिवधनुको उठानेसे प्राप्त सीताके हस्त-

सलयलीलानिहितकमलमालिकामिलदलिपटलकोलाहलसङ्गीतयशःपरिम-
लेन वक्षःस्थलेन सहिष्ये ।

जामदग्न्यः—

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रस्त्वं कतरः, स मे तव गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं-

---

कलनेन ) उपनीता ( प्राप्ता ) या जानकी ( सीता ) तस्याः करौ ( हस्तौ ) किस-लये ( पल्लवे ) इव, ताभ्यां लीलया ( विलासेन ) निहिता ( स्थापिता ) या कम-लमालिका ( पद्मस्रक् ) तस्यां मिलत् ( संगच्छमानम् ) यत् अलिपटलं ( भ्रमरस-मूहः ) तस्य कोलाहलः ( कलकलः ) एव संगीतं ( गानम् ) तदेव यशः परिमलः ( कीर्तिसुगन्धः ) यस्मिंस्तेन । तादृशेन वक्षःस्थलेन = उरःस्थलेन । अन्यस्याऽ-पराधाऽभावादहमेव भवत्प्रयुक्तान्बाणान्सहिष्य इति भावः । अत्रैवपदेन अन्ययोग-व्यवच्छेदः सूच्यते ।

ईशेति । ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति व्यग्रः त्वं कतरः ? स तव गुरुः मे शरान् सोढुं न शक्तः । तुष्टात् इष्टवरप्रदात् भगवतः पद्मासनात् कौशिको मन्नाराचभयात् आर्ह्नीं तनुं सादरम् अयाचत किलेत्यन्वयः ।

ईशत्यक्तेत्यादिः = ईशेन ( शिवेन ) त्यक्तः ( मुक्तः ) पुराणः ( प्राचीनः, जीर्ण इति भावः ) यः चापः ( धनुः ) तस्य दलनं ( खण्डनम् ) तेन प्रोद्भूतः ( समु-त्पन्नः ) यो गर्वः ( अवलेपः ) तेन या उद्धतिः ( उद्धतता ) तया व्यग्रः (आकुलः), जीर्णहरधनुर्भञ्जनेनैव गर्वाकुल इति भावः । तादृशस्त्वं, कतरः = कः, किं बहुना— सः = विख्यातविक्रम इति भावः, तव = भवतः, गुरुः=धनुर्विद्याचार्यः, विश्वामित्र इति भावः । सोऽपि, मे=जामदग्न्यस्य शरान् = बाणान् , सोढुं=मर्षितुं, न शक्तः= न समर्थः, धनुर्विद्याचार्यो विख्यातविक्रमस्त्वद्गुरुः = कौशिकोऽपि मद्बाणसहनाऽ-समर्थः किं पुनस्त्वमिति भावः ।

कौशिकस्यास्मदायुधमर्षणाऽसामर्थ्यं प्रतिपादयति—तुष्टादिति । तुष्टात्=प्रीतात्,

---

पल्लवोंके विलाससे स्थापित कमलमालामें संगत होनेवाले भ्रमरसमूहके कोलाहल संगीत रूप कीर्तिसुगन्धसे युक्त उरःस्थलसे सह लूंगा ।

जामदग्न्य—शिवजीसे परित्यक्त जीर्ण धनुको तोड़नेसे उत्पन्न गर्वके औद्धत्यसे आकुल तुम कौन हो ? तुम्हारे गुरु ( विश्वामित्र ) भी मेरे बाणोंको सहनेमें समर्थ नहीं है । सन्तुष्ट और अभीष्ट वर देनेवाले भगवान् ब्रह्माजीसे विश्वामित्रजीने मेरे नाराचोंके

मन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः॥ ३७॥

रामः—( स्वगतम् ) कथं भगवन्तं विश्वामित्रमधिक्षिपति ? तदतः परं न सहिष्ये। ( प्रकाशम् )

ईशात्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रोऽहं कतरः स ते मम गुरुः सोढुं न शक्तः शरान्।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
त्वन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः॥ ३८॥

( इति पदव्यत्यासेन पुनः श्लोकं पठति। पुनः साटोपम् ) अये जामदग्न्य,

---

उपासनयेति शेषः। अत एव इष्टवरप्रदात् = अभीष्टवरप्रदायकात्, भगवतः = सर्वैश्वर्यसम्पन्नात्, पद्मासनात् = कमलासनात्, ब्रह्मण इति भावः। कारकस्य विवक्षाऽधीनत्वात् 'अकथितं चे'ति कर्मत्वाऽभावान्न द्वितीया, कौशिकः = विश्वामित्रः, कुशिकस्याऽपत्यं पुमानिति 'ऋष्यन्धकवृष्णिकुरुभ्यश्चे'त्यण्। मन्नाराचभयात् = मत्प्रक्ष्वेडनभीतेः, 'प्रक्ष्वेडनास्तु नाराचा' इत्यमरः। सर्वलोहमयः शरविशेषो नाराचः। ब्राह्मीं = ब्राह्मणसम्बन्धिनीं, तनूं = शरीरं, 'स्त्रियां मूर्तिस्तनुस्तनूः' इत्यमरः। अयाचत = याचितवान्। किलेति सम्भावनायाम्। ब्रह्मवधस्य निषिद्धत्वात्कौशिकः पितामहं ब्राह्मणशरीरमयाचतेति भावः। अत्र कौशिकस्य ब्राह्मणशरीरयाचनाऽसम्बन्धेऽपि सम्बन्धत्वकथनादतिशयोक्तिरलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ३७॥

राम इति। अधिक्षिपति = निन्दति।

ईशात्यक्तेति। गुरुनिन्दामसहमानो रामः पूर्वार्द्धे 'त्वमि'त्यस्य स्थाने 'अहम्' इति पदं 'स मे तवे'त्यत्र 'स ते ममे'ति पदानि निवेश्योत्तरार्द्धे च 'म'दित्यस्य स्थाने 'त्व'दिति पदं निवेश्य प्रश्नरूपेण तमेव श्लोकं पठति। अतः प्रायेण व्याख्यातपूर्वत्वान्निगदव्याख्यातमेतत्पद्यम्॥ ३८॥

इतीति। पदव्यत्यासेन = शब्दपरिवर्तनेन। साटोपं = साहङ्कारं यथा तथा।

---

भयसे आदरपूर्वक ब्राह्मणशरीरकी याचना की थी॥ ३७॥

**राम**—( मन ही मन ) क्यों ये भगवान् विश्वामित्रकी भी निन्दा कर रहे हैं ? इस कारण अब इससे अधिक नहीं सहूंगा। ( सुनाकर )

'ईशात्यक्त' इत्यादि ३७ वें पद्यमें पूर्वार्द्धमें 'आकुल तुम' के स्थानमें 'आकुल मैं' 'तुम्हारे गुरु' के स्थानमें 'मेरे गुरु' इन पदोंको। उत्तरार्द्धमें 'मेरे नाराचोंके' बदले 'तुम्हारे नाराचोंके' पद रखकर तीनों वाक्योंमें प्रश्नरूप दरसाते हैं॥ ३८॥

(इसप्रकार पदपरिवर्तन कर फिर श्लोक पढ़ते हैं। फिर अहङ्कारपूर्वक) अरे जामदग्न्य!

तत्कोदण्डं कुलिशकठिनं भग्नमेतेन भग्नं
मग्नं शल्यं तव हृदि महन्मग्नमेतावता किम् ?
त्रैयक्षं वा भवतु, यदि वा नाम नारायणीयं
नेतत् किञ्चिद्गणयति स मे दुर्मदो दोर्विलासः ॥२९॥

जामदग्न्यः,—साधु रे क्षत्रियपोत, साधु, यत्किल जामदग्न्यनाम्न-ख्यण्डधाम्नः पुरतः खद्योत इव विद्योतसे। किमात्थ रे किमात्थ ?

---

तत्कोदण्डमिति। कुलिशकठिनं तत् कोदण्डम् भग्नं भग्नम् एतेन किम्। तव हृदि महत् शल्यं मग्नं मग्नम्। एतावता किम्? एतत् त्रैयक्षं वा भवतु नाम, यदि वा नारायणीयं, स मे दुर्मदो दोर्विलासः एतत् किञ्चित् न गणयतीत्यन्वयः।

कुलिशकठिनं = वज्रकठोरं, तत् = प्रसिद्धं, कोदण्डं = धनुः, भग्नं = खण्डितं, संभ्रमे द्विरुक्तिः। एतेन = धनुर्भञ्जनेन, किं = काऽऽपत्तिः, न काऽपीति भावः। तथा च तव = भवतः, हृदि = हृदये, महत् = विशालं, शल्यं = कीलकं, दुःखकीलकमिति भावः, मग्नं मग्नं = कीलितं, सम्भ्रमे द्विरुक्तिः। पुस्तकान्तरे पूर्वस्य 'मग्न' स्थाने 'भुग्नम्' इति पाठस्तत्र कुटिलमित्यर्थः। एतावता = एतत्परिमाणेन कार्येण, कोदण्डभञ्जनेन त्वद्हृदयाधिकरणकशल्यप्रवेशेन चेति भावः। किं = काऽऽपत्तिः, न काऽपीति भावः। एतत् = मद्भग्नं धनुः, त्रैयक्षं वा भवतु नाम = शैवं वाऽस्तु नाम। त्रीणि अक्षीणि यस्य स त्र्यक्षः, 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति समासान्तः षच्। त्र्यक्षस्येदं त्रैयक्षं, 'तस्येद'मित्यण्' 'न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्' इत्यैजागमः। नामेति सम्भावनायाम्। यदि वा = अथ वा, नारायणीयं = नारायणसम्बन्धि, भवतु नामेति शेषः। परं, सः = प्रसिद्धः, मे = मम, दुर्मदः = गर्वपरिपूर्णः, दोर्विलासः = बाहुविलसनं, 'भुजबाहू प्रवेष्टो दोः'रित्यमरः। एतत् = इदं। किञ्चित् = किमपि, न गणयति = नो विचारयति। धनुषि भग्नेऽपि कस्येदं धनुरेतत्परिणामः कीदृशो भविष्यतीति मदीयो बाहुविलासो न किमपि विमृशतीति भावः। मन्दाक्रान्ता वृत्तम् ॥ २९ ॥

जामदग्न्य इति। क्षत्रियपोत = क्षत्रबालक, 'पोतः पाकोऽर्भको डिम्भः पृथुकः

---

वज्रतुल्य कठोर वह धनु टूट गया तो टूट गया, इससे क्या ? आपके हृदयमें विशाल दुःख कीलक गड़ गया तो गड़ गया इतनेसे क्या ? वह धनु शिवजीका हो या नारायणका हो, पर मेरा गर्वपूर्ण बाहुविलास यह कुछ भी नहीं गिनता है ॥ २९ ॥

जामदग्न्य—वाह रे क्षत्रियके बच्चे ! वाह ! जो कि तुम जामदग्न्यनामक सूर्यके आगे जुगनूकी तरह चमक रहे हो ।

रामः—( तदेव पठति ) नन्विदं भूयोऽप्युच्यते ( पुनस्तदेव पठति )।

जामदग्न्यः—साधु स्मारितोऽस्मि।

रामः—किं तत् ?

जामदग्न्यः—

करावाताद्विष्णोस्तरलवनमालापरिमल-
भ्रमद्भृङ्गध्वानद्विगुणितविकासः समजनि।
स यस्य ज्याघोषः सुररिपुवधूवर्गरुदित-
ध्वनिस्वाध्यायानां प्रणव इव तत्कार्मुकमिदम् ॥४०॥

---

खावकः शिशु'रित्यमरः। चण्डधाम्नः=प्रचण्डतेजसः, सूर्यस्येति भावः। खद्योतः=ज्योतिरिङ्गणः। सूर्यसकाशे खद्योतविलसनमिव मदन्तिके त्वद्गर्वप्रकाशनमिति भावः।

राम इति। भूयोऽपि=पुनरपि।

जामदग्न्य इति। स्मारितः=कारितस्मरणः।

स्मारितविषयं सूचयति—करावातादिति। विष्णोः करावातात् तरलवनमालापरिमलभ्रमद्भृङ्गध्वानद्विगुणितविकासः सुररिपुवधूवर्गरुदितध्वनिस्वाध्यायानां प्रणव इव यस्य स ज्याघोषः इदं तत् कार्मुकमित्यन्वयः।

विष्णोः=नारायणस्य, करावातात्=हस्ताहननात्, तरलवनमालेत्यादिः=तरला ( चञ्चला ) या वनमाला ( वनगुम्फितपुष्पस्रक्, यद्वा आजानुलम्बिनी माला ) तस्याः परिमलेन ( सौरभेण ) भ्रमन्तः ( विचलन्तः ) ये भृङ्गाः ( भ्रमराः ) तेषां ध्वानः ( स्वनः ) तेन द्विगुणितः ( द्विगुणीकृतः ) विकासः ( विस्तारः ) यस्य सः। एवं च सुररिपुवधूवर्गरुदितध्वनिस्वाध्यायानां=सुररिपूणां ( दैत्यानां, विष्णुहतानामिति भावः ) यो वधूवर्गः ( पत्नीसमूहः ) तस्य रुदितध्वनयः ( रोदनशब्दाः ) एव ये स्वाध्यायाः ( वेदाः ), तेषाम्। प्रणव इव=ओङ्कार इव। यस्य=

---

क्या कहते हो रे क्या कहते हो ?

राम—( उसी श्लोकको पढ़ते हैं ) इसे मैं फिर भी कहता हूं ( फिर उसी श्लोकको पढ़ते हैं। )

जामदग्न्य—अच्छा स्मरण कराया।

राम—वह क्या ?

जामदग्न्य—विष्णुके करावातसे चञ्चल वनमालाकी सुगन्ध से घूमनेवाले भ्रमरोंके शब्दसे दुगुना विस्तारवाला, दैत्यपत्नियोंके रोनेके शब्दरूप वेदोंके प्रणव सदृश जिस ( धनु ) की प्रत्यञ्चाका टङ्कार है, यह वैसा धनु है ॥ ४० ॥

रामः—

करपङ्केरुहक्रोडे क्रीडितं येन शार्ङ्गिणः ।

तदेतत् ?

जामदग्न्यः—

अथ किम् ? यदि शक्तोऽसि गृहाण विगृहाण वा ॥ ४१ ॥

रामः—गृह्णामि ।

जामदग्न्यः—तदेहि, बाष्पायमाणभवद्बन्धुजनबन्धुरां वसुन्धरामति-

---

भगवतो विष्णोः कार्मुकस्य, सः = प्रसिद्धः, ज्याघोषः = मौर्वीशब्दः, इदं = सन्निकृष्टस्थितं, तत् = प्रसिद्धं, कार्मुकं = धनुः, अस्तीति शेषः । यथा—

'ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं पुरस्ताच्च विशीर्यति ॥' ( २।७२ )

इति मन्वनुशासनात् वेदारम्भे प्रणवस्य प्रागुच्चारणं भवति तथैव विष्णुहस्तस्थितस्य यस्य कार्मुकस्य शिञ्जिनीशब्दो दैत्यपत्नीरोदनस्योपक्रमरूपो भवति, इदं तदेव समुद्दण्डं विष्णुकोदण्डमिति भावः । अत्र ध्वनिषु स्वाध्यायानामारोपाद्रूपकालङ्कारः शिखरिणीवृत्तम् ॥ ४० ॥

करेति । येन शार्ङ्गिणः करपङ्केरुहक्रोडे क्रीडितमिति पूर्वार्द्धान्वयः ।

येन = धनुषा, शार्ङ्गिणः = विष्णोः, करपङ्केरुहक्रोडे = हस्तकमलमध्यभागे, पङ्के रोहतीति पङ्केरुहम्, 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्ययः । 'तत्पुरुषे कृति बहुलम्' इत्यलुक्समासः । कर एव पङ्केरुहं, तस्य क्रोडे । क्रीडितं = विलसितम् । अत्र रूपकाऽलङ्कारः ।

रामस्य प्रश्नरूपोक्तिरियम् ।

अथ किमिति । अथ किम् ? शक्तोऽसि यदि, गृहाण । वा विगृहाणेत्युत्तरार्धान्वयः ।

अथ किं = तथैव, पूर्वोक्तस्वीकृतिद्योतकमव्यययुगलम् । शक्तोऽसि यदि = समर्थोऽसि चेत्, गृहाण = उपादत्स्व, धनुरिति शेषः । वा = अथवा, पक्षान्तर इति भावः । विगृहाण = विग्रहं कुरु, मया सह संग्रामं कुर्विति भावः । परशुरामस्योत्तररूपोक्तिरियम् । अनुष्टुब्वृत्तम् ॥ ४१ ॥

जामदग्न्य इति । बाष्पायमाणभवद्बन्धुजनबन्धुरां = बाष्पायमाणाः ( बाष्पमुद्-

---

राम—जिसने विष्णुके करकमलके मध्यभागमें क्रीडा की थी ! वह यह है क्या ?

जामदग्न्य—और क्या ? समर्थ हो तो लेलो वा युद्ध करो ॥ ४१ ॥

राम—लेता हूँ ।

जामदग्न्य—तब आओ । आँसू गिरानेवाले तुम्हारे बान्धवोंसे उन्नत और आनत

क्रम्य समरक्षमां क्षमामवतरामः ।

( इति निष्क्रान्तौ )

**लक्ष्मणः**—( विलोक्य सहर्षं सकौतुकम् )

मा शाम्भवं धनुरिवेदमपि प्रयातु
भङ्गप्रसङ्गमिति मन्दचलद्भुजेन ।
आर्येण कार्मुकमपीदमहो सहेलं
चक्रीकृतं भगवतो गरुडध्वजस्य ॥ ४२ ॥

अहो ! कौतुकम् ।

---

मन्तः, 'बाष्पोष्मभ्यामुद्वमने' इति क्यङन्तान्लटः शानच् ) भवद्बन्धुजनाः ( स्वकुटुम्बजनाः ) तैर्बन्धुराम् ( उन्नतानताम् ) । वसुन्धरां = भुवम् , अतिक्रम्य = परित्यज्य, समरक्षमां = युद्धोचिताम् ।

क्षमां = पृथिवीम् । रङ्गभूमौ युद्धदर्शनस्य भरताचार्येण निषिद्धत्वादन्यत्रगमनं संगच्छते ।

रामकर्तृकविष्णुकोदण्डानमनं वर्णयति—मा शाम्भवमिति । शाम्भवं धनुरिव इदमपि भङ्गप्रसङ्गं मा प्रयातु इति मन्दचलद्भुजेन आर्येण भगवतो गरुडध्वजस्य इदं कार्मुकमपि सहेलं चक्रीकृतम् । अहो ! इत्यन्वयः ।

शाम्भवं = शैवं, धनुरिव = कार्मुकमिव, इदमपि = निकटस्थितं नारायणधनुरपि, भङ्गप्रसङ्गं = खण्डनाऽवसरं, मा प्रयातु = न प्राप्नोतु, इति = इत्थं विचार्य, मन्दचलद्भुजेन = मन्दं ( मन्थरं यथा स्यात्तथा, भङ्गभीत्या न सवेगमिति भावः ) चलन्तौ ( संचलन्तौ ) भुजौ ( बाहू ) यस्य सः, तेन आर्येण = पूज्येन, रामेणेत्यर्थः। भगवतः = षड्विधैश्वर्यसम्पन्नस्य, गरुडध्वजस्य = विष्णोः, इदं=निकटस्थितं कार्मुकमपि = धनुरपि, सहेलम् = अनायासं, चक्रीकृतम् = आनमितम् , अहो = आश्चर्यम् वसन्ततिलकावृत्तम् ॥ ४२ ॥

---

( ऊँच-नीच ) जमीनको छोड़कर युद्धके लिए उपयुक्त जमीनपर उतरें ।

( दोनों निकल पड़ते हैं )

**लक्ष्मण**—( देखकर हर्ष और कौतुकके साथ )

'शिवधनुके समान यह भी खण्डनके अवसरको प्राप्त न करे' ऐसा विचार कर धीरेसे बाहुओंको चलानेवाले आर्य ने भगवान् विष्णुके इस धनुको भी अनायास ही चक्रके समान कर दिया ( उठा लिया ) आश्चर्य है ॥ ४२ ॥

अहो ! कौतुक है ।

उन्निद्रश्चापचक्रादमरपरिहृतव्योमरन्ध्रावगाही
बाणोऽयं राघवस्य त्रिदशपुरगतिच्छेदकृद्भार्गवस्य ।
हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्य-
द्भृङ्गीसङ्गीतभङ्गीपरिचलितयशाः स्वर्गपर्यङ्कमेति ॥ ४३ ॥

( ततः प्रविशतो राम-जामदग्न्यौ )

---

उन्निद्र इति । चापचक्रात् उन्निद्रः अमरपरिहृतव्योमरन्ध्रावगाही भार्गवस्य त्रिदशपुरगतिच्छेदकृत् राघवस्याऽयं बाणो हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्यद्भृङ्गीसङ्गीतभङ्गीपरिचलितयशाः स्वर्गपर्यङ्कम् एतीत्यन्वयः । चापचक्रात्= कोदण्डमण्डलात्, नारायणस्येति शेषः । उन्निद्रः = निर्गतः, अमरपरिहृतव्योमरन्ध्राऽवगाही = अमरैः ( देवैः ) परिहृतं ( त्यक्तं, भयादिति शेषः । यद्व्योम ( आकाशम् ) तस्य रन्ध्रं ( छिद्रम् ) तदवगाहते ( प्रविशति ) तच्छीलः । भार्गवस्य = परशुरामस्य, त्रिदशपुरगतिच्छेदकृत् = त्रिदशानां ( देवानाम् ) पूः ( पुरी, स्वर्ग इत्यर्थः ) त्रिदशपुरम्, 'ऋक्पूरब्धूःपथामानक्षे' इति समासान्तोऽप्रत्ययः । त्रिदशपुरे गतिः ( गमनम् ) तच्छेदकृत् ( तत्प्रतिबन्धकारकः, परशुरामस्य स्वर्गगमननिरोधक इति भावः ) । तादृशो राघवस्य = रामचन्द्रस्य, अयं = निकटस्थः, बाणः= शरः, हंसीभूतः = हंस इवाचरन्, सुरस्त्रीकरकमलेत्यादिः = सुरस्त्रीणां ( देवललनानाम् ) कराः ( हस्ताः ) एव कमलानि ( पद्मानि ) तेभ्यो गलन्ति ( पतन्ति ) यानि पुष्पाणि, तेषां सौरभ्यं ( सुगन्धः ) तस्मिन् लुभ्यन्त्यः ( लोभं कुर्वत्यः ) या भृङ्ग्यः ( भ्रमर्यः ) तासां या सङ्गीतभङ्गी ( झङ्काररचना ) तया परिचलितं ( परितः प्रसृतम् ) यशः ( समज्ञा ) यस्य सः । एतादृशः सन्, राघवबाणस्य विधेयविशेषणमेतत् । स्वर्गपर्यङ्कं = सुरलोकरूपपल्यङ्कम् एति = गच्छति, आरोहतीत्यर्थः । स्वर्गपर्यन्तं राघवबाणयशः प्रसर्पतीति भावः । रामबाणस्याऽमोघत्वात्तेन सुरलोकाऽनभीप्सोः परशुरामस्य स्वर्गगतिरेव विहता न तु तीर्थगतिरिति पौराणिकी कथाऽनुसन्धेया । अत्र वृत्त्यनुप्रासः । स्रग्धरावृत्तम् ॥ ४३ ॥

---

धनुषमसे निकला हुआ, देवताओंसे परित्यक्त आकाशके छिद्रमें प्रवेश करनेवाला और परशुरामके स्वर्गगमनका प्रतिबन्धक रामचन्द्रका यह बाण, हंसके सदृश आचरण करता हुआ देवललनाओंके करकमलोंसे गिरते हुए फूलोंकी खुशबूमें लोभ करनेवाली भ्रमरियोंकी झङ्काररचनासे विस्तीर्ण यशवाला होकर स्वर्गरूप पर्यङ्क पर आरोहण कर रहा है ॥ ४३ ॥

( तब राम और जामदग्न्य प्रवेश करते हैं )

**जामदग्न्यः**—( रामं विलोक्य, स्वगतम् )

त्रिलोकी कोकीयं मुदमुदयतानेन लभते
विकासं वा धत्ते मुनिजनमनः पङ्कजवनम् ।
अये कोऽयं बालः कुवलयदलश्यामलतनु-
र्जगद्योनिर्ज्योतिः, कथमिदमहो तत् परिणतम् ॥४४॥

( पुनर्विमृश्य )

आपूरणाय पुरवैरिशरासनस्य
बाणात्मना परिणतः किल लीलया यः ।

---

जामदग्न्यस्य विजितत्वं सूचयति—त्रिलोकीति । उदयताऽनेन त्रिलोकी कोकी मुदं लभते, वा मुनिजनमनःपङ्कजवनं विकासं धत्ते । अये ! कुवलयदलश्यामलतनुः अयं बालः कः ? जगद्योनिः तत् ज्योतिः इदं कथं परिणतम् ? अहो ! इत्यन्वयः । उदयता = उदयं लभमानेन, अत्रोत्पूर्वकात् 'अय गतौ' इति धातोरनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति नियमेन परस्मैपदित्वाल्लटः शत्रादेशः । यद्वा 'इट किट कटी' त्यत्र प्रश्लिष्टस्य इधातोर्लटः शत्रादेशः । अनेन = रामचन्द्रेणेति, भावः, त्रिलोकी = लोकत्रयी, सैव कोकी = चक्रवाकी, व्यस्तरूपकम् । मुदं = हर्षं, लभते = प्राप्नोति । वा = अथ वा, मुनिजनमनःपङ्कजवनं = मुनिजनमनांसि ( ऋषिगणचित्तानि ) एव पङ्कजानि ( कमलानि ) तेषां वनं ( समूहः ), विकासं = प्रफुल्लत्वं, धत्ते = धारयति । अये = आश्चर्यम् । कुवलयदलश्यामलतनुः = कुवलयस्य ( नीलकमलस्य ) यद्दलं ( पत्रम् ) तदिव श्यामला ( श्यामवर्णा ) तनुः ( शरीरम् ) यस्य सः, अयं = निकटस्थः, बालः = किशोरः, कः = किमभिधानः । जगद्योनिः = लोककारणं, तत् = श्रुतिस्मृतिपुराणप्रसिद्धं ज्योतिः = ब्रह्मरूपं तेजः, 'आदित्यवर्णं तमसः परस्तात्' इति श्रुतेरिति भावः । इदं = निकटस्थबालरूपं सत्, कथं = केन प्रकारेण, परिणतं = परिणाममापन्नम् । अहो = आश्चर्यम् । अत्र रूपकमलङ्कारः । शिखरिणीवृत्तम् ॥४४॥

आपूरणायेति । यः पुरवैरिशरासनस्य आपूरणाय लीलया बाणात्मना परिणतः

---

**जामदग्न्य**—( रामको देखकर मन ही मन )

उदित होनेवाले इनसे त्रिलोकी रूप चकवाकी प्रसन्न हो रही है । अथवा मुनिजनोंके चित्तरूप कमल विकसित हो रहे हैं । अरे ! नीलकमलके पत्रके सदृश श्यामल शरीरवाला यह बालक कौन है ? जगत्‌का कारण वह ब्रह्मरूप तेज कैसे बालरूपमें परिणत हो गया ? आश्चर्य है ॥ ४४ ॥

( फिर विचारकर )

जो शिवधनुको पूर्ण करनेके लिए लीलासे बाणरूपमें परिणत हुए थे । वे ही पुराण पुरुष

आरोपणाय पुनरस्य स एव शङ्के
बालात्मना परिणतः पुरुषः पुराणः ॥ ४५ ॥

(प्रकाशम्)—वत्स ! इतः ।

(रामः सलज्जमधोमुखस्तिष्ठति)

आमदग्न्य—(उपसृत्य) (रामस्य चिबुकमुन्नमय्य च) किमिति लज्जास्थानम् ?

कमलबन्धुविलोचन ! यस्त्वया स्वमहिमोन्नमनैरधरीकृतः ।

---

किल । स एव पुराणः पुरुषः पुनरस्य आरोपणाय बालात्मनापरिणतः (इति) शङ्के इत्यन्वयः ।

यः = पुराणपुरुषः, पुरवैरिशरासनस्य = पुरवैरिणः (त्रिपुरारेः, शङ्करस्येत्यर्थः) शरासनस्य (धनुषः) आपूरणाय (पूर्णतासम्पादनाय), लीलया = अनायासेन, बाणात्मना = शरस्वरूपेण, परिणतः = परिणामं प्राप्तः, पुरा हरकर्तृकत्रिपुरवधप्रसङ्गे भगवान्विष्णुर्हरशररूपतामगादिति पौराणिकी कथाऽत्राऽनुसन्धेया । किलेति संभावनायाम् । स एव = पुराऽभिहित एव, पुराणः = प्राचीनः, पुरुषः = पुमान्, भगवान्विष्णुरिति भावः । पुनः = भूयः, अस्य = हरकार्मुकस्य, आरोपणाय = नमनाय- बालात्मना = रामाख्यबालकरूपेण, परिणतः = परिणामं गतः । इति = इत्थं, शङ्के = उत्प्रेक्षे । अत्रोत्प्रेक्षाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ ४५ ॥

राम इति । सलज्जं = लज्जासहितं यथा तथा, लज्जा च स्वप्रशंसाश्रवणाद्भवेया । सा च लज्जा विशेषशालीनतागुणसूचिका ।

कमलेति । हे कमलबन्धुविलोचन ! त्वया स्वमहिमोन्नमनैः यः अधरीकृतः । असौ नरः त्रिदशकोटिकिरीटमणीन् अपि किं न अधरीकुरुते ? इत्यन्वयः ।

हे कमलबन्धुविलोचन = हे पद्मसदृशनयन, त्वया = भवता, स्वमहिमोन्नमनैः = स्वमहिम्नः (आत्ममहत्वस्य) उन्नमनैः (संवर्द्धनैः), यः = जनः, मद्रूप इति भावः । अधरीकृतः = तिरस्कृतः, स्वशक्त्युत्कर्षप्रकाशनेन मादृशो जनो विजित इति भावः ।

---

फिर इस धनुको उठानेके लिए बालरूपसे परिणत हुए हैं मैं ऐसी संभावना करता हूँ ॥४५॥

(सुनाकर) वत्स ! इधर आओ ।

(राम लज्जाके साथ अधोमुख हो रहते हैं ।)

जामदग्न्य—(समीप जाकर) (रामकी ठुड्डी उठाकर) क्यों लज्जित होरहे हो ? हे कमललोचन ! तुमने अपनी महिमाकी वृद्धियोंसे जिसे नीचा दिखाया । वह

न किमसावधरीकुरुते नरस्त्रिदशकोटिकिरीटमणीनपि ॥ ४६ ॥

रामः—( अञ्जलिं बद्ध्वा ) भगवन्, अलमनेन, दुर्विनयपङ्कमलिनीकृतमात्मानं तावद्भवच्चरणनखकिरणतरङ्गिणीजलेन क्षालयामि।

चण्डमेव किल तिग्मरोचिषः सौम्यमेव किल शीतरोचिषः।
चण्डसौम्यमिति कौतुकावहं नौमि तावकमहं महन्महः ॥ ४७ ॥

असौ = भवद्विजितः, नरः = जनः, मनुष्य इति भावः। त्रिदशकोटिकिरीटमणीन् अपि = त्रिदशानां ( देवानाम् ) कोटिः ( कोटिसंख्या, पदमिदं बहुत्वस्योपलक्षणम् ) तस्याः किरीटमणीन् अपि ( मुकुटरत्नान्यपि ), किं, न अधरीकुरुते = किं न तिरस्करोति ? अपि त्वधरीकुरुत एवेति भावः। सकलसुरगणनमस्करणीयोऽहं भवता पराजित इदं भवदुत्कर्षास्पदमिति भावः। द्रुतविलम्बितं वृत्तम् 'द्रुतविलम्बितमाह नभौ भरौ।' इति तल्लक्षणम् ॥ ४६ ॥

राम इति। दुर्विनयपङ्कमलिनीकृतं = दुर्विनयः ( अविनीत भावः, भवत्तिरस्कारकारणभूत इति भावः ) एव पङ्कः ( कर्दमः, गर्वरूपमलावहत्वेनेति भावः ) तेन मलिनीकृतम् ( मलीमसीकृतम् )। आत्मानं = स्वम्। भवच्चरणनखकिरणतरङ्गिणीजलेन = भवच्चरणनखकिरणानां ( त्वत्पादनखरमयूखानाम् ) या तरङ्गिणी (नदी) तस्या जलेन ( अम्बुना )। क्षालयामि = प्रक्षालयामि। भवच्चरणकमलयोः प्रणमनेन स्वीयमौद्धत्यं परिहरामीति भावः।

रामः परशुरामं स्तौति—चण्डमेवेति। तिग्मरोचिषो महः चण्डमेव किल। शीतरोचिषो महः सौम्यमेव किल। चण्डसौम्यमिति कौतुकावहं तावकं महत् महः अहं नौमीत्यन्वयः।

तिग्मरोचिषः = सूर्यस्य, तिग्मं रोचिर्यस्य, तस्य। महः = तेजः, चण्डमेव = तीक्ष्णमेव, उष्णमेवेत्यर्थः। न तु शीतलमिति भावः। किलेति निश्चये। एवं च शीतरोचिषः = चन्द्रमसः, महः = कान्तिः, सौम्यमेव = अनुष्णमेव शीतलमेवेति, भावः न तूष्णमिति शेषः। किलेति प्रसिद्धौ। सूर्यचन्द्रापेक्षया भार्गवतेजसो वैशिष्ट्यं प्रकाशयति—चण्डसौम्यमिति। चण्डसौम्यं = तीक्ष्णशान्तम्, दुष्टे चण्डं, शिष्टे

---

मनुष्य करोड़ों देवताओंकी मुकुटमणियोंको भी क्या नीचा नहीं दिखाता है ? ॥ ४६ ॥

राम—( अञ्जलि बांधकर ) भगवन् ! इसकी आवश्यकता नहीं है। अविनीतभावरूप पङ्क ( कीचड़ ) से मलिन किये गये अपनेको आपके चरणनखकिरणोंकी नदीके जलसे प्रक्षालित करता हूं।

सूर्यका तेज तीक्ष्ण ही है और चन्द्रमाकी कान्ति शीतल ही है। तीक्ष्ण और शीतल इस प्रकारसे कुतूहलको उत्पन्न करनेवाले आपके उत्कृष्ट तेजकी मैं स्तुति करता हूं ॥ ४७ ॥

( इति पादयोः पतति )

जामदग्न्यः—अयि कल्याणनिधे ! आशीरुक्तिरपि त्वयि पुनरुक्तिरेव । तथापीदमाशास्महे ।

यशःपूरं दूरं तनु, सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचण्डातप ! तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ४८ ॥

---

सौम्यमिति भावः । इति = अनेन प्रकारेण, मिथोविरुद्धधर्मविशिष्टत्वादिति भावः । कौतुकावहं = कुतूहलोत्पादकं, तावकं = भवदीयं तवेदं तावकं, युष्मदस्मदोरन्यतरस्यां खञ्'ति, पक्षेऽण्, 'तवकममकावेकवचने' इत्येकवचने तवकादेशः । महत् = उत्कृष्टं, महः = तेजः, अहं = रामः, नौमि = स्तौमि ।

अत्र सूर्यचन्द्रतेजोभ्यामपि परशुरामतेजस आधिक्यवर्णनाद्व्यतिरेकाऽलङ्कारः । रथोद्धतावृत्तम् । तल्लक्षणं यथा—'रान्नराविह रथोद्धता लगौ' इति ॥ ४७ ॥

जामदग्न्य इति । त्वयि = भवति विषये ।

परशुरामो रामं प्रत्याशिषं प्रयुङ्क्ते—यशः पूरमिति । हे सुतनुनेत्रोत्पलवनीतमस्तन्द्राचण्डातप ! यशः पूरं दूरं तनु, शरदां सहस्राणि तप । इयं त्रिजगती च युष्मच्छरशमितलङ्केश्वर शिरः श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा आस्तामित्यन्वयः ।

हे सुतनुनेत्रोत्पलवनीतमस्तन्द्राचण्डातप = सुतनूनां ( सुन्दरीणाम् ) नेत्राणि ( नयनानि ) एव उत्पलानि ( नीलकमलानि ) तेषां वनी ( संहतिः ) तस्याः तमस्तन्द्रा ( निमीलितत्वम् ), तत्र हे चण्डातप = ( हे सूर्य ) भयापनोदनेन सुन्दरीनयनविकासहेतो सूर्यसमप्रभ हे रामभद्रेति भावः । यशःपूरं = कीर्तिसमूहं, दूरं = विप्रकृष्टदेशं यावत्, तनु = विस्तारय । एवं च शरदां = वर्षाणां, 'हायनोऽस्त्री शरत्समा' इत्यमरः । सहस्राणि = दशशतानि, अपरिमितकालपर्यन्तमिति भावः । तप = उज्ज्वलरूपो भव । इयम् = एषा, त्रिजगती च = लोकत्रितयी, स्वर्ग-

---

( ऐसा कहकर पैरोंपर पड़ते हैं )

जामदग्न्य—हे कल्याणनिधे ! तुम्हारे विषयमें आशीर्वादकी उक्ति भी पुनरुक्ति ही है । तो भी हम यह इच्छा करते हैं ।

सुन्दरियोंके नेत्रकमलोंके विकासमें हे सूर्यरूप रामचन्द्र ! कीर्तिसमूहको दूर तक फैलाओ और हजारों वर्षों तक उज्ज्वल रूपवाले बनो । यह लोकत्रयी तुम्हारे बाणोंसे मारे गये रावणके शिरोंसे युक्त और समृद्धिका अनुभव करनेवाले देवों, मनुष्यों और सर्पोंसे सम्पन्न हो ॥ ४८ ॥

तदनुजानीहि माम्। ( इति निष्क्रान्तः )।

रामः—( लक्ष्मणं प्रति ) ननु कथं नयनपथमतिक्रान्त एव भगवान्? तदेहि। भृगुकुलतिलकवियोगखिन्नमात्मानं बन्धुजनविलोकनेन विनोदयावः।

( इति निष्क्रान्ताः सर्वे )

इति चतुर्थोऽङ्कः।



---

मर्त्यपातालात्मिका चेत्यर्थः। शुष्मचक्षुरशमितलङ्केश्वरशिरःश्रितोत्सङ्गा = शुष्मचक्षुरः ( अग्नेः ) शमितः ( शान्तिमितः, हत इति भावः ) यो लङ्केश्वरः ( रावणः ) तस्य शिरोभिः ( मस्तकैः ) श्रितः ( आश्रितः ) उत्सङ्गः ( मध्यभागः ) यस्याः सा। तथा च नन्दत्सुरनरभुजङ्गा=लोककण्टकरावणप्रमथनेन नन्दतः ( समृद्धिमनुभवन्तः ) सुरनरभुजङ्गाः ( देवमानवसर्पाः, स्वर्गमर्त्यपाताललोकवासिन इति भावः ) यस्यां सा। तादृशी आस्ताम् = तिष्ठतु। इदमेव मदीयमाशंसनमित्यर्थः। अत्र रूपकाऽलङ्कारः। वृत्त्यनुप्रासश्च। शिखरिणी वृत्तम्॥ ४८॥

राम इति। नयनपथं = लोचनमार्गम्।

इति श्रीशेषराजशर्मप्रणीतायां चन्द्रकलाऽभिख्यायां प्रसन्नराघवव्याख्यायां चतुर्थोऽङ्कः।

श्रीं तत्सच्छ्रीमद्रामचन्द्रचरणार्पणमस्तु॥



---

अब मुझे अनुज्ञा दो। ( ऐसा कहकर जाते हैं )

राम—( लक्ष्मण से ) कैसे भगवान् नेत्रमार्गसे ओट हो गये। तब आओ। भृगुवंशभूषणके वियोगसे खिन्न अपनेको बान्धवजनोंके दर्शनसे विनोदित करें।

( सब जाते हैं )

इति चतुर्थ अङ्कः।



# अथ पञ्चमोऽङ्कः

( ततः प्रविशतो गङ्गा-यमुने )

गङ्गा—सखि कालिन्दि, किमिति दुर्मनायसे ?

यमुना—भगवति, भागीरथि, अस्ति कारणम् । ( भअवदि, भाईरहि, अत्थि कालणम् )

गङ्गा—कीदृशं तत् ?

यमुना—एकं तावत्, अस्ति मम भ्राता सुग्रीव इति । ( एकं दाव अत्थि मह भादा सुग्गीवो त्ति )

गङ्गा—( सकौतुकम्, आत्मगतम् ) अये, कथमस्याः कपिकुलोत्पन्नोऽपि भ्राता ? ( विमृश्य ) उपपन्नमिदम् । अनयोः खल्वेक एवायं प्रसविता सविता । ( प्रकाशम् ) अथ किन्तस्य ?

यमुना—सोऽतिबलिष्ठेन दुष्टवलीमुखेन वालिनामधेयेन परिभूत एकदुर्गमात्रशरणः कतिपय-परिवारस्तिष्ठति । ( सोतिबलिट्ठेण दुट्ठवलीमुहेण

---

गङ्गेति । किमिति = किमर्थम् । दुर्मनायसे = दुर्मना ( विमनाः ) इव आचरसि 'कर्तुः क्यङ् सलोपश्चे'ति क्यङन्ताल्लट्, सलोपश्च । 'दुर्मना विमना अन्तर्मनाः स्यात्' इत्यमरः । दुःखितचित्ता भवसीति भावः ।

सकौतुकमिति । विमृश्य=विचार्य । उपपन्नम् = उपपत्तियुक्तम् । प्रसविता = उत्पादकः ।

यमुनेति । दुष्टवलीमुखेन = दोषयुक्तवानरेण । कतिपयपरिवारः=अल्पपरिजनः ।

---

( अनन्तर गङ्गा और यमुना प्रवेश करती हैं )

गङ्गा—सखि यमुने ! क्यों दुःखित हो रही हो ?

यमुना—भगवति गङ्गे ! कारण है ।

गङ्गा—वह क्या ?

यमुना—एक यह है कि मेरे भाई सुग्रीव हैं ।

गङ्गा—( कौतुकपूर्वक, मन ही मन ) अरे ! कैसे वानरकुलमें उत्पन्न सुग्रीव भी इनके भाई हो गये ? ( विचार कर ) हां, यह बात ठीक है । इन दोनोंके पिता एक ही सूर्य हैं । ( सुनाकर ) तब उनका क्या हुआ ?

यमुना—अत्यन्त जबर्दस्त वाली नामके दुष्ट वानरसे तिरस्कृत होकर वे एक दुर्गमें

वालिणामहेएण परिहूदो एकदुग्गमत्तसरणो कइप्पअपरिवारो चिट्ठि )

**गङ्गा**—नन्विमावपि भ्रातरौ । तत् किमनयोरीदृशं वैरायितम् ( इत्यर्धोक्त एव ) अथवा 'एकामिषाभिलाषो हि बीजं वैरमहातरोः' इति ख्यातमेतत् । तत्किमनेन । द्वितीयमपि कारणं कथय तावत् ।

**यमुना**—कस्मिन्नपि दिवसे गृहीततपस्याविव मन्मथवसन्तौ द्वावपि तरुणौ जटाधरौ एका चक्रवाकस्तनी चन्द्रवदना मामुत्तीर्य चलितुमुपक्रान्ताः । ( कस्सिपि दिअहे गहीअतवस्सा विअ मम्महवसन्ता दोवि तरुणा अटाहरा एक्का चक्कवाकत्थणी चन्दवअणा मं उत्तरिअ दक्खिणं चलिदुं उवक्कन्ता )

**गङ्गा**—ततस्ततः ?

**यमुना**—ततश्च तया क्षणं विलम्ब्य प्रणम्य मुकुलितकरयुगलयाऽहमीदृशं भणिता=अयि देवि दिनकरनन्दिनि ! पुनरपि निजकुटुम्बस्य दर्शनप्रसादं कुरुष्व । ( तदो अ तीए खणं विलम्बिअ पणमिअ मुउलिअकरकमलजु-

---

गङ्गेति । इमौ = वालिसुग्रीवौ । वैरायितं = वैरवदाचरितम् , 'शब्दवैरकलहाऽभ्रकण्वमेघेभ्यः करणे' इति क्यङन्तात्क्तप्रत्ययः । एकामिषाऽभिलाषः = एकं ( समानम् ) यत् आमिषं ( भोग्यवस्तु ) तस्मिन् अभिलाषः ( कामः ) । 'आमिषं पुंनपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च ।' इति मेदिनी । वैरमहातरोः = वैरम् ( विरोधः ) एव महातरुः ( विशालवृक्षः ) तस्य । बीजं = कारणम् । एकस्मिन्भोग्यवस्तुनि सञ्जाताऽभिलाषयोर्द्वयोर्विरोधः स्वाभाविक एवेति भावः ।

यमुनेति । गृहीततपस्यौ = आचरिततपसौ ।

गङ्गेति । ततस्ततः = तदनन्तरं तदनन्तरं, सम्भ्रमे द्विरुक्तिः ।

यमुनेति । विलम्ब्य = विलम्बं कृत्वा । मुकुलितकरयुगलया=मुकुलितं ( कुड्मल-

---

कतिपय परिवारोंके साथ रहते हैं ।

**गङ्गा**—ये दोनों भाई हैं । तब इन दोनोंमें क्यों ऐसी दुश्मनी हो गई ? ( ऐसा आधा ही कहनेपर ) अथवा 'एक भोग्यवस्तुमें इच्छा ही विरोधरूप महावृक्षका बीज है' यह बात प्रसिद्ध है । तब इससे क्या ? दूसरा कारण भी बतलाओ ।

**यमुना**—किसी दिन तपस्या करनेवाले कामदेव और वसन्तके समान जटाधारी दो युवक और चक्रवाकस्तनी एक सुन्दरी भी मुझे पारकर चलनेका उपक्रम कर रहे थे ।

**गङ्गा**—तब क्या हुआ, तब क्या हुआ ?

**यमुना**—तब उसी सुन्दरीने कुछ समय तक विलम्ब कर हाथोंको जोड़कर मुझे ऐसा

अलाए अहमेरिसं विण्णत्ता। 'अयि देवि दिणअरणन्दिणि, पुणोवि णिअकुडुम्बस्स दंसणप्पसादं करेसु' त्ति )

गङ्गा—तत्कथं सम्भावयसि ?

यमुना—( गङ्गायाः कर्णे ) एवमेव। ( एव्वमेव )

गङ्गा—असम्भावनीयमिदम्। तन्नूनमावर्त्तशतभ्रमितहृदया किमप्यलीकमनुभूतवती। (विमृश्य) अथवा को जानाति विधेः संविधानवैदग्ध्यम् ?

यमुना—यदि संवृत्तस्तत्कथं भगवत्या न गोचरोऽयं वृत्तान्तः ?। ( जइ संवुत्तो ता कहं भअवदीए ण गोअरो इमो वुत्तन्तो )

गङ्गा—न किञ्चिदेतत्। मया हि ब्रह्मलोकादागतायाः सरस्वत्याः समागमसुखव्यग्रचित्तया स्थितम्। तदेहि। इयमदूरे सरयूः। तेन हि तन्मुखादेव निरूपयामः। ( इति परिक्रामतः )

---

लितम् ) करयुगलं ( हस्तयुग्मम् ) यस्याः सा, तया, कृताञ्जल्येति भावः। दिनकरनन्दिनि = सूर्यतनये। दर्शनप्रसादं = विलोकनाऽनुग्रहम्।

गङ्गेति। सम्भावयसि = सम्भावनां करोषि।

यमुनेति। एवमेवेत्यनेनोपक्रम्य रामवननिर्वासनवृत्तं सूचितम्।

गङ्गेति। आवर्तशतभ्रमितहृदया = आवर्तानाम् ( अम्भोभ्रमाणाम् ) शतेन भ्रमितम् (अस्थिरीकृतम्) हृदयं ( चित्तम् ) यस्याः सा, कालिन्द्या आवर्तपर्याकुलत्वं प्रसिद्धमेव। अलीकं अनृतम्। विधेः = ब्रह्मणः। संविधानवैदग्ध्यं = रचनाचातुर्यम्।

यमुनेति। गोचरः = ग्राह्यः।

गङ्गेति। समागमसुखव्यग्रचित्तया = समागमसुखे ( सम्मेलनानन्दे ) व्यग्रम्

---

कहा—'हे देवि सूर्यकुमारि ! आप फिर भी अपने कुटुम्बको दर्शन देनेका अनुग्रह करें'।

गङ्गा—तब क्या विचार करती हो ?

यमुना—( गङ्गाके कानमें ) ऐसा ऐसा··· ··· ···

गङ्गा—यह असम्भाव्य है। निश्चय ही सैकड़ों आवर्तोंसे अस्थिर हृदय होनेसे तुम्हें मिथ्या अनुभव हो गया है। (विचारकर) अथवा ब्रह्मदेवकी रचनाचातुरी कौन जानता है ?

यमुना—ऐसा हो गया है तो भगवती ( आप ) को कैसे मालूम नहीं हुआ ?

गङ्गा—यह कुछ नहीं। ब्रह्मलोकसे आई हुई सरस्वतीके समागमसुखमें मैं व्यग्रचित्त हो रही थी। इसलिए आओ। यह सरयू ( घाघरा ) निकट ही है। अतः इन्हींके मुखसे हमलोग निरूपण कर लें। ( दोनों परिक्रमण करती हैं। )

( प्रविश्य )

सरयूः—देव्यौ ! नमो वाम् !

उभे—आलि ! अवितथमङ्गला भव !

गङ्गा—( सरयूं हस्ते गृहीत्वा ) सखि ! कथं तापनिमग्नमङ्गकं ते ?

सरयूः—भगवति ! प्रतीपमाभाषसे । ननु लज्जापङ्कनिमज्जनमनुभवन्त्या मेऽर्धावलम्बनोऽयमङ्गसन्ताप इति ।

गङ्गा—स्पष्टं तावदावेदय ।

सरयूः—

बहलगलितैः सन्तापोष्णैस्तटान्तविहारिभि-
र्दशरथपुरीपौरस्त्रीणां विलोचनवारिभिः ।

---

( आकुलम् ) चित्तम् ( मनः ) यस्याः सा, तया । निरूपयामः = निरूपणं कुर्मः ।

उभे इति । आलि = सखि, 'कृदिकारादक्तिनः' इति ङीष् । अवितथमङ्गला = अवितथं ( सत्यम् ) मङ्गलं ( कल्याणम् ) यस्याः सा ।

गङ्गेति । अङ्गकम् = अनुकम्पितमङ्गम्, 'अनुकम्पायाम्' इति कन् । तापनिमग्नं = सन्तापयुक्तमित्यर्थः ।

सरयूरिति । प्रतीपं = विपरीतम् । लज्जापङ्कनिमज्जनं = लज्जा ( व्रीडा ) एव पङ्कः ( कर्दमः ) तस्मिन् निमज्जनम् ( प्रसक्तत्वम् ) । अर्धाऽवलम्बनः = स्तोकाऽवलम्बभूत इति भावः ।

सरयूर्लज्जातापहेतुभूतं वृत्तान्तं प्रतिपादयति—बहलगलितैरिति । हे मातः ! बहलगलितैः सन्तापोष्णैः तटाऽन्तविहारिभिः दशरथपुरीपौरस्त्रीणां विलोचनवारिभिः उपचयवतीं सन्तापोष्णां निजां तनुं दधती अहम् इह लज्जां वहामि जहामि चेत्यन्वयः ।

---

( प्रवेशकर )

सरयू—देवियों ! आप दोनोंको नमस्कार है ।

दोनों—सखि ! सत्यमङ्गलसे सम्पन्न बनी रहो ।

गङ्गा—(सरयूका हाथ पकड़कर) सखि ! तुम्हारा शरीर क्यों तापनिमग्न हो रहा है ?

सरयू—भगवति ! आप उलटी बात कह रही हैं । लज्जारूप पङ्कमें निमज्जनका अनुभव करती हुई मेरा यह अङ्गसन्ताप आधा अवलम्बन ( सहारा ) है ।

गङ्गा—साफ बात बतलाओ ।

सरयू—अधिक गिरे हुए, सन्तापसे उष्ण ( गरम ), तीरके पास बहनेवाले, अयोध्या

उपचयवती सन्तापोष्णां निजां दधती तनू-
मिह मुहुरहं मातर्लज्जां वहामि जहामि च ॥ १ ॥

गङ्गा—( सातङ्कम् ) किं पुनरासामश्रुवृष्टेः कारणम् ?

सरयूः—( गङ्गायाः कर्णे ) एवमेवम् ।

गङ्गा—हा इन्दुमतिनन्दन, हा सकललोकहृदयानन्दनचन्दन, हा महाकोदण्डपण्डित, हा आखण्डलप्रियसख, हा निजतनयनिर्विशेषप्रीतिपरिपालितसकललोक, हा रामभद्रैकजीवित, ( इति मूर्च्छति )

---

बहलगलितैः = बहुलम् ( अधिकं यथा तथा ) गलितैः ( निःसृतैः )। सन्तापोष्णैः = सन्तापेन ( अधिकतापेन, रामवनवासदशरथस्वर्गतिजनितेनेति भावः ) उष्णैः ( तप्तैः )। तटान्तविहारिभिः = तीरान्तविहरणशीलैः, दशरथपुरीपौरस्त्रीणां = दशरथपुर्याम् ( अयोध्यायाम् ) याः पौरस्त्रियः ( पुरनार्यः ) तासाम् । विलोचनवारिभिः = नयनसलिलैः, अश्रुजलैरिति भावः । उपचयवती = वृद्धियुक्तां, सतश्च सन्तापोष्णां = सन्तापेन ( अतिशयतापेन, शोकजनितेनेति भावः ) उष्णां ( सन्तप्ताम् ), निजां = स्वकीयां, तनूं = शरीरं, दधती = धारयन्ती, अहं = सरयूः, इह = अस्मिन् समये । लज्जां = व्रीडां, वहामि = धारयामि, जहामि च = परित्यजामि च, लज्जामिति शेषः । महाशोकावस्थायामापतितायां तन्वा उपचये लज्जामनुभवामि परिदेवनप्रकाशनेन तां त्यजामि चेति भावः । एवं च 'पौरस्त्रीणां विलोचनवारिभि' रिति कथनेन महाराजदशरथस्य लोकप्रियत्वं च सूच्यते । हरिणी वृत्तम् ॥ १ ॥

गङ्गेति । सातङ्कम् = तापशङ्कासहितं यथा तथा । आसां = दशरथपुरीपौरस्त्रीणाम् ।

सरयूरिति । एवमेवेत्यनेन दशरथमहाप्रयाणवृत्तान्तकथनं सूच्यते 'विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा' इत्यादिभिरालङ्कारिकैर्मृत्योः स्पष्टरूपेण कथनस्य निषिद्धत्वादेषा प्रणाल्यनुसृतेति बोद्धव्यम् ।

गङ्गेति । इन्दुमतिनन्दन = इन्दुमतीसुत, 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति

---

की पुरस्त्रियोंके आंसुओंसे वृद्धियुक्त और सन्तापसे उष्ण अपने शरीरको धारण करती हुई मैं लज्जाका अनुभव कर रही हूँ और छोड़ भी रही हूँ ॥ १ ॥

गङ्गा—( तापशङ्कापूर्वक ) इनकी अश्रुवृष्टिका कारण क्या है ?

सरयू—( गङ्गाके कानमें ) ऐसा है··········

गंगा—हा इन्दुमतीके पुत्र ! हा सब लोगोंके हृदयमें आनन्द करनेमें चन्दन सदृश ! हा महाधनुर्धर ! हा इन्द्रके प्रियमित्र ! हा अपने पुत्रके समान सब लोगोंका पालन करनेवाले ! हा रामभद्रजीवित ! ( ऐसा कहकर मूर्च्छित होती है । )

सरयूः—( स्वगतम् ) अस्यैव विलसितमेतत्।

गङ्गा—हा महाराज, दशरथ! ( इति मूर्च्छिता पतति )

यमुना—( अंशुकाञ्चलेन वीजयन्ती ) भगवति, समाश्वसिहि समाश्वसिहि, नन्वेतैरेव गुणैरशोचनीयोऽसौ राजा। ( भअवदि, समास्ससिहि समास्ससिहि, णं इमेहिं जेव्व गुणेहिं असोअणिज्जो सो राआ )

गङ्गा—( सरयूं प्रति ) सखि! तवैव न केवलमयं तापः, सर्वजनसाधारणः खल्वसौ। तदेनं रामभद्रच्छत्रच्छाययाऽपनोदयामः।

---

संज्ञायां ह्रस्वत्वम्। इन्दुमती अजपत्नी दशरथमाता चेति ज्ञातव्यम्। सकललोकहृदयानन्दनचन्दन = सकललोकहृदयानन्दने ( समस्तजनचित्तानन्दकरणे ) चन्दन ( मलयजलेपसदृश )। आखण्डलप्रियसख = आखण्डलस्य ( इन्द्रस्य ) प्रियसख ( अभीष्टमित्र ), 'राजाऽहः सखिभ्यष्टच्' इति टच्। निजतनयनिर्विशेषप्रीतिपरिपालितसकललोक = निजतनयेभ्यः ( स्वपुत्रेभ्यः ) निर्विशेषा ( भेदरहिता, तुल्यरूपेति भावः ) या प्रीतिः ( प्रणयः ), तया परिपालिताः ( संरक्षिताः ) सर्वलोकाः ( सकलजनाः ) येन तत्सम्बुद्धौ।

सरयूरिति। अस्यैव = रामभद्रैकजीवितस्यैव, सर्वनामशब्दस्य पूर्वपरामर्शित्वादयमर्थः। विलसितं = कार्यम्। रामभद्रस्य विप्रयोगादेव राज्ञो दशरथस्य स्वर्गतिः संजातेति भावः।

यमुनेति। एतैरेव = भवत्या साम्प्रतं प्रतिपादितैरेव। गुणैः = अनन्तरप्रतिपादितैः, सकललोकहृदयानन्दनचन्दनत्वादिभिरिति भावः।

गङ्गेति। सर्वजनसाधारणः = सकललोकसामान्यः। एनं = तापं, रामभद्रच्छत्रच्छायया = रामभद्रस्य ( वात्सल्यभाजनस्य रामचन्द्रस्य ) छत्रच्छायया ( आतपत्रच्छायया )।

---

सरयू—( मन ही मन ) इसीका यह कार्य है।

गङ्गा—हा महाराज दशरथ! ( ऐसा कहकर मूर्च्छित होकर गिरती है। )

यमुना—( वस्त्राञ्चलसे हवा करती हुई ) भगवति! आप समाश्वस्त हों समाश्वस्त हों। इन्हीं गुणोंसे राजा शोक करनेके योग्य नहीं हैं।

गङ्गा—( सरयूसे ) सखि! यह ताप तुम्हारा ही नहीं सब लोगोंका भी है। इस कारण इसे रामभद्रकी छत्रच्छायासे मिटावें।

सरयूः—( निश्वस्य ) भगवति ! न खल्वप्रोषितसलिलसेकः कमलकेदारः परिशुष्यति ।

गङ्गा—स्पष्टं तावत्कथय ।

( सरयूरधरस्फुरणं नाटयति )

गङ्गा—अलमलम् ! कथं दावानलशोषितायां तरुशाखायां कुठारमारोपयितुमिच्छसि, अथवा कथय तावत् !

सरयूः—( स्वगतम् ) अहो !

न ज्ञातुं नाप्यनुज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते ॥ २ ॥

---

सरयूरिति । अप्रोषितसलिलसेकः = अप्रोषितः ( अनिःसारितः ) सलिलसेकः ( जलसेचनम् ) यस्य सः । कमलकेदारः ( पद्मक्षेत्रम् , पद्मोत्पत्तिस्थानमित्यर्थः ) । 'कलमकेदार' इति पाठान्तरे शालिविशेषक्षेत्रमित्यर्थः । रामचन्द्रे समीपस्थे सति दशरथस्य मरणं न भवेदिति भावः ।

गङ्गेति । दावाऽनलशोषितायां = वनपावकशुष्कीकृतायां, दशरथनिधनाकर्णनखिन्नायामिति भावः । कुठारं = परशुं, रामभद्रविषयकाऽनिष्टवृत्तरूपमिति भावः ।

न ज्ञातुमिति । सुजनः स्वजने जातं विपत्पातं न ज्ञातुं नाऽपि अनुज्ञातुं न ईक्षितुं नाऽपि उपेक्षितुं समीहत इत्यन्वयः । सुजनः = सज्जनः 'स्वजन' इति पाठान्तर आत्मीयजन इत्यर्थः, स्वजने = आत्मीयजने' जातम् = उद्भूतं, विपत्पातम् = आपदागमनं न ज्ञातुं = बोद्धुं, समीहते = इच्छति । नाऽपि अनुज्ञातुं = अनुमन्तुम् , समीहते । न ईक्षितुं = द्रष्टुं, समीहते । एवं च नाऽपि उपेक्षितुम् = उपेक्षां कर्तुं, समीहते = इच्छति । सज्जनः स्वजनविपदि किंकर्तव्यतामूढो भवतीत्यभिप्रायः । अनुष्टुब्वृत्तम् ॥ २ ॥

---

सरयू—( निःश्वास लेकर ) भगवति ! जलसंसर्ग मिटे बिना कमलका क्षेत्र सूखता नहीं है ।

गङ्गा—साफ साफ कहो ।

( सरयू ओष्ठस्फुरणका अभिनय करती हैं । )

गङ्गा—बस करो । बस करो । दवाऽग्निसे वृक्षशाखाके सूख जानेपर कैसे उसपर कुल्हाड़ी चलाना चाहती हो । अथवा कह भी दो ।

सरयू—( मन ही मन ) अहो !

सुजन, आत्मीयजन पर पड़ी हुई विपत्तिको न जाननेकी, न अनुमोदन करनेकी, न देखनेकी और न उपेक्षा ही करनेकी इच्छा करता है ॥ २ ॥

( प्रकाशम् ) रामभद्रमभिषेक्तुं कृतमनोरथं दशरथमेत्य कैकेयी प्रथमं तावदिदमुक्तवती।

इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम्।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ३ ॥

गङ्गा—( स्वगतम् ) अनेनैव तावदकल्याणरुचिः सूचिता दुराशया। ( प्रकाशम् ) चरमं च किम्?

सरयूः—

त्वया देयं यन्मे द्वयमभिहितं देहि तदिदं
वनं कौशल्येयो विशतु, युवराजोऽस्तु भरतः।

---

इदमेवेति। यत् आत्मनः प्रतिज्ञा प्रजा च परिपाल्यते, नरेन्द्राणाम् इदमेव अनर्गलं स्वर्गद्वारमित्यन्वयः।

यत्, आत्मनः = स्वस्य, प्रतिज्ञा = सन्धा, प्रजा च = जनश्च, 'प्रजावत्' इति पुस्तकान्तरपाठस्तस्य जनवदित्यर्थः। परिपाल्यते = संरक्ष्यते, नरेन्द्राणां=राज्ञाम्, इदमेव = आत्मनः प्रतिज्ञायाः प्रजायाश्च परिपालनमेवेत्यर्थः। अनर्गलम् = अर्गलारहितं, प्रतिबन्धरहितमिति भावः। स्वर्गद्वारं = सुरलोकप्रतीहारः। प्रतिज्ञायाः प्रजायाश्च परिपालनेनैव राज्ञा कालान्तरे स्वर्गः प्राप्यत इति भावः ॥ ३ ॥

गङ्गेति। दुराशया = दुष्टाशायुक्तया, कैकेय्येति भावः। यद्वा दुष्टाऽभिप्राययुक्तेत्यर्थः। अकल्याणरुचिः = अकल्याणे ( अमङ्गले ) रुचिः ( इच्छा )। चरमम्= अन्तिमं, फलमिति शेषः। 'अन्ते जघन्यं चरममन्त्यपाश्चात्यपश्चिमम्।' इत्यमरः।

कैकेय्युक्तिं सूचयति—त्वयेति। कौशल्येयो वनं विशतु। भरतो युवराजोऽस्तु। त्वया यत् द्वयं मे देयम् अभिहितं तदिदं देहीति पूर्वार्द्धान्वयः।

कौशल्येयः = रामः, कौशल्याया अपत्यं पुमान्, 'स्त्रीभ्यो ढक्' इति ढक्। वनम्=

---

( सुनाकर ) रामभद्रका अभिषेक करनेके लिए अभिलाष करने वाले दशरथके पास आकर कैकेयीने पहले यह कहा—

अपनी प्रतिज्ञाका और प्रजाका परिपालन करनेसे ही राजाओंको प्रतिबन्धरहित स्वर्गद्वार मिल जाता है ॥ ३ ॥

गङ्गा—( मन ही मन ) दुष्ट आशावाली कैकेयीने इसी बातसे अमङ्गलमें अपनी रुचि की सूचनाकी। ( सुनाकर ) पीछे क्या कहा?

सरयू—कौशल्याके पुत्र ( राम ) वनमें प्रवेश करें और भरत युवराज हों। आपने जो मुझे दो वर देनेको कहा था, उन्हें दे दीजिए।

गङ्गा—( सोद्वेगम् ) ततः किं वृत्तम् ?

सरयूः—

इतीदं कैकेय्या वचनमधिगम्याऽऽकुलमतेः
पितुः पादौ नत्वा मुदितहृदयोऽसौ वनमगात् ॥ ४ ॥

गङ्गा—यमुने ! तदिदं यत्कथितवत्यसि । ( सविषादम् ) हा रघुकुल-कुटुम्बं निहतमिति ।

यमुना—भगवति, एकं किं रघुकुलकुटुम्बकम् । ननु मृगमहर्षिवन-

---

अरण्यं, विशतु = प्रविशतु, चतुर्दशवर्षपर्यन्तमिति शेषः । एवं च भरतः = मत्तनयः, युवराजः = यौवराज्यपदभाक्, अस्तु = भवतु । त्वया = भवता, यत् द्वयं = द्वितयं, वरयोरिति भावः । मे = मह्यं, कैकेय्यै इत्यर्थः, पुरा देवाऽसुरयुद्धाऽवसरे साहाय्य कारिण्यै इति शेषः । देयं = दातव्यम्, अभिहितं = कथितं, तत् = पूर्वोक्तवरद्वय-परिणामरूपम्, इदं = रामप्रवासनं भरताय यौवराज्यप्रदानं चेत्यर्थः । देहि = वितरेति पूर्वार्द्धार्थः ।

उत्तरार्द्धं प्रतिपादयति—इतीदमिति । कैकेय्या इतीदं वचनम् अधिगम्य आकुलमतेः पितुः पादौ नत्वा मुदितहृदयः असौ वनम् अगादित्युत्तरार्द्धाऽन्वयः ।

कैकेय्याः = केकयराजकुमार्याः, भरतमातुरिति भावः । इति = इत्याकारकम्, इदं = वरद्वयं, प्रतिपादनात्मकं, वचनं = वाक्यम्, अधिगम्य = ज्ञात्वा, आकुलमतेः = व्यग्रबुद्धेः, श्रेष्ठगुणविलसितस्य ज्येष्ठतनयस्य वननिर्वासनं, तत्कनीयसो भरतस्य यौवराज्याऽभिषेचनमिति वरद्वयमप्यनर्थावहमिति विमृश्य किं कर्तव्यताविमूढस्येति भावः । पितुः = जनकस्य, दशरथस्येत्यर्थः । पादौ = चरणौ, नत्वा = नमस्कृत्य, मुदितहृदयः = प्रसन्नचित्तः, आत्मनः पितृप्रतिज्ञापूरणहेतुत्वेनेति भावः । असौ = रामभद्रः, वनम् = अरण्यम्, अगात् = गतः । शिखरिणी वृत्तम् ॥ ४ ॥

गङ्गेति । कथितवती = अभिहितवती—'कस्मिंसपि दिअसे गहीतवसखा विअ' इत्यादिनेति भावः ।

यमुनेति । मृगमहर्षिवनदेवताः = हरिणमहामुनिकाननदेवीः = अत्रोक्तानां राम-

---

गङ्गा—( उद्वेगके साथ ) तब क्या हुआ ?

सरयू—कैकेयीका ऐसा वचन जानकर आकुल बुद्धिवाले पिताजीके चरणोंको प्रणाम कर प्रसन्नचित्त होकर रामचन्द्र वनको चले गये ॥ ४ ॥

गङ्गा—यमुने ! यह बात वही है जिसे तुम कह चुकी हो ( खेदपूर्वक ) हाय ! रघुवंशका सारा कुटुम्ब नष्ट हो गया ।

यमुना—आप एक रघुवंशके कुटुम्बकी ही बात क्या करती हैं । अरे ! मृग, महर्षि

देवताः परिहृत्य सकल एव जीवलोको रामचन्द्रमुखचन्द्रविलोकनविहीनत्वेन निहतः । ( भअवदि एक्कं किं रहुकुलकुडुम्बअणं । मिअमहेसिवणदेवदाओ परिहरिअ सअलो जेव्व जीअलोओ रामचन्दमुहचन्दविलोअणविहीणत्तणेण णिहदो )

सरयूः—एवमेतत् ।

प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति, किन्तु सहसा भुवनान्यपि तमसि मज्जन्ति ॥ ५ ॥

गङ्गा—एवमेतत् । परं सखि सरयु ! कथय तावत्, कीदृशी वृत्तिः सीतालक्ष्मणयोर्वत्सरामभद्रे ।

सरयूः—तौ हि तस्य सदैव सन्निहितौ चन्द्रिकाप्रसादाविव चन्द्र-

---

दर्शनसौभाग्यशालित्वादिति भावः ।

प्रोषितवतीति । रजनिकरे प्रोषितवति ( सति ) बन्धुतया कैरवाण्येव न खलु म्लायन्ति, किन्तु भुवनान्यपि तमसि सहसा मज्जन्तीत्यन्वयः ।

रजनिकरे = चन्द्रमसि, प्रोषितवति = प्रवासं गते सति, अस्तमिते सतीति भावः । बन्धुतया = सौहार्देन, कैरवाण्येव = कुमुदान्येव, न खलु म्लायन्ति = न खलु निमीलन्ति, किन्तु = अपि तु, भुवनान्यपि = अन्ये लोका अपि, तमसि = अन्धकारे, सहसा = अतर्कित एव, मज्जन्ति = निलीयन्ते, अदृश्यरूपतामुपयान्तीत्यर्थः । यथा कुमुदकुलबन्धाविन्दावस्तमिते न केवलं कुमुदान्येव म्लायन्ति समस्तलोका अपि म्लानिं प्राप्नुवन्ति, तथैव रामभद्रे प्रवासमापन्ने न केवलं तद्बन्धवः प्रत्युत समस्तलोका अपि दैन्यमनुभवन्तीति भावः । आर्या वृत्तम् ॥ ५ ॥

गङ्गेति । वृत्तिः = व्यवहृतिः ।

सरयूरिति । तौ = सीतालक्ष्मणौ । चन्द्रिकाप्रसादौ = ज्योत्स्नाप्रसन्नते, 'प्रसा-

---

और वनदेवताओंको छोड़कर समस्त जीवलोक रामचन्द्रके मुखचन्द्रका दर्शन नहीं पानेसे नष्टप्राय हो रहा है ।

सरयू—यह ठीक है ।

चन्द्रमाके अस्त होनेपर सौहार्दसे कुमुद ही म्लान नहीं होते हैं बल्कि समस्त लोक ही अन्धकारमें सहसा लीन हो जाते हैं ॥ ५ ॥

गङ्गा—यह ठीक है । पर सखि सरयु ! वत्स रामभद्रमें सीता और लक्ष्मणका कैसा व्यवहार है ?

सरयू—चन्द्रमाकी चन्द्रिका ( चांदनी ) और प्रसाद ( नैर्मल्य ) के समान वे दोनों

मसः। अतो जानास्येव यादृशी चन्द्रिकाप्रसादयोश्चन्द्रमसि ।

गङ्गा—( स्वगतं, सहर्षम् ) कथं सहैव वनं गताविस्युक्तं भवति ? ( प्रकाशम् ) सखि ! जीवितास्मि तावदनेन वागमृतेन। क्षणमपि हि रामचन्द्रविरहमनुभवितुमसहा मे वत्सा जानकी ।

सरयूः—एवमेतत् । रामचन्द्रेण हीदमुक्ता जानकी—

'अम्बाः शुश्रूषमाणा मे शरदः कतिचिन्नय' ।

इदमाकर्ण्य तथा मूर्च्छिता जानकी यथा स्वजनकरोपनीतशीतशीकरासारसिक्ताऽपि न प्रबुद्धा ।

---

दस्तु प्रसन्नता' इत्यमरः । सन्निहितौ = निकटस्थितौ । यथा गुणानां द्रव्याश्रयत्वं तथैव सीतालक्ष्मणयोरपि नित्यमेव रामाश्रयत्वं न पृथग्भवनधर्म इति भावः ।

गङ्गेति । असहा = अशक्ता ।

अम्बा इति । ( हे सीते ! ) मे अम्बाः शुश्रूषमाणा कतिचित् शरदो नयेति पूर्वार्द्धाऽन्वयः ।

( हे सीते = हे जानकि ! त्वम् ) मे = मम, अम्बाः = मातृः, कौशल्याकैकेयीसुमित्रा इति भावः, न मत्प्रसूमेवेति आकूतम् । शुश्रूषमाणा = सेवमाना सती, 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । कतिचित् = कियत्संख्यकाः, चतुर्दशवर्षरूपा इति भावः । शरदः = वर्षाणि, 'हायनोऽस्त्री शरत्समाः' इत्यमरः । नय = गमय, इति पूर्वार्द्धव्याख्या ।

इदमिति । स्वजनकरोपनीतशीतशीकरासारसिक्ता=स्वजनकरैः=(सखीजनहस्तैः) उपनीताः ( प्रापिताः ) ये शीतशीकराः ( शीतलाऽम्बुकणाः), तेषामासारेण (धारासम्पातेन ) सिक्ता ( उक्षिता ) सत्यपि । न प्रबुद्धा=संज्ञां न प्राप्तवती । वनमिति ।

---

भी सदा रामचन्द्रके समीप रहते हैं । अतः आप जानती ही हैं चन्द्रमामें चन्द्रिका और प्रसादका जैसा व्यवहार है ।

गङ्गा—( मन ही मन और हर्षपूर्वक ) वे दोनों भी साथ साथ वनको गये । यह बात है क्या ? (सुनाकर) सखि ! इस वचनरूप अमृतसे मैं जी गई हूं । क्योंकि बात्सल्यपूर्ण मेरी सीता अल्पकालमात्र भी रामचन्द्रके विरहका अनुभव करनेमें असमर्थ है ।

सरयू—यह ठीक है । रामचन्द्रने सीताको ऐसा कहा—

( हे सीते ! ) तुम मेरी माताओंकी सेवा करती हुई कुछ वर्षोंको बिताओ ।

यह सुनकर सीता इस प्रकार मूर्च्छित हो गई जैसे कि सखियोंके हाथोंसे लाये गये ठण्डे जलकणोंसे सेचन करने पर भी जगी नहीं ।

यमुना—तत्पुनः कथं प्रबुद्धा ! ( ता उण कहं पबुद्धा )

सरयूः—

'वनं वनजपत्राक्षि ! समागच्छ सहैव वा ॥ ६ ॥

इत्यनेन रामवचनामृतेनैव ।

गङ्गा—उचितमिदं जानकीस्नेहस्य ।

यमुना—अपि नाम रामलक्ष्मणयोरपि कोऽपि संवादः संवृत्तः । (अवि णाम रामलक्खणाणं वि कोवि संवादो संवुत्तो )

सरयूः—अथ किम् । इदमुक्तो हि रामचन्द्रेण लक्ष्मणः—

गमय वत्स ! निमील्य विलोचने
कतिचिदत्र निमेषसमाः समाः ।

---

हे वनजपत्राक्षि ! वा सहैव वनं समागच्छेत्युत्तरार्द्धाऽन्वयः ।

हे वनजपत्राक्षि = हे कमलदलनयने, सीते । 'पयः कीलालममृतं जीवनं भुवनं वनम् ।' इत्यमरः । वा = अथ वा, मद्विप्रयोगस्ते न रोचते यदीति भावः । सहैव= सार्धमेव, मयेति शेषः । वनम् = अरण्यं, समागच्छ=आयाहीत्युत्तरार्द्धस्याख्या । अनुष्टुब्वृत्तम् ॥ ६ ॥

रामवचनाऽमृतेनैव = पीयूषसमरामवाक्येनवेति भावः । पूर्वोक्तेन प्रबुद्धेति पदेन सम्बन्धः ।

यमुनेति । अपि नामेति प्रश्नसम्भावनाद्योतकं निपातद्वितयम् । संवृत्तः = संजातः ।

गमयेति । हे वत्स ! विलोचने निमील्य निमेषसमाः कतिचित् समा अत्र गमय । अपि च शीलसुशीतलं शुभरतं भरतं मामिव परिशीलयेत्यन्वयः ।

---

यमुना—तब वह फिर कैसे जगी ?

सरयू—हे कमलपत्राऽक्षि ! अथवा मेरे साथ ही वनमें चलो ॥ ६ ॥

रामचन्द्रके इस वचनाऽमृतसे ही ( जगी ) ।

गङ्गा—यह बात सीताके प्रेम की उचित है ।

यमुना—राम और लक्ष्मणका भी कुछ संवाद ( बातचीत ) हुआ था ?

सरयू—और क्या । रामचन्द्रने लक्ष्मणको यह कहा किः—

हे वत्स ! आँखें मूँदकर निमेषके समान कुछ वर्षोंको अयोध्यामें बिताओ, और पवित्र

अपि च मामिव शीलसुशीतलं
शुभरतं भरतं परिशीलय ॥ ७ ॥

इदमुक्तं च लक्ष्मणेन । अये रघुनाथ !

त्वया समं मे चत्वारि यामा एव युगान्यपि ।
चतुर्दश समाः स्थातुं विना मन्वन्तराणि मे ॥ ८ ॥

---

हे वत्स = हे वात्सल्यभाजन लक्ष्मण, विलोचने = नेत्रे, निमील्य = मुद्रयित्वा, निमेषसमाः = पक्ष्मपातसमयसदृशीः, अल्पसमयात्मिका इवेति भावः। कतिचित्= कियत्कालरूपाः, चतुर्दशहायनमयीरिति भावः। समाः = वर्षाणि, अत्र=इह, अयोध्यायामिति भावः। गमय = यापय। अपि च=अथ च, शीलसुशीतलशीलेन (पवित्रचरित्रेण) सुशीतलं (तापाऽपनोदकमिति भावः)। शुभरतं=शुभे (कल्याणधर्मे) रते (तत्परम्), भरतं = मत्कनीयांसं, कैकेयीतनयम्। मामिव परिशीलय=सेवस्व, साम्प्रतं त्वं यथा मां सेवसे तथैव चतुर्दशवर्षपर्यन्तसद्गुणगणभूषितं भरतं सेवस्वेति भावः। अत्र 'निमेषसमाः समाः, शुभरतं भरतम्' इत्यत्र यमकाऽलङ्कारः। द्रुतविलम्बितं वृत्तम् ॥ ७ ॥

त्वयेति। त्वया समं मे चत्वारि युगान्यपि यामा एव। त्वया विना चतुर्दश समाः स्थातुं मे मन्वन्तराणीत्यन्वयः।

हे रघुनाथ! हे रघुपते! त्वया = भवता, समं = सह, मे = मम चत्वारि = चतुःसंख्यानि, युगान्यपि = सत्यत्रेतादीन्यपि, सत्यत्रेताद्वापरकलियुगान्यपीति भावः, यामा एव = प्रहरमात्रा एव। भवता समं युगचतुष्टयरूपो दीर्घकालोऽपि मत्कृते प्रहरप्रायोऽल्पकालसमो भवतीति भावः। एवं च त्वया = भवता, विना = पृथग्भूत्वा, चतुर्दश = चतुर्दशसंख्यकाः, समाः = वर्षाणि, स्थातुम् = अवस्थातुं, मे = मम, मन्वन्तराणि = एकसप्ततिसंख्यकदिव्ययुगानि, 'मन्वन्तरं तु दिव्यानां युगानामेकसप्ततिः।' इत्यमरः।

आर्य! भवदन्तिके मम युगचतुष्टयमितदीर्घकालोऽपि सुखरूपत्वात् प्रहरमात्रो भवति भवद्विप्रयोगे तु चतुर्दशवर्षात्मकः कालो मे दुःखरूपत्वान्मन्वन्तरपरिमितो दुरपनेयो दीर्घकालः स्यादिति।

---

चरित्रसे सुशीतल तथा कल्याणधर्ममें तत्पर भरतजीकी मेरे समान सेवा करो ॥ ७ ॥

तब लक्ष्मणने यह कहा कि—हे रघुनाथ!

आपके साथ मेरे लिए चारों युग भी प्रहरके समान हैं, और आपके बिना चौदह साल रहना भी मेरे लिए मन्वन्तरके तुल्य है ॥ ८ ॥

अपि च—

त्वया मम समेतस्य कल्पा अपि समासमाः ।
भवता विप्रयुक्तस्य कल्पकल्पः क्षणोऽपि मे ॥ ९ ॥

गङ्गा—अपि नाम कौसल्ययापि किञ्चिच्छिक्षितो रामभद्रः ?

सरयूः—अथ किम् । सा हि—'अयि वत्स, रामभद्र, सीताम्' इत्यर्धोक्त एव बाष्परुद्धकण्ठीदमुक्तवती । 'अथवा वत्स, लक्ष्मणो रक्षितरि

---

युगचतुष्टयमितकालस्तु विंशतिसहस्रोत्तरत्रिचत्वारिंशल्लक्षपरिमितो भवतीति बोद्धव्यम् ॥ ८ ॥

त्वया ममेति । त्वया समेतस्य मम कल्पा अपि समासमाः । भवता विप्रयुक्तस्य मे क्षणोऽपि कल्पकल्प इत्यन्वयः । आर्य ! त्वया = भवता, समेतस्य = संगतस्य, मम = लक्ष्मणस्य, कल्पा अपि = ब्रह्मदिनपरिमितकाला अपि, कल्पपरिमाणं तु 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ।' इति प्रमाणादवसेयम् । 'कल्पो विकल्पे कल्पद्रौ संवर्ते ब्रह्मवासरे ।' इति हेमचन्द्रः । इत्थं च तादृशदीर्घकाला अपि, समासमाः = समाभिः ( वर्षपरिमितसमयैः ) समाः ( तुल्याः ), सुखमयत्वादिति भावः । एवं च भवता = आर्येण, विप्रयुक्तस्य = विरहितस्य, मे = मम लक्ष्मणस्य, क्षणोऽपि= त्रिंशत्कलापरिमितः सूक्ष्म कालोऽपि, कल्पकल्पः = ब्रह्मवासरसमानः । ईषदसमाप्तः कल्पः कल्पकल्पः, 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति कल्पप्प्रत्ययः । भवत्सान्निध्ये मम ब्रह्मवासरात्मको दीर्घकालोऽपि सुखमयत्वादेकसंवत्सरसमयसमः । भवद्विप्रयोगे तु मम क्षणपरिमितः सूक्ष्मकालोऽपि दुःखमयत्वाद्ब्रह्मदिवसतुल्य इति भावः । अत्र 'समासमाः' 'कल्पकल्प' इत्यत्र यमकं नाम शब्दाऽलङ्कारस्तल्लक्षणं यथा—

'सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥' इति । अनुष्टुब्वृत्तम् ॥ ९ ॥

सरयूरिति । सीतां = जानकीं, तदनन्तरं रक्षेति पदं विवक्षितमासीत् । रक्षितरि = रक्षके ।

---

और भी—

आपका साथ होनेपर मेरे लिए कल्प भी वर्ष तुल्य हैं और आपके वियोगपर मेरे लिए एक क्षण भी कल्पके समान है ॥ ९ ॥

गङ्गा—कौशल्याने भी रामभद्रको कुछ शिक्षा दी ?

सरयू—और क्या ? उन्होंने—'वत्स रामभद्र ! सीताको, ऐसा आधा ही कहने पर

को भवान् सीतासमीक्षणस्य ? तदिदं तावदभ्यर्थयामि ।

इह दुग्धमुखे वत्से लक्ष्मणे दक्षिणो भव ।
अपि राज्योपभोगेभ्यो यस्य त्वं सहजप्रियः ॥ १० ॥

इदमुक्तं च रामभद्रेण—अपि मातः ! निजजीवितेऽपि दक्षिणेन भवितव्यमित्यपि शिक्षणीयमेव ।

गङ्गा—तन्नूनं ततः प्रभृति सहजसौन्दर्यमेवाभरणं वत्सरामस्य ।

---

लक्ष्मणरक्षणात्मकं कौशल्यावाक्यं प्रतिपादयति—इहेति । ( हे रामभद्र ! ) राज्योपभोगेभ्योऽपि यस्य त्वं सहजप्रियः, ( तादृशे ) इह दुग्धमुखे वत्से लक्ष्मणे दक्षिणो भवेत्यन्वयः ।

( हे रामभद्र ! ) राज्योपभोगेभ्योऽपि=राज्यसुखाऽनुभवेभ्योऽपि, यस्य=लक्ष्मणस्य त्वं=रामः, सहजप्रियः=स्वभावतः प्रेयान् , असीति शेषः । तादृशे इह= अस्मिन् , दुग्धमुखे=क्षीराऽऽनने, अतिशयन्यूनवयस्क इति भावः । वत्से=वात्सल्यभाजने, लक्ष्मणे=सुमित्रासूनौ, दक्षिणः=उदारः, 'दक्षिणे सरलोदारा'वित्यमरः । भव=भवेः । यो राज्यसुखाऽनुभूतिमप्यनवेक्ष्य त्वयि सुतरां स्निह्यति, तादृशस्याऽल्पवयसो वात्सल्यभाजनस्य लक्ष्मणस्य रक्षणे तत्परो भवेति तात्पर्यम् । अनुष्टुब्वृत्तम् ॥ १० ॥

इदमिति । निजजीवितेऽपि=स्वजीवनेऽपि, लक्ष्मणो मत्कृते स्वजीवनसमः प्रिय इति भावः ।

गङ्गेति । ततः प्रभृति=तस्मात्कालादारभ्य । सहजसौन्दर्यमेव=स्वाभाविकसुन्दरत्वमेव, वनवासित्वेन त्यक्तराजार्हाभरणत्वादिति भावः ।

---

वाष्पसे गला रुद्ध होकर फिर कहा 'अथवा वत्स ! लक्ष्मणके रक्षक होने पर सीताकी देख रेख करनेका तुम्हें क्या प्रयोजन है ? इसलिए मैं यह प्रार्थना करती हूं कि हे रामभद्र ! जिसको राज्यसुखके उपभोगोंसे भी तुम स्वभावसे ही प्यारे हो। वैसे दूधमुँहे वत्स लक्ष्मणमें उदार बनो ॥ १० ॥

रामभद्रने भी ऐसा कहा—अपने जीवनमें भी उदार होनेकी शिक्षा देनेकी आवश्यकता है क्या ?

गङ्गा—तब निश्चय ही उस समयसे वत्स रामका स्वाभाविक सौन्दर्य ही भूषण हो गया होगा ।

सरयूः—अन्यदप्येकम् । विमुञ्चन्सकलमाभरणजातमित्थमभ्यर्थितः कौसल्यया रामभद्रः ।

हस्तावलम्बदानाय सीतामाङ्गल्यसम्पदः ।
इदं विमुञ्च मा वत्स राम ! रत्नाङ्गुलीयकम् ॥ ११ ॥

इदमन्यच्च ते कथयामि । धीरा समाकर्णय ।

गङ्गा—तदेतावदाकर्णितवतीमपि मामधीरामाशङ्कसे ।

सरयूः—

निकामं रामस्य प्रमुदितमुखाम्भोरुहरुचे-
र्जटावल्लीर्मल्लीमुकुलसदृशैर्बाष्पपृषतैः ।

---

सरयूरिति । विमुञ्चन् = परित्यजन् । अभ्यर्थितः = प्रार्थितः । हस्तावलम्बदानायेति । वत्स राम ! सीतामाङ्गल्यसम्पदो हस्ताऽवलम्बदानाय इदं रत्नाङ्गुलीयकं मा विमुञ्चेत्यन्वयः । वत्स = वात्सल्यभाजन, राम = रामभद्र !, सीतामाङ्गल्यसम्पदः = सीतायाः ( जानक्याः ) माङ्गल्यसम्पदः ( सौभाग्यसम्पत्तेः ), हस्तावलम्बदानाय = कराऽवलम्बनवितरणाय, आश्रयणायेति भावः । इदं = सन्निकृष्टस्थं, रत्नाङ्गुलीयकं = रत्नखचितामूर्मिकाम् , अङ्गुलौ भवमङ्गुलीयकं, जिह्वामूलाङ्गुलेश्छः' इति छप्रत्ययः । मा विमुञ्च = न परित्यज । अनेनाऽङ्गुलीयकद्वारा सीताप्राप्त्यादिरूपं भाविफलं सूचितम् । अनुष्टुब्वृत्तम् ॥ ११ ॥

गङ्गेति । आकर्णितवतीमपि = श्रुतवतीमपि ।

निकाममिति । हे मातः ! निकामं प्रमुदितमुखाऽम्भोरुहरुचेः रामस्य जटावल्लीः मल्लीमुकुलसदृशैः बाष्पपृषतैः निषिञ्चन् सौमित्रिः कथमपि यदा वितेने खलु, तदा एतत् जगदपि करुणमयं जातमित्यन्वयः ।

हे मातः = हे अम्ब !, निकामम् = अतिशयं, प्रमुदितमुखाऽम्भोरुहरुचेः = प्रमुदिता ( प्रसन्ना ) मुखाऽम्भोरुहस्य ( वदनकमलस्य ) रुचिः ( शोभा ) यस्य स

---

सरयू—और भी एक बात है । सब भूषणसमूहको उतारते हुए रामभद्रसे कौसल्याने इस प्रकारसे प्रार्थना की—

वत्स रामभद्र ! सीताकी सौभाग्यसम्पत्तिका ग्रहण करनेके लिए इस रत्नखचित अंगूठीको मत उतारो ॥ ११ ॥

तुम्हें यह दूसरी बात भी कहती हूं । धीर होकर सुनो—

गङ्गा—इतना सुन लेने पर भी तुम मुझमें अधीरता होनेकी आशङ्का करती हो ।

सरयू—हे मातः ! अतिशय प्रसन्न मुखवाले रामकी जटाओंको बेलीके मुकुलोंके

निषिञ्चन् सौमित्रिः कथमपि वितेने खलु यदा
तदा जातं मातः! करुणमयमेतज्जगदपि ॥ १२ ॥

यमुना—अपि नाम तस्मिन् समये सीताऽपि किमपि शिक्षिता बन्धुजनेन। ( अवि णाम तस्सिं समये सीदावि किंवि सिक्खिदा बन्धुअणेण )

सरयू—अयि देवि! विपरीतमालपसि।

गहनविपिनवासोत्कण्ठया सम्प्रयातं
प्रियतममनुयान्त्या तत्क्षणं राजपुत्र्या।

---

तस्य। रामस्य = रामचन्द्रस्य, जटावल्लीः=जटालताः, 'व्रतिनस्तु जटा सटा' इत्यमरः। मल्लीमुकुलसदृशैः = मल्लिकापुष्पकुड्मलतुल्यैः शुक्लवर्णैरित्यर्थः। 'तृणशून्यं तु मल्लिका। भूपदी शीतभीरुश्चे'त्यमरः। मल्लिकापुष्पं च भाषायां 'बेली'तिनाम्ना प्रसिद्धम्। बाष्पपृषतैः = अश्रुबिन्दुभिः, निषिञ्चन् = सिक्ताः कुर्वन्, सौमित्रिः = लक्ष्मणः, सुमित्राया अपत्यं पुमानिति 'बाह्वादिभ्यश्चे'ति इञ्। कथमपि = केनाऽपि प्रकारेण, क्लेशाऽतिशयेनेति भावः। यदा = यस्मिन्काले, वितेने = सम्पादितवान्, तपस्विजनोचिताः बद्धाः कृतवानिति भावः। तदा = तस्मिन्काले, एतत् = इदं, जगदपि = लोकोऽपि, न केवलमयोध्यैव प्रत्युत समस्तं जगदेवेति भावः। करुणमयं = शोकप्रचुरं, 'तत्प्रकृतवचने मयट्' इति मयट्। जातं=निर्वृत्तम्। पित्राज्ञापालनप्रसङ्गस्य समापतनेन प्रसन्नमुखपद्मस्य रामस्य जटा यदा लक्ष्मणो बद्धवान् तदा न केवलमयोध्यैव सकलमपि भूवलयं शोकाकुलं सञ्जातमिति भावः। उपमाऽलङ्कारः। शिखरिणी वृत्तम् ॥ १२ ॥

सरयूरिति। विपरीतं = प्रतिकूलं, सीतया शिक्षिता बन्धुजना इति वक्तव्यत्वे, 'बन्धुजनेन सीता शिक्षिते'तिकथनं विपरीतमिति भावः।

गहनेति। गहनविपिनवासोत्कण्ठया संप्रयातं प्रियतमं तत्क्षणम् अनुयान्त्या राजपुत्र्या चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः बान्धवाः साधु वृत्तं स्फुटतरम् उपदिष्टा इत्यन्वयः। गहनविपिनवासोत्कण्ठया = गहनविपिने ( निबिडाऽरण्ये ) यो वासः ( अवस्थानम् ) तस्मिन् उत्कण्ठया ( उत्कलिकया )। संप्रयातं = गतं, प्रियतमं =

---

सदृश अश्रुबिन्दुओंसे सेचन करते हुए लक्ष्मणने किसी प्रकारसे जब बनाई तब यह जगत् ही शोकाकुल हो गया ॥ १२ ॥

यमुना—उस समय बन्धुजनोंने सीताको भी कुछ शिक्षा दी थी?

सरयू—देवि! तुम उल्टी ही बात कहती हो!

निबिड वनमें निवासकी उत्कण्ठासे जानेवाले प्रियतम रामचन्द्रजीको उसी क्षण अनु-

चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः
स्फुटतरमुपदिष्टा बान्धवाः साधु वृत्तम् ॥ १३ ॥

इदं तु वृत्तम्।

पुरः कान्तं यान्तं विपिनमनुयान्त्याः सरभसं
तदादौ सीतायाः किसलयनिभौ वीक्ष्य चरणौ।
मुहुः शीतास्तप्ताः किमपि च मुहुर्बन्धुनयनैः
समं मुक्ता मुक्तासदृशरुचयो बाष्पकणिकाः ॥ १४ ॥

वल्लभं, राममित्यर्थः। तत्क्षणं = तत्कालम्, अनुयान्त्या = अनुगच्छन्त्या, राजपुत्र्या = राजकुमार्या, सीतयेति भावः। चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः—चरणकमलयोः (पादपद्मयोः) गुञ्जन्तः (शब्दायमानाः) ये मञ्जुमञ्जीरशब्दाः (मनोहरनूपुरध्वनयः), तैः। 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम्।' इत्यमरः। बान्धवाः = बन्धुजनाः, साधुवृत्तं = सच्चरित्रं, पतिव्रताचारित्वमित्यर्थः, 'पतिव्रतया ललनया सर्वास्वप्यवस्थासु सर्वतोभावेन पतिरनुसरणीय' इत्येतादृशं वृत्तमिति भावः। स्फुटतरं = व्यक्ततरं यथा स्यात्तथा। उपदिष्टाः = शिक्षिताः। सीता पत्यनुसरणरूपेण स्वाचरणेन बन्धुजनान्प्रति सतीवृत्तमुपदिश्य मनागपि व्यथामप्रदर्श्य वनं गतेति भावः। मञ्जीरशब्दा उपदेशवचनानीत्यत्र प्रतीयमानोत्प्रेक्षाऽलङ्कारः। मालिनी वृत्तम् ॥ १३ ॥

पुरः कान्तमिति। पुरो विपिनं यान्तं कान्तं सरभसम् अनुयान्त्याः सीतायाः तदादौ किसलयनिभौ चरणौ वीक्ष्य बन्धुनयनैः मुहुः किमपि शीताः तप्ताश्च मुक्तासदृशरुचयो बाष्पकणिकाः समं मुक्ता इत्यन्वयः।

पुरः = अग्रे, विपिनं = वनं, यान्तं = गच्छन्तं, कान्तं = सुन्दरं, राममिति भावः। सरभसं = सवेगं सहर्षं वा, 'रभसो वेगहर्षयोः' इति विश्वः। तत्र च कान्ताऽप्राप्तिभीत्या सवेगं, कान्ताऽनुसरणप्राप्त्या च सहर्षमिति भावः। अनुयान्त्याः = अनुगच्छन्त्याः, सीतायाः = जानक्याः तदादौ = अनुयानप्रारम्भे, किसलयनिभौ = पल्लवसदृशौ, चरणौ = पादौ, वीक्ष्य = दृष्ट्वा, बन्धुनयनैः = बान्धवजननेत्रैः, मुहुः = वारं

गमन करनेवाली राजपुत्रीने चरणकमलोंमें गूँजनेवाले मनोहर मञ्जीरशब्दोंसे बान्धवोंको स्पष्टरूपसे सच्चरित्र का उपदेश दे दिया ॥ १३ ॥

यही हुआ।

अपने आगे वनको जाते हुए पति रामचन्द्रका हर्षपूर्वक अनुसरण करनेवाली सीताके पल्लवसदृश चरणोंको देखकर बन्धुओंके नेत्रोंसे बारंबार ठण्ढे और गरम मोतीके सदृश अश्रुकण एक ही बार गिर पड़े ॥ १४ ॥

गङ्गा—इदं बन्धुजनेन शिक्षितो रामभद्रः ।—

बाला विदेहतनया, तरलौ भवन्तौ,
दिग्दक्षिणा च रजनीचरचक्रदुष्टा ।
तद्वत्स ! वत्सलतयेदमुदाहरामो
मा राम ! गच्छ नयदक्षिण ! दक्षिणाशाम् ॥ १५ ॥

गङ्गा—ततस्ततः ।

---

कारं, किमपि = केनाऽपि प्रकारेण, शीताः = शीतलाः, सीताकर्तृकरामाऽनुयानरूपकार्यदर्शनजन्येन हर्षेणेति भावः । तप्ताश्च = तापयुक्ताश्च, कमलकोमलकलेवरायाः सीतायाः वनगमनजनितखेदाऽतिशयेनेति भावः । मुक्तासदृशरुचयः = मौक्तिकसमानकान्तयः, बाष्पकणिकाः = लोचनजललवाः, समं = युगपत्, मुक्ताः = त्यक्ताः । अत्रोपमाऽलङ्कारः । शिखरिणीवृत्तम् ॥ १४ ॥

बालेति । विदेहतनया बाला, भवन्तौ तरलौ, दक्षिणा दिक् च रजनीचरचक्रदुष्टा । तद् वत्स ! वत्सलतया इदम् उदाहरामः—नयदक्षिण हेराम ! दक्षिणाऽऽशां मा गच्छेत्यन्वयः ।

विदेहतनया = जानकी, बाला = किशोराऽवस्थायुक्ता, भवन्तौ = युवां, रामलक्ष्मणावित्यर्थः । तरलौ = चञ्चलौ, दक्षिणा दिक् च = दक्षिणादिशा च, रजनीचरचक्रदुष्टा = रजनीचराणां (निशाचराणां, राक्षसानामित्यर्थः) चक्रेण मण्डलेन, समूहेनेत्यर्थः ) दुष्टा ( दोषयुक्ता ), एतेन सीतारक्षणं प्रत्याशङ्का व्यज्यते । तत् = तस्मात्कारणात्, हे वत्स = हे वात्सल्यभाजन रामभद्र !, वत्सलतया = स्निग्धत्वेन, इदं = वक्ष्यमाणप्रकारं वचनम्, उदाहरामः = कथयामः, किं तदित्युदाहरति—मा रामेति । नयदक्षिण = नीतिकुशल, हे राम = हे रामभद्र !, दक्षिणाऽऽशां = दक्षिणदिशां, मा गच्छ = नो याहि, वनस्याऽवश्यगन्तव्यत्वेऽपि दक्षिणां दिशं प्रति प्रयाणं मा कार्षीरिति भावः । अनेन सीताहरणरूपो भाविवृत्तान्तः सूचितः । अत्र वसन्ततिलकावृत्तम् ॥ १५ ॥

---

गङ्गा—बन्धुओंने रामभद्रको ऐसी शिक्षा दी कि—

सीता अभी बालिका है, तुम दोनों चञ्चल हो और दक्षिण दिशा राक्षससमूहसे दोषयुक्त है । इसलिए हे वत्स ! हमलोग स्नेहपूर्वक यह कहते हैं कि—नीतिनिपुण हे राम ! दक्षिण दिशाकी ओर मत जाओ ॥ १५ ॥

गङ्गा—तब क्या हुआ ? तब क्या हुआ ?

सरयूः—ततस्तामेव दिशं प्रति—

सुरमुरजगभीरधीरनादद्विगुणगुणध्वनिचापदत्तहस्तः।
पुरजननयनैः कृतं दधानः कुवलयदाम जगाम रामभद्रः॥ १६॥

यमुना—कः पुनः सोऽवसरः सुरमुरजशब्दस्य। (को उण सो अवसरो सुरमुरअसद्दस्स)

गङ्गा—सखि! न जानासि? गभीरं ध्वनद्भिः खलु सुरमुरजैः किमपि गभीरमेव ध्वनितम्। (पुनः सविषादम्) हा दशरथ! सकलगुणसम्पदां भाजनं भूत्वाऽपि कथमेकस्य भाजनं न जातोऽसि?

---

सुरमुरजेति। सुरमुरजगभीरधीरनादद्विगुणगुणध्वनिचापदत्तहस्तः पुरजननयनैः कृतं कुवलयदाम दधानो रामभद्रो जगामेत्यन्वयः।

सुरमुरजेत्यादिः = सुराणां (देवानाम्) मुरजाः (मृदङ्गाः) तेषां गभीरः (गम्भीरः) धीरश्च (मनोहरत्वेन चित्तसंग्राहकश्च) यो नादः (शब्दः) तेनद्विगुणः (द्विगुणीकृतः) गुणस्य (मौर्व्याः) ध्वनिः (शब्दः) यस्य सः, एतादृशो यो चापः (धनुः) तस्मिन् दत्तः (निक्षिप्तः) हस्तः (करः) येन सः। एवं च पुरजननयनैः = नागरिकलोकलोचनैः, कृतं = सम्पादितं, कुवलयदाम = नीलकमलमाल्यं, लोकलोचननीलकमलैरेवदर्शनेन निर्मितां मालामिति भावः। दधानः = धारयन्, रामभद्रः = रामचन्द्रः, जगाम = गतः, दक्षिणाशामिति पूर्वेण सम्बन्धः। अत्र परिणामाऽलङ्कारः। पुष्पिताग्रावृत्तम्॥ १६॥

रामप्रादुर्भावकारणमजानन्ती यमुना पृच्छति—कोउणेति।

गङ्गेति। ध्वनद्भिः = ध्वनिं कुर्वद्भिः, गभीरं = निगूढार्थमेव।

पुनरिति। एकस्य = गुणस्य, भाग्यवत्त्वस्येति भावः।

---

सरयू—तब उसी दिशाकी ओर—

देवताओंकी पखावजोंके गम्भीर और चित्तसंग्राहक शब्दसे द्विगुणशब्दयुक्त प्रत्यञ्चासे सम्पन्न धनुमें हाथ रखकर नागरिकोंके नेत्रोंसे की गई नीलकमलमालाको धारण करते हुए रामभद्र चले गये॥ १६॥

यमुना—देवताओंकी पखावजकी आवाजका वह क्या अवसर था?

गङ्गा—सखि! तुम नहीं जानती हो, देवताओंकी गम्भीर शब्द करनेवाली पखावजोंने किसी गम्भीर विषयकी ही सूचना दी। (फिर खेदके साथ) हा दशरथ! तुम समस्तगुण सम्पत्तियोंके पात्र होकर भी कैसे एक (भाग्यवत्त्व) गुणके पात्र नहीं हुए हो?

यमुना—कथं पुनः स राजा युष्माभिः प्रशस्यते येन तादृशोऽपि तनयस्तृणमिव मुक्तः ? ( कहं उण सो राआ तुह्मेहिं पसंसीअदि जेण तारिसोऽवि तणओ तुणं विअ मुक्को )

सरयूः—शान्तं पापम् ।

नरेन्द्रः कैकेयीवचनपरिपाटीविगलितः
क्षणं मोह-क्रोध-प्रसरभरयोरन्तरचरः ।
सुतं चोरग्रस्तो मणिमिव करस्थं न कृपण-
स्तृणानीव प्राणान् पुनरयममुञ्चद्दशरथः ॥ १७ ॥

---

नरेन्द्र इति । कैकेयीवचनपरिपाटीविगलितो नरेन्द्रो दशरथः । क्षणं मोहक्रोधप्रसरभरयोः अन्तरचरः ( सन् ) चोरग्रस्तः कृपणः करस्थं मणिम् इव सुतं न अमुञ्चत , पुनः तृणानि इव प्राणान् अमुञ्चदित्यन्वयः ।

कैकेयीवचनपरिपाटीविगलितः = कैकेय्याः ( भरतमातुः ) वचनपरिपाट्या ( वचःक्रमेण ) विगलितः ( विषण्णः ) नरेन्द्रः = महाराजः, दशरथः = अयोध्याऽधीश्वरः, क्षणं = कञ्चित्कालं यावत् , 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । मोहक्रोधप्रसरभरयोः = मोहक्रोधयोः ( वैचित्र्यकोपयोः, तत्र मोहो रामवनवासप्रार्थनाजनितः, क्रोधश्च कैकेय्या अन्यायाचरणोत्पादितो बोध्यः ) तयोर्यः प्रसरः ( विस्तारः ) तस्य भरयोः ( भारयोः ), अन्तरचरः = मध्यवर्ती सन् , कदाचिन्मोहं कदाचिच्च क्रोधमनुभवन्निति भावः । चोरग्रस्तः = तस्करगृहीतः, कृपणः = कदर्यः, 'कदर्ये कृपणक्षुद्रकिम्पचानमितम्पचाः ।' इत्यमरः । करस्थं = हस्तस्थितं, मणिम् इव = रत्नमिव, सुतं = पुत्रं, राममित्यर्थः । नाऽमुञ्चत् = नाऽत्यजत् । पुनः, तृणानि इव = तुच्छवस्तुवत् , प्राणान् = स्वकीयान् असून्, अमुञ्चत् = अत्यजत् । यथा कश्चित्कृपणश्चोरग्रस्तः सन्नपि स्वकरावस्थितं मणिमप्रदायैव स्वजीवनं मुञ्चति तथैव महाराजो दशरथोऽपि कैकेय्या याचितः सन्नपि प्राणप्रियं तनयं राममत्यक्त्वैव स्वजीवनं त्यक्तवानिति भावः ।

---

यमुना—तुम कैसे उस राजाकी प्रशंसा करती हो जिसने वैसे पुत्रको भी तृणके समान त्याग दिया ?

सरयू—पाप निवृत्त हो ।

कैकेयीके वचनक्रमसे विषण्ण होकर महाराज दशरथने कुछ समय तक मोह और क्रोधका अनुभव कर जैसे चोरसे पकड़ा गया कंजूस मणिको नहीं छोड़ता है उसी तरह पुत्र ( राम ) को नहीं छोड़ा बल्कि अपने प्राणको ही तृणके समान छोड़ दिया ॥ १७ ॥

यमुना—अपि नाम भरतस्य नानुमतम् इदम् । ( अवि णाम भरदस्स णाणुमदमिदम् )

सरयूः—अये, भरतस्य मातुलकुलादागतस्य कैकेय्याश्च संवाद एवोत्तरं दास्यति ।

गङ्गा—कीदृशः पुनरसौ ?

सरयूः—

मातस्तातः क्व यातः ? सुरपतिभवनं, हा कुतः ?, पुत्रशोकात् ,
कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः, किमस्य ?

---

अत्रोपमाऽलङ्कारः । शाब्दी परिसंख्या चेति द्वयोरलङ्कारयोरङ्गाङ्गिभावेनाऽवस्थितेः सङ्करः । शिखरिणी वृत्तम् ॥ १७ ॥

गङ्गेति । असौ = संवादः ।

कैकेयीभरतसंवादं वर्णयति—मातस्तात इति । मातः ! तातः क्व यातः ? सुरपतिभवनं, हा ! कुतः ? पुत्रशोकात् , असौ कः पुत्रः ? चतुर्णां यस्य त्वमवरजतया जातः, अस्य किम् ? असौ काननाऽन्तं प्राप्तः, किमिति ? नृपगिरा, असौ तथा किं बभाषे ? मद्वाग्बद्धः ( सन् बभाषे ) इह ते किं फलं ? तव धराऽधीशता, हा ! हतोऽस्मीत्यन्वयः ।

हे मातः = हे जननि ! तातः = पिता, दशरथ इत्यर्थः । क्व = कुत्र, यातः = प्राप्तः, प्रश्नोऽयं भरतस्य । कैकेय्युत्तरयति—सुरपतिभवनं = देवराजनिकेतनं, स्वर्गमिति भावः । हा = पितुः शोच्यत इति भावः । कुतः = कस्माद्धेतोः, तातः सुरपतिभवनं यात इति शेषः । पुत्रशोकात् = तनयमन्योः, तनयविरहजनितशोकात्त्वत्पितुः सुरपतिभवनप्राप्तिरिति कैकेय्या उत्तरम् । असौ = विप्रकृष्टवर्ती, कः = कतमः पुत्रः, यस्य शोकात्पितुः सुरसद्मप्राप्तिरिति भरताऽनुयोगः । चतुर्णां = चतुःसंख्यकानां पुत्राणां मध्ये, यस्य = पुत्रस्य, रामरूपस्येति भावः । त्वं = भरतः, अवरजतया = अनुजत्वेन जातः = उत्पन्नः, यस्य त्वमनुजस्तस्य रामस्य वियोगशोकात्त्वत्पितुः

---

यमुना—यह बात क्या भरतसे स्वीकृत नहीं थी ?

सरयू—अरे ! मामाके यहाँसे आये हुए भरत और कैकेयीकी बातचीत ही इस प्रश्नका उत्तर दे देगी ।

गङ्गा—वह कैसी बातचीत थी ।

सरयू—माताजी ! पिताजी कहां चले गये ? इन्द्रलोकको, हाय ! कैसे ? पुत्रके शोकसे । वह पुत्र कौन है ? चारों पुत्रोंमें जिसके तुम छोटे भाई हो । उनका क्या हुआ ? वे वनको

प्राप्तोऽसौ काननान्तं, किमिति ? नृपगिरा, किन्तथाऽसौ बभाषे ?
मद्वाग्बद्धः, फलन्ते किमिह ? तव धराऽधीशता, हा हतोऽस्मि ॥१८॥

गङ्गा—( सहर्षम् ) वत्स भरत ! भवसि रामानुजन्मा ।

सरयूः—

रामे प्राप्ते वनान्तं कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।

---

स्थवांस इति कैकेय्या उत्तरम् । अस्य = मदग्रजस्य, रामस्येति भावः, किं = कीदृग्यवस्था समजनि, यच्छोकेन पिता प्राणांस्तत्याजेति भरतप्रश्नः । असौ = देशविप्रकृष्टः, त्वदग्रजो रामः, काननान्तं = वनैकदेशं, प्राप्तः = यातः इति कैकेयीप्रतिवचनम् । किमिति = केन कारणेन मदग्रजो गुणाऽभिरामो रामः काननाऽन्तं प्राप्त इति भरतीया पृच्छा । नृपगिरा = राजवाण्या, दशरथादेशेनेति कैकेयीप्रतिवाक्यम् । असौ-कालविप्रकृष्टो मत्तातः, तथा = तेन प्रकारेण, रामनिर्वासनविषयमादेशं, किं=किमर्थः बभाषे = भाषितवानिति भरतोऽनुयोगः । मद्वाग्बद्धः = मद्वाणीनियन्त्रितः, वरद्वयपूरणकारणकमद्वाणीबद्धः सन् त्वत्पिता रामनिर्वासनादेशं बभाष इति कैकेय्या उत्तरम् । इह = अस्मिन्विषये, रामनिर्वासनात्मक इति भावः । ते = तव, किं = कीदृशं, फलं = परिणामः, रामनिर्वासने तव को लाभ इति भरतप्रश्नः । तव = भरतस्य सुतस्य, धराऽधीशता = धरणीधरता, राज्यलाभ इति कैकेय्याः प्रतिवाक्यम् । हा = मम शोच्यता, यस्य जननी त्वमीदृशी क्रूराचारपरायणा, हतोऽस्मि = नष्टोऽस्मि ममैव कारणात्पितुः विनाशो ज्येष्ठभ्रातुश्च वनवास इति मातृसंवादोपसंहाररूपा खेदाऽतिशयोक्तिः । अत्र प्रकान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तेर्वाक्यैकदेशभिधानं नाट्याऽङ्गम् । स्रग्धरा वृत्तम् ॥ १८ ॥

गङ्गेति । रामाऽनुजन्मा = रामाऽनुजः, सर्वथैव त्वं रामानुजपदेन व्यपदेशयोग्योऽसीति भावः ।

राम इति । रामे वनाऽन्तं प्राप्ते भरतः कथमपि चेतनां प्राप्य मुनिजनवचनात्

---

चले गये । क्यों ? राजाकी आज्ञासे । उन्होंने ऐसी आज्ञा क्यों दी ? उन्होंने मेरी वाणीसे बद्ध होकर ही ऐसी आज्ञा दी । इसमें आपको क्या फायदा हुआ ? तुम्हारा राज्य लाभ । हाय ! मैं नष्ट हो गया ॥ १८ ॥

गङ्गा—( हर्षपूर्वक ) वत्स भरत ! तुम रामके भाई हो ।

सरयू—रामके वन जानेपर भरतने किसी प्रकारसे चेतना ( होश ) पाकर मुनिजनके वचनसे और्ध्वदेहिक संस्कारोंसे पिता ( दशरथ ) को इन्द्रलोक पहुँचाकर और भाई

भ्रातुः शोकाभितप्तः स्वजनपरिवृतः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगापवीरः ॥ १९ ॥

यमुना—ततस्ततः । ( तदो तदो )

सरयूः—अहमेतावदेव जानामि । ततः परं तद्वृत्तान्तनिरूपणाय निजकमलवनवासी कोऽपि कलहंसः प्रस्थापितो मया ।

( प्रविश्य )

कलहंसः—देव्यः ! इदं नमो वः ।

---

ऊर्ध्वदेहक्रियाभिः तातं देवेन्द्रलोकं नीत्वा भ्रातुः शोकाऽभितप्तः स्वजनपरिवृतो नन्दिग्रामे तिष्ठन् रघुपतिपुनरागामिभोगाऽपवीरः अयोध्यां पालयामासेत्यन्वयः । रामे = स्वाऽग्रजे रामचन्द्रे, वनाऽन्तं = काननाऽन्तं, प्राप्ते = याते, भरतः = कैकेयी-तनुजः, कथमपि = केनाऽपि प्रकारेण, चेतनां = संज्ञाम् , प्राप्य = आसाद्य, मुनि-जनवचनात् = वसिष्ठाद्यृषिजनवाक्यात् , ऊर्ध्वदेहक्रियाभिः = और्ध्वदेहिकसंस्कार-कर्मभिः, तातं = पितरं, दशरथमित्यर्थः, देवेन्द्रलोकं = स्वर्गलोकं, नीत्वा = प्रापय्य, भ्रातुः = रामचन्द्रस्य, शोकाऽभितप्तः = शोकेन ( वियोगजनितेन मन्युना ) अभि-तप्तः ( सन्तप्तः ) । स्वजनपरिवृतः = आत्मीयजनपरिवेष्टितः, नन्दिग्रामे = अयो-ध्यानिकटवर्तिनि नगरे, तिष्ठन् = वसन् , रघुपतिपुनरागामिभोगाऽपवीरः=रघुपतेः ( रामचन्द्रस्य ) पुनरागामी ( पुनर्भावी ) यो भोगः ( राज्योपभोगः ) तस्मात्, अपवीरः ( पराङ्मुखः ) सन् , अयोध्यां=साकेतं, पालयामास = रक्षितवान् । भरत-श्चतुर्दशवर्षाऽनन्तरं प्रत्यावर्तिताय स्वाग्रजाय रामाय साकेतराज्यं समर्पणीयमिति विमृश्य राज्योपभोगजनितसुखपराङ्मुखः सन् नन्दिग्रामे तिष्ठन्नयोध्यां पालयामा-सेति भावः । स्रग्धरा वृत्तम् ॥ १९ ॥

सरयूरिति । एतावदेव = एतत्परिमाणमेव, वृत्तान्तमिति शेषः । तद्वृत्तान्त-निरूपणाय = रामोदन्तज्ञानाय । प्रस्थापितः = प्रेषितः ।

---

रामके शोकसे संतप्त हो स्वजनोंसे परिवेष्टित होकर नन्दिग्राममें रहकर रामके पुनर्भावी राज्योपभोगसे पराङ्मुख कर अयोध्याका पालन किया ॥ १९ ॥

यमुना—तब क्या हुआ ? तब क्या हुआ ?

सरयू—मैं इतना ही जानती हूँ । इसके अनन्तर और वृत्तान्त जानने के लिए अपने कमलवनमें रहनेवाले किसी कलहंसको मैंने भेजा है ।

( प्रवेश कर )

कलहंस—देवियो ! मैं नमस्कार करता हूँ ।

सरिदियमितः स्वच्छस्वल्पप्रवाहमनोहरा ।
इदमिदमितः स्निग्धामोदं मुहुर्मधुरध्वनन्-
मधुकरवधूमुग्धाभोगं वनं सरसीरुहाम् ॥ २२ ॥

गङ्गा—अहो ! अध्वभ्रमशमनानि पथिकजनवचनानि ।

यमुना—ततस्ततः । ( तदो तदो )

भीतं विलोक्य हरिणं करुणार्द्रचित्ता
पत्युर्निजेन पिदधे धनुरंशुकेन ।

---

प्रवाहमनोहरा इयं सरित् । इतः स्निग्धामोदं मुहुः मधुरध्वनन्मधुकरवधूमुग्धाभोगं सरसीरुहाम् इदं वनमित्यन्वयः । इतः = अस्मिन्स्थाने, 'आद्यादिभ्य उपसंख्यानम्' इति सार्वविभक्तिकस्तसिः । शीतलच्छायः = शीता ( शीतला ) छाया ( अनातपः ) यस्मिन्सः । स्यन्मधुशीकरः = स्रवन्तः ( विगलन्तः ) मधुनः ( पुष्परसस्य ) शीकराः ( अम्बुकणाः ) यस्मिन्सः । तादृशः अयं = सन्निकृष्टस्थः, तरुः = वृक्षः, अस्तीति शेषः, एवं परत्रापि । इतः = अत्र, स्वच्छस्वल्पप्रवाहमनोहरा=स्वच्छः (निर्मलः) स्वल्पः ( स्तोकः, सुखतरणयोग्य इति भावः ) एतादृशो यः प्रवाहः ( पूरः ) तेन मनोहरा ( रमणीया ) । इयं = सन्निकृष्टस्था सरित् = नदी, अस्तीति शेषः । इतः= इह, स्निग्धामोदं = स्निग्धः ( कोमलः ) आमोदः ( सुगन्धः ) यस्य तत् , मुहुः = वारं वारं, मधुरध्वनन्मधुकरवधूमुग्धाभोगं = मधुरं ( माधुर्यं पूर्णं यथा तथा ) ध्वनन्त्यः ( गुञ्जन्त्यः ) या मधुकरवध्वः ( भ्रमर्यः ) ताभिः मुग्धः ( सुन्दरः ) आभोगः ( परिपूर्णता ) यस्मिंस्तत् , तादृशं, सरसीरुहां = कमलानाम् , इदं = पुरः स्थितं, वनम् = उपवनम् , अस्तीति शेषः । सर्वैरपि प्रकारैरिदं वनं सुखसञ्चरणीयमस्तीति भावः । हरिणी वृत्तम् ॥ २२ ॥

गङ्गेति । अध्वभ्रमशमनानि = अध्वनि ( मार्गे ) यो भ्रमः ( दुर्गमत्वरूपा भ्रान्तिः ) तच्छमनानि ( तन्निवर्तकानि ) ।

पथि सीतायाः सदयव्यवहारं प्रतिपादयति—भीतमिति । हरिणं भीतं विलोक्य करुणार्द्रचित्ता ( सीता ) पत्युर्धनुः निजेन अंशुकेन पिदधे । केदारसीम्नि च यव-प्ररोहं सदयम् आदाय सा तु श्रवणावतंसं विदधे इत्यन्वयः ।

---

इधर निर्मल और स्वल्पप्रवाहसे रमणीय यह नदी है । इधर कोमल सुगन्धवाला, बारंबार शब्द करनेवाली भ्रमरियोंसे सुन्दर स्थानवाला यह कमलवन है ॥ २२ ॥

गङ्गा—अहो ! 'यह मार्ग दुर्गम है' ऐसी भ्रान्तिको मिटानेवाले पथिकोंके वचन हैं ।

यमुना—तब क्या हुआ ? तब क्या हुआ ?

मृगको डरा हुआ देखकर दयासे आर्द्रचित्त सीताने पतिके धनुको अपने वस्त्रसे

केदारसीम्नि सदयं च यवप्ररोह-
मादाय साधु विदधे श्रवणावतंसम् ॥ २३ ॥

अन्यच्च—

तटभुवि सरसीनां सैकते निम्नगानां
परिसरमपहातुं चक्रवाकीं प्रियस्य ।
क्षणमपि न समर्थां लोलमालोकयन्ती
पथि जनकतनूजा प्राप हर्षं शुचं च ॥ २४ ॥

---

हरिणं = मृगं, भीतं = त्रस्तं, रामधनुर्दर्शनेनेति भावः । विलोक्य = दृष्ट्वा = करुणाऽऽर्द्रचित्ता = करुणया ( दयया ) आर्द्रं ( क्लिन्नम् ) चित्तं ( मानसम् ) यस्याः सा' सीतेति शेषः। पत्युः = स्वामिनः, रामस्येत्यर्थः । धनुः = कार्मुकं, निजेन = स्वकीयेन, अंशुकेन = वस्त्रेण, विदधे = आच्छादितवती, हरिणरक्षणार्थमिति भावः। अत्र भागुरिमतेनाऽल्लोपः। एवं च केदारसीम्नि = क्षेत्रसीमायां, यवप्ररोहं = दीर्घशूकमञ्जरीं, सदयं = सकृपम् , आदाय = गृहीत्वा साधु = समीचीनं, यथास्थानमिति भावः । श्रवणाऽवतंसं = कर्णाऽलङ्कारं, विदधे = कृतवती, सीतेति शेषः। वसन्ततिलका वृत्तम् ॥ २३ ॥

तटभुवीति। सरसीनां तटभुवि निम्नगानां सैकते च प्रियस्य परिसरं क्षणमपि अपहातुं न समर्थां चक्रवाकीं लोलम् आलोकयन्ती जनकतनूजा पथि हर्षं शुचं च प्रापेत्यन्वयः। सरसीनां = कासाराणां, तटभुवि = तीरप्रदेशे, निम्नगानां = नदीनां, सैकते = पुलिने, प्रियस्य = वल्लभस्य, परिसरं = पार्श्वभागं, क्षणमपि = कंचित्कालमपि, अपहातुं = त्यक्तुं, न समर्थां = नो शक्तां, चक्रवाकीं = कोकीं, लोलं = चञ्चलं यथा स्यात्तथा, आलोकयन्ती = पश्यन्ती, जनकतनूजा = जानकी, सीतेत्यर्थः । पथि = मार्गे, हर्षं = प्रीतिं, वल्लभसान्निध्यजनितामिति भावः। शुचं च = शोकं च, भाविविरहजनिष्यमाणं चेति भावः। प्राप = प्राप्तवती। सीता मार्गे क्षणमपि कान्तसङ्गाति त्यक्तुमसमर्थां स्वसदृशीं चक्रवाकीं विलोक्य हर्षं तथैव तस्या रात्रौ जनिष्यमाणं कान्तवियोगं सम्भाव्य कस्या अपि अवस्थाया नैरन्तर्येणाऽविद्यमानत्वाद्-

---

ढंक लिया और क्षेत्रकी सीमामें यवाङ्कुरको दयापूर्वक लेकर अच्छीतरह कर्णभूषण बनाया ॥ २३ ॥

और भी—तालाबोंके तीरप्रदेशमें और नदियोंके तटमें प्रियके पार्श्वभागको कुछ क्षण भी छोड़नेको असमर्थ चकवाकी ( चकवी ) को चञ्चलतापूर्वक देखने वाली सीताने मार्गमें हर्ष और शोकका अनुभव किया ॥ २४ ॥

गङ्गा—एवमनुकम्पनीयवत्सला मे जानकी । ( पुनः सस्नेहम् ) अपि तावत् पथिकनीतिशीतलानि मे वत्सानां शीलानि ?

हंस—कीदृशी पुनः पथिकनीतिः ?

गङ्गा—

यावत्कर्णं तपति तपनस्तावदेव प्रयाणं,
विश्रामश्च प्रसरति रवेरंशुजाले कराले ।
यात्रोद्योगः पुनरपि रवेर्लम्बमाने विमाने,
यावन्मीलत्यथ कमलिनी तावदावासबन्धः ॥ २५ ॥

स्मृत्वापि कालान्तरभाविनीं पतिवियुक्तावस्थामुत्प्रेक्ष्य शोकं चाऽनुभूतवतीति भावः । मालिनी वृत्तम् ॥ २४ ॥

गङ्गेति । अनुकम्पनीयवत्सला = अनुकम्पनीयेषु ( अनुकम्पायोग्येषु ) वत्सला ( स्नेहवती ) । पथिकनीतिशीतलानि = पथिकनीत्या ( पान्थव्यवहारेण ) शीतलानि ( तापरहितानि, सुखयुक्तानीति भावः ) ।

गङ्गा पथिकनीतिं प्रतिपादयति यावदिति । तपनो यावत् कर्णं तपति तावदेव प्रयाणम् । रवेः कराले अंशुजाले प्रसरति विश्रामश्च । रवेर्विमाने लम्बमाने पुनरपि यात्रोद्योगः । अथ यावत् कमलिनी मीलति तावदावासबन्ध इत्यन्वयः ।

तपनः = सूर्यः, यावत् = यत्कालपर्यन्तं, कर्णं = श्रोत्रं, तपति = तप्तं करोति, रवेर्दुर्निरीक्ष्यत्वागमनाऽवसरे, पूर्वाह्णे इति भावः । तावदेव = तत्कालपर्यन्तमेव, प्रयाणं = प्रस्थानम् । रवेः = सूर्यस्य, कराले = कठोरे, प्रचण्ड इति भावः । अंशुजाले = किरणसमूहे, प्रसरति = प्रसारं गच्छति सति, विश्रामश्च प्रस्थानविरामश्च । श्रमणं श्रमः 'नोदात्तोपदेशस्यमान्तस्याऽनाचमे'रिति वृद्ध्यभावः । श्रम एव श्रामः स्वार्थे अण् । ततो विशिष्टः श्रामो विश्रामः इत्यस्य साधुत्वम् । एवं च रवेः=सूर्यस्य, विमाने = याने, रथ इति भावः । लम्बमाने = अवध्वंसति सति, अपराह्णकाल इति भावः । पुनरपि = भूयोऽपि, यात्रोद्योगः=प्रस्थानप्रयासः । अथ = अनन्तरं, यावत्=

गङ्गा—इस प्रकार मेरी सीता दयायोग्यजनोंमें स्नेह करनेवाली है । ( फिर स्नेह-पूर्वक ) मेरे बच्चोंके चरित्र पथिकनीति ( पान्थव्यवहार ) से सुखयुक्त हैं क्या ?

हंस—वह पथिकनीति कैसी है ?

गङ्गा—सूर्य जबतक कानको सन्तप्त करते हैं, तबतक ही यात्रा, सूर्यकी कठोर किरणों के फैलनेपर विश्राम करना, सूर्यके रथके अवध्वस्त होनेपर ( अपराह्ण कालमें ) फिर भी यात्राका उद्योग और जबतक कमलिनी निमीलित होने लगती है तबतक रात्रिके निवास-स्थानका ग्रहण करना चाहिए ॥ २५ ॥

हंसः—भगवति, अनवस्थितमिदं नित्यपथिकानाम् ।
गङ्गा—हन्त ! कथं कठोरातपस्पर्शमपि जानन्ति जानकीललिताङ्गानि ।
हंसः—अलं कातरतया ।

अपि तपति पतङ्गे चण्डचण्डैर्मयूखैः
पथि जनकतनूजा नैव सन्तापमाप ।

गङ्गा—( सकौतुकम् ) कथमिव ?
हंसः—

अपरिचितनिमेषालोकमालोकयन्ती
कुवलयदलदामश्याममङ्गं प्रियस्य ॥ २६ ॥

---

यत्कालपर्यन्तं, कमलिनी = कमलसंहतिः, मीलति = संकुचति, सूर्याऽस्ताऽचलगमनेन मुकुलिता भवतीति भावः । तावत् = तत्कालमेव, आवासबन्धः = रात्रिनिवासस्थानग्रहणम् , इयमेव पथिकनीतिरिति भावः । मन्दाक्रान्ता वृत्तम् ॥ २५ ॥

हंस इति । अनवस्थितम् = अस्थिरम् । नित्यपथिकैरयं नियमो नियतरूपेण पालयितुं न शक्यत इति भावः ।

अपीति । चण्डचण्डैः मयूखैः पतङ्गे तपति अपि जनकतनूजा पथि सन्तापं नैव आपेति पूर्वार्धाऽन्वयः ।

चण्डचण्डैः = अतिशयप्रचण्डैः, मयूखैः = किरणैः, पतङ्गे=सूर्ये, तपति अपि = तापं कुर्वत्यपि, जनकतनूजा = जानकी सीतेत्यर्थः । पथि = मार्गे, सन्तापं = उष्णकिरणजन्यं क्लेशं, नैव आप = नैव प्राप्तवतीति पूर्वार्द्धार्थः ।

कथमिवेति गङ्गाप्रश्ने उत्तराऽर्धरूपेणोत्तरयति—अपरिचितेति । प्रियस्य अपरिचितनिमेषालोकं ( यथा तथा ) कुवलयदलश्यामम् अङ्गम् आलोकयन्ती ( जनकतनूजा सन्तापं नैव आपेति पूर्वेण सम्बन्धः ) इत्युत्तरार्द्धाऽन्वयः ।

---

हंस—भगवति ! नित्य यात्रा करनेवालोंको यह नियम नियत नहीं है ।

गङ्गा—हाय ! सीताके कोमल अङ्ग भी कैसे घामके कठोर स्पर्शको भी जान रहे हैं

हंस—कातर नहीं बनना चाहिए ।

सूर्यकी अतिशय प्रचण्ड किरणोंसे ताप करते रहनेपर भी सीताने मार्गमें सन्ताप पाया ही नहीं ।

गङ्गा—( कौतुकपूर्वक ) क्यों ?

हंस—प्रियके नीलकमलके पत्रके सदृश श्याम अङ्गको निर्निमेष दृष्टिसे देखकर ( सीताने मार्गमें सन्ताप पाया ही नहीं ) ॥ २६ ॥

गङ्गा—प्रियतमस्नेहशीलतया सीतया न केवलमात्मा वयमपि जीविताः ।

सरयूः—पालिताश्च ।

हंसः—

अप्युच्चण्डैस्तपनकिरणैस्तापितायां पृथिव्या-
मप्यन्येषां कठिनवपुषां दुर्गमे मार्गसीम्नि ।
प्रेमार्द्रेण प्रगुणितधृतिश्चेतसा शीतशीतान्
मेने सीता प्रियतमपदैरङ्कितान्भूमिभागान् ॥ २७ ॥

---

प्रियस्य = वल्लभस्य, रामस्येत्यर्थः । अपरिचितनिमेषालोकम् = अपरिचितः (असंस्तुतः) निमेषः (पक्ष्मस्पन्दनकालः) यस्मिन्सः तादृशः आलोकः (अवलोकनम्) यस्मिन्कर्मणि तद्यथा तथा निर्निमेषमिति भावः । कुवलयदलश्यामं = कुवलयदलम् (नीलकमलपत्रम्) इव श्यामं (कृष्णम्), तत् । तादृशम् अङ्गं = शरीरम्, आलोकयन्ती = अवलोकयन्ती सती, जनकतनूजा सन्तापं नैवाऽऽपेति पूर्वेण सम्बन्धः । पथि सूर्ये प्रखरकरैः सन्तापं विदधत्यपि मैथिली नीलकमलकोमलं रामशरीरं निर्निमेषं पश्यन्ती सति सन्तापं नाऽनुभूतवतीति भावः । अत्रोपमाऽलङ्कारः । मालिनी वृत्तम् ॥ २६ ॥

गङ्गेति । प्रियतमस्नेहशीलतया = प्रियतमे (रामे) यः स्नेहः (प्रणयः) स एव शीलं (स्वभावः) यस्याः सा, तस्या भावस्तत्ता, तया । 'सामान्ये नपुंसकम्' इति नपुंसकत्वम् ।

अप्युच्चण्डैरिति । उच्चण्डैः तपनकिरणैः तापितायाम् अपि पृथिव्यां कठिनवपुषाम् अन्येषाम् अपि दुर्गमे मार्गसीम्नि प्रेमाऽऽर्द्रेण चेतसा प्रगुणितधृतिः सीता प्रियतमपदैः अङ्कितान् भूमिभागान् शीतशीतान्मेने इत्यन्वयः । उच्चण्डैः = प्रचण्डैः, तपनकिरणैः = सूर्यांशुभिः, तापितायामपि = तापयुक्तायामपि, पृथिव्यां = भुवि, किं बहुना—कठिनवपुषां = कठोरशरीराणाम्, अन्येषाम् अपि = अपरेषामपि जनानां, दुर्गमे = दुःसञ्चारे, मार्गसीम्नि = अध्वसीमायाम्, प्रेमाऽऽर्द्रेण = प्रणयकोमलेन,

---

गङ्गा—प्रियतमकी प्रमशीला होनेसे सीताने अपनको ही नहीं हमलोगोंको भी जिलाया है ।

सरयू—पालन भी कर लिया है ।

हंस—प्रचण्ड सूर्य किरणोंसे तापित पृथिवीमें कठोर शरीरवाले और लोगोंकी भी दुर्गम मार्गसीमामें प्रणयसे आर्द्रचित्तसे सम्बद्ध धैर्यवाली सीताने प्रियतम (राम) के चरण चिह्नोंसे अङ्कित भूमिभागोंको बहुत ही शीतल समझ लिया ॥ २७ ॥

यमुना—अयि तात दिनकर, कथं निजकुटुम्बेऽपि निष्करुणोऽसि संवृत्तः ? ( अइ ताद, दिणअर ! कहं णिअकुडुम्बेवि णिक्करुणो सि संवुत्तो )

सरयूः—अयि देवि वसुधे ! कथं निजसुतायामपि सीतायामेवं, निर्दयासि संवृत्ता ?

गङ्गा—( विहस्य ) अलमनयोरुपालम्भनेन, न खलु स्नेहानुगुण-प्रवृत्तयो महाभूतवृत्तयः ।

हंसः—

कान्तेनाथ प्रणयमधुरं किञ्चिदाचञ्चलेन
श्रान्ता श्रान्ता जनकतनया वल्कलस्याञ्चलेन ।

---

चेतसा = चित्तेन, प्रगुणितधृतिः = प्रगुणिता (वृद्धिं प्रापिता) धृतिः ( धैर्यम् ) यस्याः सा, तादृशी सीता = जानकी, प्रियतमपदैः = रामचन्द्रचरणचिह्नैः अङ्कितान् = चिह्नितान् , भूमिभागान् = भूविभागान् , शीतशीतान् = अतिशयशीतलान् , मेने = अनुबभूव । प्रखररविकरतापितायामपि भुवि कर्कशशरीराणामपि दुःसह्यार्थे भूविभागे सीता दयितेन रामेण साकं गच्छन्ती सती सन्तापं नाऽनुभूतवतीति भावः । मन्दाक्रान्तावृत्तम् ॥ २७ ॥

गङ्गेति । अनयोः = दिनकरवसुधयोः । उपालम्भनेन = उपालम्भकरणेन । महाभूतवृत्तयः = पृथिव्यप्तेजोवाय्वाकाशव्यवहाराः । स्नेहाऽनुगुणप्रवृत्तयः = स्नेहाऽनुगुणा ( प्रणयाऽनुकूला ) प्रवृत्तिः ( चेष्टा ) यासां ताः, तादृश्यो न भवन्ति । दिनकरवसुधादयः प्रणयपारवश्येन स्वशीलं न परित्यजन्तीति भावः ।

कान्तेनेति । अथ श्रान्ता श्रान्ता जनकतनया कान्तेन किञ्चिदाचञ्चलेन वल्कलस्य अञ्चलेन प्रणयमधुरं ( यथा तथा ) वीतश्रमजलकणस्निग्धमुग्धाननश्रीः चक्रे । पुनः श्रान्तः श्रान्तः सोऽनया लोचनस्याऽञ्चलेन वीतश्रमजलकणस्निग्धमुग्धाननश्रीः चक्रे इत्यन्वयः ।

---

यमुना—पिताजी दिनकर ! अपने कुटुम्बमें भी किस प्रकार आप निर्दय होगये हैं ?

सरयू—देवि पृथिवि ! अपनी पुत्री सीतामें भी किस प्रकार ऐसी निर्दय बन गई हो ?

गङ्गा—( हँसकर ) इन दोनोंको उलाहना नहीं देना चाहिए । महाभूतोंकी चेष्टाएँ स्नेहके अनुकूल नहीं होती हैं ।

हंस—तब अतिशय थकी हुई सीताको रामचन्द्रने कुछ चञ्चल वल्कलके अञ्चलसे प्रेमसे मनोहरतापूर्वक हवाकर पसीना मिटानेसे स्निग्ध और मनोहर मुखशोभासे युक्त

चक्रे वीतश्रमजलकणस्निग्धमुग्धाननश्रीः
श्रान्तः श्रान्तः स पुनरया लोचनस्याञ्चलेन ॥ २८ ॥

गङ्गा—अहो, विनिमयस्य कमनीयता !

यमुना—ततस्ततः । ( तदो तदो )

हंसः—ततः ।

प्रत्यासन्ने भवति निलये सम्प्रयाता पुरस्ता-
त्तूर्णं चिह्नैः कतिपयपदैश्चापमादाय हस्तात् ।

---

अथ = अनन्तरं, श्रान्ता श्रान्ता = अध्वगमनेन साऽतिशयं परिश्रान्ता, जनकतनया = जानकी, सीता । कान्तेन = वल्लभेन, रामेण । किञ्चिदाचञ्चलेन = स्तोकतरलेन, वल्कलस्य = वल्कस्य परिधानीयवृक्षत्वच इति भावः । अञ्चलेन = एकदेशेन, प्रणयमधुरं = प्रेममनोहरं यथा स्यात्तथा, वीतश्रमजलकणस्निग्धमुग्धाननश्रीः = वीताः ( अपगताः ) श्रमजलस्य ( घर्मसलिलस्य ) ये कणाः ( लेशाः ) तैः स्निग्धा ( मसृणा ) मुग्धा ( मनोहरा ) आननश्रीः ( मुखशोभा ) यस्याः सा, तादृशी । चक्रे = कृता । पुनः = भूयः । श्रान्तः श्रान्तः = अतिशयपरिश्रान्तः, सः = रामः, अनया = सीतया, लोचनस्य = नयनस्य, अञ्चलेन = एकदेशेन = कटाक्षेणेति भावः । वीतश्रमजलकणस्निग्धमुग्धाननश्रीः = अपगतघर्मसलिललेशमसृणमनोहरमुखशोभः, चक्रे = कृतः । रामः अध्वश्रमपरिश्रान्तायाः सीतायाः श्रमजलं वल्कलाञ्चलेनाऽपनीतवान् , सीता चाऽध्वश्रमपरिश्रान्तस्य रामस्य श्रमजलं कटाक्षनिरीक्षणेनाऽपनीतवतीति भावः । अत्राऽन्योन्याऽलङ्कारः, तल्लक्षणमुक्तमनेनैव महाकविना चन्द्रालोके सोदाहरणं यथाः—'अन्योन्यं नाम यत्र स्यादुपकारः परस्परम् । त्रियामा शशिना भाति शशी भाति त्रियामया ॥' इति । मन्दाक्रान्तावृत्तम् ॥२८॥

गङ्गेति । विनिमयस्य = परिवर्तनस्य ।

प्रत्यासन्न इति । निलये प्रत्यासन्ने भवति तूर्णं चिह्नैः कतिपयपदैः पुरस्तात् सम्प्रयाता ( सती ) सीता हस्तात् चापम् आदाय नवकिसलयैः साऽनुजं श्रान्तं कान्तं वीजयन्ती समुचितविधिप्रक्रियावैजयन्ती जातेत्यन्वयः ।

---

कर दिया । इसी तरह परिश्रान्त रामचन्द्रको भी सीता नेत्रके अञ्चल ( कटाक्ष ) से निहार कर अपने ही समान कर देती थीं ॥ २८ ॥

गङ्गा—अहो ! परिवर्तनकी कैसी मनोहरता है !

यमुना—तब क्या हुआ ? तब क्या हुआ ?

हंस—तब—

आवास स्थानके निकट होनेपर झटपट आगे बढ़ती हुई सीता रामचन्द्रके हाथसे धनु

श्रान्तं कान्तं नवकिसलयैः सानुजं वीजयन्ती
जाता सीता समुचितविधिप्रक्रियावैजयन्ती ॥ २९ ॥

( पुनः सकौतुकम् ) इदमन्यच्च सरसपेशलं कथयामि ते ।

जनकतनयाहस्तन्यस्तैर्मुहुर्नवपल्लवैः
शिशिरमसृणस्तत्कालं यः समेति समीरणः ।
प्रशममसुना स्वेदोद्भूतं जगाम कपोलयोः

---

निलये = आवासस्थाने, प्रत्यासन्ने = निकटवर्तिनि, भवति = सति, तूर्णं = क्षिप्रं, क्षिप्तैः = न्यस्तैः, कतिपयपदैः = कतिचिच्चरणप्रक्षेपैः, पुरस्तात् = पुरतः, सम्प्रयाता = समायाता सती, सीता = जानकी, हस्तात् = करात्, रामस्येति शेषः। चापं = धनुः, आदाय = गृहीत्वा, नवकिसलयैः = प्रत्यग्रपल्लवैः, सानुजं = साऽवरजं, लक्ष्मणसहितं, श्रान्तं = परिश्रान्तं, कान्तं = प्रियं, राममित्यर्थः। वीजयन्ती = वाताऽऽविर्भावेन सेवमाना सती, समुचितविधिप्रक्रियावैजयन्ती = समुचितः ( योग्यः ) यो विधिः ( विधानं, सेवनमित्यर्थः ) तस्य या प्रक्रिया ( अनुष्ठानम् ) तस्य वैजयन्ती = पताका, जाता = सम्पन्ना। आवासस्थाने निकटस्थे सति सीता सत्वरं पुरतो गत्वा कान्तहस्ताच्चापमादाय प्रत्यग्रपल्लवैरध्वगमनश्रान्तं साऽनुजं रामं वीजयित्वा सहधर्मिणीधर्मं निर्व्यूढवतीति भावाऽर्थः। मन्दाक्रान्तावृत्तम् ॥ २९ ॥

पुनरिति। सरसपेशलं = सरसं ( साऽनुरागम् ) पेशलम् ( कोमलम् ) च।

जनकतनयेति। जनकतनयाहस्तन्यस्तैः नवपल्लवैः तत्कालं यः शिशिरमसृणः समीरणः समेति। अमुना कपोलयोः स्वेदोद्भूतं सलिलं प्रशमं जगाम। अनयोः नेत्रयोः शोकोद्भूतं सलिलं न प्रशाममेत्यन्वयः।

जनकतनयाहस्तन्यस्तैः = जनकतनयायाः ( सीतायाः ) हस्ते ( करे ) न्यस्तैः ( निहितैः ), नवपल्लवैः = नूतनकिसलयैः, तत्कालं = तत्समयं, रामवीजनसमयमिति भावः। यः शिशिरमसृणः = शीतलकोमलः, समीरणः = वातः, समेति = उद्गच्छति। अमुना = तादृशेन समीरणेन, कपोलयोः = गण्डयोः सानुजस्य रामस्येति शेषः। स्वेदोद्भूतं = घर्मजनितं, सलिलं = जलं, प्रशमं = शान्तिं, जगाम =

---

लेकर नये पल्लवोंसे थके हुए भाईके साथ रामचन्द्रको हवा करती हुई योग्य विधिके अनुष्ठानकी पताका ( उत्कर्षपात्र ) बन जाती थीं ॥ २९ ॥

( फिर कौतुकके साथ ) यह दूसरी भी अनुरागपूर्ण और कोमल बात बतलाती हूं।

सीताके हाथमें रक्खे गये नये पल्लवोंसे उस समय ठण्डी और कोमल जो हवा नकलती थी, उससे राम और लक्ष्मणके कपोलोंमें स्वेदसे उत्पन्न जल सूख जाता था

सलिलमनयोः शोकोद्भूतं शशाम न नेत्रयोः ॥ ३० ॥

अपि च—

कृतः स्थाने स्थाने विहितवरिवस्यापरिकरः
सुमित्रापुत्रेण श्रमशमनशीतो रघुपतिः ।
असावेतेनापि क्षणविरहबाष्पाञ्चितदृशा
कृतालोकश्चक्रे गलितसकलायासशिशिरः ॥ ३१ ॥

---

गतवान्, परन्तु अनयोः = एतयोः, नेत्रयोः = नयनयोः । शोकोद्भूतं = मन्युत्पन्नं, सलिलं = जलम्, अश्रु इति भावः । न शशाम = शान्तं न बभूव । बीजनाऽर्थं सीताहस्तस्थितेभ्यो नवकिसलयेभ्यः समुद्भूतेन वायुना रामलक्ष्मणयोरध्वगमनश्रमजनितं कपोलस्थं स्वेदजलमशुष्यत्, परमेनयोः सीतादुरवस्थादर्शनेन शोकजनितं नयनजलं नाऽशुष्यदिति भावः । हरिणीवृत्तम् ॥ ३० ॥

कृत इति । सुमित्रापुत्रेण स्थाने स्थाने विहितवरिवस्यापरिकरो रघुपतिः श्रमशमनशीतः कृतः । असावपि क्षणविरहबाष्पाऽञ्चितदृशा एतेन कृताऽऽलोकः ( सन् ) गलितसकलायासशिशिरः चक्रे इत्यन्वयः ।

सुमित्रापुत्रेण = सौमित्रिणा, लक्ष्मणेनेत्यर्थः । स्थाने स्थाने=प्रतिस्थानं, वीप्सायां द्विरुक्तिः । विहितवरिवस्यापरिकरः = विहितः ( कृतः ) वरिवस्यायाः ( शुश्रूषायाः ) परिकरः ( यत्नः ) यस्य सः । 'यत्नारम्भौ परिकरौ' इति त्रिकाण्डशेषः । तादृशो रघुपतिः = रामः, श्रमशमनशीतः = श्रमस्य ( मार्गगमनायासस्य ) शमनेन ( निवारणेन ) शीतः = शीतलः, कृतः = विहितः । असावपि = लक्ष्मणोऽपि, क्षणविरहबाष्पाऽञ्चितदृशा = क्षणविरहात् ( किञ्चित्कालवियोगात् ) समुत्पन्नो यो बाष्पः ( अश्रु ), तेन अञ्चिते ( युक्ते ) दृशौ ( नेत्रे ) यस्य सः, तादृशेन एतेन = रामेण, कृताऽऽलोकः = विहिताऽवलोकनः, दृष्टः सन्निति भावः । गलितसकलाऽऽयासशिशिरः = गलितः ( अपगतः ) सकलः ( समस्तः ) य आयासः ( परिश्रमः ) तेन शिशिरः ( शीतलः ), चक्रे = कृतः । लक्ष्मणः स्थाने स्थाने शुश्रूषया रामश्रमशमनं चकार । रामस्तु लक्ष्मणस्याऽल्पविरहेणाऽपि बाष्पपरिपूर्णलोचनः सन् दर्शनमात्रे-

---

परन्तु उन दोनोंके नेत्रोंमें शोकसे उत्पन्न जल नहीं सूखता था ॥ ३० ॥

और भी—

लक्ष्मणने जगह जगह पर शुश्रूषाका प्रयत्न कर परिश्रम मिटाकर रामचन्द्रको शीतल कर दिया । रामचन्द्रने भी कुछ ही समयके वियोगमें भी आँसूसे भरे हुए नेत्रोंसे देखकर सब परिश्रम मिटाकर लक्ष्मणको शीतल बना डाला ॥ ३१ ॥

सरयूः—कियतां पुनरह्नां परिवर्त्तेन रघुराष्ट्रमतिक्रान्तं वत्सैः ?

हंसः—अयि ! कथमजानती वर्त्तसे रघूणामाधिपत्यम् ?

एते हि स्वरसावनम्रनिखिलक्ष्मापालमौलिज्वलन्-
माणिक्यस्फुरदंशुमांसलपदप्रेङ्खन्नखज्योतिषः ।
दूरोन्मुक्तचतुःसमुद्रलहरीविक्षिप्तशुक्तिस्खलन्-
मुक्तापङ्क्तिविनिर्मितैकवलयं भूमण्डलं भुञ्जते ॥ ३२ ॥

---

नैव लक्ष्मणं गमनशुश्रूषणादिजनितपरिश्रमरहितं विहितवानिति भावः । अत्राऽन्योन्यालङ्कारः । शिखरिणी वृत्तम् ॥ ३१ ॥

हंस इति । रघूणां = रघुवंशोत्पन्नानां भूपालानाम् । आधिपत्यं = स्वामित्वम् । अधिपतेर्भाव आधिपत्यं, 'पत्यन्तपुरोहितादिभ्यो यक्' इति यक्, 'किति चे'त्यादिवृद्धिः ।

राघवाऽऽधिपत्यं प्रतिपादयति—एते हीति । स्वरसाऽवनम्रनिखिलक्ष्मापालमौलिज्वलन्माणिक्यस्फुरदंशुमांसलपदप्रेङ्खन्नखज्योतिषः एते दूरोन्मुक्तचतुःसमुद्रलहरीविक्षिप्तशुक्तिस्खलन्मुक्तापङ्क्तिविनिर्मितैकवलयं भूमण्डलं भुञ्जते हीत्यन्वयः । स्वरसाऽवनम्रेत्यादिः = स्वरसेन (आत्मेच्छया) अवनम्राः (अवनमनशीलाः) निखिलाः (समस्ताः) ये क्ष्मापालाः (राजानः) तेषां मौलिषु (मुकुटेषु) ज्वलन्ति (दीप्यमानानि) यानि माणिक्यानि (शोणरत्नानि) तेषां स्फुरन्तः (दीप्यमानाः) येंऽशवः (किरणाः) तैर्मांसलानि (परिपुष्टानि) पदयोः (चरणयोः) प्रेङ्खन्ति (प्रगच्छन्ति) नखज्योतींषि (नखरकान्तयः) येषां ते । स्वेच्छाऽवनमनशीलसकलभूपालमुकुटदीप्यमानशोणरत्नशोभमानचरणनखकान्तय इति भावः । तादृशा एते = इमे, रघुवंशोत्पन्ना राजान इति भावः । दूरोन्मुक्तेत्यादिः = दूरात् (विप्रकृष्टप्रदेशात्) उन्मुक्ताः (प्रक्षिप्ताः) चतुर्णां (चतुःसंख्यकानाम्) समुद्राणां (सागराणाम्) या लहर्यः (तरङ्गाः) ताभ्यो विक्षिप्ताः (प्रक्षिप्ताः) याः शुक्तयः (मुक्तास्फोटाः) ताभ्यः स्खलन्ती (पतन्ती) या मुक्तापङ्क्तिः (मौक्तिकावली)

---

**सरयू**—वत्सोंने कितने दिनोंमें रघुराष्ट्रका अतिक्रमण किया ?

**हंस**—अरे ! राघवोंके आधिपत्यको आप नहीं जानती हैं ?

अपनी इच्छासे नम्र समस्त राजाओंके मुकुटोंमें दीप्यमान माणिक्योंकी किरणोंसे व्याप्त अपने चरणनखोंकी कान्तिसे सम्पन्न ये रघुवंशके राजा, दूरसे प्रक्षिप्त चारों समुद्रोंके तरङ्गोंसे फेंकी गई शुक्तियोंसे गिरनेवाली मुक्ताओंकी पङ्क्तिसे रचित एक प्रकारसे युक्त भूमण्डलका भोग करते हैं ॥ ३२ ॥

उत्तरकोशलास्त्रिचतुरैरेवाहोभिरतिक्रान्ताः । अथ पुरमथनमौलिमालतीमालां मन्दाकिनीमचिरेण च कलिन्दगिरिकरिकपोलमदवारिधारां कालिन्दीमप्यतिक्रान्ताः ।

गङ्गा—( यमुनां प्रति ) सखि ! तदिदं यत्कथितवत्यसि ।

सरयूः—

तपनसुतया देव्या गङ्गा भगीरथकन्यया
विपुलविपुलैर्वीचीहस्तैश्चिरादपि किं कृतम् ।

---

तया विनिर्मितं ( विरचितम् ) एकम् ( एकसंश्रयम् ) वलयं ( मण्डलं, प्राकाररूपमिति भावः ) यस्मिंस्तत् । समुद्रचतुष्टयतरङ्गप्रचिप्तशुक्तिपतितमुक्तावलीप्राकारपरिवेष्टितमिति भावः । तादृशं भूमण्डलं = भूमिमण्डलं, भुञ्जते = पालयन्ति । वशीकृतसकलभूपाला रघुवंशोत्पन्ना नरपाला आसमुद्रक्षितिं शासतीति भावः ।

अत्रोदात्ताऽलङ्कारस्तल्लक्षणं यथा—'लोकाऽतिशयसम्पत्तिवर्णनोदात्तमुच्यते । यद्वाऽपि प्रस्तुतस्याऽङ्गं महतां चरितं भवेत् ॥' इति । शार्दूलविक्रीडितं वृत्तम् ॥३२॥

उत्तरकोशला इति । पुरमथनमौलिमालतीमालां = पुरमथनस्य ( त्रिपुराऽरेः, शिवस्येति भावः ) मौलेः ( शिरसः ) मालतीमालां नातिस्रजं, धावल्यान्मालतीमालासदृशीमिति भावः ।

मन्दाकिनीं = गङ्गाम् । अचिरेण = अल्पकालेन । कलिन्दगिरिकरिकपोलमदवारिधारां = कलिन्दगिरिः ( कलिन्दनामा पर्वतः ) स एव करी ( हस्ती ) तस्य यौ कपोलौ ( गण्डौ ) तयोर्मदवारिधारां ( मदजलपङ्क्तिम् ), गजमदजलधारासदृशीं कृष्णवर्णामिति भावः । कालिन्दीं = यमुनाम् ।

तपनसुतयेति । तपनसुतया गङ्गा देव्या भगीरथकन्यया विपुलविपुलैः वीचीहस्तैः चिरादपि किं कृतम् ? यत् ललितलवलीभङ्गैः अङ्गैः जनकतनया वनं चलिता सती पाणौ धृत्वा न विनिवारितेत्यन्वयः ।

---

उत्तर कोशल ( अयोध्या ) को ये लोग तीन चार दिनोंमें ही पारकर गये । अनन्तर शिवजीके मस्तकमें मालतीमालाके सदृश मन्दाकिनीको लाँघकर ये लोग कुछ समयमें कलिन्दपर्वत रूप हाथीके कपोलमें मदजलधाराके सदृश कृष्णवर्ण यमुनाको भी पार कर गये ।

गङ्गा—( यमुनासे ) सखि ! यह वह बात है, जिसे तुम कह चुकी हो ।

सरयू—यमुनाने अथवा देवी गङ्गाने अतिशय विस्तृत तरङ्गरूप हाथोंसे बहुत समय

ललितलवलीभङ्गैरङ्गैर्वनं चलिता सती
जनकतनया पाणौ धृत्वा न यद्विनिवारिता ॥ ३३ ॥

गङ्गा—( विहस्य ) सखि ! कथं परोक्ष इव समक्षेऽपि नितान्तमुपालम्भसे ?

यमुना—ततस्ततः । (तदो तदो )

हंसः—ततश्च शबरशरदलितविन्ध्यकरिकुम्भतटीविमुक्तमुक्ताफलप्रकरतारकिततीरलतावितानपरिच्छदां शर्मदां नर्मदामतीत्याचिरेण चपलकर्णाञ्चलपरिमिलित-मदकरिकपोलचलितसहचरसमागममुदितमधुकरव-

---

तपनसुतया = सूर्यतनुजया, यमुनयेत्यर्थः । यद्वा = अथवा । देव्या भगीरथकन्यया = भागीरथ्या, गङ्गयेति भावः । विपुलविपुलैः = अतिशयविस्तृतैः, वीचीहस्तैः = तरंगरूपकरैः, चिरादपि = बहुकालेनाऽपि, किं कृतं = किं विहितम् । तदेवाऽकिञ्चित्करत्वं प्रतिपादयति—ललितेति । यत् ललितलवलीभङ्गैः = ललिताः (सुन्दराः कोमलाश्च ) ये लवलीभङ्गाः ( लवलीफलखण्डाः ), तैर्लक्षणया लवलीफलसदृशैः सुकुमारैः सुन्दरैश्चेति भावः । तादृशैः अङ्गैः = हस्तपादादिभिः शरीराऽवयवैः, उपलक्षितेत्यर्थः । 'इत्थंभूतलक्षण' इति तृतीया । जनकतनया = जानकी सीता । वनम् = अरण्यं प्रति, चलिता = चलितुं प्रवृत्ता सती, 'आदिकर्मणि क्तः कर्तरि चे'ति क्तप्रत्ययः । पाणौ = करे, धृत्वा = गृहीत्वा, न विनिवारिता = नो निषिद्धा । कोमलसुन्दराङ्गी सीता वनगमनप्रस्तुता सती यत्करे धृत्वा यमुनया गङ्गया च नो निवारिता, अतस्तयोरतिशयविस्तृतैस्तरङ्गरूपहस्तैः किं विहितमिति भावः ।

अत्र तपनसुतायाः भगीरथकन्यायाश्च वीचिहस्तानामकिञ्चित्करत्वं प्रति सीताऽनिवारणरूपवाक्यस्य हेतुत्वाद्वाक्याऽर्थहेतुकं काव्यलिङ्गमलङ्कारस्तल्लक्षणं यथा साहित्यदर्पणे—'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।' इति । हरिणीवृत्तम् ॥३३॥

हंस इति । शबरशरेत्यादिः = शबराणां (किरातानां, 'भेदाः किरातशबरपुलिन्दा

---

बीतनेपर भी क्या किया ? जो कि सुन्दर और कोमल लवलीफलोंके सदृश अङ्गोंसे सम्पन्न और वनको जाती हुई सीताको उन्होंने हाथमें पकड़कर नहीं रोका ॥ ३३ ॥

गङ्गा—( हँसकर ) सखि ! प्रत्यक्षमें भी परोक्षकी तरह कैसे उलाहना दे रही हो ?

यमुना—तब क्या हुआ ? तब क्या हुआ ?

हंस—तब किरातोंके बाणोंसे विदीर्ण विन्ध्यपर्वतके हाथियोंके मस्तकसे गिरे हुए मोतियोंसे चित्रित तीरवर्ती लतासमूहरूप आच्छादनसे युक्त सुख देनेवाली नर्मदा नदीको पारकर थोड़े ही समयमें चञ्चल कर्णाञ्चलसे ताडित हाथीके मदपूर्ण कपोलसे विचलित

धूमधुरसरसकुसुमकेसरं गोदावरीपरिसरं प्रयाताः ।

**यमुना**—हा धिक्, हा धिक्, तत्र हि लङ्केश्वरभगिनी क्षणेन प्रमत्ता शूर्पणखा नाम राक्षसी परिभ्रमति । ( हद्धि, हद्धि, तत्थ हि लङ्केसरभइणी क्खणेण पमत्ता सुप्पणहा णाम रक्खसी परिब्भमई )

**गङ्गा**—( तदाकर्ण्य ) ( सातङ्कम् ) किं प्रतिपन्नं जनस्थाननिवासिना निशाचरचक्रेण ?

**हंसः**—करकलितकराल-कुन्तकरवालकार्मुकेण निशाचरचक्रेण रामं प्रति प्रचलितम् ।

---

श्लेष्मजातयः । 'इत्यमरः ) शरैः ( बाणैः ) दलिताः ( भिन्नाः ) या विन्ध्यकरिकुम्भतटयः ( विन्ध्यपर्वतहस्तिशिरः पिण्डतटयः ( ताभ्यो विमुक्तः ( विक्षिप्तः ) यो मुक्ताफलप्रकरः ( मौक्तिकफलसमूहः ) तेन तारकितं ( सञ्जाततारकं, चित्रितमिति भावः, 'तदस्य सञ्जातं तारकादिभ्य इतच्' इतीतच्प्रत्ययः ) यत् तीरलतावितानं ( तटवल्लीमण्डपः ) तदेव परिच्छदः ( आच्छादनम् ) यस्याः सा, ताम् । तादृशीं शर्मदां = सुखदां, 'शर्मशातसुखानि च' इत्यमरः । नर्मदां = रेवां नदीम् । अचिरेण = अल्पकालेन । चपलकर्णाऽञ्चलेत्यादिः चपलं ( चञ्चलम् ) यत् कर्णाऽञ्चलं ( श्रोत्राऽञ्चलम् ) तेन परिमिलितः ( संघट्टितः ) यो मदकरिकपोलः ( मदपूर्णहस्तिगण्डः ) तस्मात्चलिताः ( अपगताः ) ये सहचराः ( सहयायिनः ) तेषां समागमेन ( संगमेन ) मुदिताः ( हर्षयुक्ताः ) या मधुकरवध्वः ( भ्रमर्यः ) ताभिर्मधुरं ( माधुर्यपूर्णम् ) सरसं ( रससहितम् ) कुसुमकेसरं ( पुष्पकिञ्जल्कः ) यस्मिंस्तम् तादृशं गोदावरीपरिसरं = गोदावरीनदीतटभूमिम् ।

गङ्गेति । निशाचरचक्रेण = राक्षससमूहेन । प्रतिपन्नं = ज्ञातम् ।

हंस इति । करकलितकरालकुन्तकरवालकार्मुकेण = करैः ( हस्तैः ) कलितानि

---

सहचरोंके समागमसे प्रसन्न भ्रमरियोंसे मधुर और सरस पुष्पकिञ्जल्कसे युक्त गोदावरी नदीके तट प्रदेशको चले गये ।

**यमुना**—हा धिक् ! हा धिक् ! वहाँ पर एक क्षणमें मत्त होनेवाली शूर्पणखा नामकी रावणकी बहन घूमा करती है ।

**गङ्गा**—( यह सुनकर, आतङ्कके साथ ) जनस्थानमें रहनेवाले राक्षसोंको क्या राम आदिका पता मिला ?

**हंस**—हाथोंमें भयानक प्रास, तलवार और धनु लेनेवाले राक्षस रामको लक्ष्य करके आ गये ।

गङ्गा—ततस्ततः।

हंसः—ततश्चेदं विज्ञप्तः सौमित्रिणा रामभद्रः। आर्य, अयं मे—

नक्तञ्चरेन्द्रभगिनीसुकुमारनासानिर्मुक्तरक्तलवलिप्तशितैकधारः।

उत्कण्ठते कठिनराक्षसकण्ठजानां पानाय कर्दमसृजामसृजां कृपाणः॥

इदमुक्तश्च रामभद्रेण—'वत्स, अस्त्येतत्। किन्तु प्रकृतिभीरुः खल्वबलाजनः। तेन हि जानकीसनाथगर्भां पर्णशालामेव समुत्खातकरवालः पालयतु भवान्। 'अयमहमचिरात्' इत्यर्धोक्त एव निशाचरचक्रं प्रति प्रचलितः सम्मिलितश्च।

---

(घृतानि) करालानि (भयानकानि) कुन्तकरवालकार्मुकाणि (प्रासखड्गधनूंषि) येन, तेन। रामं प्रति लक्ष्मणविज्ञप्तिं प्रदर्शयति—नक्तञ्चरेन्द्रेति। नक्तञ्चरेन्द्रभगिनीसुकुमारनासानिर्मुक्तरक्तलवलिप्तशितैकधारः। कृपाणः कठिनराक्षसकण्ठजानां कर्दमसृजाम् असृजां पानायोत्कण्ठत इत्यन्वयः।

नक्तञ्चरेन्द्रभगिनीत्यादिः = नक्तञ्चरेन्द्रस्य (राक्षसेश्वरस्य, रावणस्येति भावः) भगिनी (स्वसा, शूर्पणखेत्यर्थः) तस्याः या सुकुमारनासा (कोमलनासिका) तस्या निर्मुक्तम् (निःसृतम्) यत् रक्तं (रुधिरम्) तस्य लवः (लेशः) तेन लिप्ता (दिग्धा) शिता (तीक्ष्णा) एकधारा (एकाऽग्रदेशः) यस्य सः, तादृशः। कृपाणः = खड्गः। कठिनराक्षसकण्ठजानां = कठोरनिशाचरगलपतितानां, कर्दमसृजां = पङ्कोत्पादकानां, तादृशाम् असृजां = रुधिराणां, पानाय = उपयोगाय, उत्कण्ठते = उत्कण्ठां करोति। आर्य! राक्षसहननाय मामादिशेति भावः। वसन्ततिलकावृत्तम्॥

इदमिति। जानकीसनाथगर्भां = जानक्या (सीतया) सनाथः (युक्तः) गर्भः (अभ्यन्तरभागः) यस्याः सा, ताम्। तादृशीं पर्णशालाम् = उटजम्। समुत्खात-

---

गङ्गा—तब क्या हुआ? तब क्या हुआ?

हंस—तब लक्ष्मणने रामचन्द्रजीसे यह निवेदन किया कि आर्य! मेरी यह—

राक्षसेश्वर रावणकी बहनकी कोमल नासिकासे निकले हुए रुधिरलेशसे लिप्त एक तीखी धारवाली तलवार, कठोर राक्षसोंके कण्ठोंसे गिरे हुए गाढ रक्तके पानके लिए उत्कण्ठा कर रही है॥ २४॥

रामचन्द्रने भी यह कहा कि—'वत्स! यह ठीक है। किन्तु स्त्री स्वभावसे ही डरपोक होती है। इस कारण पर्णशालाके भीतर सीताको रखकर मियानसे तलवार निकालकर तुम रक्षा करो। 'यह मैं थोड़े समयमें ही' ऐसा आधा ही कहकर राक्षसोंके पास चले और उनमें शामिल हो गये।

गङ्गा—( सत्रासम् ) अनन्तरं किं वृत्तम् ।

हंसः—

अथाहूतस्तादृक्समरजयसंरम्भरभस-
प्रसर्पद्गम्भीरध्वनिगरिमगर्जद्दशदिशम् ।

मुहूर्तात् सौमित्रिः·········

सरयूः—तत् किं रामेण ?

हंसः—नहि नहि ।

सरयूः—अयि देवि भागीरथि ! त्रायस्व माम् , नूनं निशाचरचक्रेणेति वक्ष्यति ।

---

करवालः = समुत्खातः ( समुद्धृतः, कोशादिति शेषः ) करवालः ( खड्गः ) येन सः, जानकीरक्षणार्थमिति भावः ।

अथेति । अथ मुहूर्तात् तादृक्समरजयसंरम्भरभसप्रसर्पद्गम्भीरध्वनिगरिमगर्जद्दशदिशं सौमित्रिराहूत इत्यसंपूर्णश्लोकाऽन्वयः ।

अथ = युद्धार्थिरामनिर्गमनाऽनन्तरं, मुहूर्तात् = अल्पकालादेव, तादृक्समरेत्यादिः = तादृक् ( तादृशः ) यः समरः ( रणः ) तस्मिन् यो जयः ( विजयः ) तस्मिन् यः संरम्भरभसः ( कोपवेगः ) तेन प्रसर्पन् ( व्याप्नुवन् ) यो गम्भीरध्वनिः ( गम्भीरशब्दः ) तस्य यो गरिमा ( गुरुत्वम् ) तेन गर्जन्त्यः ( शब्दायमानाः ) दश ( दशसंख्यकाः ) दिशः ( काष्ठाः ) यस्मिन्कर्मणि तद्यथा स्यात्तथा । सौमित्रिः = लक्ष्मणः, आहूतः = आकारितः । एतस्मिन्वाक्ये कर्तुरनुक्तत्वादपूर्णेऽपि श्लोके रामपराजयमाशङ्क्य सरयूः पृच्छति ।

सरयूरिति । रामेण = रामभद्रेण, आहूत इति शेषः । साहाय्यार्थं रामेण किं लक्ष्मण आकारित इति प्रथमः प्रश्नाशयः ।

हंस इति । नहि नहि = रामेण लक्ष्मणो नाहूत इति भावः ।

---

गङ्गा—( डर कर ) पीछे क्या हुआ ?

हंस—तब थोड़े ही समयमें वैसे युद्धकी विजयमें कोपके वेगसे व्याप्त होनेवाले गम्भीर शब्दकी गुरुतासे दशों दिशाओंको मुखरित कर लक्ष्मणको बुलाया ।

सरयू—तो क्या रामने ( बुलाया ) ?

हंस—नहीं नहीं ।

सरयू—हे देवि गङ्गे ! मुझे बचाइए । निश्चय ही यह 'राक्षसोंने' ( बुलाया ) ऐसा कहेगा ।

हंसः—

·········विपिनचरनक्तञ्चरचमू

वधक्रीडाकिञ्चिन्मुकुलितरुषा रामधनुषा ॥ ३५ ॥

सरयूः—दिष्ट्या जीवितास्मि । सेयं प्रथमदर्शिततीव्रातपा पीयूषवृष्टिः

यमुना—ततस्ततः । ( तदो तदो )

हंसः—ततः प्रमुदितमुनिजनशतसमुद्भूतसाधुवादश्रवणविनोदेन कतिचिदहानि नयन्ति स्म ।

अथाविरासीत् कुरुविन्दलोचनो द्रुमान्तरे विद्रुमशृङ्गशोभितः

---

सरयूरिति । निशाचरचक्रेणेति=राक्षससमूहेनेति । रामं विजित्य निशाचरचक्रेण किं शूर्पणखानासाच्छेदको लक्ष्मण आहूत इति सरय्वा द्वितीयः प्रश्नः ।

हंसः पूर्वोक्तश्लोकं पूरयति—विपिनचरेति । विपिनचरनक्तञ्चरचमूवधक्रीडाकिञ्चिन्मुकुलितरुषा रामधनुषा ( सौमित्रिराहूतः ) इत्यवशिष्टाऽन्वयः ।

विपिनचरनक्तञ्चरचमूवधक्रीडाकिञ्चिन्मुकुलितरुषा = विपिनचराः ( वनचराः ) ये नक्तञ्चराः ( निशाचराः, राक्षसा इति भावः ) तेषां या चमूः ( सेना ) तस्या वधः ( हननम् ) स एव क्रीडा ( केलिः, अनायासत्वादिति भावः ) तया किञ्चित् ( ईषद्यथा तथा ) मुकुलिता ( सञ्जातमुकुला ) रुट् ( क्रोधः ) यस्य, तेन । तादृशेन रामधनुषा = रामकार्मुकेण । सौमित्रिराहूत इति पूर्वाऽभिहिताभ्यां पदाभ्यां सम्बन्धः । शिखरिणी वृत्तम् ॥ ३५ ॥

सरयूरिति । प्रथमदर्शिततीव्रातपा = प्रथमं ( पुरा ) दर्शितः ( प्रदर्शितः ) तीव्रः ( कठोरः ) आतपः ( घोतः ) यस्यां सा । तादृशी पीयूषवृष्टिः = अमृतवर्षणम् । अत्र प्राक्तनी या रामपराजयाशङ्का सा तीव्रातपस्थानीया, अनन्तरभवा रामविजयप्रवृत्तिश्च पीयूषवृष्टिस्थानेयेति यथायथं योज्यम् ।

मारीचवृत्तान्तं प्रस्तौति—अथेति । अथ कुरुविन्दलोचनो विद्रुमशृङ्गशोभितो

---

हंस—वनमें विचरनेवाले राक्षसोंकी सेनाकी वधरूप क्रीडासे मुकुलित कोपवाले रामके धनुने ( लक्ष्मणको बुलाया ) ॥ ३५ ॥

सरयू—भाग्यसे जीवित हूं । सो यह पहले तीव्र धूपको दिखाने वाली अमृत वृष्टिके समान बात हुई ।

यमुना—तब क्या हुआ ? तब क्या हुआ ?

हंस—तब प्रसन्न सैकड़ों मुनियोंसे उच्चारित साधुवादके श्रवणके विनोदसे उन लोगोंने कुछ दिनोंको व्यतीत किया । तब पद्मरागके सरीखे नेत्रोंवाला, प्रवालमय शृङ्गोंसे शोभित,

विभक्तमुक्तामयचित्रमण्डनो मनोऽपहारी हरिणो हिरण्मयः ॥ २६ ॥

गङ्गा—( स्वगतम् ) नूनमयमनर्थाङ्कुरः । ( प्रकाशम् ) ततस्ततः ।

हंसः—

भ्रूवल्लीविजितमनोजचारुचापश्चापश्रीजितयुवती-मनोरमभ्रूः ।
सीतायास्तमनुससार लोचनान्तः कान्तश्च स्फुरदसितोत्पलाभिरामः ॥

विभक्तमुक्तामयचित्रमण्डनो मनोऽपहारी हिरण्मयो हरिणो द्रुमान्तरे आविरासी-दित्यन्वयः ।

अथ = किंचत्समयाऽपगमाऽनन्तरं, कुरुविन्दलोचनः = कुरुविन्दे ( पद्मरागौ ) इव लोचने ( नेत्रे ) यस्य सः, रक्तनयन इति भावः । विद्रुमशृङ्गशोभितः = विद्रुम-मयाभ्यां ( प्रवालमयाभ्याम् ) शृङ्गाभ्यां ( विषाणाभ्याम् ) शोभितः ( अलङ्कृतः ) । विभक्तमुक्तामयचित्रमण्डनः = विभक्तानि ( कृतविभागानि ) मुक्तामयानि ( मौक्तिकप्रचुराणि ) चित्राणि ( बहुवर्णानि ) मण्डनानि ( भूषणानि ) यस्य सः । मनोऽप-हारी = मनोहरः, हिरण्मयः = हिरण्यस्य विकारः' 'दाण्डिनायने'त्यादिना निपातः । सुवर्णमयः, तादृशो हरिणः = मृगः, द्रुमाऽन्तरे = वृक्षमध्ये, आविरासीत् = प्रादुर्भूतः । अत्रोपमाऽलङ्कारः । वंशस्थं वृत्तम् ॥ २६ ॥

भ्रूवल्लीति । भ्रूवल्लीविजितमनोजचारुचापः स्फुरदसितोत्पलाऽभिरामः सीताया लोचनाऽन्तः चापश्रीजितयुवतीमनोरमभ्रूः स्फुरदसितोत्पलाऽभिरामः कान्तश्च तम् अनुससारेत्यन्वयः । भ्रूवल्लीविजितमनोजचारुचापः = भ्रूवल्लया ( नेत्रोपरिस्थरोम-राजिलतया ) विजितः ( पराजितः ) मनोजस्य ( मनसिजस्य, कामदेवस्येत्यर्थः ) चारुः ( सुन्दरः ) चापः ( धनुः ) येन सः । एवं च स्फुरदसितोत्पलाऽभिरामः = स्फुरत् ( विलसत् ) यत् असितोत्पलं ( नीलकमलम् ) तदिव अभिरामः ( सुन्दरः ) पदमिदं तन्त्रेण कान्तपदस्याऽपि विशेषणं बोद्धव्यम् । सीतायाः = जानक्याः, लोचनाऽन्तः = नयनाऽवयवः । एवं च—चापश्रीजितयुवतीमनोरमभ्रूः = चापश्रिया ( स्वधनुः शोभया ) जिताः ( पराजिताः ) युवतीनां ( तरुणीनाम् ) मनोरमाः

विभक्त मुक्तामय विविध भूषणोंसे सम्पन्न और मनको हरण करनेवाला सुवर्णमय मृग वृक्षोंके बीचमें प्रकट हुआ ॥ २६ ॥

गङ्गा—( मन ही मन ) निश्चय यह अनर्थका अङ्कुर है । ( सुनाकर ) तब क्या हुआ ?

हंस—भ्रूवल्लीसे कामदेवके सुन्दर धनुको जीतनेवाले और चञ्चल नीलकमलके सदृश सुन्दर सीताके नेत्रावयवने और धनुकी शोभासे युवतिकी सुन्दर भौंहको जीतने वाले और उज्ज्वल नीलकमलके सदृश सुन्दर प्रिय रामने भी उस मृगका अनुसरण किया ॥

ततः—

त्रासातुरेण हरिणेन सहैव तेन
दूरं प्रयाति हृदये जनकात्मजायाः ।
सौमित्रिराश्रमपदात्कृतचापपाणि-
र्द्राङ्निर्जगाम च, विवेश च कोऽपि भिक्षुः ॥ २८ ॥

( मनोहराः ) भ्रुवः ( नेत्रोपरिस्थरोमराजयः ) येन सः । तथैव स्फुरदसितोत्पलाऽभिरामः = विलसन्नीलकमलसुन्दरः, कान्तश्च = सीताप्रियश्च, रामदचेत्यर्थः । तं = पूर्वोक्तं हिरण्मयं हरिणम् , अनुससार = अनुसृतवान् । अतिरमणीयं तादृशं हिरण्मयं हरिणं दृष्ट्वा सीता साऽभिलाषा जाता, रामश्च सीताऽभिलाषं ज्ञात्वा व्यापादनार्थं तं हरिणमनुससारेति भावः । अत्र रूपकोपमाश्लेषाणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । प्रहर्षिणीवृत्तम् ॥ २७ ॥

त्रासाऽऽतुरेणेति । त्रासाऽऽतुरेण तेन हरिणेन सहैव जनकात्मजाया हृदये दूरं प्रयाति कृतचापपाणिः सौमित्रिः आश्रमपदात् द्राक् निर्जगाम कोऽपि भिक्षुश्च विवेशेत्यन्वयः । त्रासाऽऽतुरेण = भयाऽऽकुलेन, रामशरादिति शेषः । तेन = पूर्वोक्तेन, हरिणेन = मृगेण, सहैव = सममेव, जनकाऽऽत्मजायाः=जानक्याः, सीताया इत्यर्थः । हृदये = चित्ते, दूरं = विप्रकृष्टं, प्रयाति = प्राप्ते सति, रामचिन्तयेति शेषः । कृतचापपाणिः = कृतः ( विहितः, आरोपितमौर्वीक इति भावः ) यश्चापः ( धनुः ) स पाणौ ( करे ) यस्य सः, 'प्रहरणाऽर्थेभ्यः परे निष्ठासप्तम्यौ' इति पाणिपदस्य परनिपातः । तादृशः सौमित्रिः = लक्ष्मणः, आश्रमपदात् = उटजस्थानात्, द्राक्= शीघ्रं, निर्जगाम = निर्गतः, रामस्यविपदाशङ्कया तत्त्राणाऽर्थमिति शेषः । अत्राऽन्तरे कोऽपि = अविज्ञातनामधेयः, भिक्षुश्च = भिक्षाऽर्थी च, भिक्षत इति भिक्षुः, 'भिक्ष भिक्षायामलाभे लाभे चे'ति धातोः 'सनाशंसभिक्ष उ'रित्युः । विवेश = प्रविष्टः, आश्रमपदमिति शेषः । रामशरपतनभीतेराकुलेन तेन मृगेणैव सह रामचिन्तया सीताया मानसे च दूरं प्राप्ते सति धनुष्पाणिर्लक्ष्मण आश्रमाच्छीघ्रं बहिर्विनिर्ययौ, अत्राऽन्तरे कोऽपि भिक्षुश्च सीताऽन्तिकमाजगामेति भावः । अत्र सहोक्तिरलङ्कारस्तल्लक्षणं सोदाहरणं यथा चन्द्रालोके—'सहोक्तिः सहभावश्चेद्भासते जनरञ्जनः । दिगन्तमगमत्तस्य कीर्तिः प्रत्यर्थिभिः सह ॥' इति । वसन्ततिलकावृत्तम् ॥ २८ ॥

तब—भयसे आकुल उस मृगके साथ ही सीताहृदयके भी दूर प्राप्त होने पर हाथोंमें धनुको लेनेवाले लक्ष्मणजी आश्रम-स्थानसे शीघ्र बाहर निकले, इसी बीचमें कोई भिक्षुक भी आश्रमके भीतर घुसा ॥ २८ ॥

गङ्गा—ततस्ततः ?

हंसः—ततः—

इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः,
स चापः सौमित्रिः स्वजनमनुयाति द्रुतमितः ।
इतः सीता भिक्षामुपनयति भिक्षोः करतले,
त्रयं व्योम्नि प्रेङ्खन्युगपदहमालोकयमिदम् ॥ २९ ॥

सरयूः—ततस्ततः ?

हंसः—ततः—

---

इतो बाणमिति । इतो रामो मुक्तकरुणो हरिणे बाणं क्षिपति । इतः सचापः सौमित्रिः द्रुतं स्वजनम् अनुयाति । इतः सीता भिक्षोः करतले भिक्षामुपनयति । व्योम्नि प्रेङ्खन् अहम् इदं त्रयं युगपत् आलोकयमित्यन्वयः ।

इतः = इह, सार्वविभक्तिकस्तसिः । रामः = रामचन्द्रः, मुक्तकरुणः = निर्दयः सन् , हरिणे = पूर्वोक्ते हिरण्मये मृगे, विषये । बाणं = शरं, क्षिपति = प्रहरति । इतः = इह, सचापः = धनुर्धारी, सौमित्रिः = लक्ष्मणः, द्रुतं = शीघ्रं, स्वजनम् = आत्मबन्धुं, रामचन्द्रमिति भावः । अनुयाति = अनुसरति । इतः = इह, सीता = जानकी, भिक्षोः = भिक्षाऽर्थिनः, रावणस्येति भावः । करतले = हस्ततले, भिक्षां = याचितमन्नम् , उपनयति = समर्पयति । व्योम्नि = आकाशे, प्रेङ्खन् = उड्डीयमानः सन् , अहं = हंसः, इदं = पूर्वोक्तं, त्रयं = त्रितयं, एकत्र रामकर्तृकहरिणविषयकबाणक्षेपणमपरत्र सचापसौमित्रिकर्तृकरामाऽनुसरणमन्यत्र च सीताकर्तृकभिक्षुकरतलविषयभिक्षाऽन्नसमर्पणमिति भावः । युगपत् = एककालम् , आलोकयं = दृष्टवान् । आकाशगत्यैव यौगपद्येन कार्यत्रितयदर्शनयोग्यतां संभाव्यते । शिखरिणीवृत्तम् ॥ २९ ॥

---

गङ्गा—तब क्या हुआ ? तब क्या हुआ ?

हंस—तब—

इधर राम निर्दय होकर मृग पर बाण छोड़ रहे हैं । इधर धनु उठाकर लक्ष्मण शीघ्र स्वजन ( राम ) का अनुसरण कर रहे हैं । इधर सीता भिक्षुके करतलमें भिक्षा दे रही हैं । आकाशचारी होते हुए मैंने इन तीनों दृश्योंको एक ही बार देख लिया ॥ २९ ॥

सरयू—तब क्या हुआ ? तब क्या हुआ ?

हंस—तब—

कनकहरिणगात्रे बाणपातावलोका-
द्विमुखहृदयवृत्तिर्लोचने सन्निमील्य ।
कथयितुमयि, चेदं रामवृत्तान्तजातं
सरयु ! तव तटान्तं तूर्णमेवाऽवतीर्णः ॥ ४० ॥

तदनुजानीत मां देव्यः ! सलिलावगाहनाय, श्रान्तोऽस्मि ।

तिस्रः—

विहरास्मिन् रमणीये शुचिपयसि स्मेरनीरजे सरसि ।
पुरतरुणीचरणरणन्मणिनूपुरकूजितोत्कुतुकः ॥ ४१ ॥

---

कनकेति । कनकहरिणगात्रे बाणपाताऽवलोकात् विमुखहृदयवृत्तिः ( अहम् ) लोचने सन्निमील्य अयि सरयु ! इदं रामवृत्तान्तजातं कथयितुं तव तटाऽन्तं तूर्णमेवाऽवतीर्णं इत्यन्वयः । कनकहरिणगात्रे = सुवर्णमृगशरीरे, बाणपाताऽवलोकात् = बाणपातस्य ( रामकर्तृकशरप्रहारस्य ) अवलोकात् ( दर्शनात् ) । विमुखहृदयवृत्तिः = पराङ्मुखमनोव्यापारः, जातश्चोऽहमिति शेषः । लोचने = नयने, सन्निमील्य = मुद्रयित्वा, मृगघातव्यापारदर्शनाऽसामर्थ्येनेति शेषः । अयि सरयु = हे सरयूदेवि !, इदं = पूर्ववृत्तं, रामवृत्तान्तजातं = रामचन्द्रोदन्तसमूहं, कथयितुं = वक्तुं, तव = भवत्याः सरय्वाः, तटाऽन्तं = तीरप्रान्तं, तूर्णमेव = शीघ्रमेव, अवतीर्णः = कृताऽवतरणः, अस्मीति शेषः । कारुण्यान्मृगघातं द्रष्टुमक्षमोऽहमत्र समायातोऽस्मीति भावः । मालिनीवृत्तम् ॥ ४० ॥

तदिति । अनुजानीत = आदिशत ।

विहरेति । पुरतरुणीचरणरणन्मणिनूपुरकूजितोत्कुतुकः ( त्वम् ) रमणीये शुचिपयसि स्मेरनीरजे अस्मिन् सरसि विहरेत्यन्वयः । पुरतरुणीचरणरणन्मणिनूपुरकूजितोत्कुतुकः = पुरतरुणीनां ( नगरयुवतीनाम् ) चरणेषु ( पादेषु ) रणन्तः ( शब्दायमानाः ) ये मणिनूपुराः ( रत्नखचिता मञ्जीराः ) तेषां कूजितैः ( शब्दैः ) उत्कु-

---

सुवर्णमृगके शरीरमें शरप्रहार देखनेमें असमर्थ होकर मैं आँखोंको मूँदकर हे सरयु ! रामके इन वृत्तान्तोंको कहनेके लिये आपके तटके पास शीघ्र ही उतर पड़ा हूं ॥ ४० ॥

इस कारण हे देवियो ! मुझे जलमें प्रवेश करनेके लिए अनुज्ञा दे दें क्योंकि मैं थक गया हूँ ।

तीनों—नगरकी युवतियोंके चरणोंमें शब्द करनेवाले मणिखचित मञ्जीरोंके शब्दोंमें कौतुकी होकर तुम मनोहर, स्वच्छ जलवाले और विकसित कमलोंसे सम्पन्न इस तालाबमें विहार करो ॥ ४१ ॥

गङ्गा—सखि, सरयु ! अनेन वृत्तान्तक्रमेण कातरं मे मनः ।

सरयूः—अलं कातरतया, नन्वनेन हि नूपुरोद्भेदेन स्मृतं मया—यत्किल वनगमनोद्यतां जानकीमिदमुक्तवती करकलितनूपुरद्वया पतिव्रता सीमन्तिनीरत्नमरुन्धती ।

अधिचरणममू चमूरुनेत्रे ! मृदुरणितौ मणिनूपुरौ विधेहि ।
अहरपि विरहं न यन्महिम्ना हरिणदृशः सह वल्लभैर्लभन्ते ॥४२॥

---

तुकः = उद्भूतम् ( उत्पन्नम् ) कुतुकं ( कौतूहलम् ) यस्य सः, उत्पन्नकुतूहलः, त्वमिति शेषः । रमणीये = क्रीडायोग्ये, मनोहरे वा । शुचिपयसि = शुचि ( स्वच्छं पवित्रं वा ) पयः ( जलम् ) यस्मिंस्तस्मिन् । स्मेरनीरजे = स्मेराणि ( विकसितानि ) नीरजानि ( कमलानि ) यस्मिंस्तस्मिन् । तादृशे अस्मिन् = निकटस्थे, सरसि = कासारे, विहर = विहारं कुरु । आर्यावृत्तम् ॥ ४१ ॥

गङ्गेति । कातरं = भीरु, तदनन्तरं सीताया अनिष्टमाशङ्कय मदीयं मनोभयाविष्टमिति भावः ।

सरयूरिति । नूपुरोद्भेदेन = 'विहरेति' पदे नूपुरपदस्य प्राकट्येनेति भावः । करकलितनूपुरद्वया = हस्तधृतमञ्जीरद्वितया । सीमन्तिनीरत्नं = नारीश्रेष्ठा ।

अधिचरणमिति । हे चमूरुनेत्रे ! मृदुरणितौ अमू मणिनूपुरौ अधिचरणं विधेहि । यन्महिम्ना हरिणदृशो वल्लभैः सह अहरपि विरहं न लभन्त इत्यन्वयः ।

हे चमूरुनेत्रे = हे मृगनयने, हे सीते इति भावः । मृदुरणितौ = कोमलशब्दौ, अमू = एतौ, मणिनूपुरौ = रत्नखचितौ मञ्जीरौ, अधिचरणं = चरणयोः, विधेहि = कुरु, नूपुरधारणेन चरणौ समलङ्कृतौ विधेहीति भावः । नूपुरधारणे फलमाह—अहरपीति । यन्महिम्ना = यन्माहात्म्येन, चरणधृतनूपुरप्रभावेणेति भावः । हरिणदृशः = मृगनयनाः स्त्रियः, वल्लभैः सह = स्वकान्तैः समम् , अहरपि = एकं दिनमपि, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । विरहं = वियोगं, न लभन्ते = न प्राप्नुवन्ति । अत्रोपमाऽलङ्कारो वृत्त्यनुप्रासश्च । पुष्पिताग्रावृत्तम् ॥ ४२ ॥

---

गङ्गा—सखि सरयु ! इस वृत्तान्तके क्रमसे मेरा चित्त कातर हो रहा है ।

सरयू—कातर नहीं होना चाहिए । मञ्जीरशब्दकी चर्चासे मुझे याद हुई कि—वन जानेमें तत्पर सीताजीको हाथोंमें दो मञ्जीरोंको लेती हुई पतिव्रता नारीरत्न अरुन्धतीने जो कहा था—हे मृगनयने सीते ! कोमल ध्वनिवाले इन मणिखचित मञ्जीरोंको चरणोंमें पहनो । जिनकी महिमासे सुन्दरियां अपने पतिसे एक दिनके वियोगको भी नहीं पाती हैं ॥ ४२ ॥

कृतवती च तथा जानकी ।

**गङ्गा**—इदानीं किमपि निर्वृतास्मि । सत्यवादिनी हि मे सखी वसिष्ठगृहमेधिनी । तदागच्छत इमं वृत्तान्तं रघुकुलवत्सलाय सागराय निवेदयामः । ( इति परिक्रामन्ति ) ।

**गङ्गा**—( सविस्मयम् ) अहो ! प्रवाहवेगातिशयात्तत्क्षणादेव दूरमुपयाताः स्मो यदयमदूर एव गोदावरीसहचरः सागरः किमपि समालपन्नालोक्यते कल्लोकिनीकान्तः ।

( ततः प्रविशति गोदावरीसहचरः सागरः )

**सागरः**—ततस्ततः ?

**सरयूः**—कथमिहापि किमपि वृत्तान्तशेषः प्रस्तूयते ?

**यमुना**—अपि नाम तदेव भविष्यति यत्किल हंसेन नावगतम् ?
( अवि णाम तं जेव्व हविस्सदि जं किर हंसेण णावगअम् )

---

गङ्गेति । किमपि = केनाऽपि प्रकारेण । निर्वृता = संजातसुखा । नूपुरधारणेन रामेण सीताया वियोगाऽसंभवादिति भावः । वसिष्ठगृहमेधिनी = वसिष्ठधर्मपत्नी, अरुन्धतीति भावः ।

कल्लोलिनीकान्तः = नदीवल्लभः । समालपन् = संभाषमाणः ।

यमुनेति । नाऽवगतं = न ज्ञातम् ।

---

सीताने भी वैसा ही किया ।

**गङ्गा**—इस समय किसी प्रकारसे मेरा हृदय सुखका अनुभव कर रहा है । मेरी सखी वशिष्ठकी धर्मपत्नी अरुन्धती सत्यवादिनी हैं । इसलिए आओ इस वृत्तान्तको रघुवंशमें स्नेह करनेवाले समुद्रजीसे निवेदन करें । ( सबलोग परिक्रमण करती हैं । )

**गङ्गा**—( आश्चर्यपूर्वक ) अहो ! अतिशय प्रवाहवेगके कारण थोड़े ही क्षणमें हमलोग दूर पहुँच गई हैं जो कि निकट ही ये गोदावरीके सहचर नदीपति सागर ( समुद्र ) कुछ बातचीत करते हुए दिखाई दे रहे हैं ।

( तब गोदावरीके सहचर सागर प्रवेश करते हैं । )

**सागर**—तब क्या हुआ ? तब क्या हुआ ?

**सरयू**—क्या यहाँ भी कुछ वार्तालाप हो रहा है !

**यमुना**—जो हंसको विदित नहीं थी वही बात है क्या !

गोदावरी—ततो—

रामोन्मुक्तैकबाणप्रणिहतहृदयः काञ्चनाङ्गः कुरङ्गः
सद्यो मारीचनामाऽजनि रजनिचरः सान्द्ररक्ताक्तवक्षाः ।
भिक्षुः सोऽपि क्षणार्धान्मणिखचितचलत्कुण्डलश्रेणिशोभा-
वीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाग्रजोऽभूत् ॥ ४३ ॥

गङ्गा—हा ! हतास्मि । (विमृश्य) अथवाऽस्ति तन्मणिनूपुरद्वयम् ।

---

रामेति । रामोन्मुक्तैकबाणप्रणिहतहृदयः काञ्चनाङ्गः कुरङ्गः सान्द्ररक्ताऽक्तवक्षाः (सन्) सद्यो मारीचनामा रजनिचरोऽजनि । स भिक्षुरपि क्षणाऽर्धात् मणिखचितचलत्कुण्डलश्रेणिशोभावीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाऽग्रजोऽभूदित्यन्वयः । रामोन्मुक्तैकबाणप्रणिहतहृदयः = रामेण (राघवेण) उन्मुक्तः (प्रहृतः) य एकः (एकसंख्यकः) बाणः (शरः) तेन प्रणिहतं (विद्धम्) हृदयं (वक्षःस्थलम्) यस्य सः । तादृशः काञ्चनाऽङ्गः = हिरण्मयशरीरः, कुरङ्गः = मृगः, सान्द्ररक्ताऽक्तवक्षाः = सान्द्रं (घनीभूतम्) यत् रक्तं (रुधिरम्) तेनाऽक्तं (लिप्तम्) वक्षः (उरःस्थलम्) यस्य सः । तादृशः सन् । सद्यः = तत्क्षणे, मारीचनामा = मारीचाऽऽख्यः, रजनिचरः = निशाचरः, राक्षस इत्यर्थः । अजनि = संजातः । रामसायकविद्धः पूर्वोक्तो हिरण्मयो हरिणस्तत्क्षणमेव मारीचाख्यराक्षसरूपे परिणत इति भावः । सः = पूर्वोक्तः, भिक्षुरपि = भिक्षार्थ्यपि, क्षणार्धात् = अल्पकालादेव, मणिखचितेत्यादिः = मणिखचितानि (रत्नसंयुक्तानि) चलन्ति (वल्गन्ति) यानि कुण्डलानि (कर्णभूषणानि) तेषां श्रेणिः (पङ्क्तिः) तस्याः शोभा (कान्तिः) एव वीची (तरङ्गः) तस्यां खेलन्तः (क्रीडन्तः) ये कपोलाः (गण्डफलकानि) तैः स्फुरितानि (प्रकाशितानि) दश (दशसंख्यकानि) शिरांसि (मूर्धानः) यस्य सः । तादृशः कुम्भकर्णाऽग्रजः = कुम्भकर्णज्येष्ठभ्राता, रावण इति भावः । अभूत् = संवृत्तः, भिक्षुरूपकपटवेषं परिहृत्य रावणः संवृत्त इति भावः । अत्ररूपकाऽलङ्कारः । स्रग्धरा वृत्तम् ॥ ४३ ॥

---

गोदावरी—तब—

रामसे छोड़े गये एक बाणसे हृदयमें विद्ध होकर सुवर्णशरीर मृग हृदयमें गाढ रुधिरसे लिप्त होता हुआ उसी क्षण मारीच नामका राक्षस हो गया । वह भिक्षुक भी अल्पकालमें ही रत्नखचित चलते हुए कुण्डलोंकी पङ्क्तिकी शोभारूप तरङ्गमें क्रीडा करनेवाले कपोलोंसे प्रकाशित दश मस्तकोंसे युक्त होकर रावण बन गया ॥ ४३ ॥

गङ्गा—हाय ! मैं नष्ट हो गई हूँ । (विचारकर) अथवा मणिखचित ये दो नूपुर हैं ।

सागरः—अपि नाम मम वधूटिका स्पृष्टा निशाचरेण।

गोदावरी—न स्पृष्टा।

सागरः—कथमिव।

गोदावरी—तथाहि—

रजनिचरकराग्रस्पर्शसम्पातविघ्नं
रचयितुमनसूयादत्तहस्ताङ्गरागाम्।
बहलमनलपुञ्जः पिञ्जरज्योतिरुद्यन्
कुवलयदलशीतां संवृणोति स्म सीताम्॥ ४४॥

सागरः—अहो! अत्रिपत्न्यास्तपःप्रभावः।

---

रजनिचरेति। रजनिचरकराऽग्रस्पर्शसम्पातविघ्नं रचयितुम् अनसूयादत्तहस्ताऽङ्गरागां कुवलयदलशीतां सीतां बहलम् उद्यन् पिञ्जरज्योतिः अनलपुञ्जः संवृणोति स्मेत्यन्वयः।

रजनिचरकराऽग्रस्पर्शसम्पातविघ्नं = रजनिचरस्य (रावणस्य) कराग्रैः (हस्ताऽग्रैः) यः स्पर्शसम्पातः (आमर्शनप्रसङ्गः), तत्र विघ्नम् (अन्तरायम्)। रचयितुं = विधातुम्, अनसूयादत्तहस्ताऽङ्गरागाम् = अनसूयया (अत्रिपत्न्या) दत्तः (वितीर्णः) हस्तेन (करेण) अङ्गरागः (शरीरलेपनद्रव्यम्) यस्यै सा, ताम्। कुवलयदलशीतां = कुवलयदलम् (कमलपत्रम्) इव शीतां (शीतलाम्) भयादिति शेषः। तादृशीं सीतां = जानकीं बहुलं = प्रचुरं यथा तथा, उद्यन् = प्रादुर्भवन् पिञ्जरज्योतिः = पीतप्रकाशः, यः अनलपुञ्जः = अग्निसमूहः, सः। संवृणोति स्म = परिवेष्टितवान्, 'लट् स्मे' इति भूतार्थे लट्। अनसूयादत्ताऽङ्गरागप्रभावादनलसमूहो रक्षाऽर्थं सीतां परिवेष्टितवानिति भावः। अत्रोपमाऽलङ्कारः। मालिनीवृत्तम्॥४४॥

---

सागर—क्या रावणने वधू सीताका स्पर्श भी कर लिया?

गोदावरी—नहीं किया।

सागर—कैसे?

गोदावरी—जैसे कि—

राक्षसके हस्ताग्रोंसे होनेवाले स्पर्शमें विघ्न करनेके लिए जिनको अनुसूयाने अङ्गराग द्रव्य दिया है वैसी और कमलपत्रके समान शीतल सीताको प्रचुरतासे प्रादुर्भूत पीले प्रकाशवाले अग्निपुञ्जने परिवेष्टित कर लिया॥ ४४॥

सागर—अहो! अनसूयाका कैसा तपःसामर्थ्य है।

गोदावरी—ततो वरुणमन्त्रचिन्तनाहूतनूतनबलाहकाञ्चननिचुलितपाणिरस्पृशदेव ।

'हा राम ! हा रमण ! हा जगदेकवीर !
हा नाथ ! हा रघुपते ! किमुपेक्षसे माम् ।'
इत्थं विदेहतनयां मुहुरालपन्ती-
मादाय राक्षसपतिर्नभसा जगाम ।। ४५ ।।

सरयूः—अयि भागीरथि ! कथमस्मद्भागधेयादरुन्धतीवाचोऽपि

---

गोदावरीति । वरुणमन्त्रचिन्तनाहूतनूतनबलाहकाञ्चननिचुलितपाणिः = वरुणस्य ( अप्पतेः ) यो मन्त्रः ( मनुः ) तच्चिन्तनेन ( तद्ध्यानेन ) आहूताः ( आकारिताः ) नूतनाः ( नवीनाः ) ये बलाहकाः ( वारिवाहकाः, मेघा इत्यर्थः ) तेषामञ्चलेन ( प्रान्तभागेन ) निचुलितः ( प्रच्छदपटीकृतः ) पाणिः ( हस्तः ) यस्य सः । तादृशो रावण इति शेषः । एतेन रावणस्य मेघाञ्चलप्रावृतपाणित्वेन वह्निदाहाऽभाव उन्नीयते ।

हा रामेति । हा राम ! हा रमण ! हा जगदेकवीर ! हा नाथ ! हा रघुपते ! मां किम् उपेक्षसे ? इत्थं मुहुरालपन्तीं विदेहतनयाम् आदाय राक्षसपतिः नभसा जगामेत्यन्वयः । सर्वत्र 'हा' इत्यत्र 'माम्' इति पदं संयोज्यम् । हा मां; मम शोच्यता इति भावः, राक्षसाऽपहृतत्वादिति शेषः । राम = रामचन्द्र, रमण = वल्लभ, जगदेकवीर = लोकमुख्यशूर, नाथ = स्वामिन् !, रघुपते = हे राघवश्रेष्ठ !, मां=सीतां, दशकन्धरनीतामिति शेषः । किं = किमर्थम् । उपेक्षसे = उपेक्षितां करोषि । मद्वल्लभस्य लोकैकशूरस्य रघुवंशधुरन्धरस्यापि ते कीदृशी मदुपेक्षेति भावः इत्थम् = अनेन प्रकारेण, मुहुः = वारंवारम्, आलपन्तीं = भाषमाणां, विदेहतनयां = जानकीं, सीताम् । आदाय = गृहीत्वा, राक्षसपतिः = निशाचरेश्वरः, रावण इति भावः । नभसा—आकाशेन, व्योममार्गेणेति भावः । जगाम = गतः । अत्र विशेषणानां साभिप्रायत्वात्परिकराऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ ४५ ॥

सरयूरिति । अस्मद्भागधेयात् = अस्मद्भाग्यात्, अस्मद्दुर्भाग्यात् । अरुन्धती-

---

गोदावरी—तब वरुणमन्त्रके ध्यानसे बुलाये गये नये मेघोंके अञ्चलसे प्रावृत हाथों वाले रावणने उनको छू ही लिया ।

'हा राम ! हा रमण ! हाय ! हे संसारके एकमात्र वीर ! हा नाथ ! हा रघुपते ! क्यों आप मेरी उपेक्षा कर रहे हैं !' इस प्रकार बारंबार बोलती हुई सीताको लेकर रावण आकाशमार्गसे चला ॥ ४५ ॥

सरयू—हे गङ्गे ! हमारे भाग्यसे क्या अरुन्धतीके वचन भी झूठे होंगे ! ।

मृषा भविष्यन्ति ।

गङ्गा—नहि नहि ।

सागरः—( सविषादम् ) ततः ?

गोदावरी—ततः शैलशिखराधिवासिना विहङ्गराजेन जटायुना पन्थानमवरुध्येदमुक्तो राक्षसेन्द्रः—

आः पापिन् ! पश्यतो मे, रघुतिलकवधूं चोरवृत्त्याऽपहर्त्तुं
सीतां शीतांशुलेखामिव गिरिशशिरःशायिनीमुद्यतोऽसि ।
एष च्छित्त्वा शिरांसि प्रखरनखमुखैर्दीप्तचूडामणीनि
त्वामद्याहं गरुत्मानुरगमिव सुधाकाङ्क्षिणं संहरामि ॥ ४६ ॥

वाचोऽपि = वसिष्ठपत्नीवचनान्यपि, 'अहरपि विरहं न यन्महिम्ने'त्यादिरूपाण्यपीति भावः ।

आः पापिन्निति । आः पापिन् ! पश्यतो मे गिरिशशिरःशायिनीं शीतांशुलेखामिव रघुतिलकवधूं सीतां चोरवृत्त्या अपहर्तुम् उद्यतोऽसि । एषोऽहमद्य प्रखरनखमुखैः दीप्तचूडामणीनि शिरांसि छित्त्वा गरुत्मान् सुधाऽऽकाङ्क्षिणम् उरगमिव त्वां संहरामीत्यन्वयः । आः = कोपद्योतकमव्ययमिदम् । पापिन् = हे पाप रावण ! पश्यतः = अवलोकयतः, मे = मम, 'षष्ठी चानादरे' इत्यनादरे षष्ठी, पश्यन्तं मामनादृत्येति भावः । गिरिशशिरःशायिनीं = गिरिशस्य ( शिवस्य ) शिरःशायिनीं ( मस्तकवर्तिनीम् ), शीतांशुलेखामिव = चन्द्ररेखामिव, सर्वजनश्रद्धाभाजनभूतामिति भावः । रघुतिलकवधूं = रामचन्द्रपत्नीं, सीतां = जानकीं, चोरवृत्त्या = स्तेनव्यवहारेण, अपहर्तुं = मोष्टुम् , उद्यतोऽसि = उद्यमपरोऽसि, यत्त्वं शौर्यमनास्थाय प्राकृतस्तेनवन्मैथिलीमपहर्तुं तत्परोऽसि, इदं ते साऽतिशयं विगीतं कर्मेति भावः । अतः एषः = समीपतरवर्ती, अहं = गृध्रराजो जटायुः, अद्य = अस्मिन्दिने,

गङ्गा—नहीं नहीं ।

सागर—( खेदपूर्वक ) तब ?

गोदावरी—तब पर्वतकी चोटीमें रहनेवाले पक्षिराज जटायुने राह रोककर रावणको ऐसा कहा—

ओह पापिन् ! मेरे देखते देखते ही शिवमस्तक पर रहनेवाली चन्द्ररेखाके समान रामपत्नी सीताको चोरकी तरह तू अपहरण करनेके लिए तैयार हो रहा है । यह मैं आज तीक्ष्ण नाखूनोंके अग्रभागोंसे, प्रज्वलित शिरोरत्नोंसे अलङ्कृत शिरोंको काटकर जैसे गरुड़ने अमृतको चाहनेवाले सर्पका संहार किया था उसी तरह तेरा संहार करता हूँ ॥ ४६ ॥

गङ्गा—स एष नूपुरप्रसादः ।

सागरः—( सहर्षम् ) ततस्ततः ?

गोदावरी—

नखैस्तदीयैः कुलिशात्कठोरैर्भिन्दद्भिरङ्गानि निशाचरस्य ।
रथः सहेमाभरणो बभञ्जे न जानकीलाभमनोरथोऽस्य ॥ ४७ ॥

---

प्रखरनखमुखैः = तीक्ष्णनखराऽग्रभागैः, दीप्तचूडामणीनि = दीप्ताः ( प्रज्वलिताः, प्रकाशिता इति भावः ) चूडामणयः ( शिरोरत्नानि ) येषु तानि, तादृशानि । शिरांसि = शीर्षाणि, त्वदीयानीति शेषः । छित्त्वा = खण्डयित्वा, गरुत्मान् = वैनतेयः, सुधाकाङ्क्षिणम् = अमृताऽभिलाषिणम् , उरगमिव = सर्पमिव, त्वां = भवन्तं रावणं, संहरामि = व्यापादयामि । यथोरगाणाममृताऽभिलाषोऽयुक्तरूपस्तथैव तवाऽपि सीताकाङ्क्षाऽनुचितरूपा, अतोऽहं गरुड उरगमिव त्वां सत्वरं संहरामीति भावः । अत्रोपमाऽलङ्कारः । स्रग्धरा वृत्तम् ॥ ४६ ॥

नखैरिति । कुलिशात् कठोरैः निशाचरस्य अङ्गानि भिन्दद्भिः तदीयैर्नखैः सहेमाऽऽभरणो रथो बभञ्जे । अस्य जानकीलाभमनोरथो न ( बभञ्जे ) इत्यन्वयः ।

कुलिशात् = वज्रादपि, 'पञ्चमी विभक्ते' इति पञ्चमी । कठोरैः = कठिनतरैः, अत एव निशाचरस्य = राक्षसाऽधिपस्य रावणस्य, अङ्गानि = देहाऽवयवान् , भिन्दद्भिः = विदारयद्भिः, तदीयैः = तत्सम्बन्धिभिः, जटायुष इति भावः । नखैः = नखरैः सहेमाऽऽभरणः = सुवर्णाऽलङ्कारसहितः, रथः = स्यन्दनः, रावणस्येति शेषः । बभञ्जे = भग्नः । परम् अस्य = रावणस्य, जानकीलाभमनोरथः = सीताप्राप्त्यभिलाषः, न = न बभञ्जे नो भग्नः । जटायुषो निशिततरनखै रावणस्य रथ एव भग्नः, परं तस्य सीताप्राप्त्याभिलाषो न विहत इति भावः । अत्र परिसंख्याऽलङ्कारः, सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—

'परिसंख्या निषिध्यैकमस्मिन्वस्तुयन्त्रणम् ।
स्नेहक्षयः प्रदीपेषु स्वान्तेषु न नतभ्रुवाम् ॥' इति ।

इन्द्रवज्रोपेन्द्रवज्रयोः संमेलनादुपजातिर्वृत्तम् ॥ ४७ ॥

---

गङ्गा—यह मञ्जीर ( पाजेब ) का प्रसाद है ।

सागर—( सहर्ष ) तब क्या हुआ ? तब क्या हुआ ?

गोदावरी—वज्रसे भी कठोर अतएव राक्षसके अङ्गोंको विदीर्ण करनेवाले जटायुके नखोंसे सुवर्णाऽलङ्कारसे युक्त रावणका रथ टूट गया, परन्तु उसकी सीताप्राप्तिका अभिलाषा नहीं टूटी ॥ ४७ ॥

सागरः—ततः ?

गोदावरी—ततश्च निशितनखनिस्त्रिंशनिर्घातभैरवे समरसंरम्भे संभ्रमकातरायां रावणैककरस्थितायां जानक्यां—

तस्याः क्वणन् किमपि नूपुर एक एव
क्रन्दन्निवातिकरुणं चरणात् पृथिव्याम् ॥

गङ्गा—हा ! अधुना निराशाः स्मः ।

गोदावरी—

आस्तिष्ठ तिष्ठ निहतोऽसि खलेति जल्पन् ।
दूराज्जटायुरपि खड्गहतः पपात ॥ ४८ ॥

---

गोदावरीति । निशितनखनिस्त्रिंशनिर्घातभैरवे = निशितनखाः ( तीक्ष्णनखाः ) जटायुष इति भावः ) निस्त्रिंशः ( खड्गः, रावणस्येति भावः ) तेषां निर्घातेन ( परस्परप्रहारेण ) भैरवे ( भयङ्करे ), समरसंरम्भे = युद्धोत्साहे । सम्भ्रमकातरायां = त्वराऽधीरायाम् ।

तस्या इति । किमपि क्वणन् तस्या एक एव नूपुरः अतिकरुणं क्रन्दन्निव चरणात् पृथिव्याम् ( पपातेति उत्तरार्द्धपदेन सम्बन्धः ) । इति पूर्वार्द्धाऽन्वयः ।

किमपि = अव्यक्तं यथा स्यात्तथा । क्वणन् = शब्दायमानः । तस्याः = जानक्याः, एक एव = एकक एव नूपुरः = मञ्जीरः, अतिकरुणम् = अतिशयकरुणापूर्णं यथा स्यात्तथा, क्रन्दन्निव = रुदन्निव चरणात् = पादात् , पृथिव्यां = भूमौ, पपात=अपतत् । एको नूपुरो जानकीपादविश्लेषदुःखाद्रुदन्निव मेदिन्यां पतित इति भावः । इति पूर्वार्द्धव्याख्या ।

आस्तिष्ठेति । 'आः ! तिष्ठ तिष्ठ । हे खल ! निहतोऽसि इति दूरात् जल्पन् जटायुरपि खड्गहतः ( सन् ) पपातेत्युत्तरार्द्धाऽन्वयः ।

---

सागर—तब ?

गोदावरी—तब तीक्ष्ण नाखूनों और खड्गके परस्पर प्रहारसे भयङ्कर युद्धके संरम्भमें रावणके एक हाथमें स्थित सीताके संभ्रमसे कातर होनेपर—

अव्यक्त रूपसे शब्द करता हुआ सीताका एक ही मञ्जीर करुणापूर्ण शब्दसे रोते हुएके समान चरणसे जमीनपर…

गङ्गा—हाय ! अब हमलोग निराश हो गईं ।

गोदावरी—'ओह ! ठहर ठहर । हे दुष्ट ! अब तू मारा गया' ऐसा दूरसे बोलते हुए जटायु भी रावणके खड्गसे ताडित होकर गिर पड़े ॥ ४८ ॥

सागरः—हा वत्से जानकी ! अधुना नीताऽसि निशाचरेण ( इति मूर्च्छति )

गङ्गा—( उपसृत्यांशुकान्तेन वीजयन्ती ) अये रघुकुलतिलक ! समाश्वसिहि समाश्वसिहि ।

सागरः—कथमिह गङ्गापि ।

गङ्गा—यमुना-सरय्वौ च ।

सागरः—तन्मां मिलिताः सर्वा एव धारयत । अयमहं हतोऽस्मि शोकस्रोतसा ।

गङ्गा—अलमतिकातरतया, यतः—

प्रायो दुरन्तपर्यन्ताः सम्पदोऽपि दुरात्मनाम् ।

---

आः इति कोपद्योतकमव्ययम् । तिष्ठ तिष्ठ = गतिनिवृत्तिं कुरु, गतिनिवृत्तिं कुरु, सम्भ्रमे द्विरुक्तिः । हे खल = हे दुर्जन निहतोऽसि = मारितोऽसि, इति = इत्थं, दूरात् = विप्रकृष्टप्रदेशात्, जल्पन् = भाषमाणः, जटायुरपि = संपात्यनुजोऽपि खड्गहतः = खड्गेन ( रावणकृपाणेन ) हतः ( व्यापादितः ) सन् , पपात=पतितः भूमाविति शेषः । इत्युत्तरार्द्धव्याख्या । अत्र श्लोके उत्प्रेक्षाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ ४८ ॥

सागर इति । शोकस्रोतसा=मन्युप्रवाहेण ।

प्राय इति । हि दुरात्मनां सम्पदोऽपि प्रायो दुरन्तपर्यन्ताः, महात्मनां विपदोऽपि सुखोदर्का भवन्तीत्यन्वयः ।

---

सागर—हा वत्से जानकी ! इस समय तुम्हें राक्षस ले गया ( ऐसा कहकर मूर्च्छित होते हैं । )

गङ्गा—( समीप जाकर वस्त्राऽञ्चलसे हवा करती हुई ) हे रघुवंशतिलक ! आप धैर्य धारण करें, धैर्य धारण करें ।

सागर—कैसे यहां गङ्गा भी ( आ गई ) ।

गङ्गा—यमुना और सरयू भी ।

सागर—तब सबलोग मिलकर ही मुझे संभालो । यह मैं शोकके प्रवाहसे नष्ट हो गया हूं ।

गङ्गा—ज्यादा कातर नहीं होना चाहिए । क्योंकि—

दुरात्माओंकी संपत्तियाँ भी दुष्परिणामवाली होती हैं और महात्माओंकी विपत्तियाँ

भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ ४६ ॥

**सरयूः**—सखि, गोदावरि ! अपि जानासि नूपुरवृत्तान्तम् ।

**गोदावरी**—अथ किम् । कथितमेव वनदेवतया—'तमादाय कोऽपि कपिः ऋष्यमूकसम्मुखं गतः' इति ।

**सागरः**—रामभद्रस्य तु को वृत्तान्तः ?

**गोदावरी**—रामभद्रोऽपि सीताविरहविह्वलः सौमित्रिणा धार्यमाणस्तामेव दिशं प्रतस्थे ।

( नेपथ्ये )

सखि, कालिन्दि ! वर्धसे ।

**यमुना**—का पुनरिमानि सूचीशलाकाविद्धानि मम नखान्यलक्तकरसेन सिञ्चति ? ( का उण इमाइं सूईसलाआविद्धाइं मह णहाइं अलत्तअरसेण सिंचदि )

---

हि = यतः, दुरात्मनां = दुर्बुद्धीनां, रावणसदृशानामिति भावः, सम्पदोऽपि = सम्पत्तयोऽपि, प्रायः = बाहुल्येन, दुरन्तपर्यन्ताः = दुरन्तः ( दुष्परिणामः ) पर्यन्तः ( शेषसीमा ) यासां ताः, दुष्परिणामा इति भावः । एतद्वैपरीत्येन—महात्मनां = महानुभावानां, रामसदृशानामिति भावः । विपदोऽपि = विपत्तयोऽपि, सुखोदर्काः = सुखम् ( सुखजनकः ) उदर्कः (उत्तरफलम् ) यासां ताः, शुभपरिणामाः, भवन्ति = वर्तन्ते । दुर्जनानां साम्प्रतिका अभ्युदया अपि दुष्परिणामाः, सज्जनानां विपत्तयोऽपि शुभपरिणामा भवन्ति, अतः कातरतयाऽलमिति भावः । अनुष्टुब्वृत्तम् ॥४९॥

गोदावरीति । सौमित्रिणा = सुमित्राया अपत्यं पुमान्सौमित्रिस्तेन, लक्ष्मणे-

---

भी शुभपरिणामवाली होती हैं ॥ ४९ ॥

**सरयू**—सखि ! गोदावरि ! क्या मञ्जीरका वृत्तान्त जानती हो ?

**गोदावरी**—और क्या ! वनदेवताने कहा ही है—'उसे लेकर कोई बन्दर ऋष्यमूक पर्वतके सम्मुख चला गया ।'

**सागर**—रामभद्रका क्या वृत्तान्त ( खबर ) है ?

**गोदावरी**—सीताके वियोगसे विह्वल और लक्ष्मणसे संभाले गये रामभद्रने भी उसी दिशाकी ओर प्रस्थान किया ।

( नेपथ्यमें )

सखि यमुने ! तुम्हारी वृद्धि हो रही है ।

**यमुना**—यह कौन सूचीसे विद्ध मेरी नाखूनोंको लाक्षारससे सेचन कर रही है ?

( प्रविश्य )

तुङ्गभद्रा—जयतु जयतु नदीनाथः ।

सागरः—कथं पुनर्वर्द्धते कालिन्दी ।

तुङ्गभद्रा—भ्रातुः सुग्रीवस्य चक्रवर्त्तिपदलाभेन ।

यमुना—इदानीं चन्दनचण्डातपलिप्यमानपार्श्वयुगला वर्त्ते ( दाणिं चन्दणचण्डातपलिम्पन्तपासजुअला वट्टामि )

सागरः—कथं पुनर्वालिपालितापि कपिराजलक्ष्मीः सुग्रीवमनुसङ्क्रान्ता ? ।

तुङ्गभद्रा—कथमद्यापि वालिकथा ?

सागरः—कथमिव ?

तुङ्गभद्रा—ननु नूपुरप्रदानविश्वासितेन रामचन्द्रेणात्मानं सुग्रीवं च समर्पयता हनूमता तथा व्यवसितं यथा—

---

नेत्यर्थः। बाह्वादिभ्यश्चे'ति इञ्। प्रतस्थे=प्रस्थितः, 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् ।

यमुनेति । चन्दनचण्डातपलिप्यमानपार्श्वयुगला=चन्दनचण्डातपाभ्यां ( मलयजलेपरविप्रखरप्रकाशाभ्याम् ) लिप्यमानम् ( उपदिह्यमानम् ) पार्श्वयुगलम् ( पार्श्वयुग्मम् ) यस्याः सा तादृशी, वर्त्ते=अवतिष्ठे । भ्रातुः सुग्रीवस्य राज्यलाभो मलयजलेपसदृशः । सीताहरणवृत्तान्तश्च दुःसहसूर्यातपसन्निभ इति भावः ।

---

( प्रवेशकर )

तुङ्गभद्रा—नदीपति समुद्रकी जय हो जय हो ।

सागर—यमुनाकी किस प्रकारसे वृद्धि हो रही है ?

तुङ्गभद्रा—भाई सुग्रीवके चक्रवर्ति पदलाभसे ।

यमुना—इस समय मेरे एक एक पार्श्वमें चन्दन और प्रखर सूर्यकिरणसे लेपन हो रहा है ।

सागर—कैसे बालीसे पालित वानरराजलक्ष्मी सुग्रीवमें संक्रान्त हो गई ?

तुङ्गभद्रा—कैसे आप आज भी बालीकी बात कर रहे हैं ?

सागर—क्यों ?

तुङ्गभद्रा—नूपुर देनेसे विश्वासित रामचन्द्रने और अपनेको तथा सुग्रीवको भी समर्पित करनेवाले हनूमान्‌ने ऐसा उद्योग किया कि जैसे—

सहेलं हत्वैनं हरिणमिव हैमं रघुपतिः
कपीनां साम्राज्ये प्रणतमभिषिञ्चन् रविसुतम् ।
अपि ध्वंसात्सख्युर्नृपतिमपचक्रे पलभुजा-
मपि प्रीतं चक्रे निजकुलगरिष्ठं दिनकरम् ॥ ५० ॥

सागरः—ततः किं वृत्तम् ?

तुङ्गभद्रा—ततः सुग्रीवेणापि—

परिम्लानां मालामिव ललितसौरभ्यरहिता-
मपि स्थाने स्थाने विचिनुत वधूटीं दिनमणेः ।

---

सहेलमिति । रघुपतिः एनं हैमं हरिणमिव सहेलं हत्वा कपीनां साम्राज्ये प्रणतं रविसुतम् अभिषिञ्चन् सख्युर्ध्वंसात् पलभुजां नृपतिमपि अपचक्रे, निजकुलगरिष्ठं दिनकरमपि प्रीतं चक्र इत्यन्वयः ।

रघुपतिः = रामचन्द्रः, एनं = वालिनं, हैमं = सौवर्णं, हरिणमिव = मृगमिव, सुवर्णमृगरूपधारिणं मारीचमिवेति भावः । सहेलम् = अनायासं, हत्वा = व्यापाद्य, कपीनां = वानराणां-साम्राज्ये = चक्रवर्तित्वे, प्रणतं = विनयाऽवनतं, रविसुतं = सूर्यपुत्रं, सुग्रीवमित्यर्थः । अभिषिञ्चन् = राज्याऽभिषिक्तं कुर्वन् , एवं च सख्युः=मित्रस्य, रावणमित्रस्य वालिनः ध्वंसात् = विनाशात् , पलभुजां = मांसभक्षिणां, राक्षसानामित्यर्थः । नृपतिमपि = राजानमपि, रावणमपीत्यर्थः । अपचक्रे = अपकृतवान् , एवं च निजकुलगरिष्ठं = स्ववंशगुरुतमं, दिनकरमपि = सूर्यमपि, प्रीतं = प्रसन्नं, चक्रे = कृतवान् । अत्र 'सख्यु'रिति पदस्य 'मारीचस्ये'ति व्याख्यानं न सहृदयहृदयावर्जकं, मारीचस्य भृत्यस्थानीयत्वाद्वालिन एव रावणसखित्वेन लोकप्रसिद्धेश्च । शिखरिणीवृत्तम् ॥ ५० ॥

परिम्लानामिति । 'परिम्लानां मालामिव ललितसौरभ्यरहितामपि दिनमणेर्व-

---

रामचन्द्रने वालीको सौवर्णमृग ( मारीच ) के समान अनायास ही मारकर वानरोंके साम्राज्यमें विनीत सूर्यपुत्र ( सुग्रीव ) को अभिषिक्त कर रावणके मित्र (वाली) को मारनेसे राक्षसराज रावणका अपकार किया एवम् ( सुग्रीवको राज्य देनेसे ) अपने वंशके पूजनीय सूर्यको भी प्रसन्न किया ॥ ५० ॥

सागर—तब क्या हुआ ?

तुङ्गभद्रा—तब सुग्रीवसे भी—

'मुरझायी मालाके समान अभीष्ट-सौगन्ध्यसे रहित सूर्यवंशकी वधू सीताको स्थान

इति स्वेनैवोक्ताः कुमुदनलनीलाङ्गदमुखा
हनूमत्संयुक्ता दिशि दिशि नियुक्ताः कपिभटाः ॥ ५१ ॥

सागरः—इदानीमुज्जीवितोऽस्मि ।

गोदावरी—किं भवानेव ? नन्विदानीमखिलोऽपि जीवितो जनः ।

सागरः—एवमेतत्—सकलजनमनःसाधारणी हि रामचन्द्रमाधुरी ।
नन्विहैव पश्य—

नेदीयसी हि सरयूस्तपनोद्भवेयं
भागीरथीयमुदयः सागराम्ममापि ।

---

धूटीं स्थाने स्थाने विचिनुत' इति स्वेनैव उक्ता हनूमत्संयुक्ताः कुमुदनलनीलाङ्गद-मुखाः कपिभटा दिशि दिशि नियुक्ता इत्यन्वयः । परिम्लानां = परिम्लानां, मालामिव = स्रजमिव, ललितसौरभ्यरहितामपि = अभीष्टसौगन्ध्यहीनामपि, सीतापक्षे रामविरहादतिचेष्टितसौगन्ध्यरहितामपि, दिनमणेः = सूर्यस्य, वधूटीं = स्नुषां, सीतामित्यर्थः । स्थाने स्थाने = प्रतिस्थानं विचिनुत = अन्विष्यत, इति = इत्थं, स्वेनैव = आत्मनैव' सुग्रीवेणैवेत्यर्थः, उक्ताः = अभिहिताः, हनूमत्संयुक्ताः = हनूमत्सहिताः' कुमुदनलनीलाङ्गदमुखाः = कुमुदनलनीलाङ्गदप्रमुखाः, कपिभटाः = वानरयोधाः, दिशि दिशि = प्रतिदिशं, वीप्सायां द्विरुक्तिः । नियुक्ताः = आज्ञप्ताः । उपमाऽलङ्कारः । शिखरिणीवृत्तम् ॥ ५१ ॥

सागर इति । रामचन्द्रमाधुरी = रामचन्द्रमाधुर्यम् । सकलजनमनःसाधारणी = सकलजनानां ( समस्तलोकानाम् ) मनः साधारणी ( चित्तसामान्या ) । सकलजनमनोभ्यो रामचन्द्रमाधुरी रोचत इति भावः ।

नेदीयसीति । हि सरयूः नेदीयसी, इयं तपनोद्भवा, इयं भागीरथी, ममाऽपि

---

स्थानमें अन्वेषण करो, इस प्रकार आज्ञप्त हनूमान्से युक्त कुमुद, नल, नील और अङ्गद आदि ब्वाके वानरलोग दिशा दिशामें नियुक्त हुए हैं ॥ ५१ ॥

सागर—इस समय मैं जीवित हो गया हूं ।

गोदावरी—क्या आप ही जीवित हुए हैं ? इस समय सबके सब जीवित हो गये हैं ।

सागर—यह ठीक है, क्योंकि रामचन्द्रका माधुर्य सब लोगोंके मनमें रुचिकारक है । यहाँ ही देखो—

सरयू अतिशय निकट रहती है, ये सूर्यपुत्री यमुना, भागीरथी गङ्गा हैं, इसी तरह मेरा

इत्यन्वयाद्रघुकुले यदि पक्षपात-
स्तद्वत्सला किमिति वामपि चित्तवृत्तिः ॥ ५२ ॥

( ऊर्ध्वमवलोक्य, सविस्मयम् )

विलासैर्दम्भोलेर्दलितगरुतः सर्वगिरयः,
स चैको मैनाकः पयसि मम मग्नो निवसति ।

---

सगरादुद्भवः । इति अन्वयात् रघुकुले पक्षपातो यदि, वामपि चित्तवृत्तिः किमिति तद्वत्सलेत्यन्वयः ।

हि = यतः, सरयूः = सरयूनाम्नी नदी, नेदीयसी = अतिशयनिकटवर्तिनी, रामराजधान्ययोध्याया इति शेषः । अङ्गुल्यानिर्दिशति इयम् = एषा, तपनोद्भवा = सूर्योत्पन्ना, यमुनेति भावः । अङ्गुल्या निर्दिशति—इयम् = एषा, भागीरथी = गङ्गा, रामपूर्वजभगीरथदुहितेति भावः । एवं च ममापि = सागरस्याऽपि, सगरात् = रामपूर्वजसगरनरपालात्, उद्भवः = उत्पत्तिः, इति = इत्थम्, अन्वयात् = सम्बन्धात्, रघुकुले = रघुभूपवंशे, पक्षपातो यदि = आसक्तिविशेषश्चेत्तर्हि उचितमेव, परं वामपि = युवयोरपि, गोदावरीतुङ्गभद्रयोरपि, रघुकुले केनाऽपि प्रकारेण सम्बन्धरहितयोरपीति भावः । चित्तवृत्तिः = मनोवृत्तिः, किमिति = किमर्थं, तद्वत्सला = तस्मिन् ( रामे ) वत्सला ( स्निग्धा ) । रामराजधान्या अयोध्याया निकटस्थितत्वात्सरय्वाः, रामपूर्वजस्य सूर्यस्य दुहितृत्वाद्यमुनाया एवमेव रामपूर्वजभगीरथदुहितृत्वाद्गङ्गायाः रामपूर्वपुरुषसगरोद्भूतत्वान्मम सागरस्याऽपि रामे वात्सल्यं युज्यते परं केनाऽपि प्रकारेण रामसम्बन्धरहितयोरपि गोदावरीतुङ्गभद्रयो रामे स्नेहप्रवृत्तिदर्शनाद्रामचन्द्रमाधुरी सकलजनमनःसाधारणीति प्रतीयत इति भावः । वसन्ततिलकं वृत्तम् ॥ ५२ ॥

विलासैरिति । सर्वगिरयो दम्भोलेर्विलासैः दलितगरुतः । स चैको मैनाको मम पयसि मग्नो निवसति । अये ! स्फुरदमितगव्यूतिमहिमा लघुतरगतिः हिमाद्रिः विन्ध्यो वा कोऽयं शैलः मां लङ्घयतीत्यन्वयः ।

---

भी सगरसे उद्गम हुआ है, इस प्रकार सम्बन्धके कारण रघुवंशमें पक्षपात है तो तुम दोनों ( गोदावरी और तुङ्गभद्रा ) की भी मनोवृत्ति क्यों रामचन्द्रमें स्नेहमयी हो रही है ? ॥ ५२ ॥

( ऊपर देखकर, आश्चर्यपूर्वक )

सब पर्वत वज्रके विलासोंसे पक्षहीन हो गये हैं । वह एक मैनाक पर्वत मेरे जलमें

अये कोऽयं शैलः स्फुरदमितगव्यूतिमहिमा
हिमाद्रिर्विन्ध्यो वा लघुतरगतिर्लङ्घयति माम् ॥ ५२ ॥

तदागच्छत, निरूपयामस्तावत्कोऽयमिति ।

( इति निष्क्रान्ताः सर्वे )

इति पञ्चमोऽङ्कः ।

---

सर्वगिरयः = सकलपर्वताः, दम्भोलेः = वज्रस्य, 'शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयोः ।' इत्यमरः । विलासैः = आचरणैः, छेदनरूपैरिति भावः । दलितगरुतः = छिन्नपक्षाः, वर्तन्त इति शेषः । स च = प्रसिद्धः, मैनाकः = मैनाकनामधेयो हिमालयतनूजः पर्वतः, मम = सागरस्य, पयसि = जले, मग्नः = ब्रुडितः सन् , निवसति = निवासं करोति । पक्षाभ्यां चलतः पर्वतानिन्द्रः स्ववज्रेण छिन्नपक्षांश्चकार, तत्रैकोऽवशिष्टो मैनाको मज्जले निमग्नस्तिष्ठति, अतस्तस्याऽपि काऽपि संभावना नाऽस्तीति भावः । अये = आश्चर्यद्योतकमव्ययमिदम् । स्फुरदमितगव्यूतिमहिमा = स्फुरन् ( प्रकाशमानः ) अमितः ( अपरिमितः ) गव्यूतिमहिमा ( क्रोशद्वयमहत्त्वम् ) यस्य सः, क्रोशद्वयविस्तारोपेत इति भावः । 'गव्यूतिः = स्त्री क्रोशयुगम्' इत्यमरः । एवं च—लघुतरगतिः = क्षिप्रतरगमनः । हिमाद्रिः = हिमाचलः, विन्ध्यो वा = विन्ध्याचलोऽथ वा, कः = कतरः, अयं = सन्निकृष्टस्थः, शैलः = पर्वतः, मां = सागरं, लङ्घयति = अतिक्रामति । आत्मानं लङ्घयन्तं हनुमन्तं प्रेक्ष्य सागरस्याऽयं सन्देहः । अत्र सन्देहाऽलङ्कारस्तत्राऽपि संशय एव पर्यवसानाच्छुद्धसन्देहः । शिखरिणीवृत्तम् ॥ ५२ ॥

इति श्रीशेषराजशर्मप्रणीतायां चन्द्रकलाऽभिख्यायां प्रसन्नराघवव्याख्यायां पञ्चमोऽङ्कः ।

श्रीं तत्सच्छ्रीमद्रामचन्द्रचरणाऽर्पणमस्तु ॥

---

मग्न होकर निवास करता है । अरे ! दो कोसोंके विस्तारसे युक्त और अतिशीघ्रगति वाला हिमालय वा विन्ध्य यह कौनसा पर्वत मुझे लाँघ रहा है ? ॥ ५२ ॥

इसलिए आओ, जान लें कि यह कौन है ?

( सब बाहर निकलते हैं । )

इति पञ्चम अङ्कः ।

# अथ षष्ठोऽङ्कः

( ततः प्रविशतो रामलक्ष्मणौ )

रामः—सौमित्रे ! ननु सेव्यतां तरुतलं, चण्डांशुरुज्जृम्भते,
लक्ष्मणः—चण्डांशोर्निशि का कथा रघुपते ! चन्द्रोऽयमुन्मीलति ।
रामः—वत्सैतद्विदितं कथं नु भवता ।
लक्ष्मणः—धत्ते कुरङ्गं यतः,

---

सौमित्र इति । ननु सौमित्रे ! चण्डांऽशुरुज्जृम्भते । तरुतलं सेव्यतामिति प्रथमचरणाऽन्वयः ।

ननु सौमित्रे = हे लक्ष्मण !, चण्डांऽशुः = उष्णरश्मिः, सूर्य इत्यर्थः । उज्जृम्भते= संवर्द्धते, प्रज्वलतीति भावः । अतः—तरुतलं = वृक्षाऽधोभागः, 'अधः स्वरूपयोरस्त्री तलम्' इत्यमरः । सेव्यताम् = आश्रीयताम् । जानकीविरहाद्धिमांऽशुमुष्णांऽशुं मत्वा तापाऽपनोदनाऽर्थं श्रीरामस्य लक्ष्मणं प्रत्युक्तिरियम् ।

चण्डांशोरिति । हे रघुपते ! निशि चण्डांऽशोः का कथा ? अयं चन्द्र उन्मीलतीति द्वितीयचरणाऽन्वयः ।

हे रघुपते = हे राघवधुरन्धर, निशि = रात्रौ, चण्डांऽशोः = सूर्यस्य, का कथा = का वार्ता, अयं = पुरोदृश्यमानः, चन्द्रः = हिमांऽशुः, उन्मीलति = उदेति । लक्ष्मणस्य स्वाग्रजं श्रीरामचन्द्रं प्रत्युक्तिरियम् ।

रामः पुनः पृच्छति—वत्सैतदिति । वत्स ! भवता एतत् कथं विदितं नु इत्यन्वयः ।

वत्स = हे वात्सल्यभाजन लक्ष्मण, भवता = त्वया, एतत् = अयं चन्द्र उदेति न सूर्य इत्येतादृशं तत्त्वं, कथं = केन प्रकारेण, विदितं = ज्ञातं, न्विति वितर्के । रामस्य पुनरप्ययमनुयोगः ।

लक्ष्मण आह—यतः कुरङ्गं धत्ते । यतः = यस्मात्कारणात् , कुरङ्गं = मृगं = धत्ते = धारयति, अयमिति शेषः । मृगाङ्कत्वाच्चन्द्रोऽयं न सूर्य इति भावः ।

---

( तब राम और लक्ष्मण प्रवेश करते हैं । )

राम—हे लक्ष्मण ! सूर्य प्रज्वलित हो रहे, वृक्षके नीचे बैठो ।
लक्ष्मण—हे रघुपते ! रातमें सूर्यकी क्या बात है ? ये चन्द्र उग रहे हैं ।
राम—वत्स ! यह तुमने कैसे जाना ?
लक्ष्मण—क्योंकि ये मृगको धारण कर रहे हैं ।

रामः—

काऽसि प्रेयसि ! हा कुरङ्गनयने ! चन्द्रानने ! जानकि ॥ १ ॥

( पुनर्विलोक्य ) हन्त ! सन्तापेन प्रतारितोऽस्मि । कथमयं गगनतलाधिरोही रोहिणीहृदयनन्दनश्चन्द्रः । ( चन्द्रं प्रति )

रजनिकर ! करास्ते बान्धवाः कैरवाणां

सकलभुवनचेष्टाजागरूका जयन्ति ।

---

कुरङ्गपदश्रवणेन एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायेन कुरङ्गनयनायाः सीतायाः स्मरन् रामो विलपति काऽसीति । प्रेयसि कुरङ्गनयने चन्द्रानने हे जानकि ! क असि ? हा ! इति चतुर्थचरणाऽन्वयः ।

प्रेयसि = प्रियतमे, कुरङ्गनयने = मृगलोचने, हे जानकि = हे सीते !, क = कुत्र, असि = वर्तसे । हा = जानकीमिति शेषः, मया वियुक्तायाः सीतायाः शोच्यत इति भावः ।

अत्र श्लोके भ्रान्तिमदलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

पुनरिति । प्रतारितः = वञ्चितः । चन्द्रकिरणस्य मदनोद्दीपकत्वेन सन्तापकत्वात्सूर्यत्वेन चन्द्रं सम्भाव्य प्रतारितोऽस्मीति भावः । रोहिणीहृदयनन्दनः = रोहिण्याः ( दक्षदुहितुश्चन्द्रप्रियतमायाः ) हृदयनन्दनः = चित्तानन्दजनकः ।

रामश्चन्द्रमुपालभते—रजनिकरेति । हे रजनिकर ! कैरवाणां बान्धवाः सकलभुवनचेष्टाजागरूकास्ते करा जयन्ति । तत् सा मे जानकी कुत्र ? ( इति ) कथं न कथयसि ? त्वं मृगसहायोऽसि, किं नक्षत्रोऽसि ? नु इत्यन्वयः ।

हे रजनिकर = हे चन्द्र !, कैरवाणां = कुमुदानां, बान्धवाः = बन्धवः, विकासकत्वाच्चन्द्रकराणां कैरवबान्धवत्वं सङ्गच्छते । एवं च सकलभुवनचेष्टाजागरूकाः = सकलभुवनानां ( समस्तलोकानाम् ) चेष्टासु ( कर्मसु ) जागरूकाः = जागरणशीलाः, 'जागरूको जागरिता' इत्यमरः । समस्तलोककर्मदर्शकत्वेनाऽवस्थिता इति भावः । तादृशास्ते = तव, कराः = किरणाः, 'बलिहस्तांऽशवः कराः' इत्यमरः । जयन्ति = सर्वोत्कर्षेण वर्तन्त इति भावः, अत्र जि धातुरकर्मकः । तत् = तस्मात्कार-

---

राम—प्रियतमे ! मृगलोचने ! चन्द्रमुखि ! हे सीते ! तुम कहाँ हो ? ॥ १ ॥

( फिर देखकर ) हाय ! सन्तापके कारण मैं वञ्चित हुआ हूँ । किसप्रकार ये तो आकाशतलमें अधिरोहण करने वाले और रोहिणीके चित्तको आनन्दित करनेवाले चन्द्र हैं ।

( चन्द्रसे )

हे चन्द्र ! कुमुदोंके बन्धु और समस्त लोगोंकी चेष्टाओंकी साक्षिरूप तुम्हारी किरणें

कथयसि न कथं तत्कुत्र सा जानकी मे
त्वमसि मृगसहायः, किन्तु नक्तञ्चरोऽसि ? ॥ २ ॥

लक्ष्मणः—( स्वगतम् ) कथमयमभिषङ्गतरङ्गस्तरलीकरोत्यात्मानम् ? तदन्यतो नयामि । ( प्रकाशम् ) आर्य ! अयमितो विलोक्यतां चपलचञ्चुपुटाचान्तशीतकरशीकरश्चकोरः ।

रामः—( चकोरं प्रति )

तन्मे विदेहतनयावदनं निवेद्य
भ्रातश्चकोर ! कुरु मां चरितार्थवृत्तिम् ।

---

णात् , चन्द्रकराणां सकलभुवनचेष्टा जागरूकत्वादिति भावः । सा = लोकप्रसिद्धा, मे = मम रामस्य, पत्नीति शेषः । जानकी = सीता, कुत्र = क्व, वर्तत इति शेषः । ( इति = इदम् ), कथं = केन प्रकारेण, न कथयसि = न ब्रूषे, त्वं = रजनिकर, मृगसहायोऽसि = मृगः ( कुरङ्गः ) सहायः ( अनुचरः ) यस्य सः, तादृशोऽसि = वर्तसे, कोमलहृदय इति भावः । चन्द्रमभाषमाणमुपलभ्य तत्र नक्तञ्चरत्वमुत्प्रेक्षते—किं न्विति । किं नक्तञ्चरोऽसि = किं राक्षसोऽसि, अत एव विलपत्यपि मयि क्रूरस्य भावत्वात्त्वदीयाऽनुकम्पाऽभाव इति भावः । न्विति वितर्के । मालिनीवृत्तम् ॥ २ ॥

लक्ष्मण इति । अभिषङ्गतरङ्गः = पराभवपरम्परा, आत्मानम् = आर्यस्वभावम् । 'आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म च ।' इत्यमरः । चपलचञ्चुपुटाचान्तशीतकरशीकरः = चपलं ( चञ्चलम् ) यत् चञ्चुपुटं ( त्रोटिपुटम् ) तेनाऽऽचान्तः ( पीतः ) शीतकरस्य ( हिमांशोः, चन्द्रस्येत्यर्थः ) शीकरः ( अमृतबिन्दुकणः ) येन सः ।

तन्म इति । हे भ्रातश्चकोर ! कान्तासखेन भवता शशिनं विहाय यदीयकमनीयकपोलकान्तिः पीता । तत् मे विदेहतनयावदनं निवेद्य मां चरिताऽर्थवृत्तिं कुर्वित्यन्वयः ।

---

रच रही है । इसलिए मेरी सीता कहाँ है ? यह क्यों नहीं कहते हो ? तुम्हारा सहायक मृग है । क्या तुम राक्षस हो ? ॥ २ ॥

लक्ष्मण—( मन ही मन ) किस प्रकार यह पराभवकी परम्परा आर्यके स्वभावको चञ्चल बना रही है ! इनको दूसरे विषयमें ले जाता हूँ । ( सुनाकर ) आर्य ! चञ्चल चञ्चुपुटसे चन्द्रकिरणको पीनेवाले इस चकोरको इधर देखिए ।

राम—( चकोरके प्रति ) हे भाई चकोर ! अपनी प्रिया ( चकोरी ) के साथ तुमने

पीता यदीयकमनीयकपोलकान्तिः
कान्तासखेन भवता शशिनं विहाय ॥ २ ॥

लक्ष्मणः—आर्य ! इयमितो विलोक्यतां शरत्कृशा निशाकरकिरणानुकारितरङ्गा तरङ्गिणी ।

रामः—( विलोक्य )

कल्लोलिनि ! त्वमिव साऽपि कुरङ्गनेत्रा
नूनं किमप्यनुदिनं कृशिमानमेति ।

---

हे भ्रातः = हे बन्धो !, चकोर = हे चकोरपक्षिन् , कान्तासखेन = प्रियासहचरेण, चकोरीसहितेनेति भावः । 'राजाऽहःसखिभ्यष्टच्' इति समासान्तष्टच् । तादृशेन भवता = त्वया, शशिनं = चन्द्रमसं, विहाय = त्यक्त्वा, चन्द्रिकाऽऽचमनरूपमपि स्वजातिप्रसिद्धं कर्मोपेक्ष्येति भावः । यदीयकमनीयकपोलकान्तिः = यदीयः ( यत्सम्बन्धी, सीताया इति भावः ) कमनीयः ( मनोहरः ) यः कपोलः ( गण्डप्रदेशः ) तस्य कान्तिः ( छविः ) । पीता = आस्वादिता, तत् = तस्मात्कारणात् , मे = मह्यं, क्रियाग्रहणाच्चतुर्थी । विदेहतनयावदनं = सीतामुखं, निवेद्य = ज्ञापयित्वा, मां = जानकीवल्लभं रामं चरितार्थवृत्तिं = चरितार्था ( कृतार्था ) वृत्तिः ( जीवनम् ) यस्य सः, तादृशम् । कुरु = विधेहि । हे चकोर ! चन्द्रिका, पायीतिनामाऽन्तराऽनुरूपमपि चन्द्रिकाचमनरूपं कर्म परित्यज्य यत्त्वया सहचरीसहितेन रुचिरा सीताकपोलच्छविः पीता तन्मे कुत्रास्ति सीतेति वार्तां निवेद्याऽनुगृहाणेति भावः । वसन्ततिलका वृत्तम् ॥ २ ॥

लक्ष्मण इति । शरत्कृशा=शरदा ( तदाख्यर्तुना ) कृशा ( अल्पजलेति भावः ) । निशाकरकिरणाऽनुकारितरङ्गा = निशाकरस्य ( चन्द्रस्य ) किरणान् ( मयूखान् ) अनुकुर्वन्ति = विडम्बयन्तीति तच्छीलाः, चन्द्रकिरणसदृशा इति भावः । तादृशास्तरङ्गाः ( ऊर्मयः ) यस्याः सा । तादृशी तरङ्गिणी = नदी, 'अथ नदी सरित् । तरङ्गिणी शैवलिनी तटिनी ह्रादिनी धुनी ।' इत्यमरः ।

कल्लोलिनीति । हे कल्लोलिनि ! त्वमिव कुरङ्गनेत्रा साऽपि अनुदिनं किमपि

---

चन्द्रमाको छोड़कर जिस ( सीता ) की सुन्दर कपोलच्छविका पान किया है । इसलिए मुझे सीताकी मुखच्छविका निवेदन कर मेरे जीवनको कृतार्थ बनाओ ॥ २ ॥

लक्ष्मण—शरद् ऋतुके कारण मन्दप्रवाह वाली चन्द्रकिरणोंके अनुकरण करनेवाली तरङ्गोंसे युक्त इस नदीको इधर देखिए ।

राम—( देखकर )

हे नदि ! तुम्हारी तरह मृगलोचना वह सीता भी प्रतिदिन अनिर्वाच्य कृशताको

एतावदस्ति भवतीह निसर्गशीता
सीता पुनर्वहति कामपि तापमुद्राम् ॥ ४ ॥

लक्ष्मणः—इतो विलोक्यतामनिद्रनीलनलिनीवनविलीनोऽयमलिनी-नाथः।

रामः—( विलोक्य ) अये कोऽयं विहङ्गः?

उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवला-

---

कृशिमानम् एति नूनम्। इह एतावदस्ति। भवती निसर्गशीता, पुनः सीता कामपि तापमुद्रां वहतीत्यन्वयः। हे कल्लोलिनि = हे नदि!, त्वमिव = भवतीव, कुरङ्गनेत्रा = मृगलोचना, 'तरङ्गनेत्रे'ति पाठान्तरे कल्लोलिनीपक्षे तरङ्गा एव ( ऊर्मय एव ) नेत्राणि यस्याः सा, सीतापक्षे—तरङ्गसदृशे ( चञ्चले इति भावः ) नेत्रे यस्याः सेति विग्रहः। साऽपि = सीताऽपि, अनुदिनं = प्रतिदिनं, किमपि = अनिर्वाच्यं, कृशिमानं = कृशत्वं, कृशस्य भावः कृशिमा, तं 'पृथ्वादिभ्य इमनिज्वे'तीमनिच्प्रत्ययः। 'र ऋतो हलादेर्लघोः' इति ऋतो रः। एति = प्राप्नोति। हे नदि! शरदागमनेन त्वमिव मद्वियोगेन सीताऽप्यनुदिनमनिर्वचनीयं कार्श्यमुपैतीति भावः। नूनमित्युत्प्रेक्षायाम्। इह = अत्र, युवयोः कार्श्यविषये, एतावत् = एतत्परिमाणम्, अन्तरमिति = शेषः, अस्तीति शेषः। 'अन्तरमवकाशाऽवधिपरिधानाऽन्तर्धिभेदतादर्थ्ये।' इत्यमरः। तदेवाऽन्तरमुपपादयति—भवतीति। भवती = नदी, निसर्गशीता = स्वभावशीतला, पुनः = परं, सीता = जानकी, कामपि = अनिर्वाच्यां, तापमुद्रां = सन्तापचिह्नं, मद्वियोगजनितमिति भावः। वहति = धारयति। शरदि मद्वियोगे च प्रतिदिनं कार्श्यं भजमानयोर्नदीसीतयोरेतदन्तरमस्ति यदेका स्वभावशीतला, द्वितीया मद्वितीय तु वियोगाऽनलसन्तप्तेति भावः। अत्रोपमोत्प्रेक्षयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः। वसन्ततिलकावृत्तम् ॥ ४ ॥

लक्ष्मण इति। अलिनीनाथः = भ्रमरीपतिः, भ्रमर इत्यर्थः। अनिद्रनीलनलिनीवनविलीनः = अनिद्रं ( प्रफुल्लम् ) नीलं ( नीलवर्णम् ) यन्नलिनीवनं ( कमलिनीसमूहः ), तस्मिन्, विलीनः ( अन्तर्हितः )।

रामो भ्रमरं पृच्छति—उन्मीलदिति। उन्मीलन्नयनाऽन्तकान्तिलहरीनिष्पी-

---

निश्चय ही प्राप्त कर रही है। तुम दोनोंमें इतना अन्तर ( फर्क ) है कि तुम स्वभावतः शीतल हो परन्तु सीता ( मेरे विरहमें ) अनिर्वचनीय सन्तापचिह्न धारण कर रही है ॥४॥

लक्ष्मण—विकसित नीलकमलोंके वनमें छिपे हुए इस भ्रमरको इधर देखिए।

राम—( देखकर ) अरे! यह कौनसा पक्षी है?

विकसित कटाक्षशोभासे फीके अतः सौरभमात्रसे अनुमेय सीताके कर्णस्थित जिन

आमोदादवधारणीयवपुषोः कान्तासखेन क्षणम् ।
यत्कर्णोत्पलयोः स्थितेन भवता किञ्चित्समुद्गुञ्जितं
भ्रातस्तिष्ठति कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ? ॥ ५ ॥

लक्ष्मणः—( सातङ्कम् ) अपीमं न विलोकयेदार्यः ।

रामः—( विलोक्य ) अये कोऽयं विहङ्गः ।

योऽयं बहिः कलितकुङ्कुमरेणुराग-
मन्तस्तु सम्भृतदयं हृदयं दधानः ।

---

तयोः आमोदात् अवधारणीयवपुषोः यत्कर्णोत्पलयोः स्थितेन कान्तासखेन भवता यत् क्षणं किञ्चित् समुद्गुञ्जितं, हे भ्रातः ! कान्तं मे प्रियाया मुखं कुत्र तिष्ठति तत् कथयेत्यन्वयः । उन्मीलन्नयनाऽन्तकान्तिलहरीनिष्पीतयोः = उन्मीलन्ती ( विकसन्ती ) या नयनाऽन्तकान्तिलहरी ( कटाक्षशोभाकल्लोलः ) तया निष्पीतयोः ( अपहृतलक्ष्मीकयोः ) । एवं च आमोदात् = सौरभात्, अवधारणीयवपुषोः = ( निश्चेयशरीरयोः ), यत्कर्णोत्पलयोः = यस्य ( सीतामुखस्य ) कर्णोत्पलयोः ( श्रोत्रभूषणनीलकमलयोः ) स्थितेन = विद्यमानेन, कान्तासखेन = प्रियासहचरेण, भ्रमरीयुक्तेनेति भावः । भवता = त्वया, यत् , क्षणं = कञ्चित्कालं यावत् , किञ्चित्= अनिर्वाच्यं, समुद्गुञ्जितं = शब्दायितं, हे भ्रातः = बन्धो !, कान्तं = सुन्दरं, मे = मम, प्रियायाः = वल्लभायाः, सीताया इत्यर्थः । मुखं = वदनं, कुत्र = कस्मिन् स्थाने, तिष्ठति = वर्तते, तत् = कान्तामुखं, कथय = वद । हे बन्धो ! मत्प्रियायाः सीतायाः कर्णोत्पलस्थितेन त्वया पुरा गुञ्जितमतः साम्प्रतं तस्याः प्रवृत्तिं ब्रूहीति भावः । अत्र व्यतिरेकाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

लक्ष्मण इति । साऽऽतङ्कं = तापशङ्कासहितं यथा तथा । इमं = चक्रवाकं, कान्तावियुक्तमिति शेषः । न विलोकयेदपि = न पश्येत् किम् । प्रियावियुक्तचक्रवाकाऽवलोकनेनार्यस्य सीताविरहव्यथा संवर्धिता स्यादिति लक्ष्मणस्याशङ्का ।

योऽयमिति । बहिः कलितकुङ्कुमरेणुरागम् अन्तस्तु संभृतदयं हृदयं दधानो योऽयं पारेतरङ्गिणि मुहुः करुणं रटन्तीं सहचरीम् आलोकते न तु सन्निधत्त इत्यन्वयः ।

---

कर्णोत्पलोंमें पत्नीके साथ रहकर तुमने अल्प समय तक कुछ शब्द किया था । हे भाई ! प्रियाका वह सुन्दर मुख कहाँ है ? बतलाओ ॥ ५ ॥

लक्ष्मण—( आतङ्कके साथ ) आर्य कहीं इसे भी देख न लें ।

राम—( देखकर ) अरे ! यह कौन पक्षी है ?

बाहर केशरपरागके रागको और भीतर दयासे सम्पन्न हृदयको धारण करता हुआ

पारेतरङ्गिणि मुहुः करुणं रटन्ती-
मालोकते सहचरीं न तु सन्निधत्ते ॥ ६ ॥

( विमृश्य ) नूनमयं वल्लभाविरहविदारितहृदयो वराकश्चक्रवाकः ।

लक्ष्मणः—अहो ! प्रमादः !

रामः—नूनमयमेकः समदुःखतया समानशीलो मे, अथवा कुतोऽस्य मम च समानशीलता ।

अयमुदयति चन्द्रे विप्रयोगं प्रियायाः
श्रयति, तपति सूर्ये सङ्गमङ्गीकरोति ।

---

बहिः कलितकुङ्कुमरेणुरागं = बहिः ( बहिर्भागे ) कलितः ( धृतः ) कुङ्कुमरेणुरागः ( काश्मीरजन्म-धूलि-लौहित्यम् ) येन तत् । अन्तस्तु = अभ्यन्तरे, तु संभृतदयं = संभृता ( सञ्चिता ) दया ( करुणा ) यस्मिंस्तत् , तादृशं, हृदयं=चित्तं, दधानः = धारयन् । यः, अयं = निकटस्थः, चक्रवाक इति भावः । पारेतरङ्गिणि = नदीपारे, तरङ्गिण्याः पारे इति विग्रहे 'पारे मध्ये षष्ठ्या वे'त्यव्ययीभावः पारशब्दस्यैदन्तत्वस्य निपातश्च । पक्षान्तरे—तरङ्गिणीपारे, महाविभाषया वाक्यमपि—तरङ्गिण्याः पार इति । मुहुः = वारं वारं, करुणं=करुणापूर्णं यथा तथा, रटन्तीं=शब्दायमानां, 'रट परिभाषण' इति धातोर्लटः शतृप्रत्ययः । तादृशीं सहचरीं = सखीं, चक्रवाकीमित्यर्थः । आलोकते = पश्यति । न तु सन्निधत्ते = सन्निधिं ( सामीप्यम् ) तु न भजति, रात्रेरिति शेषः । वसन्ततिलका वृत्तम् ॥ ६ ॥

विमृश्येति । वल्लभाविरहविदारितहृदयः=वल्लभायाः ( प्रियायाः ) विरहेण ( वियोगेन ) विदारितं ( विशीर्णम् ) हृदयं ( वक्षःस्थलम् ) यस्य सः । वराकः= दयापात्रम् ।

राम इति । समानशीलः=तुल्यस्वभावः, उभयोरपि कान्ताविप्रयुक्तत्वादिति भावः ।

चक्रवाकादात्मनो वैषम्यं प्रतिपादयति—अयमिति । अयं चन्द्र उदयति प्रिया-

---

जो यह पक्षी नदीके पार बारंबार करुणशब्द करनेवाली सहचरीको देखता है सही परन्तु समीप नहीं जाता है ॥ ६ ॥

( विचार कर ) निश्चय ही यह प्रियाके वियोगसे विदारित हृदयवाला बेचारा चक्रवाक है ।

लक्ष्मण—अहो ! आर्यका यह प्रमाद है ।

राम—निश्चय ही यह एक समदुःख होनेसे मेरे जैसे स्वभाववाला है, अथवा इसकी और मेरी कैसी तुल्यशीलता है ?

यह ( चक्रवाक ) चन्द्रमाके उगनेपर प्रियासे बिछुड़ता है और सूर्यके ताप करनेपर

मम तु जनकपुत्री-विप्रयुक्तस्य यातं
शतमधिकमपीदं चन्द्रसूर्योदयानाम् ॥ ७ ॥

लक्ष्मणः—आर्य ! इह तावन्मुकुलितकमलिनीपरिसरानुसारिणि कलहंसे दीयतां दृष्टिः ।

रामः—( विलोक्य )

निजनखशिखालेखालीढस्फुरत्कमलस्तनीं
निरतमधुपश्रेणीगीतां चलन् कलहंसकः ।

---

या विप्रयोगं श्रयति, सूर्ये तपति प्रियायाः सङ्गम् अङ्गीकरोति । तु जनकपुत्रीविप्रयुक्तस्य मम चन्द्रसूर्योदयानाम् इदं शतम् अधिकमपि यातमित्यन्वयः ।

अयं = निकटवर्ती, चक्रवाक इत्यर्थः । चन्द्रे = हिमांऽशौ, उदयति = उदीयमाने सति, प्रियायाः = वल्लभायाः, चक्रवाक्या इत्यर्थः । विप्रयोगं = विरहं, श्रयति = आश्रयति, सूर्ये = भास्करे, तपति = तापं कुर्वति सति उदीयमाने सतीति भावः, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । प्रियायाः = वल्लभायाः, चक्रवाक्या इति भावः । सङ्गं = सङ्गमम् , अङ्गीकरोति = अभ्युपगच्छति । तु = परन्तु, जनकपुत्रीविप्रयुक्तस्य = जानकीविरहितस्य, मम = रामस्य, चन्द्रसूर्योदयानां = चन्द्रसूर्योदयकालोपलक्षितानाम् , अहोरात्राणामिति भावः । इदम् = अनुभूतचरं, शतम् अधिकमपि = अतिरिक्तमपि, यातं = व्यतीतम् । चक्रवाकोऽयं रजन्यामेव प्रियाविरहदुःखमनुभूय पुनर्दिवा प्रियासङ्गमेन परममानन्दं लभते परं प्रियावियुक्तस्य तु ममाऽहोरात्राणां शतमप्यधिकमपगतमतः कथं मे चक्रवाकेण समानशीलतेति भावः । मालिनी वृत्तम् ॥ ७ ॥

लक्ष्मण इति । मुकुलितकमलिनीपरिसराऽनुसारिणि = मुकुलिता ( निमीलिता, सूर्यास्तमनेनेति शेषः ) या कमलिनी ( पद्मिनी ) तस्याः परिसरं ( पर्यन्तभुवं, समीपप्रदेशमिति भावः ) अनुसरति ( अनुगच्छति ) तच्छीलस्तस्मिन् ।

निजेति । निजनखशिखालेखालीढस्फुरत्कमलस्तनीं निरतमधुपश्रेणीगीताम्

---

प्रियाके सङ्गमको पा लेता है। परन्तु सीतासे बिछुड़े हुए मेरे सैकड़ों अहोरात्र व्यतीत हो चुके हैं ॥ ७ ॥

लक्ष्मण—आर्य ! निमीलित कमलिनीके समीप जानेवाले इस कलहंसपर दृष्टि दीजिए ।

राम—( देखकर )

हाय ! अपने नखोंके अग्रभागोंसे क्षत और छिदे हुए कमलरूप कुचसे युक्त, सम्बद्ध

अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्च्छिता-
महह ! नलिनीं क्लान्तक्लान्तां मुहुर्मुहुरीक्षते ॥८॥

( विमृश्य ) वरमेवंविधानामपि सहचरीजनानुकम्पया कोमलं चेतो न तु निसर्गकठिनस्य रामस्य ।

लक्ष्मणः—( स्वगतम् ) कथमिदानीमप्यस्य चेतसि जानकीयमिन्द्रजालमुन्मीलति ।

---

अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्च्छितां क्लान्तक्लान्तां नलिनीं चलन् कलहंसकः मुहुर्मुहुः ईक्षते अहह ! इत्यन्वयः ।

निजनखशिखालेखाऽऽलीढस्फुरत्कमलस्तनीं = निजनखानाम् ( आत्मकररुहाणाम् ) शिखालेखाभिः ( अग्रभागश्रेणीभिः ) आलीढं ( क्षतम् ) स्फुरत् ( संचलत् ) यत्कमलं ( पद्मम् ) तदेवस्तनः ( कुचः ) यस्याः सा, ताम् । निरतमधुपश्रेणीगीतां = निरतानां (सम्बद्धानाम्) 'विरलाना'मिति पाठान्तरे अघनानामित्यर्थः । मधुपानां ( भ्रमराणाम् ) या श्रेणी ( पङ्क्तिः ) तया गीताम् ( गानकर्मीकृताम् ), अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्च्छिताम् = अकरुणः ( निर्दयः ) यः शशी ( चन्द्रः ) तस्य प्रेङ्खन् ( प्रचलन् ) यः पादः ( किरणः, नायकान्तरपक्षे—चरणः ) तेन प्रहारः (ताडनम्), तेन विमूर्च्छितां संजातमोहाम् क्लान्तक्लान्ताम् (अतिशयग्लानियुक्ताम्) नलिनीं = कमलिनीं, चलन् = गच्छन् कलहंसकः = राजहंसः, 'कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे ।' इति मेदिनी । मुहुर्मुहुः = वारं वारम् , ईक्षते = पश्यति । अहहेति खेदद्योतकमव्ययम् । अत्र हंसस्य नलिन्यां प्रस्तुते गमनपूर्वकदर्शनव्यापारे कस्यचिन्नायकस्य नखक्षतादिनोपभुक्तायां कामुकश्रेणिस्तुतायां निर्दयजनान्तरेण चरणप्रहारमूर्च्छितायामन्यस्यां नायिकायां उपगमनपूर्वकविलोकनस्य साहश्यवर्शनात्समासोक्तिरलङ्कारः । हरिणी वृत्तम् ॥ ८ ॥

विमृश्येति । एवं विधानामपि=एतादृशानामपि, पक्षपक्ष्यादीनामपीति भावः । निसर्गकठिनस्य = स्वभावकर्कशस्य ।

लक्ष्मण इति । जानकीयं = जानकीसम्बन्धि, छप्रत्ययः । इन्द्रजालं=मायाकर्म ।

---

भ्रमर पङ्क्तिसे स्तुत, निर्दय चन्द्रके पादों ( किरणों ) के प्रहारसे मूर्च्छित और अतिशय ग्लानियुक्त कमलिनीको पास जाता हुआ कलहंसक बारंबार देख रहा है ॥ ८ ॥

( विचार कर ) चकवाक जैसे पक्षियोंका भी सहचरी पर दयासे चित्त कोमल है पर स्वभाव कठोर रामका नहीं ।

लक्ष्मण—( मन ही मन ) कैसे अभीतक इनके चित्तमें सीताविषयक इन्द्रजाल प्रकट हो रहा है ।

( नेपथ्ये )

सखे, रत्नशेखर ! चिराद्दृश्यसे ।

**लक्ष्मणः**—( आकर्ण्य ) किमेतत् ?

( पुनर्नेपथ्ये )

वयस्य चम्पकापीड ! एवमेतत्, मया हीयन्तं कालमखिलमायानिधेर्मयनाम्नो दानवस्य पुत्रीं निजसहोदरीं मन्दोदरीमनुवर्तितुं लङ्कायां कृतालयाचित्ररूपनाम्नो दानवात्सकलामिन्द्रजालकलामाददानेन स्थितम् ?

लक्ष्मणः—नूनं कृतकर्णकौतुकामोदोऽयं कयोरपि पथिकयोः संवादः ।

( पुनर्नेपथ्ये )

सखे रत्नशेखर ! तन्मे धारयसि निजकलादर्शनम् ।

( पुनर्नेपथ्ये )

---

पुनर्नेपथ्य इति । इयन्तम्=एतावन्तम् । कृतालयात्=विहितवासात्, लक्ष्मण इति । कृतकर्णकौतुकामोदः=कृतः ( विहितः ) कर्णकौतुकामोदः ( श्रोत्रकुतूहलहर्षः ) येन सः । पथिकयोः=पान्थयोः ।

सखे रत्नशेखर इति । मे धारयसि=मह्यं धारयसि, 'धारेरुत्तमर्णः' इति सम्प्रदानत्वाच्चतुर्थी । त्वं मया कलादर्शनव्यापारे शिक्षितः । तां कलां साम्प्रतं मह्यं प्रदर्शयेति भावः ।

---

( नेपथ्यमें )

मित्र रत्नशेखर ! मैंने बहुत समयके अनन्तर तुम्हें देखा ।

**लक्ष्मण**—( सुनकर ) यह क्या है ?

( फिर नेपथ्यमें )

मित्र चम्पकापीड ! यह ठीक है कि मैं इतने समयतक समस्त मायाधार मय नामक दानवकी पुत्री और अपनी सगी बहन मन्दोदरीका अनुसरण करनेके लिए लङ्कामें निवास करनेवाले चित्ररूप नामक दानवसे सम्पूर्ण इन्द्रजालकलाको ग्रहण करता हुआ रहा ।

**लक्ष्मण**—निश्चय ही कानोंमें कौतुक और हर्ष करनेवाला यह किन्हीं दो पान्थोंका संवाद हो रहा है ।

( फिर नेपथ्यमें )

मित्र रत्नशेखर ! तुम्हें मुझसे सीखी हुई अपनी कलाका प्रदर्शन करना होगा ।

( फिर नेपथ्यमें )

वयस्य चम्पकापीड,

असुरसुरनिशाचरोरगाणामपि नरकिन्नरसिद्धचारणानाम्।
सकलजनविलोकनैकचित्रं स्फुटमिह कस्य विजृम्भते चरित्रम्॥९॥

अथवा किमन्येन, लङ्कानुभूतमेव नूतनं किमपि सरसरमणीयं चरितमुपदर्शयामि ते।

लक्ष्मणः—आर्य! इतोऽवधार्यताम्, नन्विदमयत्नोपनीतं प्रेक्षणीयम्।

रामः—( अनाकर्णितकेन )

देवि! त्वदीयमणिनूपुरजृम्भमाण-
कोलाहलोच्चरलहंसकुलाकुलासु।

---

असुरसुरेति। असुरसुरनिशाचरोरगाणां नरकिन्नरसिद्धचारणानामपि इह कस्य सकलजनविलोकनैकचित्रं स्फुटं चरित्रं विजृम्भत इत्यन्वयः। असुरसुरनिशाचरोरगाणां = दैत्यदेवराक्षससर्पाणां, नरकिन्नरसिद्धचारणानामपि = मानवकिम्पुरुषदेवयोनिविशेषवन्दिनामपि, इह = अस्मिन् समये स्थाने वा, कस्य = कतमस्य, सकलजनविलोकनैकचित्रं = समस्तजनदर्शनैकालेख्यरूपं, स्फुटं = स्पष्टं, चरित्रं = वृत्तं, विजृम्भते = आविर्भवति। यदहं ते दर्शयामीति भावः। पुष्पिताग्रा वृत्तम्॥ ९॥

लक्ष्मण इति। अयत्नोपनीतम् = अप्रयासप्राप्तम्। प्रेक्षणीयं = दर्शनीयम्।

राम इति। अनाकर्णितकेन = अश्रुतेनेव।

देवीति। देवि हे वैदेहि! त्वदीयमणिनूपुरजृम्भमाणकोलाहलोच्चरलहंसकुलाऽऽकुलासु लक्ष्मणपदाऽम्बुजलाञ्छितासु गोदावरीपुलिनभूमिषु इहि देहीत्यन्वयः।

---

मित्र चम्पकापीड!

असुर, देव, राक्षस, सर्प, मनुष्य, किन्नर, सिद्ध और चारण इनके बीच किसका चरित्र सब लोगोंको देखनेके लिए एकचित्ररूप होकर स्पष्ट रूपसे आविर्भूत होता है?॥९॥

अथवा, और से क्या? लङ्कामें अनुभूत ही नवीन कुछ सरस और रमणीय चरित्र मैं आपको दिखलाता हूँ।

लक्ष्मण—आर्य! इस ओर ध्यान दीजिए, बिना प्रयत्न ही यह द्रष्टव्य उपस्थित हो रहा है।

राम—( न सुननेके भावसे )

देवि! हे सीते! तुम्हारे मणिनूपुरोंसे बढ़नेवाले कोलाहलसे चञ्चल हंससमूहसे व्याप्त

वैदेहि ! लक्ष्मणपदाम्बुजलाञ्छितासु
गोदावरीपुलिनभूमिषु देहि दृष्टिम् ॥ १० ॥

लक्ष्मणः—क पुनरिह वैदेही ? क वा गोदावरी ?

रामः—( विमृश्य ) कथं प्रतारितोऽस्मि मतिविभ्रमेण । ( विचिन्त्य ) अथवा कृतार्थीकृतोऽस्मि । अनेन हि मे—

गोदावरीतीरतपोवनेषु, सौमित्रिसीतापरिपूर्णपार्श्वः ।
मुदा निमेषानिव यान्यनैषं, दिनानि तान्येव पुनः स्मृतानि ॥११॥

---

देवि = द्योतनशीले, हे वैदेहि = हे जानकि !, त्वदीयमणिनूपुरजृम्भमाणकोलाहलोत्तरलहंसकुलाकुलासु = त्वदीयौ ( त्वत्सम्बन्धिनौ ) यौ मणिनूपुरौ ( रत्नखचितमञ्जीरौ ) ताभ्यां जृम्भमाणः ( संवर्द्धमानः ) यः कोलाहलः ( कलकलः ) तेनोत्तरलं ( चञ्चलम् ) यद्धंसकुलं ( चक्राङ्गसमूहः ), तेनाऽऽकुलासु ( व्याप्तासु ) ; लक्ष्मणपदाऽम्बुजलाञ्छितासु = लक्ष्मणचरणकमलचिह्नितासु, गोदावरीपुलिनभूमिषु = गौतमीनदीतटभागेषु, दृष्टिं देहि = दृष्टिपातं विधेहीति भावः । अत्रोपमाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ १० ॥

राम इति । मतिविभ्रमेण = बुद्धिभ्रान्त्या ।

गोदावरीति । गोदावरीतीरतपोवनेषु सौमित्रिसीतापरिपूर्णपार्श्वः ( सन् ) मुदा यानि निमेषानिव अनैषं, तान्येव दिनानि पुनः स्मृतानीत्यन्वयः ।

गोदावरीतीरतपोवनेषु = गोदानदीतटस्थारण्याश्रमेषु, सौमित्रिसीतापरिपूर्णपार्श्वः = सौमित्रिसीताभ्यां ( लक्ष्मणजानकीभ्याम् ) परिपूर्णे ( परिपूरिते ) पार्श्वे ( दक्षिणवामभागौ ) यस्य सः, तादृशः सन् । मुदा = हर्षेण, यानि = दिनानि, निमेषानिव = स्वल्पपरिमितकालानिव, सुखमयत्वादल्पसमयानिवेति भावः । अनैषं = यापितवान् , तान्येव = पूर्वाऽनुभूतान्येव, दिनानि = दिवसानि, पुनः = भूयः स्मृतानि = स्मृतिविषयीकृतानि, सुखानुभूतदिवसस्मरणेन कृतार्थीकृतोऽस्मीति भावः । अत्रेन्द्रवज्रोपेन्द्रवज्रयोः सम्मेलनादुपजातिर्वृत्तम् ॥ ११ ॥

---

और लक्ष्मणके चरणकमलोंसे चिह्नित गोदावरीके तट भागों पर दृष्टिपात करो ॥ १० ॥

लक्ष्मण—यहाँ कहाँ सीताजी हैं ? या गोदावरी हैं ?

राम—( स्मरण कर ) किस प्रकार मैं बुद्धिकी भ्रान्तिसे वञ्चित हो गया हूँ । ( विचार कर ) अथवा कृतकृत्य हो गया हूँ । इसने मुझे—

गोदावरीके तीरमें तपोवनोंमें लक्ष्मण और सीताको साथमें लेकर हर्षसे जिन दिनोंको निमेषोंके समान मैंने बिताये थे आज उन्हीं दिनोंकी याद दिलाई ॥ ११ ॥

( पुनः सप्रत्याशम् ) अपि नाम,

तान्येव पक्ष्मलदृशो वचनामृतानि
भूयोऽपि कर्णचुलुकैरहमापिबेयम् ?
यैर्मामदर्शयदसौ विकचप्रमोदा
गोदावरी कमलवीचिविचेष्टितानि ॥ १२ ॥

( नेपथ्ये )

तव सुभग ! उत्क्षिपन्ती तरङ्गसितचामरं रघुमृगाङ्क ! ।

---

पुनरिति । अपि नामेति सम्भावनायाम् ।

तान्येवेति । अहं पक्ष्मलदृशः तान्येव वचनाऽमृतानि कर्णचुलुकैः भूयोऽपि आपिबेयम् ? विकचप्रमोदा असौ यैः मां गोदावरीकमलवीचिविचेष्टितानि अदर्शयदित्यन्वयः ।

अहं = रामः, पक्ष्मलदृशः = ( प्रचुररोमयुक्तदृष्टेः, सुलोचनायाः सीताया इति भावः ) । तान्येव = पूर्वाऽनुभूतान्येव, वचनाऽमृतानि = अमृततुल्यानि वाक्यानि, कर्णचुलुकैः = अर्धाञ्जलिसदृशश्रोत्रवृत्तिभिः, लाक्षणिकोऽयमर्थः । भूयोऽपि = पुनरपि, आपिबेयम् = पानविषयीकुर्याम् , प्रणयाऽतिशयेन शृणुयामिति भावः । विकचप्रमोदा = समुद्गहर्षा, असौ = विप्रकृष्टदेशवर्तिनी, सीतेति भावः । यैः = वचनाऽमृतैः, मां = वल्लभं रामं, 'दृशेश्चे'ति कर्मत्वाद्द्वितीया । गोदावरीकमलवीचिविचेष्टितानि = गोदावर्याः ( गोदानद्याः ) कमलानां ( पद्मानाम् ) वीचीनां ( तरङ्गाणाम् ) च विचेष्टितानि ( अनेकप्रकाराश्चेष्टाः ), अदर्शयत् = दर्शितवती । वसन्ततिलका वृत्तम् ॥ १२ ॥

तव सुभगेति । हे सुभग ! हे रघुमृगाऽङ्क !! तव तरङ्गसितचामरम् उत्क्षिपन्ती गोदानदी स्वहस्तेन धवलकमलाऽऽतपत्रं धारयतीत्यन्वयः ।

---

( फिर प्रत्याशाके साथ ) क्या—

मैं सुलोचना सीताके उन्हीं वचनामृतोंको कर्न रूप अर्धाञ्जलियोंसे फिर भी क्या पान कर लूंगा ? समृद्ध हर्षवाली जिस सीताने जिन वचनामृतोंसे मुझे गोदावरीके कमलों और तरङ्गोंकी चेष्टाओंको दिखलाया था ॥ १२ ॥

( नेपथ्यमें )

सौभाग्यसम्पन्न हे रघुकुलचन्द्र ! आपके ऊपर तरङ्गरूप सफेद चामरको चलाती हुई

धवलकमलातपत्रं धारयति गोदानदी स्वहस्तेन ॥ १३ ॥

( तुह सुहअ ! उक्खिवन्ती तरङ्गसिअचामरं रहुमिअङ्क !
धवलकमलादवत्तं धारइ गोलाणई सहत्थेण ॥ )

रामः—(सहर्षम्) अये, स एवायं प्रियतमायाः समालापः । तथा हि—

परिमितकमनीयः कोमलो वाग्विलासः,
सरसमधुरकाकुस्वीकृता काऽपि लेखा ।
ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी,
श्रुतिरपि कलकण्ठीकण्ठसंवादभूमिः ॥ १४ ॥

---

हे सुभग = हे सौभाग्यसम्पन्न, हे रघुमृगाङ्क = हे रघुकुलचन्द्र ! तव = भवतः, तरङ्गसितचामरम् = ऊर्मिरूपशुक्लप्रकीर्णकम्, 'चामरं तु प्रकीर्णकम्' इत्यमरः। उत्क्षिपन्ती = उपरि प्रेरयन्ती, गोदानदी=गोदावरी, स्वहस्तेन = आत्मकरेण, धवलकमलाऽऽतपत्रं = शुक्लपद्मरूपं छत्रं, धारयति = वहति । हे राम ! गोदावर्येव तरङ्गकमलरूपाभ्यां भूपालयोग्यच्छत्रचामराभ्यां त्वां सेवत इति भावः। अत्र रूपकाऽलङ्कारः। आर्यावृत्तम् ॥ १३ ॥

परिमितेति । परिमितकमनीयः कोमलो वाग्विलासः । सरसमधुरकाकुस्वीकृता काऽपि लेखा । ध्वनिरपि विपञ्चीपञ्चमस्य अनुवादी । श्रुतिरपि कलकण्ठीकण्ठसंवादभूमिरित्यन्वयः । परिमितकमनीयः = परिमितः ( अल्पपरिमाणः ) स चाऽसौ कमनीयः ( मनोहरः ), पुनः कोमलः = मृदुलः तादृशो वाग्विलासः = वचनलीला। सरसमधुरकाकुस्वीकृता = सरसा ( रसपरिपूर्णा ) मधुरा ( माधुर्यसम्पन्ना ) या काकुः ( ध्वनिविशेषः ), तया स्वीकृता ( अङ्गीकृता, व्याप्तेति भावः ) । तादृशी काऽपि = अनिर्वाच्या, लेखा = वाक्यराजिरित्यर्थः । ध्वनिरपि = शब्दोऽपि, विपञ्चीपञ्चमस्य = वीणापञ्चमस्वरस्य, कोकिलरुतसदृशस्येति भावः । अनुवादी = अनुकारी । एवं च श्रुतिरपि = श्रवणमपि, कलकण्ठीकण्ठसंवादभूमिः = कलकण्ठ्याः ( कोकिलायाः ) यः कण्ठः = गलः, लक्षणया कण्ठस्वरः, तस्य संवादभूमिः ( साद-

---

गोदावरी अपने हाथसे सफेद कमलरूप छत्रको धारण कर रही है ॥ १३ ॥

राम—( हर्ष पूर्वक ) अरे ! यह वही प्रियतमाका आलापन है । जैसे कि—परिमित और मनोहर कोमल वचनलीला है । सरस और मधुर ध्वनिविशेषसे व्याप्त अनिर्वचनीय वाक्यपद्धि है । शब्द भी वीणाके पञ्चमस्वरका अनुकरण करने वाला है एवम् इसका श्रवण भी कोकिलाके कण्ठस्वरका सादृश्याधार है ॥ १४ ॥

तत्कुत्र पुनः प्रेयसी ? ( विलोक्य ) तत्कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः ।

( ततः प्रविशति यथा निरूपयिष्यमाणा जानकी )

**रामः**—( ससम्भ्रमम् ) प्राप्तेयं प्रेयसी ( इति गन्तुमिच्छति )

**लक्ष्मणः**—( रामं हस्ते धृत्वा ) अलमिह सम्भ्रमेण, विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् ।

**रामः**—( निर्वर्ण्य ) अये, क एष सन्निवेशविशेषः ? तथा हि—

**एकेनालम्बितेयं शिथिलभुजलताशोभिना शाखिशाखा,**
**हस्तेनान्येन चायं दिनकरकिरणक्लान्तकान्तिः कपोलः ।**

---

स्याऽऽधारः ), अस्तीति शेषः । अतोऽयं प्रियतमायाः समालाप एवेति शेषः । मालिनी वृत्तम् ॥ १४ ॥

तदिति । अदृष्टचन्द्रलेखः = अदृष्टा ( अनवलोकिता ) चन्द्रलेखा ( इन्दुरेखा ) यस्मिन् सः, तादृशश्चन्द्रालोकः = इन्दुप्रकाशः । चन्द्ररेखादर्शनं विना यथा चन्द्रप्रकाशस्तथैव सीताया दर्शनं विना तच्छब्दश्रवणं विस्मयहेतुरिति भावः ।

राम इति । निर्वर्ण्य = दृष्ट्वा । सन्निवेशविशेषः = अङ्गस्थितिविशेषः ।

एकेनेति । शिथिलभुजलताशोभिना एकेन हस्तेन इयं शाखिशाखा आलम्बिता । अन्येन हस्तेन दिनकरकिरणक्लान्तकान्तिः अयं कपोलः ( आलम्बितः ) । एष स्रस्तः कचभरः स्वकाञ्चीकलापे नितम्बे लुलति । नेत्रोत्सङ्गे च बाष्पस्तबकनवकणैः पक्ष्मला पक्ष्मरेखा ( अस्ति ) इत्यन्वयः ।

---

तब प्रियतमा कहां है ? ( देखकर ) तब कैसे चन्द्ररेखाके देखे बिना यह चन्द्रका प्रकाश आ रहा है ?

( तब निरूपणके अनुसार सीता प्रवेश करती हैं । )

**राम**—( शीघ्रताके साथ ) यह प्रियतमा प्राप्त हो गई । ( ऐसा कह कर जानेकी इच्छा करते हैं । )

**लक्ष्मण**—( रामको हाथमें पकड़कर ) यहां आतुरता नहीं करनी चाहिए । यह तो विद्याधरसे प्रकाशित इन्द्रजाल है ।

**राम**—(देखकर) यह कैसा शरीरका स्थितिविशेष है ? जैसे कि—शिथिल बाहुलतासे शोभित एक हाथसे इस वृक्षशाखाका आलम्बन किया है । दूसरे हाथसे सूर्यकिरणसे

> एष स्रस्तो नितम्बे लुलति कचभरस्त्यक्तकाञ्चीकलापे
> नेत्रोत्सङ्गे च बाष्पस्तवकनवकणैः पक्ष्मला पक्ष्मलेखा ॥ १५ ॥

नूनमियमशोकशाखिशाखां सखीमिवाऽवलम्ब्य निद्रामुपगता ।

तथा हि—

> आमीलन्नवनीलनीरजतुलामालम्बते लोचनं
> शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् ।

शिथिलभुजलताशोभिना = शिथिला ( श्लथा ) या भुजलता ( बाहुवल्ली ) तया शोभते तच्छीलस्तेन । तादृशेन एकेन = एककेन, हस्तेन = करेण इयं = निकटवर्तिनी, शाखिशाखा = वृक्षविटपः, आलम्बिता = आश्रयीकृता । अन्येन = अपरेण, हस्तेन = करेण, दिनकरकिरणक्लान्तकान्तिः = दिनकरस्य ( सूर्यस्य ) किरणैः ( मयूखैः ) क्लान्ता ( ग्लानिमापन्ना ) कान्तिः (छविः) यस्य सः, तादृशः । अयम् = एषः, कपोलः = गण्डः, 'आलम्बित' इति पुंलिङ्गत्वेन विपरिणामः । एवं च एषः = अतिनिकटस्थितः, स्रस्तः = उन्मुक्तः, स्नेहसंस्काराऽभावादिति शेषः । तादृशः कचभरः = कुन्तलकलापः, त्यक्तकाञ्चीकलापे = त्यक्तः ( विसृष्टः, पतिविरहादिति शेषः ) काञ्चीकलापः ( रशनारूपभूषणम् ) यस्मात्तस्मिन् । तादृशे नितम्बे = कटिपश्चाद्भागे, लुलति = लुठति । एवं च नेत्रोत्सङ्गे च = लोचनप्रान्तभागे च, बाष्पस्तवकनवकणैः = बाष्पस्य ( अश्रुणः, शुक्लपुष्पसदृशस्येति शेषः ) स्तवकाः ( गुच्छसदृशाः समूहाः ) तेषां नवकणैः ( नवीनलवैः ), पक्ष्मला = सान्द्रा, पक्ष्मरेखा = नयनरोमराजिः, अस्तीति शेषः । इन्द्रजालोपनीतसीताऽवस्थावर्णनमिदम् । तथा चेयं सीतैकेन हस्तेन तरुविटपमालम्बते, अपरेण च रविकरताम्रं कपोलतलमाश्रयति । जानक्याः स्नेहशून्यो विकीर्णः कुन्तलकलापश्च मेखलारहिते नितम्बबिम्बे लुठति । एवं चाऽश्रुनिर्गमेन तस्या लोचनद्वितयं सान्द्ररोमराजियुक्तं वर्तत इति भावः । अत्र रूपकाऽलङ्कारः । स्रग्धरा वृत्तम् ॥ १५ ॥

आमीलदिति । लोचनम् आमीलन्नवनीलनीरजतुलाम् आलम्बते । नवमल्लिका-

---

ग्लानिप्राप्त कान्ति वाले कपोलका आलम्बन किया है । यह शिथिल केशकलाप काञ्चीसे रहित नितम्बमें लटक रहा है और नेत्रके प्रान्तभागमें आंसूके गुच्छोंके नये कणोंसे भीगी हुई पक्ष्मपङ्क्ति है ॥ १५ ॥

निश्चय ही ये अशोकवृक्षकी शाखाकी सखीके समान सहारा लेकर नींद ले रही है । जैसे कि—

नेत्र मुंदे हुए नये नीलकमलकी उपमाका आलम्बन कर रहा है । नये मल्लिका ( बेली ) पुष्पोंके सदृश अङ्गोंने भी शिथिलताको स्वीकार किया है ।

( पुनर्विमृश्य ) नूनमनया हृदयप्रमोददायी कोऽपि स्वप्नो दृष्टः । तथा हि—

आलापादधरः स्फुरन्कलयति प्रेङ्खत्प्रवालोपमा-
मानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥ १६ ॥

सीता—( उन्मील्य लोचने ) हा धिक् हा धिक् ! अन्यादृशो मे जीवलोको गोदानदी । क्व सा, नीलोत्पलश्यामलः क्व रामः, लङ्का क्व, क्व वा हा धिक् रामैकजीविता सीता ( इति मूर्च्छति ) । ( हद्धि हद्धि, अण्णारिसो मे जीअलोओ गोअणई । कहिं सा, णीलुप्पलसामलो कहिं रामो, लङ्का कहिं, कहिं वा

---

सहचरैः अङ्गैरपि शैथिल्यं स्वीकृतम् । इति पूर्वार्द्धान्वयः ।

लोचनं = नेत्रं, जानक्या इति शेषः । आमीलन्नवनीलनीरजतुलाम्=आमीलत् ( निमीलत् ) नवं ( नूतनम् ) यन्नीलनीरजं ( नीलकमलम् ), तस्य तुलाम् ( उपमाम् ) आलम्बते = आश्रयति । नवमल्लिकासहचरैः = नूतनमल्लीपुष्पसुहृद्भिः, अङ्गैरपि = हस्तपादाद्यवयवैरपि, शैथिल्यं = श्लथत्वम् , अवष्टम्भरूपाऽवस्थाभावरूपमिति भावः । स्वीकृतं = गृहीतम् । इति पूर्वार्द्धव्याख्या ।

पुनरिति । हृदयप्रमोददायी = चित्तहर्षदायकः ।

आलापादिति । आलापात् स्फुरन् अधरः प्रेङ्खत्प्रवालोपमां कलयति । आनन्दप्रभवा बाष्पकणिकाश्च मुक्ताश्रियं बिभ्रतीत्युत्तरार्धान्वयः । आलापात्=आभाषणात् , स्वप्नाऽवस्थायामिति शेषः । स्फुरन्=संचलन् , अधरः=ओष्ठः, प्रेङ्खत्प्रवालोपमां=प्रेङ्खन् ( संचलन् ) यः प्रवालः ( विद्रुमः, पल्लवं वा ) तस्योपमां= सादृश्यं, कलयति=धारयति । 'प्रवालोऽस्त्री किसलये वीणादण्डे च विद्रुमे ।' इति मेदिनी । एवं च आनन्दप्रभवाः=आनन्दः ( हर्षः, स्वप्नेऽभीष्टदर्शनजनित इति शेषः ) प्रभवः ( कारणम् ) यासां ताः, तादृश्यो बाष्पकणिकाश्च=अश्रुबिन्दवश्च, मुक्ताश्रियं=मौक्तिकशोभां बिभ्रति = धारयन्ति । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

---

( फिर विचारकर ) निश्चय इन्होंने चित्तको हर्ष देने वाला कुछ स्वप्न देख लिया है । जैसे कि—

आभाषणके कारण फड़कता हुआ ओठ हिलनेवाले पल्लवकी उपमाको धारण कर रहा है और आनन्दसे उत्पन्न अश्रुबिन्दु मोतीकी शोभा प्राप्त कर रहे हैं ॥ १६ ॥

सीता—( आँखें खोलकर ) हाय ! धिक्कार है, हाय ! धिक्कार है । मुझको गोदावरी दूसरे ही लोककी तरह प्रतीत हो रही है । वह कहां ! और नीलकमलके समान श्याम वर्ण वाले राम कहां ! लङ्का कहां ? और रामरूप एक जीवन वाली सीता ही कहां ! हाय !

हद्धि, रामे कजीविदा सीदा )

रामः—अयि वसुधे,

यां वै गर्भे त्रिजगदबलारत्नभूतां दधाना-
लब्धार्थत्वाज्जगति भवती रत्नगर्भा बभूव।
तामुत्सङ्गे तव विलुलितां वीक्षमाणा च सीतां
द्रागदीर्णासीन्न कथमथवा देवि ! सर्वंसहासि ॥ १७ ॥

यामिति। हे देवि ! त्रिजगदबलारत्नभूतां यां गर्भे दधाना भवती लब्धाऽर्थत्वात् जगति रत्नगर्भा बभूव वै। तां सीतां तवोत्सङ्गे विलुलितां वीक्षमाणा कथं द्राक् दीर्णा न आसीत्। अथवा सर्वंसहाऽसीत्यन्वयः। हे देवि = हे द्योतनशीले वसुधे ! त्रिजगदबलारत्नभूतां = त्रिलोकनारीभूषणभूतां, यां = सीतां, गर्भे = भ्रूणे, दधाना= धारयन्ती, भवती = त्वं, लब्धाऽर्थत्वात् = प्राप्ताऽन्वर्थत्वात् जगति = लोके, रत्नगर्भा= रत्नगर्भापदवाच्या, बभूव = आसीत्। हे देवि ! लोकत्रयरत्नभूतायाः सीतायाः स्वगर्भे धारणादेव भवती 'रत्नगर्भे'त्यन्वर्थनामधेयसम्पन्ना संजातेति भावः। वै इति पादपूरणार्थकमव्ययम्। तां = तादृशीं, सीतां = स्वदुहितरं, तव = भवत्याः, उत्सङ्गे = अङ्के, विलुलितां = पतितां, वीक्षमाणा = पश्यन्ती सती, कथं = केन प्रकारेण द्राक् = झटिति, दीर्णा = विदीर्णा, न आसीत् = न अभूत् अविदीर्णत्वं समर्थयते—अथ वेति। अथवा = पक्षान्तरे, सर्वंसहाऽसि = सर्वसहिष्णुत्वेन सर्वंसहेति नाम्ना ख्यातिमुपगताऽसि। सर्वं सहत इति विग्रहे 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति खच्, 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमश्च। सर्वोऽपि जनर्माजनः स्वसन्ततिदुरवस्थां द्रष्टुमक्षमो भवति, परं भवती सन्तापसन्तत्या स्वोत्सङ्गेपतितां तनूजां सीतां पश्यन्त्यपि कथं न विदीर्यसे ? अथ वा त्वं 'सर्वंसहे'त्यभिधानेनाऽन्वर्थनामधेयाऽसीति भावः। अत्र निरुक्तं नाम लक्षणं, तथथा सोदाहरणं चन्द्रालोके—'निरुक्तं स्यान्निर्वचनं नाम्नः सत्यं तथाऽनृतम्। ईदृशैर्श्चरितै राजन्सत्यं दोषाकरो भवान् ॥' इति। मन्दाक्रान्तावृत्तम् ॥ १७ ॥

धिक्। (ऐसा कहकर मूर्च्छित होती हैं।)

राम—हे वसुन्धरे !

हे देवि ! लोकत्रयकी स्त्रियोंमें रत्नभूत जिन (सीता) को गर्भमें धारण करती हुई तुम अन्वर्थ नाम प्राप्त करनेसे लोकमें रत्नगर्भा हो गई थी। उन सीताको अपनी गोदमें गिरी हुई देखकर भी कैसे उसी क्षण तुम विदीर्ण नहीं हुई, अथवा तुम्हारा नाम ही सर्वंसहा है ॥ १७ ॥

तदेनामभ्यर्थयामि तावदस्याः समुद्बोधनाय, अथवा किमभ्यर्थनया ?

निजामपि सुतां सीतां नेयमुद्बोधयिष्यति
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः ? ॥ १८ ॥

तदेनं तावदभ्यर्थयामि ।

स्निग्धाशोकद्रुम ! निजसखीं तूर्णमुद्बोधयैनां
सिक्त्वा सिक्त्वा किसलयकरस्रंसिना सीकरेण ।
एतस्याः किं नयनकमलस्यन्दिभिः सान्द्रसान्द्रै-
र्बाष्पोत्पीडैरनुदिनमपि त्वं न सिक्ताऽऽलवालः ॥ १९ ॥

---

निजामिति । इयं निजां सुतां सीतामपि न उद्बोधयिष्यति । कठिनप्रकृतेः निजे अपत्ये अपि करुणा कुतः ? इत्यन्वयः ।

इयं = वसुधा, निजां = स्वकीयां, सुतां = दुहितरं, सीतामपि = जानकीमपि, न उद्बोधयिष्यति = उद्बुद्धां न विधास्यति । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—निजेऽपीति । कठिनप्रकृतेः = कठोरस्वभावायाः, निजे = आत्मीये, अपत्येऽपि = सन्तानेऽपि, करुणा = दया, कुतः = कस्माद्भवति, कथमिव न भवतीति काकुव्यङ्ग्योऽर्थः । अनुष्टुब्वृत्तम् ॥ १८ ॥

स्निग्धाऽशोकद्रुमेति । हे स्निग्ध अशोकद्रुम ! निजसखीम् एनां किसलयकरस्रंसिना सीकरेण सिक्त्वा सिक्त्वा तूर्णम् उद्बोधय । एतस्याः नयनकमलस्यन्दिभिः सान्द्रसान्द्रैः बाष्पोत्पीडैः अनुदिनं त्वं किं न सिक्ताऽऽलवालः ? इत्यन्वयः ।

हे स्निग्ध = हे स्नेहयुक्त, अशोकद्रुम = अशोकवृक्ष !, निजसखीं = स्वसखीम्, एनां = सीतां, किसलयकरस्रंसिना = किसलयानि ( पल्लवानि ) एव कराः ( हस्ताः ) तेभ्यः स्रंसिना ( स्यन्दमानेन ), सीकरेण=जललेशेन, सिक्त्वा सिक्त्वा= उक्षित्वा उक्षित्वा, वीप्सायां द्विरुक्तिः । तूर्णं = शीघ्रम्, उद्बोधय = जागरितां कुरु । पूर्वकृतं सीतोपकारं स्मारयति—एतस्या इति । एतस्याः = सीतायाः, नयनकमल-

---

इसलिए सीताको होशमें लानेके लिए इनसे प्रार्थना करता हूँ । अथवा प्रार्थनासे क्या ?

ये ( पृथ्वी ) अपनी पुत्री सीताको भी होशमें नहीं लायेंगी । कठोर स्वभाववालीकी अपनी सन्तानमें दया कहाँसे होगी ? ॥ १८ ॥

इस कारण मैं इस ( अशोक वृक्ष ) से प्रार्थना करता हूँ ।

हे वत्सल अशोक वृक्ष ! अपनी सखी इन ( सीता ) को पल्लवरूप हाथोंसे चूने वाले जलकणसे सींच सींच कर शीघ्र होशमें ले आओ । इन ( सीता ) के नेत्रकमलोंसे चूने वाले अतिशय घने अश्रुप्रवाहोंसे प्रतिदिन तुम्हारी क्यारी क्या सींची नहीं गई थी ? ॥१९॥

कथमनाकर्णितकेन प्रत्याख्यातमनेन, अये ! कृतघ्नता पलाशिनः ! (विलोक्य) कथं प्रकृतिप्रियंवदाया मे प्रियायाः सखीजनोऽपि न कश्चिदिह ।

( प्रविश्य )

त्रिजटा—जानकि ! समाश्वसिहि समाश्वसिहि

सीता—( समाश्वस्य ) कथं प्रियसखी मे त्रिजटा ( कहं पिअसही मे तिअडा )

त्रिजटा—सखि ! अनया ते मधुरया मुखरेखया तर्कयामि यत् किं प्रियं किमपि दृष्टवती भवती ।

सीता—अस्तीदानीं हि मया स्वप्ने स्वयं गोदानद्या स्वहस्तकलि-

---

स्वगिद्भिः = लोचनपद्मपरिस्रुतैः, सान्द्रसान्द्रैः = अतिशयनिबिडैः, बाष्पोत्पीडैः = अश्रुप्रवाहैः, अनुदिनं = प्रत्यहं, त्वम्=अशोकः, किं, न सिक्तालवालः = न उषितालवालः, असीति शेषः । 'स्यादालवालमावालमावाप' इत्यमरः । यत इयं सीता प्रागश्रुप्रवाहैस्त्वालवालमभिषिक्तवती, अतः प्रत्युपकारार्थमस्याः प्रबोधनं त्वत्कर्तव्यकोटिमाटीकत इति भावः । अत्र रूपकोपमयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । मन्दाक्रान्तावृत्तम् ॥ १९ ॥

कथमिति । प्रत्याख्यातं = निराकृतं, मद्वचनमिति शेषः । पलाशिनः = वृक्षस्य, अशोकस्येत्यर्थः । पलाशानि ( पत्राणि ) सन्ति अस्येति पलाशी, तस्य । अथवा पलम् ( मांसम् ) अश्नातीति, तस्य । प्रकृतिप्रियंवदायाः = निसर्गप्रियभाषिण्याः । त्रिजटेति । मधुरया = माधुर्ययुक्तया ।

सीतेति । स्वहस्तकलिततरङ्गचामरधवलकमलाऽऽतपत्रया=स्वहस्ते (आत्मकरे)

---

कैसे अनसुनी करके इसने मेरी प्रार्थनाका प्रत्याख्यान कर दिया । अरे ! पलाशीकी कैसी कृतघ्नता है । ( देखकर ) किस प्रकार स्वभावसे ही प्रियवचन बोलने वाली मेरी प्रियाकी कोई भी सखी यहां पर नहीं है ।

( प्रवेश कर )

त्रिजटा—सीते ! समाश्वस्त हो समाश्वस्त हो ।

सीता—( होशमें आकर ) कैसे मेरी प्रियसखी त्रिजटा आगई ।

त्रिजटा—सखि ! तुम्हारी इस मधुर मुखरेखासे जान पड़ता है कि तुमने किसी प्रकार प्रियको देख लिया है ।

सीता—अभी मैंने स्वप्नमें अपने हाथसे तरङ्गरूप चामर और सफेद कमलरूप छत्र

ततरङ्गचामरधवलकमलातपत्रया परिचर्यमाण आर्यपुत्रो दृष्टः । ( अत्थि दाणिं हि मए सिविणअम्मि सअं गोलाणईए सहत्थकलिदतरङ्गचामरधवलकमलादव-त्ताए परिचरिज्जन्तो अज्जउत्तो दिट्ठो )

**त्रिजटा**—तर्हि वर्द्धसे । सुखस्वप्नः खल्वसौ ।

**सीता**—कीदृशो मे रामैकचित्तायाः स्वप्ने विश्वासः । ( केरिसो मे रामेक्कचित्ताए सिविणअम्मि विस्सासो )

**त्रिजटा**—तत्किं चिन्तास्वप्न इति सम्भावयसि ? नहि । चिन्तास्व-प्नोऽपि नैवमचुम्बितावगाही भवति ?

**सीता**—किं पुनरचुम्बितम् । ( किं उण अचुम्बिदम् )

**त्रिजटा**—यन्न सम्भाव्यते ।

**सीता**—

यन्न खलु सम्भाव्यते तदपि हला ! अस्त्यत्र जीवलोके ।

---

कलिते ( धृते ) तरङ्ग ( ऊर्मिः ) एव चामरं ( प्रकीर्णकम् ) तथा च धवलकमलम् ( शुक्लपद्मम् ) एव आतपत्रं ( छत्रम् ) यया, तया । परिचर्यमाणः=सेव्यमानः ।

त्रिजटेति । सुखस्वप्नः = सुखसूचकः स्वप्नः ।

सीतेति । विश्वासः = प्रत्ययः ।

त्रिजटेति । चिन्तास्वप्नः = चिन्तैव स्वप्नः, यस्य विषयस्य नैरन्तर्येण चिन्तनं भवति, तस्मिन्स्वप्नाऽवस्थायां दृश्यमानेऽपि नाऽभीष्टफललाभ इति स्वप्नाध्याय-विदां परामर्शः । अचुम्बिताऽवगाही = असंभावितविषयपरामर्शकः, चिन्तास्व-प्नोऽपि संभावितमेव विषयं परामृशति नाऽसम्भावितविषयमिति भावः ।

यन्नखल्विति । हला ! यन्न संभाव्यते खलु, तदपि अत्र जीवलोके अस्ति । यत्

---

लेकर गोदावरी नदीसे सेवित आर्यपुत्रको देखा है ।

**त्रिजटा**—तब तुम बढ़ोगी । यह सुखसूचक स्वप्न है ।

**सीता**—राममें एक चित्त रखने वाली मेरा स्वप्नमें कैसे विश्वास हो ?

**त्रिजटा**—तब क्या इसे चिन्तास्वप्न समझती हो ? नहीं । चिन्तास्वप्न भी इस प्रकार अचुम्बित ( असंभावित ) विषयका परामर्श करने वाला नहीं होता है ।

**सीता**—'अचुम्बित' किसे कहते हैं ?

**त्रिजटा**—जिसकी संभावना नहीं की जाती है ।

**सीता**—हे सखि ! जिसकी संभावना नहीं की जाती है यह भी इस जीवलोकमें

यज्जीवति जनकसुता अनालोकयन्त्यपि रामचन्द्रमुखम् ॥ २० ॥

( जं णहु सम्भाबीअदि तं पि हला ! अत्थि अत्थ लोअम्मि ।

जं जीवइ जणअसुदा अपुलोअन्तीवि रामचन्दमुहम् ॥ )

तत् किमनेन स्वप्नेन जीवितेन वा, उपेक्षितास्म्यार्यपुत्रेण । ( ता किं इमिणा सिविणएण जीविदेण वा । उवेक्खिदह्मि अज्जउत्तेण )

रामः—शान्तं पापम् । अयि प्रिये ! हृदयस्थितापि मे कथमजानती वर्त्तसे मे चित्तवृत्तिम् ?

सीता—अथवा किमिति हरमुकुटमृगाङ्के कलङ्कमारोपयिष्ये । जानाम्यार्यपुत्रोऽद्याप्यकलितवृत्तान्तो मे । ( अहवा किन्ति हरमुउडमिअङ्के कलङ्कं आरोपइस्सम् । जाणामि अज्जउत्तो अज्जवि अकलिदवुत्तन्तो मे )

---

रामचन्द्रमुखम् अनालोकयन्त्यपि जनकसुता जीवतीत्यन्वयः ।

हला = हे सखि त्रिजटे !, 'हण्डे हञ्जे हलाऽऽह्वाने नीचां चेटीं सखीं प्रती'त्यमरः । यत् = वृत्तं, न सम्भाव्यते = सम्भवरूपेण नो विभाव्यते, खल्विति निश्चये । तदपि = असम्भाव्यत्वेन चिन्तितं वृत्तमपि, अत्र = अस्मिन् , जीवलोके = मनुष्यलोके, अस्ति = वर्तते । तदेवोपपादयति—यज्जीवतीति । यत् , रामचन्द्रमुखम् = आर्यपुत्राननम् , अनालोकयन्त्यपि=अपश्यन्त्यपि, जनकसुता = जानकी, जीवति = प्राणान्धारयति । हे सखि ! आर्यपुत्रमुखचन्द्रमपश्यन्त्यपि यदहं प्राणान्धारयामि, तदसम्भावितविषयोऽप्यत्र जीवलोके वर्तत इति गम्यत इति भावः । आर्यावृत्तम् ॥

तदिति । उपेक्षिताऽस्मि = कृतोपेक्षा वर्ते ।

सीतेति । अथवा = पक्षान्तरे । हरमुकुटमृगाङ्के = शिवमस्तकस्थे चन्द्रे । भवभालस्थलविराजितो मृगाङ्को निष्कलङ्कः, अन्यः सकलङ्क इतीयं कविसमयसरणिः । अकलितवृत्तान्तः = अज्ञातोदन्तः ।

---

है । जैसे कि रामचन्द्रके मुखचन्द्रको न देखकर भी जनकसुता जी रही है ॥ २० ॥

तब इस स्वप्न अथवा जीवनसे क्या प्रयोजन है ? आर्यपुत्रने मेरी उपेक्षाकर दी है ।

राम—पाप निवृत्त हो । हे प्रिये ! मेरे हृदयमें रह कर भी तुम कैसे मेरी चित्तवृत्तिके विषयमें अनजान बनी रहती हो ?

सीता—अथवा क्यों शिवजीके मस्तकस्थित चन्द्रमें कलङ्कका आरोप करूँ ? मैं जानती हूँ कि अभी तक आर्यपुत्रको मेरा वृत्तान्त विदित नहीं है ।

रामः—प्रिये ! इदानीमुचितमनुसन्धत्से ।
सीता—( विमृश्य ) कथं ( कहं )
वाचालेनापि कथिता नाहं नाथस्य नूपुररवेण ।
अथवा विधिविधुरबलात्तेनापि मूकत्वं प्राप्तम् ॥ २१ ॥
( वाआलेणविकहिदणादं णाहस्सं णेउररएण ।
अहवा विहि विहुरबलात्तेणवि मूअत्तणं पत्तम् ॥ )
( नेपथ्ये )
अये लङ्कानिवासिनः ! सावधानमवस्थीयताम् , नन्वितः—
प्राकारमुन्नतमसीमबलो विलङ्घ्य
प्राप्तो रुषारुणितदृक्कपिवीर उच्चैः ।

---

वाचालेनापीति । वाचालेनाऽपि नूपुररवेण अहं नाथस्य न कथिता । अथवा विधिविधुरबलात् तेनाऽपि मूकत्वं प्राप्तमित्यन्वयः । वाचालेनाऽपि = मुखरेणाऽपि, लक्षणयैषोऽर्थो ज्ञेयः । नूपुररवेण = मञ्जीरध्वनिना, अहं = सीता, नाथस्य = आर्यपुत्रस्य, रामस्येति भावः । न कथिता = नो ज्ञापिता । तस्याऽकथने हेतुं प्रदर्शयति—अथवेति । अथवा = उताहो, विधिविधुरबलात् = विधेः ( भाग्यस्य विधुरबलात् प्रविश्लेषशक्तेः ), 'विधुरं तु प्रविश्लेषे' इत्यमरः । तेनाऽपि = नूपुररवेणाऽपि, मूकत्वं = तूष्णीकत्वं, प्राप्तम् = आसादितम् । समयान्तरे मुखरोऽपि नूपुररवो रावणेन ह्रियमाणां मां नाथाय रामाय न सूचितवान् । अथवा दुरदृष्टवशात्सोऽपि ध्वनिविहीनः = संजात इति भावः । गाथा वृत्तम् ॥ २१ ॥

प्राकारमिति । असीमबलो रुषा अरुणितदृक् उच्चैः कपिवीरः उन्नतं प्राकारं विलङ्घ्य प्राप्त इति पूर्वार्द्धान्वयः ।

असीमबलः = अपरिमितशक्तिः, रुषा = क्रोधेन, अरुणितदृक् अरुणिते ( रक्ती-

---

राम—प्रिये ! इस समय उचित बातका अनुसन्धान कर रही हो ।
सीता—( विचार कर ) कैसे ?

वाचाल होनेपर भी मञ्जीरके शब्दने मेरा पता नाथको नहीं दिया । अथवा भाग्यके बिछुड़नेकी शक्तिके कारण वह भी मूक बन गया ॥ २१ ॥

( नेपथ्यमें )

अरे लङ्काके रहनेवालो ! होशियार बने रहो । यहाँ—

अपरिमित शक्ति वाला और लाल नेत्रोंसे युक्त उन्नत यह वानरवीर ऊँचे प्राकारको लाँघकर प्राप्त हो गया है ।

( उभे आकर्ण्य त्रासं नाटयतः )

( पुनर्नेपथ्ये )

तत्सम्मुखं प्रचलति स्वयमक्षनामा
नन्वेष राक्षसपतेः कुपितः कुमारः ॥ २२ ॥

सीता—कथं पुनः सह महीधरेण वेपत इवाशोकवनम् । ( कहं उण सह महीअलेण वेवदि व्व असोअवणम् )

त्रिजटा—( विमृश्य )

तुहिनकरमयूखैर्दीप्तकन्दर्पदर्प-
स्तपनकुलवधूटीं त्वामयं मुक्तलज्जः ।

---

कृते ) दृशौ ( दृष्टी ) यस्य सः । उच्चैः = उन्नतः, कपिवीरः = वानरशूरः, उद्धतम् = उदग्रं, प्राकारं = परिखावेष्टनं विलङ्घ्य = अतिक्रम्य प्राप्तः = आगत इति पूर्वार्द्धे व्याख्या । उभे इति । उभे = सीतात्रिजटे ।

तत्सम्मुखमिति । ननु कुपितः अक्षनामा एषः राक्षसपतेः कुमारः तत्संमुखं स्वयं प्रचलतीत्युत्तरार्द्धाऽन्वयः ।

नन्वित्युत्तरवाक्यारम्भे । कुपितः = क्रुद्धः, अक्षनामा = अक्षयकुमारनामकः, एषः = अयं, राक्षसपतेः = निशाचरेश्वरस्य, रावणस्येति भावः । कुमारः = पुत्रः, तत्सम्मुखं = कपिवीराऽभिमुखं, स्वयम् = आत्मनैव, प्रचलति = प्रचलितो भवति । युद्धाऽर्थमिति शेषः । वसन्ततिलकं वृत्तम् ॥ २२ ॥

तुहिनकरेति । तुहिनकरमयूखैः दीप्तकन्दर्पदर्पो मुक्तलज्जः अयमयं स लङ्काऽधिनाथः तपनकुलवधूटीं रामचन्द्रैकचित्तामपि त्वाम् अनुनेतुं विपिनवीथीम् एतीत्यन्वयः । तुहिनकरमयूखैः = तुहिनकरस्य ( हिमांशोः, चन्द्रमस इत्यर्थः ) मयूखैः ( किरणैः ) दीप्तकन्दर्पदर्पः = दीप्तः ( समृद्धः ) कन्दर्पस्य ( कामदेवस्य ) दर्पः ( ऊष्मा ) यस्य सः । 'दर्पऊष्मणि' इति त्रिकाण्ड शेषः । मुक्तलज्जः = त्यक्तव्रीडः,

---

( दोनों सुनकर भयका अभिनय करती हैं । )

( फिर नेपथ्यमें )

क्रुद्ध होकर अक्षनामक यह रावणकुमार उसके सम्मुख स्वयं आ रहा है ॥ २२ ॥

सीता—कैसे पर्वतके साथ अशोक वन काँप रहा है ऐसा प्रतीत हो रहा है ।

त्रिजटा—( विचार कर )

चन्द्रकिरणोंसे प्रदीप्त कामाग्नि वाला और निर्लज्ज यह लङ्केश्वर रावण रामचन्द्रमें

अयमयमनुनेतुं रामचन्द्रैकचित्ता-
मपि स विपिनवीथीमेति लङ्काधिनाथः ॥ २३ ॥

( सीता त्रासं नाटयति )

( ततः प्रविशति रावणः )

( सीता पराङ्मुखी तिष्ठति )

रावणः—अयि जानकि,

कन्दर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं
स्वर्गस्त्रीकुचकुम्भकुङ्कुमरजस्तेयापराधोज्ज्वलम् ।

---

अयमयम् = एषः, सम्भ्रमे द्विरुक्तिः । सः = लोकप्रसिद्धः । लङ्काऽधिनाथः = लङ्काऽधिपतिः, रावण इत्यर्थः । तपनकुलवधूटीं = सूर्यवंशस्नुषां, रामचन्द्रैकचित्तामपि = रामचन्द्रे ( स्वपतौ ) एव एकं ( केवलम् ) चित्तं ( मनः ) यस्याः सा, ताम् । तादृशीमपि, त्वां = भवतीं, सीताम् । अनुनेतुम् = अनुकूलां कर्तुमिति भावः । विपिनवीथीं = वनाऽऽवलिम् , एति = प्राप्नोति । अत्र 'तपनकुलवधूटीम्' इति विशेषणेन सीताया अधृष्यत्वं 'रामचन्द्रैकचित्ताम्' इत्यनेन च रावणाऽनुनयवैफल्यं द्योत्यते । मालिनी वृत्तम् ॥ २३ ॥

कन्दर्पेति । कन्दर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं स्वर्गस्त्रीकुचकुम्भकुङ्कुमरजस्तेयाऽपराधोज्ज्वलं सुरदन्तिदन्तशिखरोल्लेखाङ्कः विख्यापितप्रस्फूर्जच्चतुरन्तविश्वविजयम् एतत् वक्षःस्थलं त्वां याचत इत्यन्वयः ।

कन्दर्पज्वरेत्यादिः = कन्दर्पज्वरस्य ( मन्मथसन्तापस्य ) वेदनया ( पीडया ) परिपततः ( गलतः ) बाष्पस्य ( अश्रुणः ) स्रुत्या (प्रवाहेण) क्षालितम् ( धौतम् ), वक्षःस्थलविशेषणमेतत् एवं परत्राऽपि । सात्त्विकभावद्योतकनयनजलप्रक्षालितमिति भावः । स्वर्गस्त्रीत्यादिः = स्वर्गस्त्रीणां ( सुरलोकललनानाम् ) ये कुचकुम्भाः ( स्तनघटाः ) तेषु यत् कुङ्कुमरजः ( काश्मीरपरागः ) तस्य स्तेयं ( चौर्यम् ) तदेव अपराधः ( आगः ) तेन उज्ज्वलम् ( विशदम् ) । सुरदन्तिदन्तेत्यादिः = सुर-

---

ही एकमात्र चित्त रखनेवाली सूर्यवंशकी वधू तुम्हें मनानेके लिए वनमें आ रहा है ॥२३॥

( सीता भयका अभिनय करती हैं । )

( तब रावण प्रवेश करता है और सीता मुँह फेरकर रहती हैं । )

रावण—हे सीते !

कामसन्तापकी पीडासे गिरते हुए आँसूके प्रवाहसे प्रक्षालित, देवललनाओंके कुचकुम्भोंमें स्थित केसरके परागकी चोरीके अपराधसे उज्ज्वल और दिग्गजोंके दन्ताग्रोंके

एतस्त्वां सुरदन्तिदन्तशिखरोल्लेखाङ्कविख्यापित-
प्रस्फूर्जच्चतुरन्तविश्वविजयं वक्षःस्थलं याचते ॥ २४ ॥

सीता—( अनाकर्णितकेन ) अपि नाम पुनरपि रामचन्द्रमुखचन्द्रं प्रलोकयिष्ये । ( अवि णाम पुणोवि रामचन्दमुहचन्दं पुलोइस्सम् )

त्रिजटा—जानकि ! एवं प्रलापिनि लङ्केश्वरे कर्णावधानमपि तावद्देहि ।

रामः—साधु, त्रिजटे ! प्रलाप इत्युक्तवत्यसि ।

रावणः—

यत्सन्तुष्टवतः पुरः पुरभिदश्छन्दोत्सवच्छेदिनो
न क्रोधादनमन्नवोद्गतशिरःश्रेणी नमन्त्यामपि ।

---

दन्तिनां ( दिग्गजानाम् ) दन्तशिखरैः ( दशनाऽग्रभागैः ) य उल्लेखः ( विदारणम् ) तस्याऽङ्कः ( चिह्नम् ) तेन विख्यापितः ( ख्यातिं प्राप्तः ) प्रस्फूर्जन् ( वज्रवच्छब्दायमानः ) चतुरन्तस्य ( दिक्चतुष्टयपर्यन्तस्य ) विश्वस्य ( संसारस्य ) विजयः ( विशिष्टजयः ) यस्य तत् । तादृशम् , एतत् = अतिनिकटस्थितं, वक्षःस्थलम् ( उरःस्थलं, मदीयमिति शेषः ), त्वां = सीतां, याचते = प्रार्थयते, आलिङ्गनादिप्रतिकरेण कन्दर्पज्वरं परिहरेत्यभ्यर्थनां कुरुत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

सीतेति । प्रलोकयिष्ये = द्रक्ष्यामि । अपि = प्रश्नार्थकः ।

राम इति । प्रलापः = अनर्थकं वचः ।

यत्सन्तुष्टवत इति । हे मिथिलेन्द्रपुत्रि ! सन्तुष्टवतः छन्दोत्सवच्छेदिनः पुरभिदः पुरः नवोद्गतशिरःश्रेणी नमन्त्यामपि यत् क्रोधात् न अनमत् । तत् एतत् मम दशमं शिरः त्वत्पादपाथोजयोः नमत् अभ्यात्रं प्रेमातुरं सत् भवतीं याचत इत्यन्वयः ।

---

विदारणके चिह्नसे प्रसिद्धि प्राप्त, वज्रतुल्य शब्द करनेवाली चारों दिशाओंके साथ विश्वके विजयसे युक्त यह मेरा वक्षःस्थल तुमसे याचना कर रहा है ॥ २४ ॥

सीता—( न सुननेका अभिनय कर ) क्या मैं फिर रामचन्द्रजीके मुखचन्द्रका दर्शन कर सकूंगी ?

त्रिजटा—सीते ! लङ्केश्वर रावणके ऐसे प्रलापमें कुछ ध्यान तो दो ।

राम—त्रिजटे ! तुमने प्रलाप यह ठीक ही कहा है ।

रावण—हे सीते ! सन्तुष्ट और इच्छानुसार शिरश्छेदनके उत्सवको रोकनेवाले शिवजीके सामने नये उगे हुए शिरोंकी पङ्क्तिके झुकनेपर भी जो क्रोधके कारण नहीं झुका ।

पतत्तद्दशमं शिरो मम नमत्त्वत्पादपाथोजयो-
रव्याजं मिथिलेन्द्रपुत्रि ! भवतीं प्रेमातुरं याचते ॥ २५ ॥

सीता—( संस्कृतमाश्रित्य )

निजे पाणौ कृत्वा कमललतिकाबालमुकुलं
ययोश्चक्रे गुञ्जन्मधुपमवतंसं रघुपतिः।

---

हे मिथिलेन्द्रपुत्रि = हे जानकि !, सन्तुष्टवतः = सन्तुष्टस्य, तपश्चरणप्रसन्नस्ये-त्यर्थः। समुपपूर्वकात् 'तुषप्रीतौ' इत्यस्माद्धातोः क्तवतु प्रत्ययान्तं रूपम्। छन्दो-त्सवच्छेदिनः = छन्दाऽनुसारी ( अभिप्रायाऽनुसारी ) य उत्सवः ( क्षणः, दशम-शिरश्छेदनप्रवृत्तिरूप इति भावः ), तं छिनत्ति ( निवारयति ) तच्छीलस्तस्य। तादृशस्य पुरभिदः = त्रिपुरभेदकस्य, शङ्करस्येत्यर्थः ) पुरः = अग्रे, नवोद्भूतशिरः श्रेणी = प्रत्यग्रोत्पन्नमस्तकपङ्क्तौ, शङ्कराऽनुग्रहादिति शेषः। नमन्त्यामपि = प्रणामं कुर्वत्यामपि। यत् = मदीयं दशमं शिरः। क्रोधात् = कोपात्, छेदनोत्सवनिवारण-जनितादिति शेषः। न अनमत् = नम्रं नाऽभवत्। तत् = तादृशं, हराग्रेऽपि न प्रणतमिति भावः। पतत = त्वदन्तिकस्थितं, मम = रावणस्य, दशमं = दशसंख्या-पूरकं, शिरः = मस्तकः, त्वत्पादपाथोजयोः = त्वच्चरणकमलयोः, नमत्=नमस्कारं कुर्वत्, अव्याजं = निष्कपटं यथा स्यात्तथा, प्रेमाऽऽतुरं = प्रणयाकुलं सत्, भवतीं= त्वां, याचते = प्रार्थयते, प्रणयमिति शेषः। अत्रोपमाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

सीतेति। संस्कृतं = संस्कृतभाषाम्। स्त्रीत्वात्सीतायाः प्राकृतभाषाया व्यव-हार्यत्वेऽपि—'बालानां षण्ढकानां च नीचग्रहविचारिणाम्।
उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित् ॥' ( सा० द० )
इति नियमेनाऽत्र सीतायाः संस्कृतसमाश्रयणं बोध्यम्।

निजे पाणाविति। रघुपतिः निजे पाणौ गुञ्जन्मधुपं कमललतिकाबालमुकुलं कृत्वा ययोः अवतंसं चक्रे। इमौ मे कर्णौ इदं वचनम् आकर्ण्य अपि कथं न विशी-र्णौ ? वा अन्तः कुटिलयोः इदं चरितं युक्तम् इत्यन्वयः।

रघुपतिः = रामचन्द्रः, निजे = स्वकीये, पाणौ = हस्ते, गुञ्जन्मधुपं = शब्दायमान-

---

वैसा यह मेरा दशवां शिर तुम्हारे चरणकमलोंमें झुककर निष्कपट रूपसे प्रेमसे आकुल होकर तुमसे याचना कर रहा है ॥ २५ ॥

सीता—( संस्कृतका आश्रय कर )

रघुपतिने अपने हाथमें गुञ्जन करनेवाले भ्रमरोंसे युक्त कमललताके नये कुड्मलको

अपीमौ कर्णौ मे वचनमिदमाकर्ण्य न कथं
विशीर्णौ, युक्तं वा चरितमिदमन्तः कुटिलयोः ॥ २६ ॥

रावणः—अयि जानकि ! अवलोकनमात्रेणापि तावन्मां सम्भावय ।

सीता—अयि निशाचर ! एतावत्प्रार्थनाभङ्गलाघवात् कथं राघवादपि न बिभेषि ।

रावणः—अये ! क एष राघवो नाम, यं किल जनो राम इति जल्पति ? ( विहस्य ) ।

कामः कियानसिलतानिहितैकबाहु-
क्रीडार्दितत्रिभुवनस्य दशाननस्य ।

---

भ्रमरं, कमललतिकाबालमुकुलं = कमललतिकायाः ( पद्मलतेः, 'बकुललति-केति पाठान्तरम् ; तत्र केसरलतिकेत्यर्थः ) बालमुकुलम् ( प्रत्यग्रकुड्मलम् ), कृत्वा = विधाय, आदायेत्यर्थः । ययोः = मत्कर्णयोः, अवतंसं = भूषणं, चक्रे = कृतवान् । तादृशौ इमौ = एतौ, मे = मम, कर्णौ = श्रोत्रे, इदं = सम्प्रति रावणोक्तं, वचनं = भाषितम् , आकर्ण्य = श्रुत्वा, अपि, कथं = केन प्रकारेण, न विशीर्णौ = न विदीर्णौ, पक्षान्तरेण तयोर्विशरणाऽभावं प्रतिपादयति—युक्तमिति । वा = अथवा, अन्तः = अभ्यन्तरे, कुटिलयोः = वक्रयोः, कर्णयोरनयोरिति शेषः । इदं = विद्यमानं, चरितम् = आचरणं, विशरणाऽभावरूपमिति भावः । युक्तम् = उचितम् , यौ मदीयौ कर्णौ पुरा रामचन्द्रकरकमलाभ्यामलङ्कृतौ, साम्प्रतं तावेव कर्णौ मदनुनयरूपं रावण-दुर्वचनं श्रुत्वाऽपि अन्तःकुटिलत्वादेव विदीर्णौ नैव संजाताविति भावः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासाऽलङ्कारः । शिखरिणीवृत्तम् ॥ २६ ॥

काम इति । असिलतानिहितैकबाहुक्रीडाऽर्दितत्रिभुवनस्य दशाननस्य कामः कियान् ? हे सुमुखि ! अयं रामस्तु केवलं त्वदर्थे निशितैः शरौघैः न चिरात् मां हन्ति, हन्त ! इत्यन्वयः ।

---

लेकर जिनमें भूषण पहनाया था । ऐसे मेरे ये ही कान रावणके ऐसे वचनको सुन कर भी क्यों विदीर्ण नहीं हुए ? अथवा भीतर कुटिल होनेवाले इनका ऐसा होना ठीक ही है ॥२६॥

रावण—हे सीते ! दर्शनमात्रसे भी मुझे संभावित कर लो )

सीता—रे राक्षस ! प्रार्थनाभङ्गके लाघवसे और राघवसे भी तू क्यों नहीं डरता है ?

रावण—अरे ! यह राघव नामका कौन है ? जिसे लोग 'राम' कहते हैं, वही है क्या ? (हंस कर) खड्गलतामें रक्खे गये एकमात्र बाहुकी क्रीडासे त्रिभुवनको पीडित

रामस्तु केवलमयं सुमुखि ! त्वदर्थे
मां हन्ति हन्त ! न चिराच्छिशितैः शरौघैः ॥ २७ ॥

सीता—सत्यमेतत् ।

रावणः—( स्वगतम् ) कथमन्यदेव किमप्युक्तवानस्मि ? (तदेव विपरीतं पठित्वा ) अयि जानकि, तावन्मां जीवय नयनामृतेन ।

सीता—तदा त्वामपि लङ्केश ! विलोकयिष्यति जानकी ।

रावणः—( सप्रत्याशम् ) तत्कथय समयम् । अयं हि—

---

असिलतानिहितैकबाहुक्रीडाऽर्दितत्रिभुवनस्य = असिलतायां ( खड्गलतायाम् ) निहितः ( स्थापितः ) च एकबाहुः ( अद्वितीयभुजः ) तस्य क्रीडया ( खेलया ) अर्दितं ( पीडितम् ) त्रिभुवनं ( त्रिलोकी ) येन, तस्य । तादृशस्य मम दशाननस्य= दशमुखस्य, रावणस्य, कामः = मन्मथः, कियान् = किंपरिमाण अत्र कामस्थाने 'राम' पदस्य पूर्वं च परत्र 'रामस्त्वि'त्यत्र 'कामस्त्वि'त्यस्य पाठ्यत्वेऽपि कामावेशवशाल्लुप्तविवेकस्य निशाचरप्रवेकस्य प्रमादो बोद्धव्यः । हे सुमुखि = हे सुन्दरि !, अयम् = एषः, रामस्तु = रामचन्द्रस्तु, अत्राऽविवक्षितः काम इति पूर्वमेवोक्तः । केवलं = समग्रं यथा तथा, त्वदर्थे = त्वत्कृते, निशितैः = तीक्ष्णैः, शरौघैः = बाणसमूहैः, नचिरात् = शीघ्रमेव, मां = रावणं, हन्ति=व्यापादयति । हन्तेति खेदद्योतकमव्ययम् । वसन्ततिलकावृत्तम् ॥ २७ ॥

रावण इति । तदेव = पूर्वोक्तमेव, पद्यमिति भावः । विपरीतं = विपर्यस्तम् । कामस्थाने रामः, रामस्थाने च काम इति वैपरीत्येनेति भावः ।

सीतेति । तदा = तस्मिन्काले । त्वयि रामेण हते इति भावः ।

रावण इति । समयं = कालं, त्वत्कर्तृकमत्कर्मकविलोकनसमयमिति भावः ।

---

करनेवाले रावणके लिए काम क्या पदार्थ है ? हे सुन्दरि ! यह राम तो केवल तुम्हारे लिए तीक्ष्ण बाणोंसे शीघ्र ही मुझे विद्धकर रहा है । यह खेदकी बात है ॥ २७ ॥

सीता—यह सच है !

रावण—( मन ही मन ) कैसे मैंने कुछ और ही कह दिया ? ( उसीको विपरीत प्रकारसे पढ़कर ) हे सीते ! मुझे नेत्राऽमृतसे जिलाओ ।

सीता—हे लङ्केश ! जानकी उस समय तुम्हें भी देखेगी ।

रावण—( आशापूर्वक ) तथा वह समय बतलाओ । यह—

मन्दोदरीमपि विमुञ्चति राज्यमेत-
दप्युन्मदं तव पदाब्जतले करोति।
किं जल्पितेन बहुना सुमुखि! त्वदर्थे
स्वान्युच्छिनत्त्यपि शिरांसि पुनर्दशास्यः॥ २८॥

सीता—अपि खद्योतभासापि समुन्मीलति पद्मिनी?

रावणः—(सक्रोधम्) आः पापे! यावत् किल तपनखद्योतयोस्ताव-देवान्तरं रामरावणयोः? यदियं हन्यसे। (इति खड्गमुत्पाटयति)।

---

मन्दोदरीमपि। हे सुमुखि! दशास्यः त्वदर्थे मन्दोदरीम् अपि विमुञ्चति, उन्मदम् एतद् राज्यमपि तव पदाब्जतले करोति; बहुना जल्पितेन किं? स्वानि शिरांस्यपि पुनः उच्छिनत्तीत्यन्वयः।

हे सुमुखि = हे सुन्दरि, सीते!, दशास्यः = रावणः, त्वदर्थे = त्वत्कृते, मन्दोदरी-मपि = स्वसहधर्मिणीमपि, विमुञ्चति = परित्यजति, उन्मदम् = उद्गतहर्षम्, एतत् = इदं, राज्यमपि = राष्ट्रमपि, तव = भवत्याः सीतायाः, पदाब्जतले = चरणकमलतले, करोति = विदधाति। बहुना = अधिकेन, जल्पितेन = भाषितेन, किं = किं प्रयोजनं, स्वानि = स्वकीयानि, शिरांस्यपि = मूर्ध्नोऽपि, पुनः = भूयः, उच्छिनत्ति = उत्कृन्तति।

हे सीते! त्वत्प्रीतिसम्पादनार्थमहं स्वसहचारिणीं परमाऽनुरागिणीं मन्दोदरीं भुजबलसबद्धं राज्यमपि त्यक्तुमुद्यतोऽस्मि। किं बहुना हरप्रसादनार्थं यथा प्राङ्मया स्वशिरांसि कृत्तानि साम्प्रतं त्वदर्थमपि तथा कर्तुं प्रवृत्तोऽस्मीति भावः। अत्रोपमाऽलङ्कारः। वसन्ततिलकावृत्तम्॥ २८॥

सीतेति। खद्योतभासाऽपि = ज्योतिरिङ्गणज्योतिषाऽपि। यथा पद्मिनी ज्योति-रिङ्गणज्योतिषा न विकसति सूर्यभासैव विकसति तथैवाऽहमपि न त्वयि, आर्यपुत्रे श्रीराम एव प्रसीदामीति भावः।

रावण इति। तपनखद्योतयोः = सूर्यज्योतिरिङ्गणयोः।

---

हे सुन्दरी! रावण, तुम्हारे लिये मन्दोदरीको भी छोड़ता है, आनन्दपूर्ण इस राज्यको भी तुम्हारे चरणकमलके नीचे रख देता है। अधिक कहनेसे क्या? अपने शिरोंको भी छिन्न कर देता है॥ २८॥

सीता—क्या जुगनूकी चमकसे भी कमलिनी खिलती है?

रावण—(क्रोधपूर्वक) ओह पापिनी! सूर्य और जुगनूमें जितना फर्क है। राम और रावणमें क्या उतना ही फर्क है? तुझे मारता हूं। (ऐसा कहकर तलवार उठाता है।)

रामः—

हा जानकि ! त्वमधुनासि कथं भवित्री

( सविचिकित्सम् )

धिग्दैवतं तव सुदारुण एव पाकः।

( सक्रोधम् )

आः पाप ! राक्षसकुलाधम, संहृतोऽसि

( ससंभ्रमम् )

हे वत्स, लक्ष्मण ! धनुर्धनुरेष कालः ॥ २६ ॥

---

हा जानकीति। हे जानकि ! हा ! अधुना त्वं कथं भविष्यसीति प्रथमचरणाऽन्वयः।

हे जानकि = हे सीते !, हा = त्वामिति शेषः। तव शोच्यत इत्यर्थः। अधुना = साम्प्रतं, रावणकर्तृकखड्गोत्पाटनकाल इति भावः। त्वं, कथं = केन प्रकारेण, जीविता हता वेति भावः। भवित्री = भाविनी, असि = वर्तसे इति प्रथमचरणव्याख्या।

सविचिकित्सितम् = ससंशयम्।

धिगिति। दैवतं धिक्, तव पाकः सुदारुण एवेति द्वितीयचरणाऽन्वयः।

दैवतं = भाग्यं, धिक्, दैवतस्य निन्द्यत इति भावः। तव = भवतः पाकः = परिणामः, सुदारुण एव = अतिभयङ्कर एव। इति द्वितीयचरणव्याख्या।

आः पापेति। आः पाप ! राक्षसकुलाऽधम ! संहृतोऽसीति तृतीयचरणाऽन्वयः। आ इति कोपद्योतकमव्ययम्। पाप = पापाचार, राक्षसकुलाऽधम = निशाचरवंशाऽपसद !, संहृतः = व्यापादितः, असि = भविष्यसि, 'वर्तमानसामीप्येवर्तमानवद्वे'ति भविष्यदर्थे लट्। त्वं क्षिप्रमेव मया व्यापाद्यस इति भावः। इति तृतीयचरणव्याख्या।

हे वत्सेति। हे वत्स ! लक्ष्मण !! धनुः धनुः। एष काल इति चतुर्थचरणाऽन्वयः।

---

राम—हाय ! जानकी ! तुम अब कैसी होगी ?

( सन्देहपूर्वक )

हे भाग्य ! तुझे धिक्कार है, धिक्कार है, तेरा परिणाम अतिशय भयङ्कर ही है।

( कोपपूर्वक )

ओह ! पापिन् राक्षसवंशमें अधम ! तू मारा जायगा।

( शीघ्रतापूर्वक )

हे वत्स ! लक्ष्मण ! धनु लाओ, धनु लाओ। यह उसका समय है ॥ २९ ॥

लक्ष्मणः—आर्य ! किमिदमैन्द्रजालिकविलोकनादलीकमेव संभ्रम्यते ?

रावणः—अयि जानकि ! अयमसावुदीर्णकरालकरवालः कालभुजङ्गः, तदिदानीमपि दशकण्ठभुजाश्लेषभेषजमनुजानीहि ।

सीता—

विरम विरम रक्षः ! किं मुधा जल्पितेन

स्पृशति नहि मदीयं कण्ठसीमानमन्यः ।

रघुपति-भुजदण्डादुत्पलश्यामकान्ते-

---

हे वत्स = हे वात्सल्य भाजन, लक्ष्मण = मदनुज, धनुः धनुः = कार्मुकं कार्मुकं संभ्रमे द्विरुक्तिः, रावणप्रहारार्थमिति शेषः । एषः = अयं, कालः=समयः, रावणवधस्येति शेषः, नोचेद्रावणखड्गेन सीतायां हतायामस्माकं समस्त उद्योगो व्यर्थः स्यादिति भावः । वसन्ततिलकावृत्तम् ॥ २९ ॥

लक्ष्मण इति । संभ्रम्यते = संभ्रमः क्रियते ।

रावण इति । उदीर्णकरालकरवालः=उदीर्णः ( कोशान्निःसृतः ) करालः (भीषणः) करवालः ( खड्गः )। कालभुजङ्गः = कृष्णसर्पः । दशकण्ठभुजाश्लेषभेषजं = दशकण्ठस्य ( मम रावणस्य ) भुजानां ( बाहूनाम् ) य आश्लेषः ( आलिङ्गनम् ) स एव भेषजम् ( औषधम् ), तत् । मदालिङ्गनमेव कोशनिःसृतकरालकरवालरूपकृष्णसर्पस्यौषधमिति भावः । मयि प्रणयप्रकाशनेन स्वप्राणत्राणं भविष्यतीत्याकूतम् ।

विरम विरमेति । हे रक्षः ! विरम विरम । मुधा जल्पितेन किम् ? हे दशमुख ! उत्पलश्यामकान्ते रघुपतिभुजदण्डात् वा निष्कृपात् भवदीयात् कृपाणात् अन्यो मदीयां कण्ठसीमानं नहि स्पृशतीत्यन्वयः ।

हे रक्षः=हे राक्षस रावण !, विरम विरम=विरतो भव विरतो भव, विरतो भव, वाग्व्यापारादिति शेषः । तूष्णीको भवेति भावः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् , संभ्रमे द्विरुक्तिः । मुधा = व्यर्थप्रायेण, जल्पितेन = भाषितेन, किं = किं फलं स्यात् , न किमपीति भावः ।

हे दशमुख=हे दशानन रावण !, उत्पलश्यामकान्तेः=उत्पलमिव ( नीलकमलमिव ) श्यामा ( नीला ) कान्तिः ( छविः ) यस्य, तस्मात् । रघुपतिभुज-

---

लक्ष्मण—आर्य ! ऐन्द्रजालिक कार्य देखनेसे क्यों आप व्यर्थ ऐसी उतावली कर रहे हैं ?

रावण—हे सीते ! मियानसे निकाला गया यह भीषण खड्ग काल सर्प है इसलिए अभी भी रावणके बाहुओंका आलिङ्गनरूप औषध लेनेके लिए अनुमति दो ।

सीता—हे राक्षस ! तू चुप रह, चुप रह । व्यर्थ बकवादसे क्या लाभ है ? हे रावण ! नीलकमलके समान श्याम राघवके बाहुदण्डसे अथवा करुणाशून्य तेरी तलवारसे भिन्न

दशमुख ! भवदीयान्निष्कृपाद्वा कृपाणात् ॥ २० ॥

रामः—अहह !!!

विधिरकरुणः, स्फीतं स्फीतं तमः परिजृम्भते
जलधिसलिले मग्नं विश्वं, युगं परिवर्त्तते ।
कुवलयदलस्रक्संश्लेषोत्सवैकपदे पदं
यदयमदयः सीताकण्ठे करोति कृपाणकः ॥ २१ ॥

दण्डात् = राघवबाहुदण्डात्, वा = अथवा, निष्कृपात् = करुणाशून्यात्, भवदीयात् = त्वदीयात्, कृपाणात् = खड्गात्, 'अन्य' पदेन योगे 'अन्यारादितरर्तेदिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते' इति पञ्चमी । अन्यः = अपरः, मदीयां = मत्सम्बन्धिनीं, कण्ठसीमानं = गलभागं 'सीमसीमे स्त्रियामुभे ।' इत्यमरः । नहि स्पृशति = नाऽऽमर्शति । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । हे रावण ! अहं तावत् स्वकण्ठभागेन (आलिङ्गनव्यतिकरे) कारुणिकरामभुजदण्डं तदभावे निष्करुणं त्वदीयं कृपाणं स्पृशामि नाऽपरमतस्त्वं वृथावाग्व्यापाराद्विरतो भवेति भावः । अत्र विकल्पाऽलङ्कारः सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः । कान्ताचित्तेऽधरे वाऽपि कुरुध्वं वीतरागिताम् ॥' इति । मालिनीवृत्तम् ॥ २० ॥

विधिरिति । यत् अदयः अयं कृपाणकः कुवलयदलस्रक्संश्लेषोत्सवैकपदे सीताकण्ठे पदं करोति, (ततः) । विधिः अकरुणः । स्फीतं स्फीतं तमः परिजृम्भते । विश्वं जलधिसलिले मग्नम् । युगं परिवर्तते इत्यन्वयः ।

यत्, अदयः = दयाशून्यः, अयम् = एषः, कृपाणकः = कुत्सितखड्गः, कुत्सितः कृपाणः 'कुत्सिते' इति कः । कुवलयदलस्रक्संश्लेषोत्सवैकपदे = कुवलयदलानां (कमलपत्राणाम्) या स्रक् (माला) तस्याः संश्लेषः (सम्बन्धः) तेन य उत्सवः (महः) तस्यैकपदे (एकमात्रस्थाने), तादृशे सीताकण्ठे = जानकीगले, पदं = स्थानं, करोति = विदधाति, ततः—विधिः = विधाता, अकरुणः = निर्दयः, अस्तीति शेषः । एवं च—स्फीतम् स्फीतम् = अतिशयनिबिडं, तमः = आपद्रूपोऽन्धकारः, परि-

कोई भी मेरी कण्ठसीमाका स्पर्श नहीं कर सकता है ॥ २० ॥

राम—अहह !

जो कि निर्दय यह कुत्सित खड्ग कमलपत्रोंकी मालाके सम्बन्धसे उत्सवका एकमात्र स्थान सीताके कण्ठमें स्थान ले रहा है, अतः ब्रह्माजी निर्दय हैं । अत्यन्त निबिड आपद्रूप अन्धकार प्रादुर्भूत हो रहा है । संसार समुद्रजलमें डूब रहा है और युगका परिवर्तन हो रहा है ॥ २१ ॥

( पुनर्विभाव्य ) हन्त भोः !!

चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो
नव्यां वल्लीं दवदहनकश्चान्दनीं दन्दहीति ।
अप्युन्मत्तः कुवलयमयीं मालिकामालुनीते ?
मूलादुन्मूलयति नलिनीं दुष्टहस्तीकरेण ॥ ३२ ॥

सीता—

चन्द्रहास ! हर मे परितापं, रामचन्द्रविरहानलजातम् ।

---

जृम्भते = प्रादुर्भवति । विश्वं = संसारः, जलधिसलिले = समुद्रजले, मग्नं = लीनमिति भावः । तथैव—युगं = पुण्यबहुलं त्रेतायुगं, परिवर्तते = पापोन्मेषाद्द्वापरे कलौ वा परिवृत्तं भवतीति भावः । सीताया एवंविधया दुरवस्थया युगमेव परिवृत्तमिति मां प्रतिभातीति भावः । हरिणीवृत्तम् ॥ ३१ ॥

चान्द्रीमिति । दारुणः सैंहिकेयः दशनैः चान्द्रीं लेखां दशति । दवदहनकः चान्दनीं नव्यां वल्लीं दन्दहीति । उन्मत्तः कुवलयमयीं मालिकाम् आलुनीते अपि ? दुष्टहस्ती करेण नलिनीं मूलात् उन्मूलयतीत्यन्वयः ।

दारुणः = भीषणः, सैंहिकेयः = सिंहिकानन्दनः, राहुरिति भावः । 'स्त्रीभ्यो ढक्' इति ढक् । दशनैः = दन्तैः, चान्द्रीं = चन्द्रसम्बन्धिनीं, लेखां = रेखां, दशति = चर्वयति । दवदहनकः = कुत्सितो वनहुताशनः, चान्दनीं = चन्दनस्य, नव्यां = नूतनां, वल्लीं = लतां, दन्दहीति = अतिशयेन दहति । उन्मत्तः = उन्मादयुक्तो जनः, कुवलयमयीम् , उत्पलनिर्मितां, विकारार्थे मयट् । मालिकां = स्रजम् , आलुनीते अपि = समन्ताच्छिन्ने किम् । अपिः प्रश्नार्थकः । दुष्टहस्ती = मत्तगजः, करेण = शुण्डादण्डेन, नलिनीं = कमलिनीं, मूलात् = मूलप्रदेशादेव, उन्मूलयति = उत्खातयति । रावणकर्तृकोऽयं सीतावधः राहुकर्तृकचन्द्रलेखाग्रासोपमो दवाग्निकर्तृकचन्दनलतादहनसम उन्मत्तकर्तृककमलमालिकालवनसदृशो दुष्टहस्तिकर्तृककमलिन्युन्मूलनसन्निभ इति भावः । एवं च मालारूपेण वाक्यार्थानामैक्यान्मालारूपनिदर्शनाऽलङ्कारः । मन्दाक्रान्तावृत्तम् ॥ ३२ ॥

चन्द्रहासेति । हे चन्द्रहास ! रामचन्द्रविरहाऽनलजातं मे परितापं हर । हि

---

( फिर विचारकर ) हाय ! अरे !

भीषण राहु दाँतोंसे चन्द्ररेखाको चबा रहा है । कुत्सित दवानल चन्दनकी नयी लताको अतिशय ही जला रहा है । क्या पागल कमलोंकी मालाको छेदन कर रहा है ? दुष्ट हाथी सूँड़से कमलिनीको जड़से ही उखाड़ रहा है ॥ ३२ ॥

सीता—हे चन्द्रहास ( खड्ग ) ! रामचन्द्रके वियोगाऽनलसे उत्पन्न मेरे सन्तापको

त्वं हि कान्तिजितमौक्तिकचूर्णं, धारया वहसि शीतलमम्भः ॥२३॥

रावणः—कः कोऽत्र भोः ! सत्वरं मम करे कपालपात्रमर्प्यतां येनास्याः कण्ठरुधिरं प्रतीच्छामि। (इत्यशोकविटपान्तराले हस्तं प्रसार्य) कथं न्यस्तमेव केनापि मम करतले कपालम्। (विलोक्य) (सचमत्कारम्) अये न कपालमेतत्, किन्त्वशस्त्रच्छिन्नं शिर एव कस्यापि (विमृश्य) कस्य पुनरिदम् ? नूनमक्षकुमारस्य। (इति मूर्च्छितः पतति)।

त्रिजटा—अयि लङ्केश्वर ! समाश्वसिहि समाश्वसिहि।

रावणः—(समाश्वस्य) नूनमिदं तस्य दुष्टकपेर्विजृम्भितम्। तेन

---

हेकान्तिजितमौक्तिकचूर्ण ! त्वं धारया शीतलम् अम्भो वहसीत्यन्वयः। हे चन्द्रहास=हे खड्ग !, रामचन्द्रविरहाऽनलजातं=रामचन्द्रस्य (राघवधुरन्धरस्य) यो विरहः (वियोगः) एव अनलः (अग्निः) तज्जातं (तदुत्पन्नम्), मे = मम सीतायाः, परितापं = सन्तापं, हर = दूरीकुरु, मन्मस्तकच्छेदनेन रामवियोगजनितं कष्टमपनयेति भावः। चन्द्रहासस्य रामविरहपरितापहारकत्वं समर्थयते त्वं हीति। हि = यतः, हे कान्तिजितमौक्तिकचूर्णकान्त्या (स्वद्युत्या) जितम् (अधरीकृतम्) मौक्तिकचूर्णं (मुक्तारजः) येन स तत्सम्बुद्धौ, तादृश हे चन्द्रहासेति भावः। त्वं=चन्द्रहासः, धारया = तीक्ष्णाऽग्रभागेन, शीतलं=शीतं, विरहतापपरिहारकमिति भावः। अम्भः= जलं, वहसि = धारयसि। अग्रभागेन शीतलजलवाहकस्य ते विरहाऽनलजातपरितापहरणं युक्तमिति भावः। अत्राऽर्थान्तरन्यासोऽलङ्कारः। स्वागतावृत्तम् ॥ २३ ॥

रावण इति। कपालपात्रं = नरकर्परभाजनम्। प्रतीच्छामि = गृह्णामि। अशस्त्रच्छिन्नं=शस्त्रेणाऽच्छिन्नं, मर्दितमिति भावः। दुष्टकपेः = दूषितवानरस्य, हनूमत इत्यर्थः।

---

मिटा दो, क्योंकि अपनी कान्तिसे मुक्ताचूर्णको जीतनेवाले ! तुम अपनी धारा (नोक) से शीतल पानीको धारण करते हो ॥ २३ ॥

रावण—यहाँ कौन है ? मेरे हाथमें शीघ्र कपालपात्र दे दो, जिससे इसके कण्ठका रक्त ले लेता हूँ। (ऐसा कहकर अशोककी शाखाके बीचमें हाथ फैलाकर) कैसे किसीने मेरे हाथमें कपाल रख ही दिया। (देखकर आश्चर्यपूर्वक) अरे ! यह कपाल नहीं है, बल्कि किसीका विना शस्त्रके काटा गया मस्तक ही है। (विचार कर) यह किसका है ? निश्चय ही अक्षकुमारका है ! (ऐसा कहकर मूर्च्छित होकर गिर पड़ता है।)

त्रिजटा—लङ्केश्वर ! आप समाश्वस्त हों, समाश्वस्त हों।

रावण—(होशमें आकर) निश्चय यह उस दुष्ट बन्दरकी करतूत है। इसलिए पहले

तमेव तावदग्नौ पातयामि ।

(इति निष्क्रान्तः)

राम-लक्ष्मणौ—(सहर्षम्) अहो ! संविधानवैदग्धी !

त्रिजटा—(सीतामालिङ्ग्य) सखि ! पुण्येन जीवितासि ।

सीता—अपुण्येनेति भण । (अपुण्णेणेति भणिअ)

त्रिजटा—कथमिव ?

सीता—कथं पुनस्तदपुण्यं न भवति यत्किल रामचन्द्रविरहतापनिर्वापण्या चन्द्रहासधारयोपेक्षितास्मि । तत्किमनेन जीवितेन ? इह दारुसञ्चयेऽग्निं प्रज्वालय यत्रेमान्यङ्गानि शीतलयामि । (कहं उण तं अपुण्णं ण होइ जं किर रामचन्दविरहतावणिव्वावणीए चन्दहासधाराए उवेक्खिदह्मि । ता किं इमिणा जीविदेण । इह दारुसंचअम्मि अग्गिं पज्जालेहि जत्थ इमाइं अङ्गाइं सीअलअम्मि)

त्रिजटा—शान्तं पापम्, नन्वचिरादेव निजाङ्ककानां—

हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे ।

---

रामलक्ष्मणाविति । संविधानवैदग्धी = रचनानैपुण्यम् ।

सीतेति । रामचन्द्रविरहतापनिर्वापण्या = रामवियोगसन्तापशमयित्र्या । यत्र = अग्नौ ।

हिमकरेति । अन्वयस्तु स्पष्टः । हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे = हिमकरस्य (चन्द्रस्य) किरणैः (मयूखैः) करम्बितं (मिश्रितम्) यन्मरकतमयं

---

उसीको गिराता हूं ।

(ऐसा कहकर निकलता है)

राम और लक्ष्मण—(हर्षपूर्वक) अहो ! कैसी रचनाकी निपुणता है ।

त्रिजटा—(सीताको आलिङ्गन कर) सखि ! तुम पुण्यसे जी रही हो ।

सीता—'अपुण्यसे जी गई' ऐसा कहो ।

त्रिजटा—क्यों ?

सीता—कैसे यह अपुण्य नहीं है, जो कि रामचन्द्रके वियोगसन्ताप हटाने वाली तलवारकी धारा (नोक) से मैं उपेक्षित हो गई हूं । तब इस जीवनसे क्या लाभ है ? यहां लकड़ीके ढेरमें आग जला दो जिसमें इन अङ्गोंको शीतल कर देती हूं ।

त्रिजटा—पाप निवृत्त हो । शीघ्र ही अपने अङ्गोंको—चन्द्रकिरणोंसे मिश्रित मरकत-

मलयजपरागरजसि रामोरसि तापमपहरसि ॥ २४ ॥

सीता—हला, किमनेनालीकजल्पितेन सर्वमेवानलप्रवेशेन व्यवसितास्मि । तदुपनय मेऽङ्गारखण्डकम् । ( हला ! किं इमिणा अलीअजप्पिदेन, सव्वं जेव्व अणलप्पवेसेण विवसिदह्मि । ता उवणेहि मे अङ्गालखण्डअम् )

रामः—हन्त भोः ! ! कथमपि शार्दूलमुखान्मुक्तायाः पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वा भङ्गीमङ्गीकृतवती जानकी ।

त्रिजटा—( निर्गत्य, प्रविश्य च ) असुलभानलोऽयं प्रदेशः ।

रामः—( सहर्षम् ) त्रिजटे, दिष्ट्या रक्षितस्त्वया रामः ।

सीता—( संस्कृतमाश्रित्य, अशोकं प्रति )

---

( गारुत्मतमणिमयम् ) पीनपट्टकम् ( दीर्घपाषाणः ) तत्प्रतिमे ( तत्सदृशे ), शीतलमरकतसदृश इति भावः । मलयजपरागरजसि = मलयजपरागः ( चन्दनचूर्णम् ) एव रजः ( लेपनद्रव्यम् ) यस्मिंस्तस्मिन् , चन्दनचर्चित इति भावः । तादृशे रामोरसि = राघववक्षःस्थले, तापं = विरहजनितं सन्तापम् , अपहरसि = दूरीकरोषि, 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । चन्द्रकिरणमिश्रितशीतलमरकतशिलासदृशे चन्दनचर्चिते विस्तीर्णे रामवक्षःस्थले आलिङ्गनेन शीघ्रमेव त्वं विरहजनितं सन्तापमपहरिष्यसीति भावः । उपमाऽलङ्कारः । आर्यावृत्तम् ॥ २४ ॥

राम इति । शार्दूलमुखात् = व्याघ्राननात् । शबरवागुरां = किरातमृगबन्धनीम् । भङ्गीं = चरित्रम् ।

त्रिजटेति । असुलभाऽनलः=असुलभः (दुष्प्राप्यः) अनलः (अग्निः) यस्मिन्सः ।

---

मय दीर्घ पाषाणके सदृश, चन्दन चूर्णरूप लेपनद्रव्यसे युक्त रामचन्द्रके वक्षःस्थलमें ( आलिङ्गन कर ) सन्ताप मिटाओगी ॥ २४ ॥

सीता—सखि ! इस झूठ बोलनेसे क्या लाभ ? आगमें प्रवेश करनेका व्यवसाय कर चुकी हूं । इसलिए मुझे आग ला दो ।

राम—हाय ! किसी प्रकार व्याघ्रके मुखसे छूटकर भी फिर शबरके पाशमें पड़ी हुई मृगीके चरित्रको जानकीने अङ्गीकार किया ।

त्रिजटा—( बाहर जाकर और फिर भीतर आकर ) इस स्थानमें आग सुलभ नहीं है ।

राम—( हर्षपूर्वक ) त्रिजटे ! तुमने भाग्यसे रामकी रक्षा की ।

सीता—( संस्कृतका आश्रय कर ) ( अशोकसे )

कुरु सकरुणं चेतः श्रीमन्नशोकवनस्पते
दहनकणिकामेकां तावन्मम प्रकटीकुरु ।
ननु ! विरहिणां सन्तापाय स्फुटीकुरुते भवा-
न्नवकिसलयश्रेणीव्याजात्कृशानुशिखावलिम् ॥ ३५ ॥

( विलोक्य सहर्षम् ) हला ! पश्य पश्य, निपतितं तावदस्य शिखराद-ङ्गारखण्डकम् । ( हला ! पेक्ख पेक्ख । णिवडिदं दाव इमस्स सिहरादो अङ्गार-खण्डअम् ) ( इत्युपसृत्य ग्रहीतुमिच्छति )

रामः—

अये ! कथमशोकोऽपि ममायं शोकतां गतः ।

---

कुरु सकरुणमिति । हे श्रीमन् अशोकवनस्पते ! चेतः सकरुणं कुरु । तावत् एकां दहनकणिकां मम प्रकटीकुरु । ननु ! भवान् विरहिणां सन्तापाय नवकिसलयश्रेणी व्याजात् कृशानुशिखावलीं स्फुटीकुरुते इत्यन्वयः ।

हे श्रीमन् = शोभासम्पन्न !, अशोकवनस्पते = अशोकवृक्ष, चेतः = चित्तं, सकरुणं = दयायुक्तं, कुरु = विधेहि । दयाप्रदर्शनप्रकारमाह—दहनकणिकामिति । तावत्, एकाम् = एकसंख्यकां, दहनकणिकाम् = अनलकणं, मम = सीतायाः, पुरत इति शेषः । प्रकटीकुरु=प्रदर्शय । अशोकस्य सदहनत्वमुपपादयति—नन्विति । नन्वित्यामन्त्रणे, हे अशोक ! भवान्, विरहिणां = वियोगिनां, सन्तापाय=दाहाय, नवकिसलयश्रेणीव्याजात् = प्रत्यग्रपल्लवपङ्क्तिव्यपदेशात्, कृशानुशिखावलीं = दहन-ज्वालाश्रेणीं, स्फुटीकुरुते = प्रकटीकरोति । यतस्त्वं प्रत्यग्रपल्लवकञ्चुकेन वियुक्तजन-संतापाय वह्निज्वालां प्रकाशयसि, अतो मत्कृते सदयमेकं वह्निकणं प्रदर्शयेति भावः । अत्र कैतवाऽपह्नुतिरलङ्कारः, सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'कैतवं व्यज्य-मानत्वे व्याजाद्यैर्निह्नुते पदे । निर्यान्ति स्मरनाराचाः कान्तादृक्पातकैतवात् ॥' इति । हरिणी वृत्तम् ॥ ३५ ॥

अये कथमिति । अये ! अयम् अशोकोऽपि कथं मम शोकतां गत इति पूर्वा-र्द्धाऽन्वयः ।

---

श्रीमन् हे अशोक वृक्ष ! चित्तको करुणा पूर्ण बनाओ । मेरे सामने एक अग्निकणको प्रकट करो । हे अशोक ! तुम वियोगियोंके सन्तापके लिए नयी पल्लवपङ्क्तिके बहाने अग्निज्वालाकी पङ्क्तिको स्पष्ट कर देते हो ॥ ३५ ॥

( देखकर हर्षके साथ ) सखि ! देखो देखो । इसकी चोटीसे अग्निकण गिर पड़ा है । ( ऐसा कहकर समीप जाकर लेना चाहती है । )

राम—अरे ! यह अशोक भी कैसे मेरे लिए शोकभावको प्राप्त हो गया है ? ।

लक्ष्मणः—आर्य ! अनुपपन्नमिदं यत्किल तरुशिखरमङ्गारखण्डक-मुद्गिरति।

रामः—

किं न सम्पादयेद्वत्स ! रामस्य विधिवैधुरी ॥ २६ ॥

( सीताऽङ्गारखण्डं हस्तेनादत्ते )

रामः—

अनल ! नलिनकोमले करेऽस्याः
स्फुरदरुणोत्पलकुड्मलोपमः स्याः ।

( विमृश्य )

---

अये इत्यामन्त्रणे। हे लक्ष्मण !, अयं = निकटस्थः, अशोकोऽपि = अशोकनाम्ना प्रसिद्धस्तरुरपि, कथं = केन प्रकारेण, मम = रामस्य, कृत इति शेषः। शोकतां = शोकहेतुताम्, अङ्गारखण्डोद्गिरणेनेति भावः। गतः = प्राप्तः। अशोकोऽपि शोकतां गत इति विरोधः। इति पूर्वार्द्धव्याख्या।

किं नेति। हे वत्स ! रामस्य विधिवैधुरी किं न सम्पादयेदित्युत्तरार्धान्वयः।

हे वत्स = हे वात्सल्यभाजन लक्ष्मण !, रामस्य = मम, विधिवैधुरी = भाग्य-विधुरता, दैवप्रतिकूलतेति भावः। विधुरस्य भावो वैधुरी, 'गुणवचनब्राह्मणादिभ्यः कर्मणि चे'ति ष्यञ्, 'हलस्तद्धितस्ये'ति यलोपः, षित्वात् 'षिद्गौरादिभ्यश्चे'ति ङीष्। किं न सम्पादयेत् = किं न निष्पादयेत्। विधौ प्रतिकूले सत्यसम्भाव्यमपि सम्भाव्यं भवतीति भावः। इत्युत्तरार्द्धव्याख्या। अनुष्टुब्वृत्तम् ॥ २६ ॥

अनलेति। हे अनल ! नलिनकोमले अस्याः करे स्फुरदरुणोत्पलकुड्मलोपमः स्याः। या तव चरितम् प्रचितं कुतोऽस्ति। ननु ! भुवने कृष्णवर्त्मा विदितोऽसी-त्यन्वयः।

हे अनल = हे वह्ने ! नलिनकोमले = कमलमृदुले, अस्याः = सीतायाः, करे = हस्ते, स्फुरदरुणोत्पलकुड्मलोपमः = स्फुरन् ( विकसन् ) य अरुणोत्पलकुड्मलः

---

लक्ष्मण—आर्य ! वृक्षकी चोटी जो अग्निकणको उगलती है यह अनहोनी बात है।

राम—हे वत्स ! रामकी भाग्यप्रतिकूलता क्या नहीं करेगी ? ॥ २६ ॥

( सीता अग्निकणको हाथसे लेती हैं। )

राम—हे अग्ने ! कमलके समान कोमल सीताके हाथमें विकसित होनेवाले रक्त कमलके मुकुलके समान बन जाओ।

( विचार कर )

चरितमुचितमस्ति वा कुतस्ते,
नतु ! भुवने विदितोऽसि कृष्णवर्त्मा ॥ ३७ ॥

सीता—( हस्ते गृहीत्वा सविषादम् ) कथं ममापुण्येनाग्निरपि शीतलः संवृत्तः । ( निपुणं निरूप्य सचमत्कारम् ) अये ! अङ्गारखण्डकं न खल्वेतत्, अपि पुनः पद्मरागरत्नखण्डकम् । ( कहं मह अपुण्णेण अग्गीवि सीअलो संवुत्तो । अये, अङ्गालखण्डअं ण हु एदं अवि उण पम्मराअरअणखण्डअम् )

त्रिजटा—अये ! पुण्यवतामग्निरेव रत्नं भवतीति प्रवादः सत्य एव संवृत्तः ।

सीता—( पुनर्विलोक्य ) कथं सा रत्नमुद्रिका ( कहं सा रअणमुद्दिआ ) ( पुनः संस्कृतमाश्रित्य, मुद्रिकां प्रति )

---

( रक्तकमलमुकुलः ) स उपमा ( सादृश्यं, शीतलकोमलत्वरूपमिति भावः ) यस्य सः, तादृशः । स्याः = भवेः । सीतादाहं मा कार्षीरिति भावः । वा = अथवा, तव = अनलस्य, चरितं = चरित्रम्, आचरणीयमिति शेषः । उचितं = युक्तरूपं, कुतः = कुत्र, सार्वविभक्तिकस्तसिः । अस्ति = वर्तते । अनलचरितानौचित्यं प्रतिपादयति—नन्विति । नन्वित्यामन्त्रणे । हे अनल ! भुवने = लोके, कृष्णवर्त्मा = कृष्णवर्त्मेति नाम्नेति भावः । विदितोऽसि = ज्ञातोऽसि, यतस्त्वं दहनेन स्वकीयं वर्त्म कृष्णवर्णं करोषि, तत एव कृष्णवर्त्मेति नाम्ना भुवनविदितोऽसि, अतस्त्वं सीतादाहं मा कार्षीरिति सम्भावना नाऽस्तीति भावः । अत्रोपमाऽलङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ३७ ॥

सीतेति । पद्मरागरत्नखण्डकं = शोणरत्नखण्डकम् ।

त्रिजटेति । प्रवादः = जनरवः ।

---

अथवा तुम्हारा चरित्र उचित कहां है, जो कि लोकमें 'कृष्णवर्त्मा' इस नामसे प्रसिद्ध हो ॥ ३७ ॥

सीता—( हाथमें लेकर खेदपूर्वक ) कैसे मेरे पापसे आग भी ठण्ढी हो गई ? ( अच्छीतरह देखकर आश्चर्यके साथ ) अरे ! यह अग्निकण नहीं है बल्कि पद्मरागका खण्ड है ।

त्रिजटा—अरे ! धर्मात्माओंको अग्नि भी रत्न हो जाता है यह लोगोंकी कहावत सच्ची हो गई ।

सीता—( फिर देखकर ) कैसे वही रत्नमुद्रिका है । ( फिर संस्कृतका आश्रय कर अंगूठीसे )

या शैशवावधि मनोरमरामचन्द्र-
हस्ताङ्गुलिप्रणयिनी सुभगा सुवृत्ता ।
अन्येव सा जनकराजसुता कथं नु
लङ्कामुपागतवती मणिमुद्रिकेयम् ॥ ३८ ॥

( पुनः सादरं कराङ्गुलिकिसलयेन लालयन्ती ) अये रत्नाङ्गुलीयक, अपि तावत्कुशलं सलक्ष्मणयो रामचन्द्रचरणयोः । ( अए रअणङ्गुलीअ, अविदाव कुसलं सलक्खणाणं रामचन्दचलणाणं )

( पटाक्षेपेण प्रविश्य )

हनूमान्—कुशलं देवि ! कुशलम् ।

सीता—अमृतमुख ! कोऽसि त्वम् ? ( अमिअमुह, कोसि तुमम् )

---

या शैशवावधीति । या शैशवाऽवधि मनोरमरामचन्द्रहस्ताऽङ्गुलिप्रणयिनी सुभगा सुवृत्ता अन्या जनकराजसुता इव सा इयं मणिमुद्रिका कथं नु लङ्काम् उपागतवतीत्यन्वयः ।

या = मणिमुद्रिका, शैशवाऽवधि = शिशुकालादारभ्य, मनोरमरामचन्द्रहस्ताऽङ्गुलिप्रणयिनी = मनोरमा ( मनोहरा ) या रामचन्द्रहस्ताऽङ्गुलिः ( रामकरशाखा ) तत्प्रणयिनी ( तत्प्रणययुक्ता, विशेषणमिदं सीतापक्षेऽपि योज्यं, सीताऽपि सहधर्मिणीत्वेन मनोरमरामचन्द्रहस्ताऽङ्गुलिप्रणयिनी ), सुभगा सुन्दरी, सीतापक्षे—सौभाग्यवती, सुवृत्ता = सुवर्तुला, सीतापक्षे—सुचरित्रा, 'वृत्तं पद्ये चरित्रे च'त्यमरः । अतः अन्या = अपरा, जनकराजसुता इव = जानकी इव, सा = तादृशी, इयं = निकटवर्तिनी, मणिमुद्रिका = रत्नखचितम् अङ्गुलीयकम् । कथं = केन प्रकारेण, न्विति वितर्के, लङ्कां = रावणपुरीम् , उपागतवती = उपागता । अत्र श्लेषोपमयोरङ्गाङ्गिभावेन सङ्करः । वसन्ततिलका वृत्तम् ॥ ३८ ॥

---

जो बचपनसे मनोहर रामचन्द्रके हाथकी उंगलीमें प्रेम करनेवाली सुन्दर या सौभाग्यवती गोल या सच्चरित्रवाली दूसरी जानकीके सदृश वही रत्नमुद्रिका कैसे लङ्काको प्राप्त हुई ॥ ३८ ॥

( फिर आदरपूर्वक पल्लवके सदृश हाथकी उंगलीसे सहलाती हुई ) अरी रत्नमुद्रिके ! क्या लक्ष्मणके साथ रामचन्द्रके चरणोंमें कुशल है ?

( परदा हटाकर प्रवेशकर )

हनूमान्—देवि ! कुशल है, कुशल है ।

सीता—अमृतमुख ! तुम कौन हो ?

हनूमान्—

तारापतेरनुचरो रघुनन्दनस्य
दूतः सुतोऽस्मि मरुतः प्रथितो हनूमान् ।
त्वां हन्तुमुद्यतवतो दशकन्धरस्य
न्यस्तं करे निभृतमक्षशिरो मयैव ॥ ३९ ॥

रामः—अहो ! कथं हनूमन्नामधेयस्य मद्बान्धवस्य विलसितमेतत् ।

लक्ष्मणः—अहो ! सचमत्कारता संविधानस्य ।

सीता—अयि भद्रमुख ! कः पुनरयं तारापतिः ! ( अइ भद्दमुह ! को उण इमो ताराबई )

हनूमान्—

यो वालिनः शौर्यनिधेरमित्रं, त्रैलोक्यबन्धोस्तपनस्य सूनुः ।

---

हनूमानात्मपरिचयं ददाति—तारापतेरिति । तारापतेः अनुचरः रघुनन्दनस्य दूतः मरुतः सुतः हनूमान् ( इति ) प्रथितोऽस्मि । त्वां हन्तुम् उद्यतवतो दशकन्धरस्य करे अक्षशिरो मयैव निभृतं न्यस्तमित्यन्वयः ।

तारापतेः=सुग्रीवस्य, अनुचरः=सेवकः, रघुनन्दनस्य=रामचन्द्रस्य, दूतः= सन्देशहरः, मरुतः=वायोः, सुतः=पुत्रः, हनूमान्=हनूमानिति नाम्नेति भावः, प्रशस्तौ हनू यस्य स हनूमान्, प्राशस्त्ये मतुप् । 'शरादीनां चे'ति दीर्घः । प्रथितः= प्रख्यातः, 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुताः ।' इत्यमरः । अस्मि=भवामि, अहमिति शेषः । एवं च—त्वां=भवतीं, हन्तुं=व्यापादयितुं, करवालेनेति शेषः । उद्यतवतः=उद्यमं कुर्वतः, दशकन्धरस्य=दशग्रीवस्य, रावणस्येत्यर्थः । करे=हस्ते, अक्षशिरः=अक्षयकुमारमस्तकः, मयैव=हनूमतैव, निभृतं=प्रच्छन्नं यथा तथा न्यस्तं=क्षिप्तम् । वसन्ततिलका वृत्तम् ॥ ३९ ॥

सीतेति । भद्रमुख=कल्याणपूर्णाननेति भावः । प्रियोदन्तसूचकत्वेनेयं सम्बुद्धिः ।

यो वालिन इति । यः शौर्यनिधेः वालिनः अमित्रं, त्रैलोक्यबन्धोः तपनस्य सूनुः

---

**हनूमान्**—तारापति ( सुग्रीव ) का सेवक, रामचन्द्रका दूत और वायुका पुत्र मैं, हनूमान् नामसे प्रख्यात हूं । आपको मारनेके लिए तत्पर रावणके हाथमें अक्षकुमारका शिर मैंने ही प्रच्छन्नरूपसे रख दिया था ॥ ३९ ॥

राम—अहो ! कैसे हनूमान् नामके मेरे बन्धुका ही यह काम निकला ।

लक्ष्मण—रचनाका कैसा चमत्कार है !

सीता—हे भद्रमुख ! ये तारापति कौन हैं ?

हनूमान्—जो महावीर वालीके शत्रु, त्रैलोक्यके बान्धव सूर्यके पुत्र और रामचन्द्रके

रामस्य पादाब्जतलाभिवर्त्ती सुग्रीवनामा कपिचक्रवर्त्ती॥ ४० ॥

सीता—केन पुनर्नरवानराणामीदृशं सखित्वं निर्मितम्? ( केण उण णरवाणराणं एरिसं सखित्तणं णिम्मिदम्? )

हनूमान्—रामबाणेनैव,

वालिने विसृजता धनुरङ्कं नाकलोकललनाकुचकेलिः।
तारया सममदीयत चास्मै वानरेन्द्रपदवीमणिमौलिः ॥ ४१ ॥

---

रामस्य पादाब्जतलाऽभिवर्ती सुग्रीवनामा कपिचक्रवर्तीत्यन्वयः।

यः = जनः, शौर्यनिधेः = शूरताशेवधेः, महावीरस्येति भावः। वालिनः = इन्द्रपुत्रस्य महाकपेः, अमित्रं = शत्रुः, त्रैलोक्यबन्धोः = भुवनत्रयबान्धवस्य, प्रकाशनेन उष्णताप्रदत्वेन वर्षणादिना चेति भावः। तादृशस्य तपनस्य = सूर्यस्य, सूनुः = पुत्रः, एवं च रामस्य = रामचन्द्रस्य, पादाऽब्जतलाऽभिवर्ती = पादाऽब्जतले ( चरणकमलाऽधोभागे ) अभिवर्तते तच्छीलः, सेवनाऽर्थमिति शेषः। सुग्रीवनामा = सुग्रीवनामधेयः, कपिचक्रवर्ती = वानरसम्राट्, स एव तारापतिरिति भावः। अत्रोपमाऽलङ्कारः। इन्द्रवज्रा वृत्तम् ॥ ४० ॥

वालिन इति। वालिने धनुरङ्कं विसृजता ( रामबाणेन ) नाकलोकललनाकुचकेलिः, अस्मै च तारया समं वानरेन्द्रपदवीमणिमौलिः अदीयतेत्यन्वयः।

वालिने = वालिनामकाय कपिराजाय, धनुरङ्कं = धनूरूपं चिह्नम्, 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः। विसृजता = त्यजता, रामबाणेनेति पूर्वस्थपदेन सम्बन्धः। नाकलोकललनाकुचकेलिः = नाकलोकस्य ( स्वर्गलोकस्य ) या ललनाः ( सुन्दर्यः, अप्सरस इति भावः ) तासां कुचकेलिः ( पयोधरक्रीडा, सम्भोगादिरूपत्वेनेति शेषः )। अदीयत = दत्ता। अस्मै च = सुग्रीवाय च, तारया = तन्नामिकया वालिपत्न्या, सुग्रीवपत्न्या, 'समं' पदेन योगे 'सहयुक्तेऽप्रधाने' इति तृतीया। समं = सह, वानरेन्द्रपदवीमणिमौलिः = वानरेन्द्रपदवी ( कपीश्वरपदम् ) एव मणिमौलिः ( रत्नमुकुटः ) अदीयत = दत्तः। रामो वालिनं स्वर्गाऽतिथिं विधाय सुग्रीवाय तारया समं वानरराजपदवीं प्रदत्तवानिति भावः। अत्र सहोक्तिरलङ्कारः। स्वागता वृत्तम् ॥

---

चरणकमलोंके सेवक सुग्रीव नामक वानर सम्राट् हैं ( वे ही तारापति हैं ) ॥ ४० ॥

सीता—किसने नर और वानरोंकी ऐसी मित्रता कर दी?

हनूमान्—रामके बाणने ही।

धनूरूप चिह्नको छोड़ते हुए रामबाणने वालीके लिए स्वर्ग सुन्दरियोंकी पयोधरक्रीडा और इनके लिए ताराके साथ 'वानरेन्द्र' पदवी दे दी ॥ ४१ ॥

सीता—कथय तावत् , अपि नाम मम मन्दभागिन्याः कृते दुर्बल इदानीं किमपि रघुनाथः ? ( कहेहि दाव, अवि णाम मए मन्दभाइणीए किदे दुब्बलो दाणीं किंपि रहुणाहो ? )

हनूमान्—किमपीति किमुच्यते ? इदानीं हि—

बहुलपक्षशशीव दिने दिने रघुपतिः कृशतामुपयाति सः ।

सीता—हा धिक् हा धिक् । ( हद्धि हद्धि )

हनूमान्—

कुवलयप्रतिमद्युतिरस्य तु प्रविकसत्यनुभाववशंवदा ॥ ४२ ॥

अयि देवि ! आकर्णय तावद्यत् सन्दिष्टं देवेन देव्याः ।

हिमांशुश्चण्डांशुर्नवजलधरो दावदहनः,
सरिद्वीचीवातः कुपितफणिनिःश्वासपवनः ।

---

बहुलपक्षेति । स रघुपतिः बहुलपक्षशशी इव दिने दिने कृशताम् उपयाति । तु अस्य अनुभाववशंवदा कुवलयप्रतिद्युतिः प्रविकसतीत्यन्वयः ।

सः = लोकप्रसिद्धः, रघुपतिः = रामचन्द्रः, बहुलपक्षशशी इव = कृष्णपक्षचन्द्र इव, दिने दिने = प्रतिदिनं, वीप्सायां द्विरुक्तिः । कृशतां = दुर्बलताम् , उपयाति = प्राप्नोति । तु = परन्तु, अस्य = रघुपतेः, अनुभाववशंवदा = प्रभावाऽधीना, कुवलयप्रतिमद्युतिः = नीलकमलोपमकान्तिः, प्रविकसति = अधिकविकासिता भवति । भवद्वियोगेन प्रतिदिनं क्षीणतामुपगच्छन्नपि रघुपतिः साऽतिशयं नीलकमलोपमकान्तिर्भवतीति भावः । अत्रोपमाऽलङ्कारः । द्रुतविलम्बितं वृत्तम् ॥ ४२ ॥

हिमांशुरिति । हिमांशुः चण्डांशुः । नवजलधरो दावदहनः । सरिद्वीचीवातः कुपितफणिनिश्श्वासपवनः । नवा मल्ली भल्ली । कुवलयवनं कुन्तगहनम् । हे

---

सीता—यह बतलाओ मन्द भाग्यवाली मेरे लिए क्या रघुनाथ कुछ कमजोर हो गये हैं ?

हनूमान्—आप 'कुछ' यह क्या कह रही हैं ? क्योंकि अभी लोकप्रसिद्ध रामचन्द्रजी कृष्णपक्षके चन्द्रमाके समान प्रतिदिन क्षीण होते जा रहे हैं ।

सीता—हाय ! धिक् , हाय धिक् ।

हनूमान्—परन्तु इनकी प्रभावाऽधीन नीलकमलके सदृश कान्ति, अधिक विकसित हो रही है ॥ ४२ ॥

हे देवि ! रामचन्द्रने आपको जो सन्देश दिया है, उसे सुनिए । चन्द्र सूर्यके समान तीक्ष्ण किरणवाले, नया मेघ दवानलके समान, नदी तरङ्गकी हवा कुपित सर्पके निःश्वास

नवा मल्ली भल्ली, कुवलयवनं कुन्तगहनं,
मम त्वद्विश्लेषात्सुमुखि ! विपरीतं जगदिदम् ॥ ४३ ॥

अपि च—

कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं,
को जानीते निभृतमुभयोरावयोः स्नेहसारम् ?

---

सुमुखि ! त्वद्विश्लेषात् मम इदं जगत् विपरीतमित्यन्वयः ।

हिमांशुः = चन्द्रः, चण्डांशुः = सूर्यः, हिमांऽशुश्चन्द्रोऽपि चण्डांऽशुः सूर्य इव तीक्ष्णकिरण इति भावः । नवजलधरः = नूतनमेघः, दावदहनः = दवाऽनलः । सरिद्वीचीवातः = सरितः ( नद्याः ) वीचीवातः ( तरङ्गवायुः ), कुपितफणिनिःश्वासपवनः = कुपितफणिनः ( क्रुद्धसर्पस्य ) निःश्वासपवनः ( श्वासवायुः )। नवा = नूतना, मल्ली = मल्लिकापुष्पं, भाषायां 'बेली'ति नाम्ना प्रसिद्धम् । भल्ली = तीक्ष्णशस्त्रविशेषः । एवं च कुवलयवनं = कमलोपवनं, कुन्तगहनं = प्रासशस्त्रवनं, प्रासशस्त्रवनमिव पीडाकरमिति भावः । हे सुमुखि ! हे सुन्दरि सीते ! त्वद्विश्लेषात् = त्वद्वियोगात् , मम = रामस्य, इदम् = अनुभूयमानं, जगत् = विश्वं, विपरीतम् = अन्यरूपं, प्रतिकूलमिति भावः । जातमिति शेषः । त्वत्संयोगाऽवस्थायां सुखजनकोऽपि सकलः पदार्थो विरहकाले दुःखरूपः संजात इति भावः । अत्र परिणामाऽलङ्कारः । शिखरिणी वृत्तम् ॥ ४३ ॥

कस्याख्यायेति । हे शशधरमुखि ! इमं व्यतिकरं कस्य आख्याय मुक्तदुःखो भवेयम् । उभयोः आवयोः निभृतं स्नेहसारं को जानीते ? एकं मे मनः प्रेमतत्त्वं जानाति । हे प्रिये ! एतत् त्वामेव चिरम् अनुगतं, तत् किं करोमीत्यन्वयः ।

हे शशधरमुखि = हे चन्द्रानने सीते !, इमम् = इदानीन्तनं, व्यतिकरं = विपत्तिं, वियोगरूपामिति शेषः । कस्य = जनस्य, चतुर्थ्यर्थे षष्ठी । आख्याय = कथयित्वा, मुक्तदुःखः = त्यक्तपीडः ।

'सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्तिनि कलत्रे ।
स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखी भवति ॥'

---

वायुके सदृश, नया बेलीका फूल भालाके तुल्य और कमलोंका उपवन कुन्तशस्त्रोंके समूहके बराबर इस प्रकार हे सुन्दरि ! तुम्हारे वियोगके कारण यह संसार ही प्रतिकूल हो रहा है ॥ ४३ ॥

और भी—हे चन्द्रमुखि ! इस विपत्तिको किसे बताकर आश्वस्त बनूँ । हमदोनोंके प्रच्छन्न प्रणयतत्त्वको कौन जानता है ? एक मेरा मन उसे जानता है । हे प्रिये ! उसके

जानात्येकं शशधरमुखि ! प्रेमतत्त्वं मनो मे,
स्वामेवैतच्चिरमनुगतं तत् प्रिये ! किं करोमि ॥ ५४ ॥

( सीता लज्जते )

त्रिजटा—सखि ! त्वमपि रघुपतेः किमपि संदेशं प्रत्यभिज्ञानं च समर्पय ।

सीता—अयं मे प्रतिसन्देशः । ( इमो मे पडिसन्देशो )

बहलगलन्नयनजलनिर्झरपर्याकुलापि मम दृष्टिः ।
तव सुभग ! वदनशशधरलावण्यरसं पिपासति ॥ ५५ ॥
( बहलगलन्तणअणजलणिज्झरपज्जाउलावि मह दिट्ठी ।
तुह सुहअ वअणससहर लावण्णरसं पिपासेदि ॥ )

---

इति न्यायेन सुखीति भावः । भवेयं = स्याम् , उभयोः = द्वयोः, आवयोः = तव मम चेति भावः । निभृतं = प्रच्छन्नं, स्नेहसारं = प्रणयतत्त्वं, कः = जनः, जानीते = वेत्ति, न कोऽपीति भावः । एकम् = एकमात्रं, मे = मम, मनः = हृदयं, प्रेमतत्त्वं = प्रणयरहस्यं, जानाति = वेत्ति । हे प्रिये = हे दयिते सीते !, परन्तु एतत् = मदीयं मनः, त्वामेव = भवतीमेव, चिरं = बहुसमयपूर्वम् , अनुगतम् = अनुसृतम् । तत् = तस्मात्कारणात् , किं करोमि = किं विदधामि, कथङ्कारं दुःखमपनयामीति न जानामीति भावः । अत्रोपमाऽलङ्कारः । मन्दाक्रान्तावृत्तम् ॥ ५४ ॥

बहलेति । हे सुभग ! बहलगलन्नयनजलनिर्झरपर्याकुलाऽपि मम दृष्टिः तव वदनशशधरलावण्यरसं पिपासतीत्यन्वयः ।

हे सुभग = हे सौभाग्यशालिन् !, बहलगलन्नयनजलनिर्झरपर्याकुलाऽपि = बहलम् ( अधिकं यथा तथा ) गलत् ( प्रस्रवत् ) यत् नयनजलम् ( अश्रु ) तस्य निर्झरेण ( प्रवाहेण ) पर्याकुलाऽपि ( अतिशयाकुलाऽपि ), मम = सीतायाः, दृष्टिः = नयनं, तव = भवतः, वदनशशधरलावण्यरसं = वदनम् ( मुखम् ) एव शशधरः

---

भी बहुत समय पहलेसे तुम्हारा अनुसरण किया है । इसलिए मैं क्या करूँ ? ॥ ५४ ॥

( सीता लजाती है । )

त्रिजटा—सखि ! तुम भी रामचन्द्रजीको कुछ सन्देश और प्रत्यभिज्ञान ( चिह्न ) भेजो ।

सीता—यह मेरा प्रतिसन्देश है—

हे सौभाग्यशालिन् ! प्रचुररूपसे गिरनेवाले आँसूके प्रवाहसे आकुल होनेपर भी मेरा नेत्र आपके मुखचन्द्रके सौन्दर्यजलको पान करनेकी इच्छा रखता है ॥ ५५ ॥

( चूडारत्नमाहृत्य हनूमतः करे समर्पयन्ती )

अयि चूडारत्न !

अपि क्षालय निजमङ्गं रजनीचरदृष्टिपांसुपांसुलितम्।
रघुपतिपदनिर्मलनखरजनीकरज्यौत्स्ननीरनिकरे ॥ ४६ ॥

( अइ चूडारअण्ण )

( वि क्खालअ णिअमङ्गं रअणीअर दिट्ठिपंसुपंसुलिअम्।
रहुवइपअणिम्मलणहरअणीअरजोह्णणीरणिअरम्मि )

हनुमान्—देवि ! अनुजानीहि ! त्वरयति मां रामचन्द्रचरणदर्शनोत्कण्ठा।

---

( चन्द्रः ) तस्य लावण्यरसं = सौन्दर्यजलं, पिपासति = पातुमिच्छति। अत्र बहलगलदित्यादिना दृष्टिविशेषणेन सीतायाः सततरुदितम्, तज्जनितनेत्रावरणेन दर्शनाऽभावो व्यज्यते। एवं च नयनजलनिर्झरपर्याकुलाऽपि पिपासतीत्यत्र विरोधश्च गम्यते। गाथा वृत्तम् ॥ ४५ ॥

अपि क्षालयेति। रजनीचरदृष्टिपांसुपांसुलितं निजम् अङ्गं रघुपतिपदनिर्मलनखरजनीकरज्यौत्स्ननीरनिकरे क्षालय अपीत्यन्वयः।

अयि चूडारत्न = हे शिरोरत्न !, रजनीचरदृष्टिपांसुपांसुलितं = रजनीचरस्य ( राक्षसस्य, रावणस्येति भावः ), या दृष्टिः ( लोचनम् ) सैव पांसुः ( धूलिः ), तेन पांसुलितं ( धूसरितम्, अपवित्रीकृतमिति भावः ), तादृशं निजं = स्वकीयम्, यत् अङ्गं = शरीरं, तत् रघुपतिपदनिर्मलनखरजनीकरज्यौत्स्ननीरनिकरे = रघुपतेः ( रामचन्द्रस्य ) पदस्य ( चरणस्य ) निर्मलः ( स्वच्छः, निष्कलङ्कः ) यो नखः ( नखरः ) स एव रजनीकरः ( चन्द्रः ) तस्य ज्यौत्स्नं ( ज्योत्स्नासम्बन्धि ) यत् नीरं ( जलम् ) तस्य निकरे ( समूहे ), क्षालय अपि = प्रक्षालय अपि, पवित्रीकुर्विति भावः। अत्र रूपकमलङ्कारः। गीतिर्वृत्तं, तल्लक्षणं यथा वृत्तरत्नाकरे—

'आर्या प्रथमदलोक्तं, यदि कथमपि लक्षणं भवेदुभयोः।
दलयोः कृतयतिशोभां, तां गीतिं गीतवान्भुजङ्गेशः ॥' इति ॥ ४६ ॥

---

( चूडारत्न निकालकर हनूमान्‌जीके हाथमें सौंपती हुई )

हे चूडारत्न !

राक्षसकी दृष्टिरूप धूलिसे धूसर अपने अङ्गको रघुनाथके निर्मल नखचन्द्रकी ज्योत्स्नाके जलप्रवाहमें प्रक्षालित करो ॥ ४६ ॥

हनूमान्—देवि ! आज्ञा दीजिए। मुझे रामचन्द्रके चरणदर्शनकी उत्सुकता आकुल कर रही है।

सीता—( सबाष्पगद्गदम् ) अय्यकारणस्निग्ध, प्रतिगते त्वयि पुनरपि को मम कथयिष्यति रघुनाथस्य प्रवृत्तिम् ? ( अइ अकारणसिणिद्ध ! पडिगदे तुह्मि पुणोवि को मह कहिस्सदि रहुणाहस्स पउत्तिम् ? )

हनूमान्—अयि देवि ! दिष्ट्या स्मारितोऽस्मि । नन्विदं ते सन्दिष्टं देवेन देव्याः ।

मा ताम्य तामरसपत्त्रविशालनेत्रे !
विख्याप्यते पुनरपि त्वयि मत्प्रवृत्तिः ।
सौमित्रिकार्मुकगुणध्वनिभिर्गभीरै-
स्तैः किञ्च राक्षसवधूरुदितैरुदारैः ॥ ४७ ॥

सीतेति । अकारणस्निग्ध = अहेतुकवत्सल । प्रवृत्तिं = वृत्तान्तम् ।

मा ताम्येति । हे तामरसपत्त्रविशालनेत्रे ! मा ताम्य । गभीरैः सौमित्रिकार्मुकगुणध्वनिभिः किञ्च उदारैः तैः राक्षसवधूरुदितैश्च त्वयि पुनरपि मत्प्रवृत्तिः विख्याप्यत इत्यन्वयः ।

हे तामरसपत्त्रविशालनेत्रे = तामरसपत्रे ( कमलदले ) इव विशाले ( दीर्घे ) नेत्रे ( नयने ) यस्याः तत्सम्बुद्धौ, हे कमलपत्राक्षि सीते !, मा ताम्य = खेदं मा भज । तत्र हेतुं प्रदर्शयति—विख्याप्यत इति । गभीरैः = गम्भीरैः, सान्द्रैरिति भावः । सौमित्रिकार्मुकगुणध्वनिभिः = सौमित्रेः ( लक्ष्मणस्य ) यत्कार्मुकं ( धनुः ) तस्य गुणस्य ( ज्यायाः ) ध्वनिभिः ( शब्दैः ) । किञ्च = अपरञ्च । उदारैः = महद्भिः, विस्तीर्णैरिति भावः । तैः = भविष्यद्भिः, राक्षसवधूरुदितैश्च = राक्षसपत्नीरोदनैश्च, पतिमरणशोकादिति शेषः त्वयि = भवत्यां विषये, पुनरपि = भूयोऽपि, मत्प्रवृत्तिः = मदीया वार्ता, विख्याप्यते = प्रसिद्धिं प्राप्यत इति भावः ।

लक्ष्मणधनुर्ज्याटङ्कारैरतिविस्तारमुपगतैः पतिनिधनोत्तरप्रवृत्तैः राक्षसवधूरोदनध्वनिभिश्च त्वदन्तिके विजयरूपा मद्वार्ता सूचयिष्यत इति भावः । अत्र विच्छित्त्या-

सीता—( आंसू गिराकर और गद्गद होकर ) हे अहेतुकवत्सल ! तुम्हारे आने पर फिर कौन मुझे रघुपतिका वृत्तान्त बतलायेगा ?

हनूमान्—हे देवि ! भाग्यसे आपने मुझे याद दिलाई । महाराजने आपको ऐसा सन्देश दिया है—

कमलपत्रोंके तुल्य दीर्घ नेत्रोंसे शोभित हे सीते ! तुम खेद मत करो । गम्भीर लक्ष्मण-धनुकी प्रत्यञ्चाके शब्द और राक्षसवधूओंकी रोदनध्वनि भी तुम्हें फिर मेरा वृत्तान्त प्रसिद्ध करेंगे ॥ ४७ ॥

( नेपथ्ये )

हत्वा कथञ्चिदपि राजकुमारमक्षं
रे वानरापसद ! कुत्र पलायितोऽसि ।
त्वां हन्तुमिच्छति दशाननशासनेन
दर्पोद्धतो धृतधनुर्ननु ! मेघनादः ॥ ४८ ॥

हनूमान्—देवि, कृतकार्योऽस्मि, तदलमतः परमात्मापलापेन । तदिदं प्रणम्यसे, आपृच्छ्यसे च ।

सीता—अये पवननन्दन, अनायासेनेमं दुर्निशाचरसागरमतिक्रमस्व । ( अए पवणणन्दण ! अणाआसेण इमं दुण्णिसाअरसाअरं अदिक्कमेहि )

---

रामविजयरूपगम्याऽर्थस्याऽभिधानात्पर्यायोक्तमलङ्कारस्तल्लक्षणं यथा साहित्यदर्पणे—'पर्यायोक्तं यदा भङ्ग्या गम्यमेवाऽभिधीयते ।' इति । वसन्ततिलकावृत्तम् ॥ ४७ ॥

हत्वेति । रे वानराऽपसद ! राजकुमारम् अक्षं कथञ्चिदपि हत्वा कुत्र पलायितोऽसि । ननु ! दर्पोद्धतो धृतधनुः मेघनादो दशाननशासनेन त्वां हन्तुम् इच्छतीत्यन्वयः ।

रे इति अनादरार्थकम् । हे वानराऽपसद = हे कपिनीच !, राजकुमारं = भूपसूनुम् , अक्षं = तदाख्यं राक्षसं, कथञ्चिदपि = केनाऽपि प्रकारेण, हत्वा = व्यापाद्य, कुत्र = कस्मिन्स्थाने, पलायितोऽसि = पलायनं कृतवानसि । नन्वित्यामन्त्रणे । हे वानराऽपसद !, दर्पोद्धतः = दर्पेण ( गर्वेण ) उद्धतः ( अविनीतः ), धृतधनुः = गृहीतकार्मुकः, अत्र समासाऽन्तविधेरनित्यत्वात् 'धनुषश्चे'त्यनङोऽभावेन धृतधन्वे'तिप्रयोगाऽभावः । मेघनादः = इन्द्रजित् , दशाननशासनेन = रावणादेशेन, त्वां = वानराऽपसदं, हनूमन्तमिति भावः । हन्तुं = व्यापादयितुम् , इच्छति = वाञ्छति । अतो वीरोऽसि यदि, पुनरपि युद्धसन्नद्धो भवेति भावः । वसन्ततिलकावृत्तम् ॥४८॥

हनूमानिति । कृतकार्यः = कृतकृत्यः । आत्माऽपलापेन = स्वनिह्नवेन । आपृच्छ्यसे = गमनाऽर्थमिति शेषः ।

---

( नेपथ्यमें )

रे अधम वानर ! राजकुमार अक्षको किसी भी प्रकारसे मारकर तू कहाँ भाग गया है ? अरे दुष्ट ! गर्वसे उद्दण्ड धनुर्धारी मेघनाद, रावणकी आज्ञासे तुझे मारना चाहता है ॥

हनूमान्—देवि ! कार्यकर चुका हूँ । इसके अनन्तर अपनेको छिपाना नहीं चाहिए । इसलिए मैं आपको प्रणाम करता हूँ । और जानेके लिए पूछता भी हूँ ।

सीता—हे वायुपुत्र ! विना परिश्रमके ही इस दुष्ट राक्षसरूप समुद्रका उल्लङ्घन करो ।

हनूमान्—अयं मूर्ध्नि गृहीतो देव्याः प्रसादः ( इति निष्क्रान्तः )।

सीता—हला त्रिजटे, खेचरी भूत्वा प्रेक्षस्व तावदस्य वृत्तान्तम् ।
( हला, तिअडे ! खेअरी भविअ पेक्ख दाव इमस्स उत्तन्तम् )

त्रिजटा—तथा ( इति निष्क्रान्ता )।

( नेपथ्ये )

बाणौघानेषवीरः कलयति च रुषा मेघनादेन मुक्तान् ।

( सर्वे हर्षं नाटयन्ति )

( पुनर्नेपथ्ये )

बद्धोऽयं राक्षसेन ज्वलदनलशिखादीप्तपुच्छः कृतश्च ।

( सर्वे विषादं नाटयन्ति )

---

सीतेति । खेचरी = आकाशचारिणी, खे चरतीति, 'चरेष्ट' इत्यधिकरण उपपदे प्रत्ययः, तत्पुरुषे कृति बहुलम्' इत्यलुक् ।

बाणौघानिति । एष वीरो मेघनादेन रुषा मुक्तान् बाणौघान् कलयति । राक्षसेन अयं बद्धः, ज्वलदनलशिखादीप्तपुच्छः कृतश्च । अट्टालिकानाम् उपरि कृतपदः कामम् एष लङ्कां दन्दहीति । अकठान्तोऽयं पयोधेः पयसि स्वाङ्गुलग्नं कृशानुं शमयतीत्यन्वयः ।

एषः = अयं, वीरः = शूरः, हनूमानिति भावः । मेघनादेन = इन्द्रजिता रावणपुत्रेण, रुषा = कोपेन, मुक्तान् = प्रक्षिप्तान् , बाणौघान् = शरसमूहान् , कलयति = सहते, कलधातोरनेकार्थत्वादत्र मर्षणार्थे प्रयोगः । तदनु राक्षसेन = निशाचरेण, मेघनादेन । अयं = वीरो हनूमान् , बद्धः = सितः, ब्रह्मास्त्रेण निगडित इति भावः । एवं च ज्वलदनलशिखादीप्तपुच्छः = ज्वलन् ( दीप्यमानः ) योऽनलः ( अग्निः ) तस्य शिखया ( ज्वालया ) दीप्तं ( दग्धम् ) पुच्छं ( लाङ्गूलम् ) यस्य सः, तादृशः कृतश्च = विहितश्च । अट्टालिकानाम् = राजगृहाणाम् , उपरि = ऊर्ध्वभागे, कृतपदः =

---

हनूमान्—देवीके इस प्रसादको मैंने शिरपर रख लिया ।

( ऐसा कहकर जाते हैं । )

सीता—सखि त्रिजटे ! आकाशचारिणी होकर इनका वृत्तान्त देख लो ।

त्रिजटा—अच्छी बात है । ( ऐसा कहकर जाती है । )

( नेपथ्यमें )

यह वीर मेघनादके कोपसे छोड़े गये बाणोंको सह रहा है ।

( सब हर्षका अभिनय करते हैं । )

( पुनर्नेपथ्ये )

क्रामन्नट्टालिकानामुपरि कृतपदो दन्दहीत्येष लङ्काम्

( सर्वे हर्षविषादौ नाटयन्ति )

( पुनर्नेपथ्ये )

अक्लान्तोऽयं पयोधेः पयसि शमयति स्वाङ्गलग्नं कृशानुम् ॥४९॥

( सर्वे हर्षं नाटयन्ति )

( पुनर्नेपथ्ये )

अहो, आश्चर्यमाश्चर्यम् ।

वेलाद्रेरस्य हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य शृङ्गं
मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम् ।

---

विहिताऽवस्थितिः, अत एव क्रामन् = पादविक्षेपं कुर्वन्, एषः = अयं हनूमान्, लङ्कां = रावणपुरीं, दन्दहीति = अत्यर्थं दहति । इत्थमपि अक्लान्तः = अखिन्नः, महाबन्धनेन पुच्छदीपनेन चेति शेषः । अयं = हनूमान्, पयोधेः = समुद्रस्य, पयसि = जले, स्वाङ्गलग्नम् = आत्मशरीरसक्तं, कृशानुम् = अग्निं, शमयति = निर्वापयति । स्रग्धरावृत्तम् ॥ ४९ ॥

वेलाद्रेरिति । द्युमणिः पूर्वाऽचलस्य मौलिम् आक्रम्य नभ इव हेलाऽऽक्रमणपरिणतो हनूमान् अस्य वेलाद्रेः तुङ्गं शृङ्गम् आक्रम्य वेगप्रोद्भूतवातप्रतिहतसलिलो-

---

( फिर नेपथ्यमें )

राक्षसने बाँधकर दीप्यमान अग्निकी ज्वालासे इसकी पूंछ जला दी ।

( सब खेदका अभिनय करते हैं । )

( फिर नेपथ्यमें )

अटारियोंके ऊपर पैरोंको रखकर घूम घूमकर यह लङ्काको खूब जला रहा है ।

( सब हर्ष और विषादका अभिनय करते हैं । )

( फिर नेपथ्यमें )

इस प्रकारसे भी खिन्न न होकर यह वीर समुद्रके जलमें अपने शरीरमें सम्बद्ध आगको बुझा रहा है ॥ ४९ ॥

( सब हर्षका अभिनय करते हैं । )

( फिर नेपथ्यमें )

अहो ! आश्चर्य है, आश्चर्य है ।

सूर्य उदयपर्वतकी चोटी पर चढ़कर जैसे आकाशका लङ्घन करते हैं उसी प्रकार अनायास ही उल्लङ्घन करनेमें बुद्धि प्राप्त हनूमान् इस त्रिकूट पर्वतकी ऊँची चोटी पर

वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तीभूतोरगेन्द्रस्तुतिशतविलसत्कीर्त्तिहारो हनूमान् ॥५०॥

सीता—( नेपथ्याभिमुखमवलोक्य ) हला त्रिजटे, अवतीर्णासि महीतलम्, तत् प्रियंवदायास्तवालिङ्गयाम्यङ्गानि । ( हला तिअडे ! अवतिण्णासि महीअलम् । ता पिअंवदाए तुह आलिङ्गेमि अङ्गाइं ) ( इति निष्क्रान्ता । ) ।

रामः—प्रिये ! मामपि प्रतीक्षस्व ।

---

न्मुक्तगम्भीरगर्भव्यक्तीभूतोरगेन्द्रस्तुतिशतविलसत्कीर्तिहारः ( सन् ) अम्बुराशिं लङ्घयतीत्यन्वयः । द्युमणिः = सूर्यः, पूर्वाऽचलस्य = प्राचीपर्वतस्य, उदयाऽचलस्येति भावः । मौलिं = शिखरम्, आक्रम्य = आरुह्य, नभ इव = आकाशमिव, हेलाऽऽक्रमणपरिणतः = हेलया ( अनायासेन ) यद् आक्रमणं ( लङ्घनं ), तस्मिन् परिणतः ( परिणामं गतः, वृद्धिं गत इति भावः ), तादृशो हनूमान् = आञ्जनेयः, अस्य = निकटस्थस्य, वेलाऽद्रेः = समुद्रतटाऽवस्थितस्य पर्वतस्य, त्रिकूटाऽचलस्येति भावः । तुङ्गम् = उन्नतं, शृङ्गं = शिखरम्, आक्रम्य = आरुह्य, वेगप्रोद्भूतवातेत्यादिः = वेगेन ( जवेन, गमनजनितेनेति भावः ) प्रोद्भूतः ( समुत्पन्नः ) यो वातः ( वायुः ) तेन प्रतिहतम् ( उद्धतम् ) यत्सलिलं ( जलम् ) तेनोन्मुक्तः ( त्यक्तः ) यो गम्भीरगर्भः ( गभीरजलाधारस्थानम् ) तस्मिन् व्यक्तीभूतः ( स्फुटीभूतः ) य उरगेन्द्रः ( नागराजः, शेष इति भावः ) तेन कृतं यत्स्तुतिशतं ( स्तवशतं, स्तुतिसंहतिरिति भावः ) तेन विलसन्ती ( शोभमाना ) या कीर्तिः ( यशः ) सैव हारः ( मौक्तिकमाल्यम् ) यस्य सः । कविसमये कीर्तेः शुभ्रवर्णत्वादियमुक्तिः । तादृशः सन् हनूमान्, अम्बुराशिं = समुद्रं, लङ्घयति = अतिक्रामति । यथा सूर्य उदयाऽचलशिखरमारुह्य नभो लङ्घयति तथैव हनूमानपि त्रिकूटशिखरमारुह्य समुद्रं लङ्घयतीति भावः ।

अत्रोपमारूपकयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । स्रग्धरावृत्तम् ॥ ५० ॥

सीतेति । प्रियंवदायाः = अभीष्टभाषिण्याः, हनूमत्कुशलप्रवृत्तिज्ञापनेनेति शेषः ।

राम इति । प्रतीक्षस्व = प्रतीक्षां कुरु, आलिङ्गनार्थं दर्शनाऽर्थं चेति शेषः ।

---

चढ़कर वेगसे उत्पन्न वायुसे उद्गत जलसे त्यक्त गम्भीर गर्भमें स्फुटीभूत शेषनागसे की गई सैकड़ों स्तुतियोंसे शोभमान यशोरूप हारवाले होकर समुद्रका लङ्घन कर रहे हैं ॥५०॥

सीता—( नेपथ्यकी ओर देखकर ) सखि त्रिजटे ! तुम भूतलपर उतर गई हो, इस लिए अभीष्टभाषिणी तुम्हारे अङ्गोंको आलिङ्गन करती हूँ । ( ऐसा कहकर जाती हैं )

राम—प्रिये ! मेरी भी प्रतीक्षा करो ।

लक्ष्मणः—आर्य ! किमिदं लङ्कावृत्तान्तानुसारिणि विद्याधरप्रणीते महेन्द्रजाले पुनः संभ्रम्यते ?

रामः—तर्हि दिष्ट्यास्माभिर्निजविक्रमकथापराङ्मुखस्यापि हनूमतश्चरितरहस्यमाकलितम्।

( नेपथ्ये )

अये रघुनाथ, अयमसौ—

दर्पोद्धतं दधिमुखं तरसा निपीड्य
पीत्वा चिरं मधुवने स्वरसं मधूनि।

---

लक्ष्मण इति। संभ्रम्यते = संभ्रमः क्रियते।

राम इति। दिष्ट्या = भाग्येन। निजविक्रमकथापराङ्मुखस्य=निजस्य ( स्वस्य ) या विक्रमकथा ( पराक्रमकीर्तनम् ) तत्र पराङ्मुखस्य ( विमुखस्य )। हनूमान् सीताप्रवृत्तिमात्रं वर्णयिष्यति शालीनतया स्वविक्रमं न प्रतिपादयिष्यति परमस्माभिर्भाग्यवशादैन्द्रजालिकव्यापारात्सर्वोऽपि लोकाऽतिशायी हनूमत्पराक्रमो ज्ञात इति भावः।

दर्पोद्धतमिति। नीलाङ्गदप्रभृतिभिः सहितो हनूमान् दर्पोद्धतं दधिमुखं तरसा निपीड्य मधुवने मधूनि स्वरसं चिरं पीत्वा भवतः पदपालीं द्रष्टुं समेतीत्यन्वयः। नीलाऽङ्गदप्रभृतिभिः = नीलाऽङ्गदादिभिः स्वमित्रैः, सहितः=युक्तः, हनूमान्= आञ्जनेयः, दर्पोद्धतं=गर्वोद्दण्डं, मधुवने कृतकार्यान्हनूमदादिवानरान् फलभक्षणाच्चिवार्येति शेषः। दधिमुखं=मधुवनरक्षकं सुग्रीवमातुलं वानरमित्यर्थः, तरसा= बलेन, निपीड्य=साऽतिशयं पीडयित्वा, मधुवने=तदाख्ये फलप्रचुरे वने, मधूनि= फलपुष्परसान्, स्वरसं=यथेष्टं, चिरं=बहुकालपर्यन्तं, पीत्वा=आस्वाद्य, अनन्तरं

---

लक्ष्मण—आर्य ! लङ्कावृत्तान्तका अनुसरण करनेवाले विद्याधरनिर्मित महेन्द्रजालमें क्यों आप फिर भ्रान्त हो रहे हैं ?

राम—तब भाग्यसे हम लोगोंने अपने पराक्रमकी बात कहनेमें विमुख होनेवाले हनूमान्‌जीके चरित्रका रहस्य जान लिया।

( नेपथ्यमें )

हे रघुनाथजी ! यह—

नील और अङ्गद आदि मित्रोंके साथ हनूमान्, गर्वसे उद्दण्ड दधिमुखको बलसे

द्रष्टुं समेति भवतः पदपद्मलीलां
नीलाङ्गदप्रभृतिभिः सहितो हनूमान् ॥ ५१ ॥

रामः—वत्स, आकर्णितम्, तदागच्छ, कृतकार्यं हनूमन्तं प्रत्युद्गच्छावः।

( इति निष्क्रान्ताः सर्वे )

इति षष्ठोऽङ्कः ।



भवतः = तव श्रीमतो रामचन्द्रस्य, पदपद्मलीलां = चरणकमलशोभां, द्रष्टुं = विलोकयितुं, समेति = समागच्छति । अत्रोपमाऽलङ्कारः । वसन्ततिलकावृत्तम् ॥ ५१ ॥

राम इति । तत् = तस्मात्कारणात् । प्रत्युद्गच्छावः = प्रत्युद्गमनं कुर्वः, हनुमतस्वागतार्थमग्रे गच्छाव इति भावः ।

इति श्रीशेषराजशर्मप्रणीतायां चन्द्रकलाऽभिख्यायां प्रसन्नराघवव्याख्यायां षष्ठोऽङ्कः ।

ओं तत्सच्छ्रीमद्रामचन्द्रचरणाऽर्पणमस्तु ॥



पीकर कर मधुवनमें पुष्परस बहुत समयतक यथेष्ट पीकर आपके चरणकमलोंकी शोभा देखनेके लिए आ रहे हैं ॥ ५१ ॥

राम—वत्स ! सुन लिया । इसलिए आओ, कृतकृत्य हनूमान्‌की अगवानी करें ।

( सब जाते हैं । )

इति षष्ठ अङ्कः ।



## अथ सप्तमोऽङ्कः

( ततः प्रविशति पुलस्त्यशिष्यः )

पुलस्त्यशिष्यः—( परितो विलोक्य ) अपरिशीलितसन्निवेशोऽस्मि। तत्कथं पृच्छामि तस्य भवनम्? ( पुनर्विलोक्य ) कथमयं लङ्केश्वरमहामन्त्रिणो माल्यवतः परिचारकः करालकः। ( उच्चैः ) सखे करालक! इत इतः।

( प्रविश्य )

करालकः—मुने! प्रणम्यसे।

मुनिः—समीहितं लभस्व। कथय तावन्मे विभीषणस्य भवनम्।

करालकः—किन्तत्र?

मुनिः—आदिष्टोऽस्मि भगवता पुलस्त्येन कमपि सन्देशमुपनेतुं पौत्रस्य।

करालकः—न तावदिदानीमिह विभीषणः।

---

पुलस्त्यशिष्य इति। अपरिशीलितसंनिवेशः=अपरिशीलितः ( अपरिचितः ) संनिवेशः ( स्थितिः ) यस्य सः। परिचारकः=सेवकः।

करालक इति। प्रणम्यसे=अभिवाद्यसे।

मुनिरिति। समीहितम्=अभीष्टम्। मे=मह्यं, क्रियाग्रहणाच्चतुर्थी।

---

( अनन्तर पुलस्त्यके शिष्य प्रवेश करते हैं। )

पुलस्त्यशिष्य—( चारों ओर देखकर ) यहाँके स्थानोंका मुझे पता नहीं है। इसलिए कैसे उनका भवन पूछूँ? ( फिर देखकर ) किस प्रकार लङ्कापति रावणके महामन्त्री माल्यवान्‌का नौकर करालक यहां आया। ( ऊँचे स्वरसे ) मित्र करालक! यहां आओ, यहाँ आओ।

( प्रवेशकर )

करालक—मुने! प्रणाम करता हूँ।

मुनि—अभीष्ट फल पाओ। विभीषणका भवन मुझे बतलाओ।

करालक—वहाँ क्या है?

मुनि—पौत्रको कुछ सन्देश देनेके लिए भगवान् पुलस्त्यने मुझे आज्ञा दी है।

करालक—इस समय यहाँ पर विभीषण नहीं हैं।

मुनिः—कथय किमेतत् ?

करालकः—एकदाभिप्रणमतो विभीषणस्य करात्सकौतुकं लिखिताक्षरपङ्क्ति पत्रमेकं गृहीतं लङ्केश्वरेण वाचितं च—

उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ १ ॥

मुनिः—अहो ! प्रभुविज्ञप्तिचातुरी विभीषणस्य ।

---

करालक इति । लिखिताऽक्षरपङ्क्ति = लिखिता ( लिपीकृता ) अक्षराणां ( वर्णानाम् ) पङ्क्तिः ( आवलिः ) यस्मिंस्तत् ।

उदर्कभूतिमिति । उदर्कभूतिम् इच्छद्भिः सद्भिः परस्त्रीभालपट्टिका चतुर्थीचन्द्रलेखा इव न दृश्यते खल्वित्यन्वयः ।

उदर्कभूतिम् = उदर्के ( उत्तरफले ) भूतिम् ( ऐश्वर्यम् ) इच्छद्भिः = वाञ्छद्भिः, सद्भिः = सज्जनैः, परस्त्रीभालपट्टिका = परस्त्रियाः ( अन्ययोषितः ) भालम् ( ललाटम् ) एव पट्टिका ( कौशेयम् ) चतुर्थीचन्द्रलेखा इव ( भाद्रशुक्लचतुर्थीन्दुरेखा इव ), न दृश्यते = न अवलोक्यते, खल्विति निश्चयेन । कल्याणेच्छुभिर्जनैः भाद्रशुक्लचतुर्थीचन्द्ररेखेव परस्त्रीमुखं नाऽवलोक्यते, अतस्त्वया सीताऽनुरक्तिः परिहरणीयेति भावः । भाद्रशुक्लचतुर्थ्यां चन्द्रदर्शननिषेधमाह मार्कण्डेयो यथा—

'सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम् ।
मिथ्याऽभिदूषणं कुर्यात्तस्मात्पश्येन्न तं तदा ॥' इति ।

कदाचित्तत्र चन्द्रदर्शने जाते तद्दोषपरिहारो यथा भविष्यपुराणे—

'सिंहः प्रसेनमवधीत्सिंहो जाम्बवता हतः ।
सुकुमारक मा रोदीस्तवह्येष स्यमन्तकः ॥' इति ।

श्लोकोऽयं दोषशान्त्यर्थं पाठ्य इति भावः । अत्रोपमाऽलङ्कारः अनुष्टुब्वृत्तम् ॥

मुनिरिति । प्रभुविज्ञप्तिचातुरी = स्वामिविज्ञापनचातुर्यम् ।

---

मुनि—कहो, यह बात क्या है ?

करालक—एक बार प्रणाम करनेवाले विभीषणके हाथसे अक्षरपङ्क्तिसे पूर्ण एक पत्र रावणने पाया और कौतूहलके साथ बाँचा भी—

भविष्यमें कल्याणकी इच्छा करनेवाले सज्जन, परस्त्रीकी भालपट्टिकाको भाद्रशुक्लकी चतुर्थीकी चन्द्ररेखाकी तरह नहीं देखते हैं ॥ १ ॥

मुनि—प्रभुको हितनिवेदन करनेकी निपुणता विभीषणकी खूब है ।

करालकः—ततो विहस्यैवं लङ्केश्वरेणोक्तम्—नूनं केनापि भीरुणा भाषितमेतत् । ख्यातं हि यत् किल—

परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टयः शरवृष्टयः ॥ २ ॥

मुनिः—अहो ! निजचित्तभित्तिभूमिकानुसारीणि । वाक्चित्राणि लोकस्य ।

करालकः—ततः सप्रणयकोपविषादमिदमाह लङ्केश्वरं विभीषणः—

यत्र त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः ।

---

परेति । परस्त्रीकुचकुम्भेषु परदन्तिनां कुम्भेषु भीरूणां दृष्टयः शरवृष्टयो न निपतन्तीत्यन्वयः ।

परेषाम् ( अन्येषां ) स्त्रीणां ( पत्नीनामिति भावः ) ये कुचकुम्भाः ( स्तनकलशाः ) तेषु, परदन्तिनां = शत्रुकरिणां, कुम्भेषु = शिरःपिण्डेषु, भीरूणां = भीलुकानां, दृष्टयः ( नेत्राणि ) शरवृष्टयः = बाणवर्षाणि, न निपतन्ति = न पतन्ति । भीरवः परस्त्रीकुचेषु तत्पतिभीतेर्दृष्टिपातं न कुर्वन्ति, तथैव ते परदन्तिमस्तकपिण्डेषु च शत्रुभीतेः शरांश्च प्रक्षिपन्तीति भावः । अत्र यथासंख्यमलङ्कारः, सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'यथासंख्यं द्विधाऽर्थाश्चेत्क्रमादेकैकमन्विताः । शत्रुं मित्रं विपत्तिं च जय रञ्जय भञ्जय ॥' इति । अनुष्टुब्वृत्तम् ॥ २ ॥

मुनिरिति । निजचित्तवृत्तिभूमिकाऽनुसारीणि = निजचित्तवृत्तिभित्तिरेव ( स्वमनोव्यापार एव ) या भूमिका ( आधारः ) तदनुसारीणि ( तदनुगामीनि ) ।

यस्येति । यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनीलीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः । सोऽपि त्वं जनकाऽधिराजतनया बद्धाऽभिलाषः

---

करालक—तब हँसकर लङ्केश्वरने कहा—निश्चय ही यह किसी डरपोकने कहा है । क्योंकि यह प्रसिद्ध ही है—

परनारियोंके स्तनकलशों पर और शत्रुओंके हाथियोंके मस्तकपिण्डों पर डरपोकोंकी दृष्टि और बाणवृष्टि भी नहीं पड़ती है ॥ २ ॥

मुनि—अहो ! लोगोंके वाक्यरूप चित्र अपने मनोव्यापाररूप आधारका अनुसरण करनेवाले होते हैं ।

करालक—तब विभीषणने रावणको प्रेम, क्रोध और खेदके साथ यह कहा—

महादेवके शिरमें क्रीडा करनेवाली निर्मल आकाशगङ्गाको अनायास ही लङ्घन करनेमें

सोऽपि त्वं जनकाधिराजतनयाबद्धाभिलाषः कथं
हा जातोऽसि पुलस्त्यसन्ततियशःशीतद्युतेर्लाञ्छनम् ॥३॥

मुनिः—( सकौतुकम् ) ततस्ततः ?

करालकः—ततश्च—

कोपपाटलितलोलदृष्टिना किञ्चिदुन्नमितखड्गयष्टिना ।
रावणेन नयधर्मभूषणस्ताडितो हृदि पदा विभीषणः ॥ ४ ॥

( सन् ) कथं पुलस्त्यसन्ततियशःशीतद्युतेः लाञ्छनं जातोऽसि ? हा ! इत्यन्वयः । यस्य = तव, रावणस्येति शेषः । त्र्यम्बकमौलीत्यादिः = त्र्यम्बकस्य ( त्रिलोचनस्य, शङ्करस्येति भावः ) मौलौ ( शिरसि ) खेलन्ती ( क्रीडन्ती ) अमला ( निर्मला ) या स्वर्लोकानां ( देवानाम् ) कल्लोलिनी ( महानदी, आकाशगङ्गेति भावः ) तस्या लीलया ( अनायासेन ) यल्लङ्घनम् ( अतिक्रमणम् ) तस्मिन् लम्पटेन ( आसक्तेन ), यशसा = कीर्त्या, दिग्भित्तयः = आशाऽवकाशाः, क्षालिताः = धौताः । यस्य ते स्वर्गाऽवगाहकं यशोदिगवकाशान् क्षालितवदिति भावः । सोऽपि = तादृग्यशोऽवदातोऽपि, त्वं = रावणः, जनकाऽधिराजतनयाबद्धाऽभिलाषः = जनकाऽधिराजतनयायां ( मैथिल्यां, सीतायामित्यर्थः ) बद्धाऽभिलाषः (कृतकामः, अनुरक्तः सन्निति भावः), कथं = केन प्रकारेण, पुलस्त्यसन्ततियशःशीतद्युतेः = पुलस्त्यस्य (तदाख्यस्य ऋषेः) सन्ततिः ( कुलम् ) तस्या यशः ( कीर्तिः ) एव शीतद्युतिः ( चन्द्रः ), तस्य । लाञ्छनं = कलङ्कः, जातोऽसि = संवृत्तोऽसि । हा = त्वामिति शेषः, तव शोच्यत इति भावः । तादृशयशोभाजनं त्वं परदारप्रसक्त्या पुलस्त्यवंशचन्द्रस्य कलङ्कसदृशः संजातोऽसीति भावः । अत्र पूर्वार्द्धे पर्यायोक्तमुत्तरार्द्धे च रूपकं तथा चैतयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

कोपेति । कोपपाटलितलोलदृष्टिना किञ्चिदुन्नमितखड्गयष्टिना रावणेन नयधर्मभूषणो विभीषणो हृदि पदा ताडित इत्यन्वयः ।

कोपपाटलितलोलदृष्टिना = कोपेन ( क्रोधेन ) पाटलिते ( ईषद्रक्तीकृते ) लोले

आसक्त जिसके यशने दिशाओंको प्रक्षालित कर दिया है, ऐसे होकर भी आप सीतामें अनुरक्त होकर किस प्रकार पुलस्त्यसन्तानके यशश्चन्द्रके कलङ्करूप हो गये हैं ? हाय ! ॥३॥

मुनि—( कुतूहलके साथ ) तब क्या हुआ ? तब क्या हुआ ?

कराळक—तब—

क्रोधसे लाल और चञ्चलनेत्रोंसे युक्त रावणने तलवार कुछ उठाकर नीति और धर्मरूप अलङ्कारोंसे सम्पन्न विभीषणके वक्षःस्थलमें चरणप्रहार किया ॥ ४ ॥

मुनिः—हन्त ! नूनं–

लङ्केश्वरेण दुष्टेन नयधर्मविभूषणः।
विभीषणश्च न, परं विभवोऽपि पदा हतः॥ ५॥

ततस्ततः—

करालकः—ततः कतिपयपरिवारेण विभीषणेन लङ्केश्वरं विहाय राम एव समाश्रितः।

मुनिः—( स्वगतम् ) अनुष्ठितं तर्हि पुलस्त्यसन्देशरहस्यं विभीषणेन।

( चञ्चले ) दृष्टी ( नेत्रे ) यस्य, तेन। किञ्चिदुन्नमितखड्गयष्टिना = किञ्चित् ( ईषद्यथा तथा ) उन्नमिता ( ऊर्ध्वीकृता ) खड्गयष्टिः ( कृपाणदण्डः ) येन, तेन। तादृशेन रावणेन = दशाननेन, नयधर्मभूषणः = नयधर्मौ ( नीतिपुण्ये ) एव भूषणे ( अलङ्कारौ ) यस्य सः, तादृशो विभीषणः = तदुपाख्यः स्वाऽनुजः, हृदि = वक्षःस्थले, पदा = चरणेन, ताडितः = प्रहृतः। कोपाक्रान्तचित्तो दशाननः खड्गदण्डमीदुषन्नमय्य हितोपदेशकं स्वाऽवरजं विभीषणं चरणेनोरःस्थले प्रहृतवानिति भावः। अत्र खड्गयष्टिनेत्यत्र आभासरूपकमलङ्कारः। तल्लक्षणं यथा चन्द्रालोके—'स्यादङ्गयष्टिरित्येवंविधमाभासरूपकम्।' इति। रथोद्धतावृत्तम्॥ ४॥

लङ्केश्वरेणेति। दुष्टेन लङ्केश्वरेण नयधर्मविभूषणो विभीषणश्च न, परं विभवोऽपि पदा हत इत्यन्वयः।

दुष्टेन = दोषयुक्तेन, लङ्केश्वरेण = रावणेन, नयधर्मविभूषणः = नयधर्मौ ( नीतिपुण्ये ) एव विभूषणे ( विशिष्टाऽलङ्कारौ ) यस्य सः, तादृशो विभीषणश्च = तदाख्यः स्वानुज एव, न = न पदा हतः, परं = प्रत्युत, विभवोऽपि = ऐश्वर्यमपि, पदा = चरणेन, हतः = ताडितः। रावणो न केवलं विभीषणं चरणेन ताडितवान्प्रत्युत विभवमपि, अनेनाऽनयातिशयेन अचिरादेव रावणविभवो विनङ्क्ष्यतीति भावः। अनुष्टुब्वृत्तम्॥ ५॥

मुनिरिति। कर्तुकामः = विधातुकामः, कर्तुं कामो यस्य सः, 'तुं काममनसोरपि'

मुनि—खेदकी बात है। निश्चय ही—

दुष्ट लङ्केश्वरने नीति और धर्मरूप अलङ्कारोंसे सम्पन्न विभीषणको ही नहीं बल्कि ऐश्वर्यको भी चरणसे ताडित कर दिया॥ ५॥

तब क्या हुआ ? तब क्या हुआ ?

करालक—तब कतिपय परिवारोंके साथ विभीषणने लङ्केश्वरको छोड़कर रामका ही आश्रय लिया।

मुनि—( मन ही मन ) तब तो विभीषणने पुलस्त्यके सन्देशरहस्यका अनुष्ठान कर

( प्रकाशम् ) भवान्पुनः किमधुना कर्त्तुकामः ?

कराळकः—अहमादिष्टोऽस्मि माल्यवता जानकीविरहविह्वलहृदयस्य लङ्केश्वरस्य मनोविनोदनाय केनापि चित्रकारेण विरचितं चित्रमिदं दृग्गोचरीकरणीयमिति ।

मुनिः—( विहस्य ) कथमित्थमासन्नशत्रौ लङ्केश्वरे तादृशस्य महामन्त्रिणो माल्यवत एवमुपचरितुमुचितम् ? तन्नूनं प्रस्तुतोचितमेव किमप्येतद् भविष्यति ।

( नेपथ्ये )

रे रे चन्दनमिन्दुमण्डलशिलापट्टे समुद्घृष्यताम्
रे रे चामरमुज्ज्वलैः शशिकरैः श्वेतं विनिर्मीयताम् ।
रे रे बालमृणालतन्तुलतिकासूत्रेण पाथोजिनी-

---

इति भावः । आसन्नशत्रौ = आसन्नः ( निकटवर्ती ) शत्रुः ( वैरी, राम इत्यर्थः ) यस्य, तस्मिन् । उपचरितुम् = उपचारं कर्तुम् । शत्रावासन्ने चित्रदर्शनेन स्वामी न परिचरणीय इति भावः । प्रस्तुतोचितं = प्रकृतस्थितियोग्यं, युद्धादिकमिति भावः ।

रे रे चन्दनमिति । रे रे ! इन्दुमण्डलशिलापट्टे चन्दनं समुद्घृष्यताम् । रे रे ! उज्ज्वलैः शशिकरैः श्वेतं चामरं विनिर्मीयताम् । रे रे ! बालमृणालतन्तुलतिकासूत्रेण पाथोजिनीपत्रस्थैः उदबिन्दुभिः मणिमयो हारः समासूत्र्यतामित्यन्वयः ।

रे रे = परिचारकान्प्रति सम्बोधनपदमिदम् । इन्दुमण्डलशिलापट्टे = इन्दुमण्डलं ( चन्द्रबिम्बम् ) एव शिलापट्टं ( पाषाणखण्डम् ), तस्मिन् । चन्दनं = श्रीखण्डः, समुद्घृष्यतां = समुद्घर्षणं क्रियताम् । रे रे = परिचारकाः, उज्ज्वलैः = अवदातैः,

---

लिया । ( सुनाकर ) आप इस समय क्या करना चाहते हैं ?

कराळक—सीताके विरहसे विह्वल हृदयवाले लङ्केश्वरका दिल बहलानेके लिए किसी चित्रकारसे लिये गये इस चित्रको दिखलानेके लिए मुझे माल्यवान्‌ने आज्ञा दी है ।

मुनि—( हंसकर ) शत्रु निकट होने पर भी वैसे महामन्त्री माल्यवान्‌को इस तरह रावणकी सेवा क्या उचित है ? इसलिए यह प्रस्तुत कर्मके ही उचित कोई कार्य होगा ।

( नेपथ्यमें )

परिचारको ! चन्द्रबिम्बरूप पाषाणखण्ड पर चन्दन घिसो ।
परिचारको ! उज्ज्वल चन्द्रकिरणोंसे सफेद चामर बनाओ ।
परिचारको ! नवीन मृणालकी सूत्रलताके सूतसे कमलिनीके पत्तों पर स्थित जल-

पत्रस्थैरुदबिन्दुभिर्मणिमयो हारः समागुम्फ्यताम् ॥ ६ ॥

**मुनिः**—( सोपहासमात्मगतम् ) यादृशोऽयं शीतोपचारस्तादृश एव सीतोपचारो लङ्केश्वरस्य भविष्यतीति। ( प्रकाशम् ) कथमिदं विरहतप्तस्य दशकन्धरस्य शीतोपचारार्थमादिश्यन्ते निशाचराः।

**करालकः**—खेचराश्च, इदानीं हि—

अङ्गं लिम्पति चन्दनेन मृदुभिः शीतद्युतिः स्वैः करैः,
किञ्चिच्चञ्चलतालवृन्तकलनव्यग्रो वसन्तानिलः।

---

शशिकरैः = चन्द्रकिरणैः, श्वेतं = शुक्लं, चामरं = प्रकीर्णकं, वीजनार्थमिति भावः। विनिर्माप्यतां = विरच्यताम्। रे रे = परिचारकाः, बालमृणालतन्तुलतिकासूत्रेण = बालमृणालस्य ( अभिनवबिसस्य ) तन्तुलतिका ( सूत्रततिः ) सैव सूत्रं (तन्तुः), तेन। पाथोजिनीपत्रस्थैः=कमलिनीदलस्थितैः, उदकबिन्दुभिः=जलपृषतैः, मणिमयः= रत्ननिर्मितः, हारः = माला, समागुम्फ्यतां गुम्फ्यताम्। एतयोक्त्या रावणस्य मदनज्वरपीडितत्वं तदपनयनार्थमुपचारनिचयसंपादने त्वरा च व्यज्यते। अत्र रूपकमलङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

मुनिरिति। यादृशः = यथाविधः, चन्दनसमुद्घर्षणादिरूप इति भावः। सीतोपचारः = सीतायाम् ( मैथिल्याम् ) उपचारः ( आचरणम् )।

करालक इति। खेचराश्च = आकाशचारिणश्च, देवादय इति भावः। मदनज्वरतप्तस्य रावणस्य शीतोपचारार्थमादिश्यन्त इति शेषः। खे चरन्तीति, 'चरेष्ट' इति ट प्रत्ययः। 'तत्पुरुषेकृति बहुलम्'इत्यलुक्।

अङ्गमिति। शीतद्युतिः मृदुभिः स्वैः करैः चन्दनेन अङ्गं लिम्पति। वसन्ताऽनिलः किञ्चिच्चञ्चलतालवृन्तकलनव्यग्रः। किञ्च अयं प्रतीचीपतिः नलिनीदलैः तल्पं वितनुते। इत्थं देवैः अनङ्गतप्तहृदयो लङ्केश्वरः सेव्यत इत्यन्वयः।

---

बिन्दुओंसे रत्नमयी मालाका गुम्फन कर लो ॥ ६ ॥

**मुनि**—( उपहासके साथ अपने मनमें ) जैसा यह शीतल उपचार है रावणका वैसा ही सीतामें आचरण भी होगा ( सुनाकर ) किस प्रकार विरहसन्तप्त रावणके शीतल उपचारके लिए राक्षसोंको आज्ञा दे रहे हैं।

**करालक**—आकाशचारी देव भी। इस समय—

चन्द्रमा कोमल अपने किरणोंसे ( अथवा हाथोंसे ) चन्दनसे रावणके अङ्गमें लेपन करते हैं। वसन्त वायु कुछ चञ्चल पङ्खेको चलानेमें आकुल है। ये पश्चिम दिशाके लोक-

किं चायं नलिनीदलैर्वितनुते तल्पं प्रतीचीपति-
देवैरित्थमनङ्गतप्तहृदयो लङ्केश्वरः सेव्यते ॥ ७ ॥

मुनिः—( स्वगतम् ) अये, अलीकवागुडम्बरं निशाचरस्य ।

करालकः—( नेपथ्याभिमुखमवलोक्य ) कथमयं प्रहस्तो राजद्वारमुपसर्पति, तदस्य हस्ते चित्रपटमर्पयिष्ये । भवानपि समीहितं साधयतु ।

( इति निष्क्रान्तौ )

इति विष्कम्भकः ।

---

शीतद्युतिः = हिमांशुः, चन्द्र इत्यर्थः । मृदुभिः = कोमलैः, स्वैः = आत्मीयैः, करैः = किरणैः, हस्तैरिति वा, 'बलिहस्तांऽशवः करा' इत्यमरः । चन्दनेन = श्रीखण्डद्रवेण, अङ्गं = भालवक्षःस्थलादिकं शरीराऽवयवं, लिम्पति = लेपनं करोति । वसन्ताऽनिलः = सुरभिवातः, किञ्चिच्चञ्चलतालवृन्तकलनव्यग्रः = किञ्चित् ( ईषत् ) चञ्चलं ( चपलम् ) यत् तालवृन्तकं ( व्यजनम् ) तस्य कलने ( चालने ) व्यग्रः ( आकुलः ) अस्तीति शेषः । किञ्च = अपरं च, अयम् = एषः, प्रतीचीपतिः = पश्चिमदिगधीश्वरः, वरुण इति भावः । नलिनीदलैः = कमलिनीपत्रैः, तल्पं = शय्यां, वितनुते = करोति, निर्मातीत्यर्थः । इत्थं = पूर्वोक्तप्रकारैः, देवैः = सुरैः, चन्द्रवातवरुणप्रभृतिभिरिति भावः । अनङ्गतप्तहृदयः = कामसन्तप्तवक्षःस्थलः, लङ्केश्वरः = रावणः, सेव्यते = परिचर्यते । एतेन रावणस्य मदनजनितसन्तापाधिक्यं व्यज्यते । अत्र करैरित्यत्र शब्दश्लेषाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

मुनिरिति । अलीकवागडम्बरं = मिथ्यावचनारम्भं, वाक्यमिति शेषः । अलीकमस्ति यस्मिन् सोऽलीकः, 'अर्शआदिभ्योऽच्' इत्यच् । अलीकः ( मिथ्यारूपः ) वागडम्बरः ( वचनारम्भः ) यस्मिंस्तत् । विष्कम्भक इति विष्कम्भकलक्षणं पूर्वमेवोक्तम् ।

---

पाल वरुण, कमलके पत्तोंसे शय्या बना रहे हैं । इस प्रकार देवतालोग कामदेवसे सन्तप्तहृदय रावणकी सेवा कर रहे हैं ॥ ७ ॥

मुनि—( मन ही मन ) अरे ! राक्षसका झूठा वाक्यका आडम्बर है ।

करालक—( नेपथ्यकी ओर देखकर ) कैसे यह प्रहस्त राजद्वारकी ओर आ रहा है । इसलिए मैं इसके हाथमें चित्रपट सौंपता हूँ । आप भी अभीष्ट सिद्ध करें ।

( दोनों जाते हैं । )

इति विष्कम्भक ।

( ततः प्रविशति रावणश्चित्रहस्तः प्रहस्तश्च )

**रावणः**—( स्वगतम् )

> **राजल्ललाटफलका कमनीयकूज-**
> **त्काञ्चीगुणप्रणयिनी धृतकेशपक्षा ।**
> **हा ! किं करोमि मम सा हृदयं प्रविष्टा**
> **नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ८ ॥**

( विमृश्य ) अहो, कथमद्यापि हठाहरणखिन्नां नितान्तकृशधूसराङ्गी-

---

राजदिति । राजल्ललाटफलका कमनीयकूजत्काञ्चीगुणप्रणयिनी धृतकेशपक्षा सा पुष्पशिलीमुखस्य नाराचयष्टिरिव मम हृदयं प्रविष्टा । हा ! किं करोमीत्यन्वयः ।

राजल्ललाटफलका = राजत् ( शोभमानम् ) ललाटफलकं ( भालपीठम् ) नाराचयष्टिपक्षे ललाटमेव फलकं ( बाणाऽग्रम् ) यस्याः सा । कमनीयकूजत्काञ्चीगुणप्रणयिनी = कमनीयं ( सुन्दरम् ) यथा तथा कूजन्ती ( शब्दायमाना ) या काञ्ची ( मेखला ) सा गुणः ( ज्या ) इव तत्प्रणयिनी ( तदनुरागवती, तद्युक्ता, काञ्चीगुणोपेतकटितटेति भावः ) । पक्षान्तरे कमनीयकूजत्काञ्ची इव गुणः ( मौर्वी ) तत्प्रणयिनी । धृतकेशपक्षा = धृताः ( धारिताः ) केशपक्षाः ( कचसमूहाः, पतिविरहेणाऽसंस्कृतकचकलापा इति भावः ) यया सा । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे ।' इत्यमरः । नाराचयष्टिपक्षे—धृतः केशः ( कचः ) इव ( कृष्णवर्ण इति भावः ) पक्षः ( कङ्कपक्षः ) यया सा । एतादृशी सा = सीता, पुष्पशिलीमुखस्य = कुसुमेषोः, पुष्पाणि ( कुसुमानि ) एव शिलीमुखाः ( बाणाः ) यस्य, तस्य । 'अलिबाणौ शिलीमुखौ' इत्यमरः । नाराचयष्टिरिव = सर्वलोहमयशरयष्टिरिव । मम = रावणस्य, हृदयं = वक्षःस्थलं, प्रविष्टा = प्राविशत् । परमसुन्दरी सीता मदनशरयष्टिरिव मदीयं हृदयं प्रविष्टेति भावः । अत्र पुष्पशिलीमुखमित्यत्र रूपकं नाराचयष्टिरित्यत्राभासरूपकं तथा चैतयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । वसन्ततिलका वृत्तम् ॥ ८ ॥

---

( अनन्तर रावण और हाथमें चित्र लेकर प्रहस्त प्रवेश करते हैं । )

**रावण**—( मन ही मन )

शोभमान ललाट ( लिलार ) से युक्त, काञ्चीगुणसे युक्त कटिवाली और सुन्दर केशोंसे सम्पन्न सीता कामदेवकी नाराचयष्टिकी तरह मेरे हृदयमें घुस गई है । हाय ! मैं क्या करूँ ॥ ८ ॥

( विचार कर ) अहो ! कैसे आज भी जबर्दस्ती कर लानेसे विषण्णा और अतिशय

मपि जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि । अथवो चितमिदम् ।

आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः ।
धूसरापि कला चान्द्री किन्न बध्नाति लोचनम् ॥ ९ ॥

प्रहस्तः—अयि देव ! इदमालोक्यतां चित्तविनोदनं चित्रम् ।

रावणः—किं पुनरिहालिखितम् ।

प्रहस्तः—अयं तावत्तरलतिमिनिकरकरालकल्लोलकोलाहलोज्जागरः । सागरः ।

---

आचान्तकान्तिरिति । उन्निद्रैः अहिमत्विषो मयूखैः आचान्तकान्तिः धूसराऽपि चान्द्री कला किं लोचनं न बध्नाति ? इत्यन्वयः । उन्निद्रैः=प्रादुर्भूतैः, लक्षणया एषोऽर्थः । अहिमत्विषः=उष्णरश्मेः, सूर्यस्येत्यर्थः । मयूखैः=किरणैः, आचान्तकान्तिः=आचान्ता ( निपीता, अदर्शनप्रायावस्थां गमितेति भावः ) कान्तिः ( छविः ) यस्याः सा, अतएव—धूसराऽपि=ईषत्पाण्डुवर्णाऽपि 'ईषत्पाण्डुस्तु धूसरः' इत्यमरः । चान्द्री=चन्द्रसम्बन्धिनी, कला=रेखा, किं, लोचनं=नेत्रं, न बध्नाति=नाऽऽकर्षति, बध्नात्येवेति भावः । सूर्यकिरणैरदर्शनप्रायावस्थां गमिता धूसरवर्णाऽपि चन्द्रिकेव वल्लभविरहिता सीता नयनवृत्तिमाकर्षतीति भावः । अनुष्टुब्वृत्तम् ॥९॥

प्रहस्त इति । तरलतिमिनिकरकरालकल्लोलकोलाहलोज्जागरः=तरलः ( चञ्चलः ) यस्तिमिनिकरः ( महाकायमत्स्यविशेषसमूहः ) तेन करालाः ( भयङ्कराः ) ये कल्लोलाः ( उत्कल्लोलाः, महातरङ्गा इत्यर्थः ) तेषां कोलाहलैः ( कलकलध्वनिभिः ) उज्जागरः ( उज्जृम्भितः, लक्षणयैषोऽर्थः ) ।

---

दुर्बल और धूसर अङ्गोंसे युक्त होने पर भी सीताको जनस्थानमें रहने पर जैसी अलङ्कृत भी वैसी ही मैं देख रहा हूं । अथवा यह उचित है ।

प्रकाशपूर्ण सूर्यकी किरणोंसे मन्दप्रकाशवाली और धूसर होने पर भी चन्द्रमाकी कला क्या नेत्रको आकृष्ट नहीं करती है ॥ ९ ॥

प्रहस्त—महाराज ! दिल बहलाने वाले इस चित्रको देखिए ।

रावण—यहाँ क्या लिखा है ?

प्रहस्त—चञ्चल तिमिनामके महामत्स्योंसे भयङ्कर बड़ी बड़ी तरङ्गोंके कोलाहलसे उज्जृम्भित यह समुद्र है ।

रावणः—( विलोक्य ) किमिदमुत्तरेण तरङ्गमालिनमनुतमालखण्डमाखण्डलधनुःसहस्रानुकारि कपिशयति गगनतलम् ?

प्रहस्तः—तदिदं सुग्रीवपालितं कपिकुलम् ।

रावणः—( विहस्य ) अयि ! वालिपालितमिति वक्तव्यम् । भवतु । किं पुनरनेन । कौ पुनरिमौ कार्मुकधरौ ?

प्रहस्तः—ताविमौ रामलक्ष्मणौ, ययोरग्रजस्य बाणपातविलसितेन सुग्रीवपालितमधुना कपिकुलम् ।

रावणः—( अनाकर्णितकेन ) कः पुनरयं नितान्तकृशकमनीयतनुरमन्दमन्दराघातनिर्मन्थनोत्थिततरलतरङ्गदूरविक्षिप्तः शङ्करशिरःशेखराधिरोहणकुतूहली कलानिधिरिव तरङ्गमालिनस्तटभुवमधिशेते ।

---

रावण इति । तरङ्गमालिनं = समुद्रम्, 'उत्तरेणे'त्येनबन्तपदप्रयोगे 'एनपा द्वितीये'ति द्वितीया । उत्तरेण = उत्तरतटे । अनुतमालखण्डं = तापिच्छवृक्षसमूहसमीपं समीपार्थेऽव्ययी भावः । कपिशयति = कपिशवर्णं करोति, 'तत्करोति तदाचष्ट' इति णिजन्ताल्लट् ।

प्रहस्त इति । अग्रजस्य = ज्येष्ठस्य, रामस्येति भावः । बाणपातविलसितेन = शरप्रहारविलासेन, वालिवधेनेति भावः ।

रावण इति । नितान्तकृशकमनीयतनुः = नितान्तकृशा ( एकान्तदुर्बला ) कमनीया ( मनोहरा ) तनुः ( शरीरम् ) यस्य सः । अमन्दमन्दराघातनिर्मन्थनोत्थित-

---

रावण—( देखकर ) समुद्रके उत्तरतटमें तापिच्छ वृक्षोंके समीप हजारों इन्द्रधनुषोंके सदृश यह क्या पदार्थ आकाशको कपिशवर्ण बना रहा है ?

प्रहस्त—यह सुग्रीवसे रक्षित बन्दरोंका गिरोह है ।

रावण—( हंसकर ) अरे ! वालीसे रक्षित कहना चाहिए । हां । इससे क्या ? धनुर्धारी ये दोनों कौन हैं ?

प्रहस्त—ये दोनों राम और लक्ष्मण हैं, जिनमें ज्येष्ठ रामके बाणप्रहारकी क्रीडासे इस समय वानरसमूह सुग्रीवसे रक्षित हो रहा है ।

रावण—( न सुननेका अभिनय कर ) यह कौन अतिशय दुर्बल और सुन्दर शरीर वाला, अतिशय मन्दरके आघातके विलोडनसे उत्थित चञ्चल तरङ्गोंसे दूर तक फेंका गया, शिवमस्तकके शेखरमें चढ़नेमें कुतूहल करने वाले चन्द्रमाके समान समुद्रकी तटभूमि पर सो रहा है ?

प्रहस्तः—स एव लङ्कागमनकुतूहली निजकुलगुरुं सागरमुपचरितुं कुशशयनविन्यस्तगात्रः प्रथमो दाशरथिः ।

रावणः—( विहस्य ) कथमित्थमेव जानकीलाभकौतुकः सोऽयमस्मानप्युपचरिष्यति ?

प्रहस्तः—इतो विलोक्यतामयं रामनाराचनिर्मुक्तबहलानलहेलातरलदीनमीननिकरपरिवारः पारावारः ।

---

तरलतरङ्गदूरविक्षिप्तः = अमन्दम् ( अत्यर्थं यथा तथा ) यो मन्दराघातः ( मन्दराख्यपर्वताहतिः ) तेन निर्मन्थनेन ( विलोडनेन ) उत्थिताः ( उत्पतिताः ) ये तरलतरङ्गाः ( चञ्चलभङ्गाः ) तैर्दूरविक्षिप्तः ( विप्रकृष्टप्रक्षिप्तः ) । शङ्करशिरःशेखराऽधिरोहणकुतूहली = शङ्करस्य ( शिवस्य ) शिरसि ( मूर्ध्नि ) यः शेखरः ( शिरोभूषणम् ) तस्मिन् यत् अधिरोहणम् ( आरोहणम् ) तस्मिन् कुतूहली ( कौतुकी ) । कलानिधिः = चन्द्रः, 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । तरङ्गमालिनः = समुद्रस्य । तटभुवं = तीरप्रदेशम् , अधिपूर्वकशीङ्धातोर्योगे 'अधिशीङ्स्थाऽऽसां कर्मे'ति कर्मत्वाद्द्वितीया । एतेन रामस्य चन्द्रसमसौन्दर्यं समुद्रतरणरूपरामप्रयासस्य वैफल्यं च द्योत्यते ।

प्रहस्त इति । उपचरितुं = सेवितुम् ।

रावण इति । उपचरिष्यति = सेविष्यते, तरणाऽर्थं यथा रामः समुद्रं प्रार्थयते, जानकीलाभाऽर्थं तथैव मां प्रार्थयिष्यत इति सोल्लुण्ठनोक्ती रावणस्य ।

प्रहस्त इति । रामनाराचनिर्मुक्तबहलाऽनलहेलातरलदीनमीननिकरपरिवारः = रामस्य ( दाशरथेः ) नाराचात् (प्रक्ष्वेडनात् , सर्वलौहमयशरादिति भावः) निर्मुक्तः ( प्रक्षिप्तः ) बहलः ( प्रचुरः ) योऽनलः ( अग्निः ) तेन हेलया ( अनायासेन ) तरलाः ( चञ्चलाः ) दीनाः ( दुःखिताः ) मीननिकरपरिवाराः ( जलजन्तुसमूहरूपकुटुम्बाः, अत्र मीनपदं जलजन्तूपलक्षणम् ) यस्य सः । तादृशः पारावारः = समुद्रः । अनयोक्त्या रावणकृताया रामावज्ञायाः परिहरणं गम्यते ।

---

प्रहस्त—लङ्कामें जानेके लिए कुतूहल कर अपने कुलगुरु समुद्रकी सेवा करनेके लिए कुशशयनमें बैठा हुआ वह ही पहला दाशरथि ( राम ) है ।

रावण—( हँसकर ) यह सीताको पानेके लिए कुतूहल कर क्या इसी प्रकार हमारी भी सेवा करेगा !

प्रहस्त—इधर देखिए । रामके नाराच अस्त्रसे फेंके गये अग्निसे अनायास ही चञ्चल और दुःखित मत्स्य आदि जलजन्तुपरिवारोंसे युक्त यह समुद्र है ।

रावणः—कौ पुनरिमौ ज्येष्ठतापसस्य सादरं वानरवीरैः पार्श्वपरिसरमानीयेते ?

प्रहस्तः—अयं तावत्सागर एव । अयमपि देवस्यैव–( इत्यर्धोक्ते ) अथवा किमस्य बन्धुविरोधिनो नामग्रहणेन ?

रावणः—कथमयं विभीषणोऽस्मद्विरोधेन राममाश्रयति । भवतु ।

निशाचरशिरोरत्नरञ्जिताङ्घ्रिसरोरुहः ।
प्रियोऽपि दशकण्ठस्य नैष दर्शनमेष्यति ॥ १० ॥

रावणः—( सकौतुकम् ) किं पुनरिदमक्षरपङ्क्तिद्वयम् ?

प्रहस्तः—नूनमिदं समुद्रविभीषणौ प्रति लक्ष्मणस्य वचनद्वयं भविष्यति ।

रावणः—एकं तावद्वाचय ।

---

रावण इति । पार्श्वपरिसरं = निकटपर्यन्तभुवम् ।

प्रहस्त इति । बन्धुविरोधिनः = कुटुम्बविद्वेषिणः, विभीषणस्येति भावः ।

निशाचरेति । निशाचरशिरोरत्नरञ्जिताऽङ्घ्रिसरोरुहः प्रियोऽपि एष दशकण्ठस्य दर्शनं न एष्यतीत्यन्वयः ।

निशाचरशिरोरत्नरञ्जिताऽङ्घ्रिसरोरुहः = निशाचराणां ( राक्षसानाम् ) शिरोरत्नैः ( मस्तकमणिभिः ) रञ्जिते ( अलङ्कृते ) अङ्घ्रिसरोरुहे ( चरणकमले ) यस्य सः । प्रियोऽपि = दयितोऽपि, एषः = अयं, विभीषण इति भावः । दशकण्ठस्य ( रावणस्य, मम ) दर्शनं = विलोकनं, न एष्यति = न प्राप्स्यति, अतः परं नाऽहं विभीषणमुखं द्रक्ष्यामीति भावः । अनुष्टुब्वृत्तम् ॥ १० ॥

---

रावण—ज्येष्ठ तपस्वीके पास वीर वानरोंसे आदरपूर्वक लाये गये ये दोनों कौन हैं ?

प्रहस्त—यह समुद्र ही है और यह भी महाराजका ही ( ऐसा आधा कहने पर ) अथवा इस बान्धवद्वेषीका नाम लेनेसे क्या लाभ ?

रावण—किस प्रकार यह विभीषण हमारे विरोधसे रामका आश्रय ले रहा है। अच्छा ।

राक्षसोंकी मस्तकमणियोंसे अलङ्कृत चरणोंसे युक्त यह प्यारा होकर मेरे दर्शनके लिए नहीं आवेगा ॥ १० ॥

रावण—( कुतूहलके साथ ) ये दो अक्षरपङ्क्तियाँ क्या हैं ?

प्रहस्त—समुद्र और विभीषणके प्रति निश्चय ही लक्ष्मणके ये दो वचन होंगे ।

रावण—एक बाँचो ।

प्रहस्तः—( वाचयति )

त्रासं मुञ्च समुद्र ! कोपदहनो रामस्य पास्यत्ययं
बन्दीभूतसुरेन्द्रसुन्दरदृशामक्ष्णोरमुद्रं पयः ।
कामं ते मकरीगणो विहरतामेते च लङ्केश्वर-
स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिनः सायकाः ॥ ११ ॥

रावणः—अन्यदपि वाचय ।

---

समुद्रं प्रति कथमगस्त्योक्तिं प्रतिपादयति—त्रासं मुञ्चेति । हे समुद्र ! त्रासं मुञ्च, रामस्य अयं कोपदहनो बन्दीभूतसुरेन्द्रसुन्दरदृशाम् अक्ष्णोः अमुद्रं पयः पास्यति । ( हे समुद्र ! ) ते मकरीगणः कामं विहरताम् । एते सायकाश्च लङ्केश्वर-स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिन इत्यन्वयः ।

हे समुद्र = हे सागर !, त्रासं = भयं, रामकोपजनितमिति शेषः । मुञ्च त्यज । रामस्य = राघवस्य, अयम् = एषः, कोपदहनः = क्रोधाऽग्निः, बन्दीभूतसुरेन्द्रसुन्दर-दृशां = बन्दीभूताः ( रावणनियन्त्रिताः ) सुरेन्द्रस्य ( देवेन्द्रस्य ) याः सुन्दरदृशः ( मनोहरनयनाः ) देवललनास्तासाम् । अक्ष्णोः = नयनयोः अमुद्रम् = अमर्यादम्, अपरिमितमिति भावः । पयः = जलम् , अश्रु इति भावः । पास्यति = पानं करि-ष्यति । न तु त्वदीयं पयः पास्यतीत्यर्थो परिसंख्यया । रामस्य कोपाऽनलो रावण-हृतानां देवललनानामपरिमितं नयनजलं दशाननवधेन शोषयिष्यतीति भावः । हे समुद्र ! ते = तव, मकरीगणः = ग्राहवधूसमूहः, कामं = यथेष्टं, विहरतां = क्रीडतु । रामाऽस्त्रेण त्वज्जलं नो विनङ्क्ष्यति, प्रत्युत त्वज्जले यथेष्टं जलचरसमूहः क्रीडिष्य-तीति भावः । एते = इमे, सायकाश्च = बाणाश्च, राममुक्ता इति शेषः । लङ्केश्वरस्त्री-गण्डस्थलपत्रभङ्गमकरीविध्वंसिनः = लङ्केश्वरस्य ( रावणस्य ) स्त्रीणां (योषिताम्) गण्डस्थलेषु ( कपोलफलकेषु ) याः पत्रभङ्गमकर्यः ( स्तनकपोलादौ मकरिकाऽऽका-राः कस्तूरिकादिरचितपत्रावलयः ) तासां विध्वंसिनः ( विनाशिनः ), तासां पतिव-धादिति भावः । रामबाणाः समुद्रस्थजलचरविध्वंसका न प्रत्युत रावणवधूवैध-व्यदीक्षायता इति भावः । अत्र रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

---

प्रहस्त—( बांचता है )

हे समुद्र ! डरो मत । रामका यह कोपाऽग्नि बन्दिनी देवाङ्गनाओंके आँखोंमें स्थित अपरिमित जल ही पी डालेगा ।

हे समुद्र ! तुम्हारे जलके भीतर ग्राहवधूसमूह यथेष्ट विहार करे । ये बाण रावणकी स्त्रियोंके कपोलों पर कस्तूरी आदिसे बनाई गई पत्रावलियोंको नष्ट कर देंगे ॥ ११ ॥

रावण—दूसरा भी बांचो ।

प्रहस्तः—( वाचयति )

अद्यैवास्य विभीषणस्य शरणापन्नस्य मूर्ध्ना नते-
रानृण्यं विदधात्ययं रघुपतिर्लङ्काधिपत्यश्रियम् ।
एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ, सर्वे वयं साक्षिणः ॥ १२ ॥

रावणः—अहो ! वाग्डम्बरैकसारता कनिष्ठतापसस्य । भवतु । किं पुनरिदं मध्ये समुद्रमालोक्यते ।

---

अद्यैवेति । अयं रघुपतिः शरणाऽऽपन्नस्य अस्य विभीषणस्य मूर्ध्नानतेः लङ्काऽऽधिपत्यश्रियम् आनृण्यं विदधाति । इह एतस्य भुजौ सुग्रीवराज्याऽर्पणत्रैलोक्यप्रथमानसत्यचरितौ । अद्य सर्वे वयं साक्षिण इत्यन्वयः ।

अयम्=एषः, रघुपतिः=रामचन्द्रः, शरणापन्नस्य=आश्रितस्येत्यर्थः । अस्य=एतस्य, विभीषणस्य=रावणाऽनुजस्य, मूर्ध्ना=शिरसा, नतेः=नमस्कारस्य, लङ्काऽऽधिपत्यश्रियं=लङ्काऽधीश्वरसम्पदम् उद्देश्यरूपाम् । आनृण्यम्=अनृणतां, प्रत्युपकाररूपामिति भावः, विधेयवाचकं पदमेतत् विदधाति=करोति, करिष्यतीति भावः । रामः शरणापन्नविभीषणकर्तृकस्य नमनरूपोपकारस्य लङ्काऽधिपत्यरूपं प्रत्युपकारं करिष्यतीति भावः । इह=अस्मिन् विषये, एतस्य=रामस्य, भुजौ=बाहू, सुग्रीवराज्याऽर्पणप्रथमानसत्यचरितौ=सुग्रीवाय ( वाल्यनुजाय ) यत् राज्यार्पणं ( वानरैश्वर्यदानं, वालिहननपूर्वकमिति शेषः ) तेन प्रथमानं ( ख्यातिमुपगच्छत् ) सत्यं ( तथ्यं, प्रतिज्ञानुसारीति भावः ) चरितं ( चरित्रम् , आचरणमिति भावः ) ययोस्तौ, स्त इति शेषः । अत्र च अद्य=अस्मिन्दिने सर्वे=सकलाः, वयम्=अस्मदादयः, साक्षिणः=साक्षाद्द्रष्टारः, तथा चाऽत्र न कोऽपि सन्देह इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

रावण इति । वाग्डम्बरैकसारता=वाग्डम्बरः ( वचनाऽऽडम्बरः ) एव एकः

---

प्रहस्त—( बाँचता है )

ये रघुनाथ शरणापन्न विभीषणसे किये गये प्रणामका ऋण चुकानेके लिए उन्हें लङ्का का स्वामित्व देंगे । इस विषयमें इनके दोनों बाहु सुग्रीवको राज्य देनेसे त्रैलोक्यमें प्रख्यात और सत्यचरित्रवाले हैं । आज सब हमलोग साक्षी ( गवाह ) हैं ॥ १२ ॥

रावण—अहो ! कनिष्ठ तपस्वीका वचनके आडम्बरमें ही एकमात्र बल है । अच्छा । समुद्रके बीचमें यह क्या देखा जा रहा है ?

प्रहस्तः—स एष कपिकुलोन्मूलितशैलशिखरनिर्मितः काकुत्स्थकुलकीर्त्तिप्रसक्तिप्रबन्धः सेतुबन्धः।

रावणः—अहो चित्रकरस्य चातुरी। यदलीकमपि सत्यमिव दर्शितवान्।

प्रहस्तः—कथमद्यापीदमलीकमिति सम्भावना देवस्य।

( नेपथ्ये कलकलः )

रावणः—किमेतत् ?

प्रहस्तः—

एषामयं रामचमूचराणां दर्पोद्धतानां कपिकुञ्जराणाम्।
नवोद्गतानामिव नीरदानां कोलाहलः कोऽपि समुज्जिहीते॥ १२॥

---

( मुख्यः ) सारः ( स्थिरांऽशः ) यस्य सः, तस्य भावस्तत्ता। मध्ये समुद्रं = समुद्रस्य मध्ये 'पारे मध्ये षष्ठ्या वे'त्यव्ययीभावः।

प्रहस्त इति। कपिकुलोन्मूलितशैलशिखरनिर्मितः = कपिकुलेन ( वानरसमूहेन ) उन्मूलितानि ( उत्पाटितानि ) यानि शैलशिखराणि ( पर्वतश्रृङ्गाणि ) तैर्निर्मितः ( रचितः )। काकुत्स्थकुलकीर्तिप्रसक्तिप्रबन्धः = काकुत्स्थकुलस्य ( रघुवंशस्य ) या कीर्तिप्रसक्तिः ( यशःप्रसङ्गः ), तस्याः प्रबन्धः ( रचना )।

रावण इति। अलीकमपि = मिथ्याभूतमपि, समुद्रबन्धनरूपमिति भावः।

एषामयमिति। नवोद्गतानां नीरदानामिव रामचमूचराणां दर्पोद्धतानाम् एषां कपिकुञ्जराणां कोऽपि अयं कोलाहलः समुज्जिहीत इत्यन्वयः। नवोद्गतानां = प्रत्यग्राविर्भूतानां, नीरदानामिव = मेघानामिव, शब्दसादृश्यादियमुपमा बोध्या। रामचमूचराणां = राघवसेनाचारिणां, दर्पोद्धतानां = दर्पोद्दण्डानाम् , एषाम् = एतेषां,

---

प्रहस्त—यह वानरोंसे उत्पाटित पर्वतशिखरोंसे रचित और काकुत्स्थवंशके कीर्ति प्रसङ्गकी रचना सेतुबन्ध है।

रावण—अहो ! चित्रकारकी कैसी चातुरी है ! जिसने कि मिथ्याको भी सत्यके समान प्रदर्शित किया है।

प्रहस्त—कैसे अभी भी महाराजको 'यह झूठ है' ऐसी संभावना हो रही है ?

( नेपथ्यमें कोलाहल होता है। )

रावण—यह क्या है ?

प्रहस्त—नये आविर्भूत मेघोंके समान रामकी सेनामें चलने वाले गर्वोद्धत इन कपिवीरोंका अनिर्वाच्य यह कोलाहल प्रकट हो रहा है॥ १२॥

प्रहस्तः—तदिदं शङ्कितव्यं प्रतिविधातव्यं वा ।

रावणः—आः, किमिह शङ्कया प्रतिविधानेन वा । अनेन हि—

कोलाहलेनोल्लसता कपीनां मनो मदीयं मुदमेव धत्ते ।
मन्दोदरीभूषणनूपुराणां महामणीनामिव शिञ्जितेन ॥ १४ ॥

( प्रविश्य )

मन्दोदरी—जयतु जयतु देवः । ( जेदु जेदु देवो )

रावणः—देवि, इत आस्यताम् ।

( मन्दोदरी यथोचितमुपविश्याऽधोमुखी तिष्ठति )

---

कपिकुञ्जराणां = वानरयूथपानां, 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । कोऽपि = अनिर्वचनीयः, अयम् = एषः, कोलाहलः = कलकलः, समुज्जिहीते = समुद्गच्छति । उपमाऽलङ्कारः । इन्द्रवज्रोपेन्द्रवज्रयोः संमिश्रणादुपजातिर्वृत्तम् ॥ १३ ॥

प्रहस्तः इति । प्रतिविधातव्यं = प्रतिकर्तव्यम् ।

कोलाहलेनेति । मन्दोदरीभूषणनूपुराणां महामणीनां शिञ्जितेन इव उल्लसता कपीनां कोलाहलेन मदीयं मनो मुदमेव धत्त इत्यन्वयः । मन्दोदरीभूषणनूपुराणां = मन्दोदर्याः ( मयदुहितुः ) भूषणनूपुराणाम् ( अलङ्कारमञ्जीराणाम् ), महामणीनां = महारत्नानां, शिञ्जितेन इव = शब्देन इव, उल्लसता = उद्गच्छता, कपीनां = वानराणां, कोलाहलेन = कलकलेन, मदीयं = मामकं, मनः = चित्तं, मुदमेव = हर्षमेव, धत्ते = धारयति, मन्दोदरीभूषणशिञ्जितमिवाऽऽविर्भूतोयं कपिकुलकोलाहलो मामकं मनो हर्षयुक्तमेव विदधाति न भीतियुक्तमिति भावः । एतेन कपिकुलतो रावणस्य नितान्तमेव भयाऽभावता द्योत्यते । उपजातिर्वृत्तम् ॥ १४ ॥

---

प्रहस्त—तो यह शङ्कनीय है अथवा इसका प्रतीकार करना चाहिए ।

रावण—ओह ! इस विषयमें शङ्कासे या प्रतिविधानसे क्या प्रयोजन है ? इस—

मन्दोदरीके अलङ्कारों और नूपुरोंमें स्थित महारत्नोंके शब्दके समान उद्गत वानरोंके कोलाहलसे मेरा मन हर्षका ही अनुभव कर रहा है ॥ १४ ॥

( प्रवेशकर )

मन्दोदरी—महाराजकी जय हो जय हो ।

रावण—महारानी ! यहां बैठो ।

( मन्दोदरी उचित स्थान पर बैठकर अवनतमुखी होती है । )

रावणः—

भुग्नालकं स्मितपराजितचन्द्रलेखं
दृग्लीलया कुवलयश्रियमादधानम् ।
एतन्मुखं दिविषदामिव दुर्निरीक्ष्यं
तन्वङ्गि ! मामिव मुधा किमधःकरोषि ? ॥ १५ ॥

भुग्नाऽलकमिति । हे तन्वङ्गि ! भुग्नाऽलकं स्मितपराजितचन्द्रलेखं दृग्लीलया कुवलयश्रियम् आदधानं दिविषदां दुर्निरीक्ष्यम् एतत् मुखं मामिव मुधा किम् अधः करोषि ? इत्यन्वयः ।

हे तन्वङ्गि = हे कृशोदरि सुन्दरि !, भुग्नालकं = भुग्नाः ( कुटिलाः ) अलकाः ( चूर्णकुन्तलाः ) यस्मिंस्तत्, सर्वाण्यप्येतानि विशेषणानि मन्दोदरीमुखेन सह रावणपक्षेऽपि योजनीयानि । तथा च रावणपक्षे—भुग्ना ( पराजिता ) अलका ( अलकाऽऽख्या कुवेरपुरी ) येन, तम् । स्मितपराजितचन्द्रलेखं = स्मितेन ( मन्द-हास्येन ) पराजिता ( विजिता ) चन्द्रलेखा ( इन्दुकान्तिः ) येन तत् । रावणपक्षे—स्मितेन ( अहङ्कारेण ) पराजिताः ( विजिताः ) चन्द्रः ( चन्द्रमाः ) लेखाः (देवाश्च) येन, तम् । दृग्लीलया = नेत्रशोभया, कुवलयश्रियं = नीलकमलद्युतिम् , रावणपक्षे—दृग्लीलया = नयनेङ्गितेनैव, कुवलयश्रियं = पृथ्वीमण्डलसम्पत्तिम् , 'गोत्रा कुः पृथिवी पृथ्वी क्ष्माऽवनिर्मेदिनी मही ।' इत्यमरः । आदधानं = धारयत् , रावणपक्षे—धारयन्तम् । एवं च दिविषदां = देवानां, दुर्निरीक्ष्य'मिति कृत्यप्रत्ययाऽन्तपदयोगे 'कृत्यानां कर्तरि वे'ति षष्ठी । दुर्निरीक्ष्यं = दुर्दर्शनीयमिव, भयाद् द्रष्टुमशक्यमिति भावः । एतदुभयत्र समानम् । एतत् = समीपतरवर्ति, मुखं = तव मन्दोदर्या आननं, मामिव = मां रावणमिव, मुधा = व्यर्थमेव, किं = किमर्थम् , अधः करोषि = अवनतं विदधासि । हे मन्दोदरि ! त्वं लोकैकसुन्दरस्य स्वमुखस्याऽधः करणेन मद्वैरस्याधानेन मामेव तिरस्करोषीति भावः । अत्र शब्दश्लेषाऽलङ्कारः । वसन्त-तिलकावृत्तम् ॥ १५ ॥

हे कृशोदरि ! कुटिल अलकोंसे युक्त, मन्दहास्यसे चन्द्रकान्तिको पराजित करनेवाले नेत्रोंकी शोभासे ही नीलकमलकी कान्तिको धारण करनेवाले और देवताओंसे दुर्दर्शनीय इस अपने मुखको अवनत कर अलकाको पराजित करनेवाले, अहङ्कारसे चन्द्रमा और अन्य देवताओंको जीतनेवाले, नेत्रोंके संकेतसे ही भूमण्डलकी सम्पत्तिको ग्रहण करनेवाले और देवताओंसे दुर्दर्शनीय मुझे ही क्यों व्यर्थ तिरस्कृत कर रही हो ॥ १५ ॥

प्रहस्तः—देव ! कपिसेनाकोलाहलचिन्तयैव नूनमधरीकृतमुखी देवीति तर्कयामि ।

रावणः—आः, क एष चिन्ताविषयः ?

इयं लीलालोलाङ्गदभुजलता नीलचिकुरा
समुन्मीलत्तारा कुमुदहसिता चारुनयना ।

---

रावणो वानरसेनां तिरस्कुर्वंस्तस्यां सुन्दरयुवतिसादृश्यं प्रतिपादयति–इयमिति । लीलालोलाङ्गदभुजलता नीलचिकुरा समुन्मीलत्तारा कुमुदहसिता चारुनयना इयं प्लवङ्गानां सेना तारापतिमुखी युवतिरिव अद्य मम अग्रे कन्दर्पं प्रकटयितुं प्रभवतीत्यन्वयः । लीलालोलाङ्गदभुजलता=लीलया ( क्रीडया ) लोलः ( चञ्चलः ) अङ्गदः ( वालिपुत्रः ) एव भुजलता ( बाहुवल्ली ) यस्यां सा, अङ्गदः प्लवङ्गसेनाया बाहुस्थानीय इति भावः सर्वाण्येतानि विशेषणानि प्लवङ्गसेनाया युवतेश्चेति बोद्धव्यानि । युवतिपक्षे—लीलायां ( क्रीडायाम् ) लोलं ( चञ्चलम् ) अङ्गदं ( केयूरम् ) यस्यां सा, तादृशी भुजलता यस्याः सा । नीलचिकुरा=नीलः ( नीलाख्यः प्लवङ्गः ) एव चिकुरः ( केशाः ) यस्याः सा । शब्दसादृश्येन प्लवङ्गसेनाया इदं विशेषणं ज्ञेयम् । यद्वा नीलेन ( तदाख्यवानरेण ) चिकुरा ( चपला ), 'चपलश्चिकुरः समौ' इत्यमरः । युवतिपक्षे—नीलाः ( कृष्णवर्णाः ) चिकुराः ( केशाः ) यस्याः सा, कृष्णकेशीति भावः । 'चिकुरः कुन्तलो बालः कचः केशः शिरोरुहः ।' इत्यमरः । समुन्मीलत्तारा=समुन्मीलन् ( द्योतमानः ) तारः ( तारनामकः प्लवङ्गमः ) यस्यां सा । युवतिपक्षे—समुन्मीलन्त्यौ ( भ्रमन्त्यौ, कामावेशेनेति शेषः ) तारे ( कनीनिके ) यस्याः सा । कुमुदहसिता=कुमुदः (कुमुदाऽभिधानः प्लवङ्गः) एव हसितं (हास्यम्) यस्यां सा । यद्वा कुमुदहसितं यस्यां सा, 'अर्शआदिभ्योऽच्' इत्यच्प्रत्ययः । युवतिपक्षे—कुमुदमिव ( कैरवमिव, उज्ज्वलमिति भावः ) हासो यस्याः सा । चारुनयना=चारु ( सुन्दरम् ) नयनं ( प्राप्तिः, गमनमिति भावः ) यस्याः सा । युवतिपक्षे—चारुणी ( सुन्दरे ) नयने ( नेत्रे ) यस्याः सा सुन्दरनयनेत्यर्थः । 'न क्रोडादिबह्वचः'

---

प्रहस्त—महाराज ! वानरसेनाके कोलाहलकी चिन्तासे ही निश्चय महारानी अधोमुखी हुई हैं मुझे ऐसा लग रहा है ।

रावण—ओह ! इसमें चिन्ता करनेकी क्या बात है ?

लीलासे चञ्चल अङ्गदरूप बाहुसे युक्त, नील वानररूप केशकलापसे सम्पन्न, तार नामक वानरसे प्रकाशमान, कुमुद वानररूप हास्यसे उल्लासित और सुन्दर गतिवाली यह वानरसेना, क्रीडामें चञ्चल बाजूबन्दसे भूषित बाहुलतासे युक्त, नील केशकलापसे सम्पन्न, कामावेशसे फड़कने वाली आँखोंकी पुतलियोंसे प्रकाशमान, कुमुदके समान

प्लवङ्गानां सेना युवतिरिव तारापतिमुखी
ममाऽग्रे कन्दर्पं प्रकटयितुमद्य प्रभवति ॥ १६ ॥

मन्दोदरी—देव ! अन्यदप्यस्ति कारणम् ! अद्य हि मया देवस्य शकुननिरूपणार्थं गिरिशिखरगहनगर्भस्थितां शबरपल्लीं प्रस्थापिता निजपरिचारिका । तया च कस्या अपि शबरकुटुम्बिन्या निजगृहपर्यन्तवासिनं केसरिकिशोरकं लालयन्त्या ईदृशं वचनमाकर्णितम् । ( देव ! अण्णं पि अत्थि कारणं । अज्ज हि मए देवस्स सउणणिरूवणत्थं गिरिसिहरगहणगब्भट्ठिदां सबरपल्लीं पट्ठाविदा णिअपरिआरिआ । ताए अ कीए वि सवरकुडुम्बिणीए णिअघरपेरन्तवासिणं केसरिकिसोरअं उल्लावअन्तीए एरिसं वऊणं आअण्णिदम् )

---

इति निषेधान्धीपभावः । इयम् = एषा, प्लवङ्गानां = वानराणां, सेना = चमूः, तारापतिमुखी = चन्द्रमुखी, तारापतिः ( चन्द्रः ) इव मुखम् ( आननम् ) यस्याः सा, 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' इति ङीष् । केचित्तारापतिमुखीमितिपदं कपिसेनायाश्च विशेषणत्वेन योजयन्ति व्याख्यान्ति च तारापतिः ( सुग्रीवः ) मुखं ( मुख्यम् ) यस्याः सेति । परमत्र मुखपदस्य प्राधान्येन स्वाङ्गवाचकत्वाऽभावान्ङीषः प्रसक्तिश्चिन्तनीया । युवतिरिव = तरुणीव, अद्य = अस्मिन्दिने, मम = रावणस्य, अग्रे = पुरतः, कं = कीदृशं, दर्पम् = अवलेपं, युवतिपक्षे—कन्दर्पं = कामदेवं, प्रकटयितुं = प्रकाशयितुं, प्रभवति = समर्था भवति । एतादृशी वानरसेना लोकरावणस्य रावणस्य ममाऽग्रे कमपि दर्पं प्रकाशयितुं समर्था न प्रत्युताऽकिञ्चित्करत्वात् सुन्दरीयुवतिरिव कामचेष्टामेव प्रकाशयतीति भावः । अत्र श्लेषोपमयोरङ्गाङ्गिभावेन सङ्करः । शिखरिणीवृत्तम् ॥ १६ ॥

मन्दोदरीति । गिरिशिखरगहनगर्भस्थितां=पर्वतशृङ्गवनाऽभ्यन्तरस्थाम् । शबरपल्लीं = शबराणां ( म्लेच्छजातिविशेषाणाम् ) पल्लीम् ( स्वल्पग्रामम् ), 'भेदाः किरातशबरपुलिन्दा म्लेच्छजातयः ।' इत्यमरः । पत्रपरिधानो म्लेच्छविशेषः = शबर इत्यमरटीकायां भरतः । केसरिकिशोरकं = सिंहतरुणम् ।

---

उज्ज्वलहास्य वाली और सुन्दर नेत्रों वाली चन्द्रमुखी युवतिकी तरह होकर आज मेरे सामने कामदेवको प्रकाशित करनेके लिए समर्थ हो रही है ॥ १६ ॥

मन्दोदरी—महाराज ! और भी कारण है । आज मैंने महाराजका शकुन देखनेके लिए पर्वतकी चोटीके वनके अभ्यन्तरस्थ शबरग्राममें अपनी दासीको भेजा था । उसने अपने घरके निकट रहनेवाले सिंहशावकको लालन करनेवाली किसी शबरपत्नीका ऐसा वचन सुन लिया—

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटां मृगेन्द्र ! शरभस्य नन्दनः प्राप्तः ॥१७॥
( 'मा होहि णाअवइणो परिहवमेत्तेण गव्वणिव्वूढो ।
वसुहमिमं गिरिसंकडं मइन्द सरहस्स णन्दणो पत्तो ॥' )

रावणः—किमिह विषादस्थानम्, अस्मान् प्रत्युदासीनमेवैतत् । तथाहिः—

मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटां मृगेन्द्र, शरभस्य नन्दनः प्राप्तः ॥१८॥

प्रहस्तः—देव ! अन्यथा घटमानमिदम्,

---

मा भवेति । हे मृगेन्द्र ! नागपतेः परिभवमात्रेण गर्वनिर्व्यूढो मा भव । शरभस्य नन्दनो गिरिसङ्कटाम् इमां वसुधां प्राप्त इत्यन्वयः ।

हे मृगेन्द्र = हे सिंह !, 'सिंहोमृगेन्द्रः पञ्चास्योदर्यक्षः केसरी हरिः ।' इत्यमरः । नागपतेः = गजेन्द्रस्य, मत्तगजस्येति भावः । परिभवमात्रेण = तिरस्कारेणैव, पराजय जनितेनेति शेषः । गर्वनिर्व्यूढः = दर्पसम्पन्नः, मा भव = मा भूः । मत्तो दन्तावलो मया निहत इति विचारमात्रेण दर्पं मा कुर्विति भावः । यतः शरभस्य = अष्टापदस्य महापराक्रमस्य पशुविशेषस्य, नन्दनः = पुत्रः, गिरिसङ्कटां = पर्वतदुर्गमाम् । इमाम्= एताम्, वसुधां = भूमिं, प्राप्तः = आसादितवान्, यस्त्वां हनिष्यतीति भावः । अप्रस्तुतप्रशंसाऽलङ्कारः । मन्दोदरी चाऽत्र प्रकारान्तरेण रावणं सम्बोधयति । तथा च हे मृगेन्द्रसमवीर्य शालिन् ! नागपतेः = ऐरावतहस्तिस्वामिन इन्द्रस्य, परिभवमात्रेण गर्वनिर्व्यूढो मा भव । यतः—शरभस्य = शरभसमपविक्रमशालिनो दशरथस्य, नन्दनः = पुत्रो रामः, गिरिसंकटां = त्रिकूटपर्वतदुर्गमाम्, इमाम् = एतां, वसुधां = भूमिं, लङ्कापुरीं, प्राप्तः ।

रावण इति । विषादस्थानं = खेदास्पदम् । रावणश्च गूढाऽर्थमविमृश्यैव सिंहाऽऽदिपरकमर्थमाकलयति ॥ १८ ॥

प्रहस्त इति । अन्यथा = प्रकारान्तरेण । प्रहस्तश्च पूर्वोक्तपद्यस्यैवपरिवर्तनेन

---

हे सिंह ! तुम गजेन्द्रको जीतकर ही दर्पयुक्त मत बनो । शरभशावक, पर्वतसे दुर्गम इस भूमिको प्राप्त हुआ है ॥ १७ ॥

रावण—इसमें विषाद करनेका क्या स्थान है ? यह बात हमारे प्रति तटस्थ ही है । जैसे कि—

फिर उसी श्लोककी आवृत्ति करता है ॥ १८ ॥

प्रहस्त—महाराज ! यह श्लोक दूसरे प्रकारसे घटित होता है ।

मा भव नाकपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।
वसुधामिमां गिरिसङ्कटमयीं दशरथस्य नन्दनः प्राप्तः ॥१९॥

रावणः—आः, केयं निसर्गे निरशङ्के लङ्केश्वरे मयि शकुनोपश्रुति-परीक्षा ?

( नेपथ्ये )

हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झाङ्कारप्रसरप्ररूढपुलकप्राग्भारनीरन्ध्रिताः ।

---

मुग्धकरूपं रावणं प्रबोधयति—मा भवेति । ( हे देव ! ) नाकपतेः परिभवमात्रेण गर्वनिर्व्यूढो मा भव । दशरथस्य नन्दनो गिरिसङ्कटमयीम् इमां वसुधां प्राप्त इत्यन्वयः । ( हे देव = हे महाराज ! ) नाकपतेः = स्वर्गस्वामिनः, इन्द्रस्येति भावः । परिभवमात्रेण = अनादरेणैव, पराजयजनितेनेति शेषः । गर्वनिर्व्यूढः = दर्पसम्पन्नः, मा भव = मा भूः । यतो दशरथस्य नन्दनः = पुत्रः, राम इति भावः । गिरिसङ्कटमयीं = गिरिणा ( त्रिकूटपर्वतेन ) सङ्कटमयीं ( प्रचुरदुःखरूपाम् , अतिदुर्गमामिति भावः ), इमाम् = एताम् , भूमिं = वसुधां, लङ्कारूपामिति भावः । प्राप्तः = आसादितः । हे देव ! इन्द्रजयेनैव कृतकृत्यो मा भूः, दशरथकुमारो महावीरो रामस्त्रिकूटपर्वतदुर्गमामप्येतां लङ्कापुरीं प्राप्तः । अतः साऽवधानो भवेति भावः ॥ १९ ॥

हेलाऽऽस्फालितेति । हेलाऽऽस्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरीझाङ्कारप्रसरप्ररूढपुलकप्राग्भारनीरन्ध्रिता व्याववल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणाऽऽञ्चत्स्फूर्जद्दुर्जयदोर्बलैकचपला रात्रिञ्चराः यान्तीत्यन्वयः ।

हेलाऽऽस्फालितेत्यादिः = हेलया ( अनायासेन ) आस्फालितयोः ( आकृष्टयोः ) रामलक्ष्मणधनुषोः ( रामचन्द्रसौमित्रिकार्मुकयोः ) ये ज्यावल्लर्यौ ( मौर्वीलते ) ते एव झल्लर्यौ ( वाद्यविशेषौ ) तयोर्यो झाङ्कारप्रसरः (झामित्येवं विधः शब्दविस्तारः) तस्मात् प्ररूढः (उत्पन्नः) यः पुलकप्राग्भारः (रोमाञ्चविस्तारः) तेन नीरन्ध्रिताः (निर-

---

( हे महाराज ! ) इन्द्रके अनादरमात्रसे आप गर्व मत करें । दशरथका पुत्र (रामचन्द्र) त्रिकूटपर्वतसे दुर्गम इस भूमिको प्राप्त हो गया है ॥ १९ ॥

रावण—ओह ! स्वभावसे ही निःशङ्क मुझ लङ्केश्वरमें यह क्या शकुनकी उपश्रुतिकी परीक्षा ?

( नेपथ्यमें )

अनायास आकृष्ट राम और लक्ष्मणके कार्मुकोंकी मौर्वीलतारूप झल्लरी ( वाद्यविशेष ) के शब्दविस्तारसे उत्पन्न रोमाञ्चविस्तारसे घनीकृत, शब्द करनेवाले वानरोंके कण्ठरूप

व्यावल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणाञ्चल-
स्फूर्जद्दुर्जयदोर्बलैकचपलाश्चञ्चन्ति रात्रिञ्चराः ॥ २० ॥

रावणः—( सहर्षम् ) अये ! निशाचरवीरविजयोत्तरः समरः ।

( पुनर्नेपथ्ये )

अग्रेसरी रघुपतेः परिणद्धपाककिंपाकपाटलमुखी कपिवीरसेना ।
निश्शेषमापिबति राक्षसवीरचक्रं प्रातः प्रभेव तपनस्य तमिस्रजालम् ॥

न्तरीकृताः, घनीकृता इति भावः )। व्यावल्गत्कपिकण्ठेत्यादिः = व्यावल्गन्तः ( शब्दं कुर्वन्तः ) ये कपिकण्ठकाण्डाः ( वानरगलाऽङ्कुराः ) तेषां कदनं ( हननम् ) तस्मिन् क्रीडन्तः ये कृपाणाञ्चलाः ( करवालधाराः ) तैः स्फूर्जत् ( प्रादुर्भवत् ) दुर्जयं ( दुःखेन जेतुं शक्यम् जेतुमशक्यमिति भावः ) यद्दोर्बलं ( भुजविक्रमः ) तस्मिन्नेके ( मुख्यरूपाः ) चपलाः ( चञ्चलाः ), तादृशा ये रात्रिञ्चराः राक्षसाः, ते चञ्चन्ति = गच्छन्ति, इतस्ततो भ्रमन्तीति भावः । अत्र रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

रावण इति । निशाचरवीरविजयोत्तरः = निशाचरवीराणां ( राक्षसशूराणां ) विजय ( जयः ) एव उत्तरः ( प्रधानरूपः ) यस्य सः । समरः = युद्धम् । राक्षसविजयपर्यवसायि युद्धं भविष्यतीति भावः ।

अग्रेसरीति । रघुपतेः अग्रेसरी परिणद्धपाककिम्पाकपाटलमुखी कपिवीरसेना राक्षसवीरचक्रं तपनस्य प्रातः प्रभा तमिस्रजालम् इव निश्शेषम् आपिबतीत्यन्वयः ।

रघुपतेः = रामचन्द्रस्य, अग्रेसरी = पुरोगामिनी, अग्रेसरतीति, 'पुरोऽग्रतोऽग्रेषु सर्तेः'रिति टप्रत्ययः । टित्वात् 'टिड्ढाण'मित्यादिना ङीप् । परिणद्धपाककिम्पाकपाटलमुखी = परिणद्धः ( विस्तीर्णः ) पाकः ( पचनम् ) यस्य सः, एतादृशो यः किम्पाकः ( महाकाललता ) स इव पाटलमुखी ( रक्तानना ) विशेषणमिदं प्रातः प्रभायामपि योज्यम् । तादृशी कपिवीरसेना वानरशूरचमूः राक्षसवीरचक्रं = निशाचर-

अङ्कुरोंके संहारमें क्रीडा करनेवाली तलवारोंकी धाराओं ( नोकों ) से प्रकट और दुर्जय बाहुबलमें मुख्य और चञ्चल राक्षस इधर उधर घूम रहे हैं ॥ २० ॥

रावण—( हर्षपूर्वक ) अरे ! वीर राक्षसोंका विजयप्रधान युद्ध हो रहा है ।

( फिर नेपथ्यमें )

रामचन्द्रके आगे बढ़नेवाली परिपक्व किम्पाक फलके समान लाल मुखवाली वीर वानरसेना, प्रातःकालमें सूर्यकी कान्ति जैसे अन्धकार समूहको विनष्ट करती है उसीतरह वीर राक्षसोंके समूहको निःशेषरूपसे विनष्ट कर रही है ॥ २१ ॥

रावणः—आः, कथमुत्कण्ठायितं मर्कटैः ? ( उच्चैः ) कः कोऽत्र भोः ? मदाज्ञया—

कृत्वा विनिद्रमपनिद्रभुजावलेपः
प्रोद्दामरामसमराय स कुम्भकर्णः ।
आदिश्यतां निजभुजार्दितवज्रपाणि-
रद्यैव लक्ष्मणरणाय च मेघनादः ॥ २२ ॥

( पुनर्नेपथ्ये )

---

शूरसमूहं, तपनस्य = सूर्यस्य, प्रातःप्रभा = प्राभातिकदीप्तिः, तमिस्रजालं = तिमिरसमूहम् , इव । निरशेषं = समस्तं यथा तथा, आपिबति = विनाशयतीति भावः । उपमाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ २१ ॥

रावण इति । उत्कण्ठायितम् = उत्कण्ठितवदाचरितं, दर्पजन्मनः कण्ड्वा रणेन विनोदनाऽर्थमिति शेषः । अत्रोत्कण्ठाशब्दस्योत्कण्ठिते लक्षणा ।

कृत्वेति । विनिद्रं कृत्वा अपनिद्रभुजाऽवलेपः स कुम्भकर्णः प्रोद्दामरामसमराय निजभुजाऽर्दितवज्रपाणिः मेघनादश्च लक्ष्मणरणाय अद्यैव आदिश्यतामित्यन्वयः ।

विनिद्रं = निद्रारहितं, कृत्वा = विधाय, जागरितं कृत्वेति भावः । अपनिद्रभुजाऽवलेपः = अपनिद्रः ( उद्बुद्धः ) भुजाऽवलेपः ( बाहुगर्वः ) यस्य सः । सः = रणप्रथितः, कुम्भकर्णः = तदाख्यो मदनुजः, प्रोद्दामरामसमराय = प्रोद्दामः ( उद्धतः ) यो रामः ( राघवः ) तेन सह समराय ( युद्धाय ) । एवं च—निजभुजार्दितवज्रपाणिः = निजभुजाभ्याम् ( स्वबाहुभ्याम् ) अर्दितः ( पीडितः ) वज्रपाणिः (इन्द्रः) येन सः । तादृशो मेघनादश्च = तदाख्यो मत्पुत्रश्च । लक्ष्मणरणाय = लक्ष्मणेन ( रामानुजेन ) सह रणाय ( युद्धाय ) । अद्यैव = अस्मिन्दिन एव । आदिश्यताम् = आज्ञाप्यताम् । वसन्ततिलका वृत्तम् ॥ २२ ॥

---

रावण—ओह ! बन्दरोंने कैसे युद्धमें उत्कण्ठितोंके समान आचरण किया ? ( ऊँचे स्वरसे ) यहाँ कौन है ? कौन है ?

मेरी आज्ञासे जगाकर उद्बुद्ध बाहुगर्वसे युक्त कुम्भकर्णको उद्धत रामके साथ युद्ध करनेके लिए और अपने बाहुओंसे इन्द्रको पीडित करनेवाले मेघनादको लक्ष्मणके साथ लड़नेके लिए आज ही आज्ञा दे दो ॥ २२ ॥

( फिर नेपथ्यमें )

देव! भवदाशयविदा महामन्त्रिणा माल्यवता पूर्वमेव संविहितमिदम्। इदानीं हि—

रामेण सार्धमयमुद्धतबाहुदर्पः संग्रामभूमिमधितिष्ठति कुम्भकर्णः।
रक्षःशिखण्डिहृदयोत्सवमेघनादः सौमित्रिणा सममसावपि मेघनादः॥

( पुनर्नेपथ्ये )

यद्दंष्ट्रावज्रघातैः समिति विदलिताः शैलकल्पाः कपीन्द्राः
यन्नाराचाम्बुवर्षैर्दवदहनसमाः शामिता वानरेन्द्राः।

---

पुनर्नेपथ्य इति। भवदाशयविदा=भवदभिप्रायज्ञात्रा। 'अभिप्रायश्छन्द आशयः।' इत्यमरः।

रामेणेति। उद्धतबाहुदर्पः अयं कुम्भकर्णो रामेण सार्धं रक्षःशिखण्डिहृदयोत्सवमेघनादः असौ मेघनादोऽपि सौमित्रिणा समं संग्रामभूमिम् अधितिष्ठतीत्यन्वयः।

उद्धतबाहुदर्पः=उद्दण्डभुजगर्वः, अयम्=एषः, कुम्भकर्णः, रामेण=रामचन्द्रेण, 'सार्ध'मिति पदेन योगे 'सहयुक्तेऽप्रधाने' इति तृतीया। सार्धं=सह, संग्रामभूमिमधितिष्ठतीत्यत्राऽन्वयः। एवं च—रक्षःशिखण्डिहृदयोत्सवमेघनादः=रक्षांसि (निशाचराः) एव शिखण्डिनः (मयूराः) तेषां हृदये (चित्ते) उत्सवाय (क्षणाय) मेघनादः (जलधरध्वनिसदृशः), असौ=अयं, मेघनादोऽपि=इन्द्रजिदपि, सौमित्रिणा=लक्ष्मणेन, 'समं' पदेन योगे पूर्वसूत्रेण तृतीया। संग्रामभूमिं=रणभुवम्, 'अधितिष्ठती'त्यनेन योगे 'अधिशीङ्स्थाऽऽसां कर्म'त्याधारस्य कर्मत्वाद्द्वितीया। अधितिष्ठति=आक्रामति। वीरतायां लब्धवर्णोऽयं कुम्भकर्णो रामेण समं, तथैव यथा मेघध्वनिर्मयूरहर्षोत्पादको भवति तथैव स्वगर्जितेन राक्षसहृदयाह्लादको मेघनादोऽपि लक्ष्मणेन सममित्येतावुभावपि रणाङ्गणमधितिष्ठत इति भावः। अत्र रूपकमलङ्कारः। वसन्ततिलका वृत्तम्॥ २३॥

कुम्भकर्णमेघनादयोर्मरणं वर्ण्यते नेपथ्ये—यद्दंष्ट्रेति। समिति यद्दंष्ट्रावज्रघातैः शैलकल्पाः कपीन्द्रा विदलिताः। यन्नाराचाऽम्बुवर्षैः दवदहनसमा वानरेन्द्राः शा-

---

महाराज! आपका आशय जाननेवाले महामन्त्री माल्यवान्‌ने पहले ही ऐसा कर दिया था। अभी—

भुजगर्वसे उद्धत ये कुम्भकर्ण रामके साथ और राक्षसरूप मयूरोंके चित्तमें उत्सव करनेके लिए मेघके समान शब्द करनेवाले ये मेघनाद भी लक्ष्मणके साथ युद्ध करनेके लिए युद्धभूमिमें अधिष्ठित हैं॥ २३॥

( फिर नेपथ्यमें )

संग्राममें जिनकी वज्रतुल्य दंष्ट्राओंके प्रहारोंसे पर्वतसमान वानरश्रेष्ठ विदीर्ण किये

वीरोऽसौ कुम्भकर्णः, स च समरकलाकौतुकी मेघनादः
संजातौ—

रावणः—किमतः परं वदिष्यति ?

( पुनर्नेपथ्ये )

हा ! पतङ्गौ दशरथसुतयोर्दारुणे बाणवह्नौ ॥ २४ ॥

( मन्दोदरी-रावणौ मूर्च्छतः )

प्रहस्तः—देव, समाश्वसिहि, समाश्वसिहि ।

रावणः—( समाश्वस्य ) देवि, समाश्वसिहि समाश्वसिहि ।

---

मिताः । वीरः असौ कुम्भकर्णः समरकलाकौतुकी स मेघनादश्च दशरथसुतयोः दारुणे बाणवह्नौ पतङ्गौ संजातौ । हा ! इत्यन्वयः । समिति = संग्रामे, यद्दंष्ट्रावज्रघातः = यस्य ( कुम्भकर्णस्य ) दंष्ट्राः ( महादशनाः ) एव वज्राणि ( कुलिशानि ) तेषां घातैः ( ताडनैः ), शैलकल्पाः = पर्वतसदृशाः, कपीन्द्राः = वानरश्रेष्ठाः, विदलिताः = विदारिताः । यन्नाराचाऽम्बुवर्षैः = यस्य ( मेघनादस्य ) नाराचाः ( सर्वलोहमयशराः ) एव अम्बूनि ( जलानि ) तेषां वर्षैः ( वृष्टिभिः ) । दववहनसमाः = दावाऽनलसदृशाः वानरेन्द्राः = कपिश्रेष्ठाः, शमिताः = निर्वापिताः, हता इति भावः । वीरः = विक्रान्तः, असौ = कालविप्रकृष्टः, कुम्भकर्णः = रावणाऽनुजः, समरकलाकौतुकी = समरकलासु ( युद्धविद्यासु ) कौतुकी ( कुतूहली ) । सः = कालपरोक्षः, मेघनादश्च = इन्द्रजिच्च, दशरथसुतयोः = रामलक्ष्मणयोः, दारुणे = भीषणे बाणवह्नौ = शराऽनले, पतङ्गौ = शलभौ, संजातौ = संवृत्तौ । हा = कुम्भकर्णमेघनादयोः शोच्यत इति भावः । पतङ्गा वह्नौ यथा कुम्भकर्णमेघनादावपि रामलक्ष्मणशरवह्नौ विनष्टाविति भावः । अत्र रूपकोपमयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिरलङ्कारः । स्रग्धरा वृत्तम् ॥ २४ ॥

---

गये । जिनके नाराचरूप जलकी वृष्टियोंसे दवाऽग्निसमान वानरश्रेष्ठ बुझाये ( मारे ) गये । वीर वे कुम्भकर्ण और युद्ध कलाओंमें कौतूहल रखनेवाले वे मेघनाद भी हो गये—

रावण—इसके बाद क्या कहेगा ?

( फिर नेपथ्यमें )

दशरथके पुत्रोंके भयङ्कर बाणाऽनलमें पतङ्ग ( हो गये ) ॥ २४ ॥

( मन्दोदरी और रावण मूर्च्छित होता है )

प्रहस्त—महाराज ! समाश्वस्त हों, समाश्वस्त हों ।

रावण—( होशमें आकर ) महारानी ! समाश्वस्त हो, समाश्वस्त हो ।

**मन्दोदरी**—( समाश्वस्य ) परित्रायतां मामार्यपुत्रः ! एषा निमग्नास्मि शोकतिमिरे। ( परित्ताअदु मं अज्जउत्तो। एसा णिमग्गम्हि सोअतिमिरे )

**रावणः**—अयि ! अलं कातरतया ! अयं चन्द्रहासचन्द्र एव शोकतिमिरादुद्धरिष्यति भवतीम्।

पश्यायमसौ मे—

**भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्तमुक्ताफलैर्विचलितैः कलिताधिवासः।**
**अद्यैव खेचरनिशाचरलोचनानामुन्मीलयन्मुदमुदञ्चति चन्द्रहासः॥२५॥**

( इति प्रहस्तेन सह निष्क्रान्तः )

---

रावण इति। चन्द्रहासचन्द्रः = खड्गचन्द्रमाः। शोकतिमिरात् = मन्युतमसः। मदीयः खड्ग एव त्वदीयशोकं नाशयिष्यतीति भावः।

भिन्नप्रभिन्नेति। विचलितैः भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्तमुक्ताफलैः कलिताऽधिवासः चन्द्रहासः अद्यैव खेचरनिशाचरलोचनानां मुदम् उन्मीलयन् उदञ्चतीत्यन्वयः।

विचलितैः = विशीर्णैः। भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्तमुक्ताफलैः = भिन्नाः ( विदीर्णाः ) प्रभिन्नाश्च (प्रविदीर्णाश्च) ये सुरकुञ्जराणां (देवकरिणाम्, ऐरावतादीनामिति भावः ) ये कुम्भाः ( मस्तकपिण्डाः ) तेभ्यो मुक्तानि ( निःसृतानि ) यानि मुक्ताफलानि ( मौक्तिकफलानि ), तैः। कलिताधिवासः = कलितः ( कृतः ) अधिवासः ( निवासः ) यस्मिन् सः। तादृशः चन्द्रहासः = खड्गः, अद्यैव = अस्मिन्दिन एव, खेचरनिशाचरलोचनानां = खेचराः ( आकाशचारिणः, रामभयादिति शेषः ) ये निशाचराः ( राक्षसाः ) तेषां लोचनानां ( नेत्राणाम् ), मुदं = हर्षम्, उन्मीलयन् = जनयन्, उदञ्चति = प्रादुर्भवति। वसन्ततिलकावृत्तम् ॥२५॥

---

**मन्दोदरी**—( होशमें आकर ) आर्यपुत्र मेरी रक्षा करें। यह मैं शोकाऽन्धकारमें डूब गई हूं।

**रावण**—प्रियतमे ! कायर मत बनो। यह मेरा खड्गचन्द्र ही शोकाऽन्धकारसे तुम्हारा उद्धार करेगा।

देखो, यह मेरी—

विचलित, विदीर्ण एवं प्रविदीर्ण ऐरावत आदि देवगजोंके मस्तकोंसे निकली हुई मोतियोंसे अधिष्ठित तलवार आज ही आकाशमें विचरण करनेवाले राक्षसोंके हर्षको बढ़ाती हुई प्रादुर्भूत हो जाती है॥ २५॥

( ऐसा कहकर प्रहस्तके साथ बाहर जाता है। )

( ततः प्रविशति विद्याधरमिथुनयुगम् )

**विद्याधरी**—आर्यपुत्र ! कोऽयं रणरभसविलसत्पुलकभरकुड्मलित-भुजवनः कपिचमूचक्रमभिवर्त्तते । ( अज्जउत्त ! को इमो रणरहसविअसन्तपुलअभरकुडुमलिदभुअवणो कविचमूचक्कं अहिवट्टदि )

**विद्याधरः**—प्रिये ! स एष रामसमरकौतुकी दशकण्ठः ।

**विद्याधरी**—कः पुनरयमञ्जनपुञ्जच्छविशरीरः कपिवीरस्तस्य सम्मुखं परावर्त्तते । ( को उण इमो अञ्जनपुञ्जच्छवि सरीरो कविवीरो तस्स सम्मुहं परावट्टदि )

**विद्याधरः**—प्रिये ! स एष विचित्रसमरशीलो नीलः । ( विलोक्य ) ( सविस्मयम् ) अहो !

> वक्षःस्थले किमपि नीलकरोज्झितेन
> नीलाचलस्य शिखरेण कृतप्रहारः ।

---

विद्याधरीति । रणरभसविलसत्पुलकभरकुड्मलितभुजवनः = रणे ( युद्धे ) यो रभसः ( उत्साहः ) तेन विलसन् ( शोभमानः ) यः पुलकभरः ( रोमाञ्चसमूहः ) तेन कुड्मलितं ( मुकुलितम् ) भुजवनं ( बाहुगहनम् ) यस्य सः । कपिचमूचक्रं= वानरसेनासमूहम् । अभिवर्त्तते = सम्मुखं विशत इत्यर्थः ।

अञ्जनपुञ्जच्छविशरीरः = अञ्जनपुञ्जच्छविः ( कज्जलसमूहकान्तिः ) इव शरीरं ( देहः ) यस्य सः ।

वक्षःस्थल इति । नीलकरोज्झितेन नीलाऽचलस्य शिखरेण वक्षःस्थले किमपि कृतप्रहारः असौ लङ्केश्वरो हरिणेक्षणानां वसन्तनीलोत्पलप्रहरणं स्मरति नूनम् इत्यन्वयः ।

---

( अनन्तर विद्याधर दम्पति प्रवेश करते हैं । )

**विद्याधरी**—आर्य ! युद्धमें उत्साहसे शोभमान रोमाञ्चसमूहसे मुकुलित बाहुवनवाला यह कौन वानरसेनाके सम्मुख हुआ है ?

**विद्याधर**—प्रिये ! यह रामके साथ युद्धमें कौतुक करनेवाला रावण है ।

**विद्याधरी**—कज्जलसमूहकी कान्तिके सदृश शरीरवाला यह कौन वीर वानर इसके सम्मुख आ रहा है ?

**विद्याधर**—प्रिये ! यह विचित्र युद्ध करनेका स्वभाववाला नील है । ( देखकर आश्चर्यपूर्वक ) अहो !

नीलके हाथके छोड़े गये नीलपर्वतके शिखरसे छातीमें कुछ ताडित होकर यह रावण

लङ्केश्वरः स्मरति नूनमसौ वसन्त-
नीलोत्पलप्रहरणं हरिणेक्षणानाम्॥ २६॥

(पुनः सकौतुकम्) पश्य पश्य,

नीलोऽयं दशमुखपाणिपङ्कजानामङ्केषु भ्रमरतुलां भ्रमन् बिभर्ति।
अप्येको दशसु किरीटपीठिकासु द्राक्प्रेङ्खन्ननुभवतीन्द्रनीललीलाम्॥

नीलकरोज्झितेन = नीलस्य (नीलनामकस्य वानरयूथपस्य) कराभ्याम् (हस्ताभ्याम्) उज्झितेन (त्यक्तेन), नीलाऽचलस्य = नीलगिरेः, शिखरेण = शृङ्गेण, वक्षःस्थले = उरःस्थले, किमपि = किञ्चित्, कृतप्रहारः = ताडित इति भावः। असौ = अयं, लङ्केश्वरः = रावणः, हरिणेक्षणानां = मृगलोचनानां सुन्दरीणां, वसन्त-नीलोत्पलप्रहरणं = सुरभिनीलकमलप्रहारं, कामविपर्यासे इति शेषः। स्मरति = ध्यायति। नून = इव, वानरयूथपतिना नीलेन नीलपर्वतकूटेन वक्षसि ताडितोऽयं रावणो वनविहारप्रसङ्गे मृगाक्षीणां नीलकमलप्रहारं स्मरतीव। अत्र स्मरणोत्प्रेक्षयो-रङ्गाङ्गिभावेन सङ्करः। वसन्ततिलकावृत्तम्॥ २६॥

नीलोऽयमिति। अयं नीलो दशमुखपाणिपङ्कजानाम् अङ्केषु भ्रमन् भ्रमरतुलां बिभर्ति। एकोऽपि दशसु किरीटपीठिकासु द्राक् प्रेङ्खन् इन्द्रनीललीलाम् अनुभव-तीत्यन्वयः।

अयम् = एषः, नीलः = नीलनामको नीलवर्णो वानरसेनानायकः, दशमुख-पाणिपङ्कजानां = रावणकरकमलानाम्, अङ्केषु = अन्तर्भागेषु, भ्रमन् = भ्रमणं कुर्वन् सन्, भ्रमरतुलां = भृङ्गोपमां, बिभर्ति = धारयति। कमलसदृशेषु राव-णकरेषु भ्रमन्नीलवर्णो वानरयूथपो नीलो भ्रमरशोभामावहानिति भावः। एकोऽपि = एकाक्यपि, नील इति शेषः। दशसु = दशसंख्याकासु, किरीटपीठिकासु, मुकुटाधारेषु, द्राक् = सत्वरं, प्रेङ्खन् = प्रचलन् सन्, इन्द्रनीललीलाम् = मरकत-मणिशोभाम्, अनुभवति = अध्यक्षीकरोति। एकोऽपि नीलो द्रुतगत्या रावणस्य दशसु मुकुटेषु प्रचलन्मरकतमणिरिव विलसतीति भावः। अत्र रूपकमुपमालङ्कि-

सुन्दरियोंसे वसन्त ऋतुमें छोड़े गये नीलकमलके प्रहारकी याद कर रहा है ऐसा मालूम पड़ता है॥ २६॥

(फिर कौतूहलके साथ) देखो देखो।

यह नील, रावणके करकमलोंके भीतर घूमता हुआ भ्रमरकी शोभा ले रहा है। यह अकेला भी रावणके दशों मुकुटोंमें शीघ्र चलता हुआ इन्द्र नीलमणिकी शोभाका अनुभव कर रहा है॥ २७॥

विद्याधरी—कः पुनरयं निशाचरेन्द्रेण समं समरसाहसमङ्गीकृत्य तिष्ठति । ( को उण इमो णिसाअरेन्देण समं समरसाहसमङ्गीकरिअ चिट्ठदि ? )

विद्याधरः—स एष स्वामिपक्षपाती विभीषणः । ( सविषादम् ) हन्त भोः,

येयं विभीषणे शक्तिर्मुक्ता क्रूरेण रक्षसा ।

विद्याधरी—अथ किं तस्याः ? ( अह किं ताए ? )

विद्याधरः—

लक्ष्मणेन गृहीतेयं प्रियेव निजवक्षसा ॥ २८ ॥

विद्याधरी—हा धिक् हा धिक् । ( हद्धि हद्धि )

विद्याधरः—

वर्षन्नेव समन्ततो दशमुखं चापच्युतैः सायकैः
सौमित्रिं च विसंज्ञमङ्कनिहितं नेत्रच्युतैरम्बुभिः ।

---

लोपमा चेति त्रयाणामलङ्काराणां मिथोऽनपेक्षया स्थितेः संसृष्टिः । तत्र सोदाहरणं ललितोपमालक्षणं यथा चन्द्रालोके—'उपमाने च लीलादिपदाढ्ये ललितोपमा । खन्नेत्रयुगलं धत्ते लीलां नीलाऽम्बुजन्मनोः ॥' इति । प्रहर्षिणी वृत्तम् ॥ २७ ॥

येयमिति । क्रूरेण रक्षसा विभीषणे या इयं शक्तिः मुक्ता । लक्ष्मणेन इयं प्रिया इव निजवक्षसा गृहीतेत्यन्वयः ।

क्रूरेण = नृशंसेन, रक्षसा = राक्षसेन रावणेन, विभीषणे = स्वाऽनुजे, या इयं, शक्तिः = कासूः, शस्त्रविशेषः । मुक्ता = त्यक्ता, लक्ष्मणेन = रामाऽनुजेन, इयं = सा, शक्तिरिति भावः । प्रिया इव = निजदयिता इव, निजवक्षसा = स्वोरसा, गृहीता = धृता, इत्थं लक्ष्मणेन रावणप्रक्षिप्तशक्तेर्विभीषणो रक्षित इति भावः । उपमाऽलङ्कारः अनुष्टुब्वृत्तम् ॥ २८ ॥

वर्षन्नेवेति । चापच्युतैः सायकैः समन्ततो दशमुखं विसंज्ञम् अङ्कनिहितं सौमि-

---

विद्याधरी—यह कौन राक्षसेन्द्रके साथ युद्ध साहसका अङ्गीकार कर रहा है ?

विद्याधर—यह स्वामिपक्षपाती विभीषण है । ( खेदपूर्वक ) हाय ! अरे !

क्रूर राक्षसने विभीषणपर जो यह शक्ति छोड़ी थी ।

विद्याधरी—तब उसका क्या हुआ ?

विद्याधर—लक्ष्मणने इसे प्रियाकी तरह अपनी छातीसे ग्रहण किया ॥ २८ ॥

विद्याधरी—हाय ! धिक्कार है, हाय ! धिक्कार है ।

विद्याधर—धनुसे छूटे हुए बाणोंसे चारों ओर रावणको और बेहोश एवम् गोदीमें रक्खे हुए लक्ष्मणको भी नेत्रोंसे छूटे हुए अश्रुओंसे वृष्टि करते हुए ही वानरोंके नेत्रोंको

एतत्तर्कय हर्षशोकतरलाः कुर्वन् कपीनां दृशो
रामश्चामलकेलिवीरकरुणाव्यामिश्रतां गाहते ॥ २९ ॥

( विलोक्य ) कथमपगत एव रामबाणपीडितो दशकण्ठः ।

( नेपथ्ये )

हा वत्स ! लक्ष्मण ! विकासय नेत्रपद्मे
मा गादिदं युगपदेव समस्तमस्तम् ।

---

त्रिं च नेत्रच्युतैः अम्बुभिः वर्षन्नेव कपीनां दृशः हर्षशोकतरलाः कुर्वन् रामः अमल-केलिवीरकरुणाव्यामिश्रतां गाहते । एतत् तर्कयेत्यन्वयः । चापच्युतैः=धनुर्मुक्तैः, सायकैः=बाणैः, समन्ततः=सर्वतः दशमुखं=रावणं, वर्षन् , एवं च विसंज्ञं=चेतनारहितं, रावणशक्तिप्रहारेणेति भावः । अतएव अङ्कनिहितम्=उत्सङ्गस्थापितं सौमित्रिं च=लक्ष्मणं च, नेत्रच्युतैः=नयनपतितैः, अम्बुभिः=जलैः, अश्रुभिरि-त्यर्थः । वर्षन्नेव=सिञ्चन्नेव, तथैव कपीनां=वानराणां, दृशः=दृष्टीः, हर्षशोक-तरलाः=प्रमोदमन्युचञ्चलाः, रामस्य कुर्वन्=विदधत् रावणे शरप्रहारेण हर्षो लक्ष्मणाऽवस्थादर्शने च शोकश्चेति यथा क्रमं बोद्धव्यः । रामः=रामचन्द्रः, अमल-केलिवीरकरुणाव्यामिश्रताम्=अमला ( निर्मला ) केलिः ( विलासः ) ययोस्तौ, एतादृशौ यौ वीरकरुणौ ( वीरकरुणरसौ, उत्साहशोकस्थायिकाविति भावः ) तयो-र्व्यामिश्रताम् ( मिश्रणभावम् ), गाहते=प्रविशति । एतत्=इदं वृत्तं, रामस्येति शेषः । तर्कय=विचारय । रामो रावणेन समं रणप्रसङ्गे उत्साहस्थायिकं वीरं लक्ष्मण-णमूर्च्छया च शोकस्थायिकं करुणरसमवगाहत इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

हा वत्सेति । हा वत्स लक्ष्मण ! नेत्रपद्मे विकासय । दिवाकरकुलस्य भाग्यं, रामस्य जीवितं च, किञ्च ऊर्मिलाया नयनाञ्जनम् इदं समस्तं युगपत् एव अस्तं मा गादित्यन्वयः ।

---

हर्ष और शोकसे चञ्चल करते हुए रामचन्द्रजी निर्मल विलासवाले वीर और करुणारसके मिश्रणभावको प्रवेश कर रहे हैं । यह विचार करो ॥ २९ ॥

( देखकर ) रामके बाणोंसे पीडित होकर कैसे रावण हट ही गया ।

( नेपथ्यमें )

हा वत्स लक्ष्मण ! नेत्रकमल विकसित करो । सूर्यवंशका भाग्य, रामका जीवन और

भाग्यं दिवाकरकुलस्य च, जीवितं च
रामस्य, किञ्च नयनाञ्जनमूर्मिलायाः ॥ ३० ॥

( नेपथ्ये )

देव ? समाश्वसिहि समाश्वसिहि ।

विद्याधरी—कथं, सुग्रीवेण समाश्वास्यते रामचन्द्रः । तत् किमिदानीमालपिष्यति । ( कहं, सुग्गीवेण समासासीअदि रामचन्दो । ता किं दाणीं आलविस्सदि )

( नेपथ्ये )

सखे, सुग्रीव ! कथमाश्वस्यते ?

अयि राघवाविति सुधामधुरं, विनिपीय पौरमुनिलोकवचः ।

---

हा इति खेदे । वत्स = वात्सल्यभाजन, हे लक्ष्मण !, नेत्रपद्मे = नयनकमले, नेत्रे पद्मे इवेति 'उपमितं व्याघ्रादिभिः सामान्याऽप्रयोगे' इति समासः । विकासय = उन्मीलय, संज्ञां लभस्वेति भावः । दिवाकरकुलस्य = सूर्यवंशस्य, भाग्यं = भागधेयं, रामस्य = मम, जीवितं च = जीवनं च, 'नपुंसके भावे क्त' इति भावे क्तप्रत्ययः । किञ्च = अपरं च, ऊर्मिलायाः = लक्ष्मणपत्न्याः, नयनाऽञ्जनं = नेत्रकज्जलं, सौभाग्यद्योतकमिति भावः । इदम् = पूर्वोक्तं, समस्तं = सकलं, युगपत् एव = एककालम् एव, अस्तं = विनाशं, मा गात् = न गच्छतु, 'माङि लुङ्' इति लुङ्, 'न माङ्योगे' इत्यडभावः । अत्र प्रस्तुतानां दिवाकरकुलभाग्यरामजीवितोर्मिलानयनाञ्जनानामस्तंगमनरूपक्रियायामभिसम्बन्धात्तुल्ययोगिताऽलङ्कारः । वसन्ततिलका वृत्तम् ॥

अयि राघवाविति । 'अयि राघवौ !' इति सुधामधुरं पौरमुनिलोकवचो विनिपीय अद्य 'अयि राघव !' इति गरलप्रतिमं रामहतकः कथं पिबत्वित्यन्वयः ।

---

ऊर्मिलाका नेत्राञ्जन यह सब एक साथ ही अस्तमित मत हो ॥ ३० ॥

( नेपथ्यमें )

महाराज ! समाश्वस्त हों, समाश्वस्त हों ।

**विद्याधरी**—किस प्रकारसे सुग्रीव रामचन्द्रजीको दिलासा दे रहे हैं । अब ये क्या कहेंगे ?

( नेपथ्यमें )

मित्र सुग्रीव ! रामचन्द्र कैसे आश्वस्त हों ?

'हे राघवो ( राम और लक्ष्मण )' ऐसा अमृतके समान मधुर नागरिक और मुनियोंका

अयि राघवेति गरलप्रतिमं कथमद्य रामहतकः पिबतु ॥ २१ ॥

अपि च—

कनीयस्या मातुः कृतचरणपातः कथमहं
सहिष्ये मत्पार्श्वे विफलपरिवर्त्तं नयनयोः ।
अये ! शान्तं पापं कठिन इव चेज्जीवितुमना
विना वत्सं रामः पुनरयमयोध्यां प्रविशति ॥ २२ ॥

---

अयीति कोमलामन्त्रणे । राघवौ = रघुवंशप्रसूतौ, रामलक्ष्मणाविति भावः । इति = एतादृशं, सुधामधुरं = पीयूषस्वादु, पौरमुनिलोकवचः = नागरिकऋषिगणवचनं, विनिपीय = प्रणयाऽतिशयेन श्रुत्वेति भावः । अद्य = अस्मिन्दिने, लक्ष्मणरहिते इति भावः । अयि राघव = हे रघुवंशप्रसूत, हे राम इति भावः । इति = एतादृशं, लक्ष्मणवर्जं मन्मात्रपरकमिति भावः । अतएव गरलप्रतिमं = विषोपमं, वच इति शेषः । रामहतकः = दैवहतो रामः, कथं = केन प्रकारेण, पिबतु = शृणोत्विति भावः । प्रथमं राघवाविति द्विवचनाऽन्तसम्बोधनेन स्वं स्वाऽनुजं लक्ष्मणं चाऽवबुद्धय पीयूषपानसदृशं सुखमनुभूय साम्प्रतं रावणशक्त्या नष्टचैतन्ये लक्ष्मणे अयि राघवेति सम्बुद्धया आत्मानमेवाऽवबुद्धय दैवहतो रामो विषपानसदृशं वेदनाऽतिशयं कथमनुभवत्विति भावः । अत्रोपमाऽलङ्कारः । प्रमिताक्षरा वृत्तम् ॥ २१ ॥

कनीयस्या इति । कृतचरणपातः अहं मत्पार्श्वे कनीयस्या मातुः नयनयोः विफलपरिवर्तं कथं सहिष्ये ? अये । वत्सं विना जीवितुमनाः कठिन इव अयं रामः पुनः अयोध्यां प्रविशति चेत् पापं शान्तम् इत्यन्वयः । कृतचरणपातः = विहितप्रणामः, अहं = रामः, मत्पार्श्वे = मदन्तिके, मन्निकटस्थे लक्ष्मणोपवेशनस्थान इति भावः । 'पार्श्वमन्तिके' इति हैमः । कनीयस्या मातुः = सुमित्राया इत्यर्थः, नयनयोः = नेत्रयोः, विफलपरिवर्तं = निष्फलप्रसरणं, लक्ष्मणाऽनवलोकनेनेति भावः । कथं = केन प्रकारेण, सहिष्ये = मर्षयिष्यामि । प्रणामाऽनन्तरं मदन्तिके लक्ष्मणाऽदर्शनेन कनीयस्या मातुः सुमित्रायाः पुत्रमुखदर्शनार्थमितस्ततो नेत्रप्रसारणं कथं सहिष्य इति भावः । अये इति विषादद्योतकमव्ययम् । वत्सं वात्सल्यभाजनं,

---

वचन सुनकर आज 'हे राघव ( राम ) !' ऐसा विष-सदृश वचन दैवहत राम कैसे सुने ? ॥

और भी—

चरणोंमें प्रणामकर मैं, मेरे समीपमें छोटी माँ ( सुमित्रा ) के नेत्रोंका निष्फल प्रसरण कैसे सहूंगा ? अरे ! वात्सल्यभाजन लक्ष्मणके बिना जीनेका मनकर कठोर हृदयके समान होकर यह राम फिर अयोध्यामें प्रवेश करेगा तो पाप शान्त हो ॥ २२ ॥

विद्याधरः—अहह ! करुणैकार्णवो वर्त्तते । ( विमृश्य ) कः पुनरिह प्रतीकारः ? ( विचिन्त्य ) अथवा का प्रतीकारकथा ? वक्रो हि विधिः ।

विद्याधरी—वक्रतर इति भणितव्यम् , इदं पश्य । नन्वयं वानर एव कोऽपि लङ्केश्वरकृतसन्धानः करकलितशैलशिखरो रामसम्मुखमेव परिवर्त्तते । ( वक्कदरोत्ति भणिज्जं । इदं पेक्ख । णं इमो वाणरो जेव्व कोवि लङ्केसरकिदसन्धाणो करकलिदसेलसिहरो रामसंमुहं जेव्व परिवट्टदि )

विद्याधरः—( कर्णौ पिधाय ) शान्तं पापम् । अयि मुग्धे मैवं वादीः, अयं हि—

महौषधीनामाधारं भूधरं गन्धमादनम् ।

---

लक्ष्मणमिति भावः । विना = अन्तरेण, जीवितुमनाः = जीवितुं ( प्राणान्धारयितुम् ) मनः ( चित्तम् ) यस्य सः, 'तुं काममनसोरपी'ति मकारलोपः । अतएव कठिन इव = कठोर इव, अयम् = एषः, रामः = राघवः, पुनः = भूयः, अयोध्यां = साकेतं, प्रविशति = प्रवेशं करोति, चेत् = यदि, तर्हीति शेषः, पापं = कल्मषम् , लक्ष्मणरहितरामस्य साकेतप्रवेशकल्पनाल्पमनिष्टमिति भावः, शान्तं = निवृत्तम् , अस्त्विति शेषः । नाऽहं लक्ष्मणं विनाऽयोध्यां प्रवेक्ष्यामीति भावः । शिखरिणी वृत्तम् ॥ २२ ॥

विद्याधर इति । करुणैकाऽर्णवः=करुणः (शोकः) एव एकाऽर्णवः (एकसमुद्रः) ।

विद्याधरीति । लङ्केश्वरकृतसन्धानः = लङ्केश्वरेण ( रावणेन ) कृतं (विहितम्) सन्धानम् ( सन्धिः ) येन सः । करकलितशैलशिखरः = करे ( हस्ते ) कलितं ( धृतं ) शैलशिखरं ( पर्वतशृङ्गम् ) येन सः ।

विद्याधर इति । मुग्धे=मूढे, सुन्दरि वा । 'मुग्धः सुन्दरमूढयो'रित्यमरः । महौषधीनामिति । मारुतिः महौषधीनाम् आधारं गन्धमादनं भूधरम् आदाय लक्ष्मणप्राणत्राणाय अभ्येतीत्यन्वयः ।

---

**विद्याधर**—अहह ! शोकका एक समुद्र उमड़ रहा है । ( विचारकर ) यहां क्या प्रतीकार है ? ( चिन्ताकर ) प्रतीकारकी क्या बात ? भाग्य कुटिल है ।

**विद्याधरी**—भाग्य कुटिलतर है ऐसा कहना चाहिए । यह देखिए । यह कोई वानर ही लङ्केश्वरसे सन्धिकर हाथोंमें पहाड़की चोटी लेकर रामके पास ही लौट रहा है ।

**विद्याधरी**—( कानोंको आच्छादित कर ) पाप शान्त हो । अरी अल्हड़ ! ऐसा मत कहो । ये—

हनूमान् महौषधोंका आधार गन्धमादन पर्वत उठाकर लक्ष्मणको जिलानेके लिए

आदाय लक्ष्मणप्राणत्राणायाभ्येति मारुतिः ॥ २३ ॥

( पुनर्विलोक्य ) ( सहर्षम् )

आमोदमाघ्राय महौषधीनां सौमित्रिरुन्मीलितपद्मनेत्रः।
भूयोऽपि चक्रीकृतचारुचापः करोति रामं परिपूर्णकामम् ॥२४॥

**विद्याधरी**—कथं पुनरपि रामरणकौतूहलफुल्लद्भुजमण्डलो निशाचराखण्डलः परापतित एव। ( कहं पुणो वि रामरणकोदूहलफुल्लन्तभुअमण्डलो णिसाअराखण्डलो परावडिदो जेव्व )

**विद्याधरः**—प्रिये! तदिदानीं सावधानं विलोकय। तुलाधिरोहः

---

मारुतिः = हनूमान्, महौषधीनाम् अव्यर्थभेषजानां फलपत्रादीनामिति शेषः। आधारम् = आश्रयं, गन्धमादनं = गन्धमादननामकं, भूधरं = पर्वतम्, आदाय = गृहीत्वा, लक्ष्मणप्राणत्राणाय = सौमित्रिजीवनरक्षणाय, अभ्येति = आगच्छति। अनुष्टुब्वृत्तम् ॥ २३ ॥

आमोदमिति। महौषधीनाम् आमोदम् आघ्राय उन्मीलितपद्मनेत्रः सौमित्रिः भूयोऽपि चक्रीकृतचारुचापः ( सन् ) रामं परिपूर्णकामं करोतीत्यन्वयः।

महौषधीनाम्=अव्यर्थभेषजानां, गन्धमादनस्थानामिति शेषः। आमोदं=गन्धम् आघ्राय = घ्राणेन गृहीत्वा, उन्मीलितपद्मनेत्रः = विकसितकमलनयनः, सौमित्रिः= लक्ष्मणः, भूयोऽपि = पुनरपि, चक्रीकृतचारुचापः = मण्डलीकृतसुन्दरकार्मुकः सन्, रामं = स्वाग्रजं रामचन्द्रं, परिपूर्णकामं = सफलाऽभिलाषं, करोति = विदधाति। राक्षसनाशेनेति शेषः। अत्रोपमाऽलङ्कारः। उपजातिवृत्तम् ॥ २४ ॥

विद्याधरीति। रामरणकौतूहलफुल्लद्भुजमण्डलः=रामेण ( राघवेण ) सह रणे ( युद्धे ) यत्कौतूहलं ( कौतुकम् ) तेन फुल्लत् ( विकसत् ) भुजमण्डलं ( बाहुसमूहः ) यस्य सः। निशाचराखण्डलः=राक्षसेन्द्रः, रावण इत्यर्थः।

विद्याधर इति। तुलाऽधिरोहः=तुलायाम् ( मानविशेषे ) अधिरोहः ( आरोह-

---

रामके सम्मुख आ रहे हैं ॥ २३ ॥

फिर देखकर हर्षपूर्वक )

महौषधोंकी खुशबू सूँघकर कमल सदृश नेत्रोंको खोलकर लक्ष्मण फिर भी झुकर धनुको मण्डलाकार करते हुए रामचन्द्रजीका अभिलाष सफल बना रहे हैं ॥ २४ ॥

**विद्याधरी**—कैसे फिर भी रामके साथ युद्धमें कुतूहलसे विकसित बाहुमण्डलवाला होकर राक्षसेन्द्र रावन आ ही गया।

**विद्याधर**—प्रिये! अब सावधान ( होशियार ) होकर देखो, जो राम और रावणका

खल्वयं वीरलक्ष्म्याः, यन्नाम रामरावणयोः समर इति ।

विद्याधरी—कथं पुनः सकललोकवीरस्य रामचन्द्रस्य अनेकवीरपरिभूतस्य रावणस्य तुलाधिरोहो वीरलक्ष्म्या भविष्यति ? ( कहं उण स अललोअवीरस्स रामचन्दस्स अणेअवीरपरिहूदस्स रावणस्स तुलाधिरोहो वीरलच्छीए हविस्सदि ? )

विद्याधरः—प्रिये ! न जानासि । कथं दशकण्ठं विना—

विन्यासं नाकनारीकुचकलशलसत्कुङ्कुमस्थासकाना-
मस्पृष्ट्वा मार्ष्टुमासीदसिकलहकलाकोविदः को विदग्धः ।
भिन्नस्वर्गेभकुम्भस्थलवहलगलन्मौक्तिकव्यक्तहासः

---

णम् ), वीरलक्ष्म्या गौरवपरीक्षेति भावः ।

विद्याधरीति । अनेकवीरपरिभूतस्य = अनेकवीरैः ( कार्तवीर्यवालिप्रभृतिभिः ) परिभूतस्य ( पराजितस्य ) ।

विन्यासमिति । नाकनारीकुचकलशलसत्कुङ्कुमस्थासकानां विन्यासम् अस्पृष्ट्वैव मार्ष्टुं कः असिकलहकलाकोविदः विदग्धः ? भिन्नस्वर्गेभकुम्भस्थलवहलगलन्मौक्तिकव्यक्तहासः त्रिदशपतियशश्चन्द्रदाचन्द्रहासः कस्य कराग्रे अक्रीडदित्यन्वयः।

नाकनारीकुचकलशलसत्कुङ्कुमस्थासकानां = नाकनारीणां ( स्वर्गस्त्रीणां, देवीनामिति भावः ) कुचकलशेषु ( घटसदृशपयोधरेषु ) लसन्तः ( शोभमानाः ) ये कुङ्कुमस्थासकाः (काश्मीरजविलेपनानि) तेषाम् । विन्यासं स्थापनम् ) अस्पृष्ट्वैव, अनामृश्यैव, मार्ष्टुम् अपनेतुम् कः = कतमो जनः, असिकलहकलाकोविदः = असिकलहकलायां ( खड्गयुद्धक्रियाकौशले ) कोविदः ( पण्डितः ), विदग्धः = निपुणः । देवललनापयोधरस्थितकाश्मीरजलेपं स्पर्शं विनाऽपनेतुं खड्गयुद्धपण्डितो जनो रावण एव नाऽन्य इति भावः । रावण एव खड्गयुद्धे देवान्हत्वा उद्बद्ध्य वा देवललनानां शृङ्गारप्रसक्तिं निवारयतीति भावः । भिन्नस्वर्गेभकुम्भस्थलवहलगलन्मौक्तिकव्यक्तहासः = भिन्नानि ( विदारितानि ) यानि स्वर्गेभकुम्भस्थलानि ( सुर-

---

युद्ध है वह वीरलक्ष्मीका तुलाधिरोहण है ।

विद्याधरी—सम्पूर्णलोक में एक वीर राम और अनेक वीरोंसे तिरस्कृत रावण इन दोनोंके युद्धमें वीरलक्ष्मीका कैसे तुलाधिरोहण होगा ?

विद्याधर—तुम नहीं जानती हो । रावणके विना कैसे—

देवाङ्गनाओंके स्तनकलशोंमें शोभमान केसरके लेपको स्पर्श किये विना हटानेको और कौन खड्गयुद्धके क्रियाकौशलमें निपुण है ? विदारित देवगजमस्तकोंसे प्रचुर परि-

कस्याक्रीडत्कराग्रे त्रिदशपतियशश्चन्द्रहा चन्द्रहासः ॥३५॥

अपि च,

किं ब्रूमो दशकन्धरं निजचमूरक्षाकपाटीभव-
द्वक्षःपीठपतत्कठोरकुलिशाघातेषु जातस्मितम् ।
व्योमाभोगसरोविलासिनि घने यत्पाणिपङ्केरुहां
कैलासेन शिरःस्थितेन्दुकलिकोत्तंसेन हंसायितम् ॥३६॥

( नेपथ्ये )

---

लोकहस्तिमस्तकपिण्डाऽवकाशाः ) तेभ्यो बहुलं ( प्रचुरं, यथा तथा ) गलन्ति ( पतन्ति ) यानि मौक्तिकानि ( मुक्ताफलानि ) तैर्व्यक्तः ( स्फुटः ) हासः ( हास्यं, प्रकाश इति भावः ) यस्य सः, तादृशः त्रिदशपतियशश्चन्द्रहा = त्रिदशपतेः ( देवराजस्य, इन्द्रस्येत्यर्थः ) तस्य यशः ( कीर्तिः ) एव चन्द्रः ( इन्दुः ) तं हन्ति ( विनाशयति ) इति, तथाविधः, चन्द्रहासः = खड्गः, कस्य = जनस्य, दशकण्ठाऽतिरिक्तस्येति शेषः । कराऽग्रे = हस्ताऽग्रे, अक्रीडत् = क्रीडितवान् , ऐरावतादिदेवगजकुम्भपिण्डविदारको देवेन्द्रयशश्चन्द्रनिवर्तकश्चन्द्रहासो रावणादृते कस्य हस्ते व्यलसत् , न कस्याऽपीति भावः । अत्र रूपकमलङ्कारः । स्रग्धरा वृत्तम् ॥ ३५ ॥

रावणविक्रमं वर्णयति—किं ब्रूम इति । निजचमूरक्षाकपाटीभवद्वक्षःपीठपतत्कठोरकुलिशाघातेषु जातस्मितं दशकन्धरं किं ब्रूमः ? व्योमाभोगसरोविलासिनि यत्पाणिपङ्केरुहां घने शिरः स्थितेन्दुकलिकोत्तंसेन कैलासेन हंसायितमित्यन्वयः । निजचमूरक्षाकपाटीभवद्वक्षःपीठपतत्कठोरकुलिशाघातेषु = निजचमूनां ( स्वसेनानाम् ) रक्षायां ( रक्षणे ) कपाटीभवत् ( अररीभवत् ) यत् वक्षःपीठम् (उरोदेशः) तस्मिन् पतन्ति ( निपतन्ति ) कठोराणि ( कठिनानि ) यानि कुलिशानि ( वज्राणि ) तेषामाघातेषु ( प्रहारेषु ), जातस्मितम्=ईषद्धास्यं कुर्वन्तमित्यर्थः । तादृशं दशकन्धरं= रावणं, किं ब्रूमः = किं वर्णयामः । व्योमाभोगसरोविलासिनि = व्योमाभोगः ( आ-

---

मागमें गिरनेवाले मोतियोंसे स्पष्ट प्रकाशवाली और देवराज इन्द्रके यशोरूप चन्द्रका ग्रास करनेवाली तलवारने और किस पुरुषके हाथमें क्रीडा की ? ॥ ३५ ॥

और भी—

अपनी सेनाकी रक्षाके लिए किवाड़के समान छातीमें पड़नेवाले कठोर वज्रप्रहारोंमें भी मुसकुराने वाले रावणके विषयमें क्या कहें ? विस्तीर्ण आकाशरूप तालाबमें क्रीडा करने वाले जिसके करकमलोंके वनमें चोटी पर चन्द्रशेखरको रखनेवाले कैलासने भी हंसके समान आचरण किया ॥ ३६ ॥

( नेपथ्यमें )

हेलोन्मूलितचन्द्रचूडगिरयस्त्रैलोक्यदत्तापदो
लङ्कातङ्कहराः पुरन्दरपुरस्त्रीवृन्दबन्दीकृतः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सोत्कण्ठं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः ॥२७॥

---

कायविस्तीर्णप्रदेशः ) एव सरः ( कासारः ) तस्मिन्विलासिनि ( विलसनशीले ), यत्पाणिपङ्केरुहां = यस्य ( रावणस्य ) पाणयः ( कराः ) एव पङ्केरुहः ( कमलानि ), तेषां वने = समूहे, शिरःस्थितेन्दुकलिकोत्तंसेन = इन्दुकलिका ( चन्द्रकोरकः ) सैव उत्तंसः (शिरोभूषणम्) यस्य सः, शिरः स्थितः (मस्तकस्थः, शिखरस्थ इति भावः) इन्दुकलिकोत्तंसः ( महादेवः ) यस्य सः, तेन । तादृशेन कैलासेन = कैलासाख्य-पर्वतेन, हंसायितं = हंसवदाचरितम् । स्वबलेनारक्षणार्थमप्रेसरं वज्रप्रहारानप्यगण-यन्तं रावणं किं वर्णयामः । यस्य शिखरे शङ्करोऽस्ति तादृशं कैलासपर्वतमप्ययं करकमलैर्गृहीत्वा नभोमार्गेणाऽगच्छदिति भावः । अत्र रूपकोपमयोरङ्गाङ्गिभावेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

हेलोन्मूलितेति । हेलोन्मूलितचन्द्रचूडगिरयः त्रैलोक्यदत्तापदो लङ्काऽऽतङ्कहराः पुरन्दरपुरस्त्रीवृन्दबन्दीकृतो वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः जयिनो दश-कन्धरस्य दोःकेलयः सोत्कण्ठं खेलन्तीत्यन्वयः ।

हेलोन्मूलितचन्द्रचूडगिरयः = हेलया ( अनायासेन ) उन्मूलितः ( उत्पाटितः ) चन्द्रचूडस्य ( महादेवस्य ) गिरिः ( पर्वतः, कैलास इति भावः ) यैस्ते । त्रैलोक्य-दत्तापदः = त्रैलोक्याय ( लोकत्रयाय, स्वर्गमर्त्यपातालात्मकायेति भावः ) दत्ता ( वितीर्णा ) आपत् ( विपत्तिः ) यैस्ते । लङ्काऽऽतङ्कहराः = लङ्कायाः ( लङ्काख्यन-गर्याः ) आतङ्कं ( तापम् ) हरन्ति (अपहरन्ति) इति तथाविधाः । पुरन्दरपुरस्त्री-वृन्दबन्दीकृतः = पुरन्दरपुरस्य ( इन्द्रपुर्याः, अमरावत्या इत्यर्थः ) यत्स्त्रीवृन्दं (सीम-न्तिनीसमूहः ) तस्य बन्दीकृतः ( बन्धनकर्तारः ) । एवं च वैदेहीकुचकुम्भकुङ्कुम-रसव्यासङ्गबद्धस्पृहाः = वैदेह्याः ( जानक्याः ) यौ कुचकुम्भौ ( स्तनकलशौ ) तयोर्यः कुङ्कुमरसः ( काश्मीरजद्रवः ) तस्य यो व्यासङ्गः ( सम्पर्कः, आलिङ्गनेनेति शेषः ) तस्मिन् बद्धस्पृहाः ( विहिताऽभिलाषाः ), तादृशाः । जयिनः = विजयिनः, दश-

---

अनायास ही शिवपर्वत ( कैलास ) को उत्पाटित करनेवाले, तीनों लोकको आपत्ति देनेवाले, लङ्काके सन्तापको हटानेवाले, स्वर्गस्थित देवललनाओंको बन्दी करनेवाले और सीताके कुचकलशों पर स्थित केसरके द्रवके सम्पर्कमें अभिलाष करनेवाले विजयी रावणके बाहुविलास उत्कण्ठापूर्वक क्रीडा कर रहे हैं ॥ २७ ॥

( पुनर्नेपथ्ये )

हेलोन्मूलितचन्द्रचूडधनुषस्त्रैलोक्यदत्ताभया-
लङ्कातङ्ककराः पुरन्दरपुरस्त्रीवृन्दवन्दीमुचः ।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गलब्धोत्सवाः
सोत्कर्षं रघुनन्दनस्य जयिनः खेलन्ति दोःकेलयः ॥२८॥

विद्याधरः—नूनमयं राक्षसवानरयोर्निजस्वामिवर्णनानुसारी व्याहारः ।

कन्धरस्य = रावणस्य, दोः केलयः = भुजविलासाः, सोत्कण्ठम् = उत्कण्ठापूर्वकं, खेलन्ति = क्रीडन्ति । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥

वानरनिकरः पूर्वश्लोकमेव किञ्चिदन्यथाकृत्य रामपराक्रमं वर्णयति—हेलोन्मूलितेति । हेलोन्मूलितचन्द्रचूडधनुषः त्रैलोक्यदत्ताऽभया लङ्कातङ्ककराः पुरन्दरपुरस्त्रीवृन्दवन्दीमुचो वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गलब्धोत्सवाः जयिनो रघुनन्दनस्य दोःकेलयः सोत्कर्षं खेलन्तीत्यन्वयः ।

हेलोन्मूलितचन्द्रचूडधनुषः = हेलया ( अनायासेन ) उन्मूलितं ( त्रोटितम् ) चन्द्रचूडस्य ( चन्द्रशेखरस्य, शिवस्येत्यर्थः ) धनुः ( कार्मुकम् ) यैस्ते । त्रैलोक्यदत्ताऽभयाः=त्रैलोक्याय दत्तम् ( वितीर्णम् ) अभयं ( भयाऽभावः ) यैस्ते । लङ्काऽऽतङ्ककराः = लङ्कातापकराः, पुरन्दरपुरस्त्रीवृन्दवन्दीमुचः = इन्द्रपुरीसीमन्तिनीबन्धनमोचकाः, वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गलब्धोत्सवाः = सीतास्तनकलशकाश्मीरजद्रवसम्पर्कप्राप्तोत्सवाः, जयिनः = विजयिनः, रघुनन्दनस्य = रामचन्द्रस्य, दोःकेलयः = भुजविलासाः, सोत्कर्षम् = उत्कर्षपूर्वकं, खेलन्ति = क्रीडन्ति । अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

विद्याधर इति । व्याहारः = उक्तिः । मातलिना = इन्द्रसारथिना । विनयाऽभिरामेण = विनयेन ( नम्रतया ) अभिरामेण ( सुन्दरेण ) ।

( फिर नेपथ्यमें )

अनायास ही शिवधनुको तोड़नेवाले, त्रैलोक्यको अभय देनेवाले, लङ्कामें भय उत्पन्न करनेवाले, देवललनाओंको बन्धनागारसे मुक्त करनेवाले और सीताके कुचकलशों पर स्थित केसरके द्रवके सम्पर्कसे उत्सव प्राप्त करनेवाले विजयी रामचन्द्रके बाहुविलास उत्कर्षपूर्वक क्रीडा कर रहे हैं ॥ २८ ॥

**विद्याधर**—निश्चय ही यह राक्षसों और वानरोंकी अपने अपने स्वामीके वर्णनका अनुसरण करनेवाली उक्ति है ।

विद्याधरी—कथं पुना रथस्थितेन रावणेन समं भूमिस्थितस्य रामस्य समरो भविष्यति । ( कह उण रहट्ठिदेण रावणेणसमं भूमिट्ठिदस्स रामस्स समरो हविस्सदि )

विद्याधरः—प्रिये ! पश्य । आनीत एव मातलिना पुरुहूतरथः, अधिष्ठितश्च विनयाभिरामेण रामेण ।

( नेपथ्ये )

अये ! कथं—

पूर्वमेव प्रयातानां खरमारीचवालिनाम् ।
सौजन्यमुग्धः पन्थानमधिवर्त्तितुमीहसे ॥ ३९ ॥

विद्याधरः—आकर्णयामस्तावदनेन रामवचनेन पीडितः किमाह रावणः ?

( नेपथ्ये )

---

पूर्वमेवेति । पूर्वमेव प्रयातानां खरमारीचवालिनां पन्थानं सौजन्यमुग्धः (सन्) अधिवर्तितुम् ईहसे इत्यन्वयः ।

हे रावणेति सम्बुद्धिपदमूह्यम् । पूर्वमेव = प्रागेव, प्रयातानां = प्रगतानां, परलोकगतानामिति भावः । खरमारीचवालिनां = तन्नामधेयभृत्यमित्राणां, पन्थानं = मार्गम्, सौजन्यमुग्धः = सौजन्येन (सुजनभावेन) मुग्धः (मोहयुक्तःसन्), अधिवर्तितुम् = अनुगन्तुम्, ईहसे = इच्छसि । हे रावण ! त्वमपि खरमारीचवालिवन्मच्छरगोचरो भवितुमिच्छसि किमिति भावः । रावणं प्रति रामस्योक्तिरियम् । अनुष्टुब्वृत्तम् ॥ ३९ ॥

---

विद्याधरी—रथारूढ रावणके साथ भूमिस्थित रामका कैसे युद्ध होगा ?

विद्याधर—प्रिये ! देखो । मातलि ( इन्द्रसारथि ) इन्द्ररथको ले आये हैं । विनयसे अभिराम राम उस पर आरूढ भी हो गये ।

( नेपथ्यमें )

अरे ! कैसे—( हे रावण ! तू )

पहले ही गये हुए खर, मारीच और वालीके मार्गका सुजनतासे मोहयुक्त होकर अनुसरण करना चाहता है ॥ ३९ ॥

विद्याधर—हमलोग सुन लें कि रामके इस वचनसे पीडित होकर रावण क्या कहता है ।

( नेपथ्यमें )

खरः कीदृग् वाली कपिरपि च, मारीचहतकः
कुरङ्ग, स्तान् हत्वा कथमपि कथं दृप्यसि मनाक् ।
अयं पश्य प्राप्तो दशवदननामा सुरपुरी-
करीन्द्राणां हेलारचितकदनः पञ्चवदनः ॥ ४० ॥

अथवा—
कालीकेसरिकेसराञ्चलसटासाटोपसम्पादित-
क्रीडाचामरकोमलानिललवाचान्तश्रमाम्भःकणः ।

रामं प्रति रावणो ब्रूते—खर इति । खर कीदृक्? वाली कपिः । मारीचहतकोऽपि कुरङ्गः । कथमपि तान् मनाक् हत्वा कथं दृप्यसि? सुरपुरीकरीन्द्राणां हेलारचितकदनः अयं दशवदननामा पञ्चवदनः प्राप्तः । पश्येत्यन्वयः ।

हे रामेति पदमध्याहार्यम् । खरः = तदाख्यो राक्षसः, कीदृक् = कीदृशः, क्षुद्र एव, वीरो नाऽऽसीदिति भावः । एवं च वाली = मदीयः सखा, कपिः = वानरः । नो देवो न राक्षसो नैव नरोऽपीति भावः । तथैव मारीचहतकोऽपि = मारीचाख्यो नीचराक्षसोऽपि, कुरङ्गः = मृगः, त्वच्छरप्रहारकाले मृगरूपधार्येव आसीन्न स्वरूपस्थ इति भावः । अतः कथमपि = केनाऽपि प्रकारेण, तान् = खरवालिमारीचान् पदत्रयं निवृत्य खरम् अन्तर्हितत्वेन वालिनं कुरङ्गरूपिणं पलायमानं मारीचं चेति कपटपाटवेनेति शेषः, मनाक् = अल्पं यथा तथा, हत्वा = व्यापाद्य, कथं = किमर्थं दृप्यसि = दर्पं करोषि । सुरपुरीकरीन्द्राणां = सुरपुर्यां (देवनगर्याम् , अमरावत्यामिति भावः) ये करीन्द्राः (गजेन्द्राः), तेषाम् । हेलारचितकदनः = हेलया (अनायासेन) रचितं (कृतम्) कदनम् (हननम्) येन सः । तादृशः अयं = निकटस्थः, दशवदन-रावणाऽभिधानः, पञ्चवदनः = पञ्चास्यः, सिंह इत्यर्थः । 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः ।' इत्यमरः । प्राप्तः = समायातः, पश्य = विलोकय, त्वमिति शेषः । अत्र रूपकमलङ्कारः । शिखरिणीवृत्तम् ॥ ४० ॥

कालीति । कालीकेसरिकेसराञ्चलसटासाटोपसम्पादितक्रीडाचामरकोमलाऽनि-

(हे राम!) खर कैसा था? वाली वानर था और नीच मारीच भी मृगरूपमें था। किसी प्रकारसे उन्हें अल्पप्रकारसे मारकर तू क्यों दर्प कर रहा है? अमरावतीके गजेन्द्रोंका अनायास ही संहार करनेवाला यह दशवदन-नामक पञ्चास्य (सिंह) आया है। देख तो सही। ॥ ४० ॥

अथवा—कालीके सिंहके स्कन्धस्थित केशसमूहसे गर्वपूर्वक बनाये गये क्रीडाचामरकी कोमल हवाके लेशसे जिसका श्रमजल सूख गया है, ऐसा श्रीमान् दशानन (रावण) सर्वो-

श्रीमानेष दशाननो विजयते तस्यास्य पञ्चानन-
व्यापारप्रतिपादनैरपि यशः कीदृक्समुन्मीलति ? ॥४१॥

विद्याधरः—अये ! दशवदनवचनकुपितः किमपि वक्तुकाम इव लक्ष्यते लक्ष्मणः ।

( नेपथ्ये )

किं ते—पञ्चाननतया दशाननतया वा त्वमिदानीं—
दूरोन्मुक्तमदो विभीषण इव न्यञ्चाच्छिरःशेखरः
स्वच्छन्दं चरणारविन्दयुगले रामस्य भृङ्गो भव ।

---

...लववाचान्तश्रमाऽम्भःकणः श्रीमान् एष दशाननो विजयते । तस्य अस्य पञ्चाननव्यापारप्रतिपादनैरपि कीदृक् यशः समुन्मीलतीत्यन्वयः ।

कालीत्यादिः=काल्याः ( दुर्गायाः ) केसरिणः ( सिंहस्य ) या केसराऽग्रसटा ( स्कन्धकेशप्रान्तभागसमूहः ) तया साटोपं ( सगर्वं यथा तथा ) सम्पादितं ( रचितम् ) यत् क्रीडाचामरं ( केलिप्रकीर्णकम् ) तस्य यः कोमलः ( मृदुः, मन्द इति भावः ) यः अनिललवः ( वायुलेशः ) तेन आचान्ताः ( संशोषिताः ) श्रमाऽम्भःकणाः ( स्वेदजललेशाः ) यस्य सः । तादृशः श्रीमान्=लक्ष्मीवान्, एषः=अयं, दशाननः=रावणः, विजयते=सर्वोत्कर्षेण वर्तते । तस्य=तादृशस्य, अस्य=रावणस्य । पञ्चाननव्यापारप्रतिपादनैरपि=पञ्चाननस्य ( सिंहस्य ) यो व्यापारः ( पराक्रमाऽऽत्मिका क्रिया ) तत्प्रतिपादनैरपि ( तद्वर्णनैरपि ), सिंहपराक्रमतुल्यतावर्णनैरपीति भावः । कीदृक्=कीदृशं, यशः=कीर्तिः समुन्मीलति=प्रादुर्भवति । यो नाम रावणः कालीकेसरिणमभिभूय तत्सटाकलापमुत्पाट्य चामरकलापं विदधाति, तस्य दशाननस्य पञ्चाननपराक्रमसादृश्यवर्णनं तिरस्करणमेवेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

दूरोन्मुक्तमद इति । रे नक्तञ्चर ! दूरोन्मुक्तमदो विभीषण इव न्यञ्चच्छिरःशेखरो

---

स्पर्धपूर्वक विद्यमान है । वैसे उस रावणके पञ्चानन ( सिंह ) की पराक्रमक्रियाके वर्णनोंसे भी कैसा यश प्रादुर्भूत होगा ? ॥ ४१ ॥

विद्याधर—रावणके वचनसे क्रुद्ध होकर लक्ष्मणजी कुछ बोलना चाहते हैं ऐसा मालूम होता है ।

( नेपथ्यमें )

तेरे पञ्चानन ( सिंह ) होनेसे अथवा दशानन होनेसे क्या ? तू अभी—

अरे राक्षस ! दूरसे ही गर्व छोड़कर विभीषणके समान चूडामणि झुकाकर रामके

रे नक्तञ्चर, कुम्भकर्ण इव वा कर्णान्तचक्रीभव-
चापोत्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भव ॥ ४२ ॥

विद्याधरी—पश्य पश्य, इतः शरान्धकारं विस्तारयता निशामुखायितं दशमुखेन। ( पेक्ख पेक्ख। इदो सरन्धआरं वित्थारअन्तेण णिसामुहायिदं दसमुहेण )

विद्याधरः—नन्वितस्तदेव निजविशिखमयूखधारया विनिवारयता

---

रामस्य चरणाऽरविन्दयुगले स्वच्छन्दं भृङ्गो भव। वा कुम्भकर्ण इव कर्णाऽन्तचक्रीभवच्चापोत्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भवेत्यन्वयः।

रे नक्तञ्चर = रे राक्षस! दूरोन्मुक्तमदः = दूरात् ( विप्रकृष्टप्रदेशादेव ) उन्मुक्तः ( परित्यक्तः ) मदः ( गर्वः ) येन सः, तादृशो विभीषण इव = स्वकनिष्ठाऽनुज इव, न्यञ्चच्छिरः शेखरः = न्यञ्चन् ( अवनतीभवन् ) शिरः शेखरः ( चूडामणिः ) यस्य सः, तादृशः सन्। रामस्य = रामचन्द्रस्य, चरणाऽरविन्दयुगले = पादपद्मयुग्मे, स्वच्छन्दं = स्वाऽभिलाषाऽनुसारं यथा तथा, भृङ्गः = भ्रमरः, भव = एधि, भृङ्गः कमलं यथा रामचन्द्रचरणकमलमाश्रयेति भावः। एतत्कर्माऽनाचरणे पक्षान्तरमाह—वा = अथ वा, रामेण समं युद्धमभ्युपगम्येति भावः। कुम्भकर्ण इव = रावणस्य कनीयानिव, कर्णान्तचक्रीभवच्चापोत्सङ्गविमुक्तबाणदहने = कर्णाऽन्तं ( श्रोत्रपर्यन्तम् ) चक्रीभवन् ( आकर्षणे मण्डलीभवन् ) यश्चापः ( धनुः ) तस्य उत्सङ्गः ( मध्यभागः ) तस्माद्विमुक्तः ( प्रक्षिप्तः ) बाणाः ( शराः ) एव यो दहनः (अनलः), तस्मिन्। सद्यः = सपदि, पतङ्गः = शलभः, भव = एधि। रे रावण! गर्वपरिहरणं विधाय विभीषणवद्रामचरणशरणमनुसर, आहोस्वित् समरसुरीकृत्य रामशराऽनले पतङ्गवृत्तिमनुभवेति भावः। उपमारूपकयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः। शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

विद्याधरीति। निशामुखायितं = निशामुखवत् ( सन्ध्यावत् ) आचरितम् ( कृतम् )। रावणेन शरासारैस्तिमिरं विस्तारितमिति भावः।

विद्याधर इति। तदेव = शराऽन्धकारमेव। चन्द्रायितं = चन्द्रवदाचरितम्।

---

चरणकमलोंमें स्वच्छन्दरूपसे भ्रमर बन अथवा कुम्भकर्णकी तरह कान तक मण्डलाकार धनुके मध्यभागसे छूटे हुए बाणानलमें तत्क्षण ही पतङ्ग हो ॥ ४२ ॥

**विद्याधरी**—देखिए, देखिए। इधर बाणान्धकारको विस्तीर्ण करनेवाले रावणने सन्ध्याकालके समान आचरण किया।

**विद्याधर**—इधर बाणान्धकारको ही अपने बाणोंकी किरणधारासे निवारणकर राम-

चन्द्रायितं रामचन्द्रेण । ( पुनः सकौतुकम् ) अये ! नूनमयं दिव्यास्त्रलीलया प्रतिहतदिव्यास्त्रं निकृत्तचापं रावणं किमपि वक्तुकाम इव रामः ।

( नेपथ्ये )

निकृत्तचाप इति मा संक्षोभतरलो भव ।
शस्त्रमन्यदपि स्वैरं ननु रे ! समरे कुरु ॥ ४२ ॥

विद्याधरी—आकर्णयतु तावत् किमिदानीं भणति रावणः । ( आकण्णेअदु दाव किं दाणीं भणदि रावणो )

( नेपथ्ये )

आकर्णितस्तव दशानन ! बाहुदण्ड-
श्रीखण्डकाननफणी नवचन्द्रहासः ।

---

निकृत्तचापं = छिन्नधनुषम् ।

निकृत्तचापमिति । ननु ! निकृत्तचाप इति संक्षोभतरलो मा भव । रे ! समरे अन्यत् अस्त्रम् अपि स्वैरं । कुर्वित्यन्वयः । ननु = हे रावण !, निकृत्तचापः = छिन्नकार्मुकः, अहमिति शेषः । इति = अनेन कारणेन, संक्षोभतरलः = संक्षोभेण ( संचलनेन, भयजनितेति शेषः ) तरलः ( चञ्चलः ) । मा भव = मा भूः, किंकर्तव्यताविमूढत्वं मा भजेति भावः । रे = रे रावण ! समरे = युद्धे, अन्यत्=अपरम्, अस्त्रम्= आयुधम्, अपि, स्वैरं = यथेच्छं यथा तथा, कुरु = विधेहि, गृहाणेति भावः । अनुष्टुब्वृत्तम् ॥ ४२ ॥

आकर्णित इति । हे दशानन ! तव बाहुदण्डश्रीखण्डकाननफणी नवचन्द्रहास आकर्णितः । येन स्वनामभवसाम्यरुषा इव स्वर्लोककल्लोलघनामृतचन्द्रहासः पीत इत्यन्वयः ।

---

चन्द्रने चन्द्रके समान आचरण किया । ( फिर कौतुकपूर्वक ) निश्चय ही ये राम अपने दिव्यास्त्रोंके विलाससे रावणके दिव्यास्त्रोंका निवारणकर और उसके धनुको भी काटकर कुछ कहना चाहते हैं ऐसा मालूम पड़ता है ।

( नेपथ्यमें )

हे रावण ! 'धनु कट गया' इसलिए संक्षोभसे चञ्चल मत हो । तू युद्धमें दूसरा अस्त्र भी इच्छाके अनुसार उठा ले ॥ ४२ ॥

विद्याधरी—सुनिए, इस समय रावण क्या कहता है ?

( नेपथ्यमें )

हे रावण ! तेरे बाहुदण्डरूप चन्दनवनका सर्प नया चन्द्रहास ( खड्ग ) भी सुन

येन स्वनामभवसाम्यरुषेव पीतः
स्वर्लोकलोलनयनामुखचन्द्रहासः ॥ ४४ ॥

विद्याधरः—लीलादलितचन्द्रहासः सोल्लासः किमधुना वदति रावणं रामचन्द्रः।

( नेपथ्ये )

अयि ! तावदधुना लङ्केश्वरः खिद्यते ?

---

हे दशानन = हे रावण !, तव भवतः, बाहुदण्डश्रीखण्डकाननफणी = बाहुदण्डाः ( भुजदण्डाः ) एव श्रीखण्डाः ( चन्दनाः ) तेषां काननम् ( वनम् ) तस्य फणी ( सर्पः )। नवचन्द्रहासः = नूतनखड्गः, आकर्णितः = श्रुतः। यथा श्रीखण्डवने सर्पो निवसति तथैव त्वद्भुजदण्डवने वसंश्चन्द्रहासो मया श्रोत्रेन्द्रियगोचरीकृत इति भावः। अत्र हिंस्रत्वाच्चन्द्रहासस्य सर्पसाम्यम्। येन = चन्द्रहासेन, स्वनामभवसाम्यरुषा = स्वनाम्नि ( आत्मनामधेये, चन्द्रहासरूप इति भावः ) भवं ( विद्यमानम् ) यत् साम्यं ( सादृश्यम् ) तेन या रुट् ( क्रोधः ), तया, इव, स्वर्लोकलोलनयनामुखचन्द्रहासः = स्वर्लोके ( स्वर्गे ) या लोलनयना ( चञ्चलाक्षी, सुन्दरीति भावः। जातावेकवचनम् ) तस्या मुखम् ( आननम् ) एव चन्द्रः ( इन्दुः ) तस्य हासः ( विकासः )। पीतः = कवलीकृतः, विनाशित इति भावः। येन त्वदीयेन खड्गेन 'चन्द्रहास इति मदीयं नाम स्वर्लोकसुन्दरीमुखविकासेऽपि चन्द्रहास इति सादृश्यमस्ती'ति रुषा देवानां विनाशनेन देवीमुखचन्द्रहासो विलोपित इति भावः। अत्र रूपकोत्प्रेक्षयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः। वसन्ततिलका वृत्तम्॥

विद्याधर इति। लीलादलितचन्द्रहासः = लीलया ( विलासेन, ) स्वमुखस्येति शेषः दलितः ( तिरस्कृतः ) चन्द्रस्य ( इन्दोः ) हासः ( विकासः ) येन सः। यद्वा लीलया ( हेलया ) दलितः ( खण्डितः ) चन्द्रहासः ( रावणकरवालः ) येन सः। अत एव—सोल्लासः = अतिशयप्रकाशयुक्तः।

---

लिया गया। जिसने अपने नाम ( चन्द्रहास ) में स्थित सादृश्यके क्रोधसे स्वर्गकी सुन्दरीके मुखचन्द्रका हास पी लिया था ॥ ४४ ॥

**विद्याधर**—लीलासे चन्द्रहास ( चन्द्रविकास अथवा रावणके खड्ग ) को खण्डित करनेवाले अतिशय प्रकाशयुक्त रामचन्द्रजी इस समय रावणको क्या कहते हैं ?

( नेपथ्यमें )

क्या अभी लङ्केश्वर खिन्न हो रहा है ?

विद्याधरी—किमपीदानीं जल्पिष्यति रावणः। (किंपि दाणीं जप्पिस्सदि रावणो )

( नेपथ्ये )

कथमद्यैव लङ्केश्वरः खिद्यते ! ननु रे,
विध्वस्ता दशभिर्भुजैर्दशदिशः प्रत्येकमेते पुन-
र्भारायैव दशापरे मम गिरिप्राग्भारभाजो भुजाः।
आराध्यः शशिमौलिरम्बुधिजले निद्राति नारायणः
किंकर्तव्यतयानयानुदिवसं लङ्केश्वरः खिद्यते ॥ ४५ ॥

खेदं निह्नुवानो रावण आत्मपराक्रमं वर्णयति—विध्वस्ता इति। मम दशभिर्भुजैः प्रत्येकं दश दिशो विध्वस्ताः। मम अपरे गिरिप्राग्भारभाजो दश भुजा भाराय एव। शशिमौलिः आराध्यः। नारायणः अम्बुधिजले निद्राति। अनया किंकर्तव्यतया लङ्केश्वरोऽनुदिवसं खिद्यत इत्यन्वयः।

मम = रावणस्य। दशभिः = दशसंख्यकैः भुजैः = बाहुभिः, प्रत्येकम् = एकैकशः, दश = दश संख्यकाः, दिशः = आशाः, विध्वस्ताः = पराजिताः, अचेतनानां दिशां पराजयाऽनुपपत्तेर्दिक्पालानां पराजयो लक्ष्यते। एवं मम = रावणस्य, अपरे = अन्ये, दिग्विजेतृभ्य इति शेषः। गिरिप्राग्भारभाजः=गिरीणां ( पर्वतानाम् ) प्राग्भारं ( अग्रभागम् ) भजन्तीति। अत्र प्राग्भारपदेन भुजानां पर्वतशिखरसमकठोरता लक्ष्यते। अतिशयकठोरा इति भावः। 'शैलाग्रे शिखरं शृङ्गं दन्तः प्राग्भारमित्यपि।' इति त्रिकाण्डशेषः। दश = दशसंख्यकाः, भुजा बाहवः, भाराय एव = धारणप्रयासाय एव, कार्याऽभावादिति भावः। तर्हि भुजकण्डूतिनिवारणाय शङ्करेण नारायणेन वा समं रणोऽङ्गीकरणीय इति चेत्तत्राह—आराध्य इति। शशिमौलिः = चन्द्रशेखरः, शङ्कर इत्यर्थः। आराध्यः = सेवनीयः, अतस्तेन समं संग्रामो न घटत इति भावः। तर्हि रणार्थं नारायणोऽङ्गीकरणीय इति चेत्—अम्बुधिजल इति।

विद्याधरी—रावण इस समय कुछ कहेगा।

( नेपथ्यमें )

क्या लङ्केश्वर आज ही खिन्न होता है ? अरे !

मेरे दशों बाहुओंने एक एक कर दशों दिशाओंको विध्वस्त कर दिया। मेरे और दश बाहु पर्वतोंके शिखरोंके समान गुरुत्वको आश्रय करते हुए भारमात्रके लिए ही गये हैं। शङ्करजी आराधनीय हैं और विष्णु समुद्रजलमें नींद ले रहे हैं। इस किंकर्तव्यतासे लङ्केश्वर दिन दिन खिन्न हो रहा है ॥ ४५ ॥

विद्याधरी—वचनमात्रमिदानीम् । ( वअणमेत्तं दाणीं )

विद्याधरः—नहि नहि पश्य नन्वयमिदानीमपि ।

धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितो
दशास्यः स्वान्मूर्ध्नो रघुपतिशरश्रेणिदलितान् ।
करैरेकैरेकैर्नभसि भृशमादाय युगप-
त्क्षिपन्नन्यैरन्यैः सफलयति दोर्विंशतिमपि ॥ ४६ ॥

( पुनः सकौतुकम् )

नारायणः = विष्णुः, अम्बुधिजले = समुद्रतोये, क्षीरसागरनीर इति भावः निद्राति = स्वपिति । अतः अनया = एतया, किंकर्तव्यतया = भुजदशककार्यान्तरचिन्तयेति भावः । लङ्केश्वरः = रावणः, अनुदिवसं = प्रतिदिनं, खिद्यते = खेदमनुभवति, न तु सपत्नजभयादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

विद्याधरो रावणविक्रमं वर्णयति—धनुरिति । धनुर्निस्त्रिंशादिप्रहरणगणच्छेद कुपितो दशास्यो रघुपतिशरश्रेणिदलितान् स्वान् मूर्ध्नः एकैः एकैः करैः आदाय अन्यैः अन्यैः भृशं नभसि युगपत् क्षिपन् दोर्विंशतिम् अपि सफलयतीत्यन्वयः ।

धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितः = धनुर्निस्त्रिंशादिः ( कार्मुकखड्गादिः ) यः प्रहरणगणः ( आयुधसमूहः ) तस्य छेदेन ( खण्डनेन ) कुपितः ( क्रुद्धः ) । दशास्यः = रावणः, रघुपतिशरश्रेणिदलितान् = रघुपतेः ( रामस्य ) या शरश्रेणिः ( बाणपङ्क्तिः ) तया दलितान् ( छिन्नान् ) । स्वान् = आत्मीयान् , मूर्ध्नः = शिरांसि, एकैः एकैः करैः = एकैकहस्तैः, आदाय = गृहीत्वा, अन्यैः अन्यैः = अपरैः अपरैः हस्तैः, भृशम् = अत्यर्थं, नभसि = आकाशे, युगपत् = एककाले, क्षिपन् = प्रेरयन् , रामोपरीति शेषः । दोर्विंशतिम् अपि = दोष्णां ( बाहूनाम् ) विंशतिम् अपि ( विंशतिपरिमितसंख्याम् अपि ) 'सफलयति = सफलां करोतीत्यर्थः । रामेण भूयः कृत्तेषु शिरःसु पुनरपि शिवप्रसादेनाऽपरेषु संरोहत्सु कुपितो रावणः एकैकरैर्निकृतानि स्वशिरांसि गृहीत्वा अन्याऽन्यकरैस्तान्येवाऽस्त्राणि विधाय रामोपरि प्रक्षिप्य भुजविंशतिमपि सफलयतीति भावः । शिखरिणी वृत्तम् ॥ ४६ ॥

**विद्याधरी**—अभी यह वचनमात्र है ।

**विद्याधर**—नहीं नहीं, देखो, यह अभी भी—

धनु, खड्ग आदि हथियारोंके छेदनसे क्रुद्ध होकर रावण, रामचन्द्रके बाणोंसे छिन्न अपने शिरोंको एक एक हाथोंसे लेकर और और हाथोंसे आकाशमें एक ही बार फेंकता हुआ बीसों बाहुओंको सफल करता है ॥ ४६ ॥

( फिर कौतुकके साथ )

एतान्यस्य यथायथा सुविशिखैः कृत्तानि रक्षःपते-
रुद्गच्छन्ति शिरांसि भीतिपुलकैः साकं दिवौकःपतेः ।
उन्मीलन्ति तथातथा रघुपतेरन्तः प्रमोदोर्मयः
कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः ॥ ४७ ॥

विद्याधरी—कथमद्यापि निशाचरेन्द्रबन्दीकृतसुरसुन्दरीणां दर्शनं दुर्लभं यदस्य शीर्षाणि पुनः पुनरप्युन्मीलन्ति । ( कहं अज्जावि णिसाअरेन्द-बन्दीकिदसुरसुन्दरीणं दंसणं दुल्लहं जंइमस्स सीसाइं पुणो पुणो वि उम्मीलन्ति )

विद्याधरः—अलं तापेन, क्रीडति खलु रामः सह रावणेन । न पुनरद्यापि कुप्यति । ( पुनर्विलोक्य, सकौतुकम् ) प्रिये, पश्य पश्य ।

एतान्यस्येति । सुविशिखैः कृत्तानि अस्य रक्षःपतेः एतानि शिरांसि दिवौकःपतेः भीतिपुलकैः साकं यथा यथा उद्गच्छन्ति, कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसो रघुपतेः अन्तः प्रमोदोर्मयः तथा तथा उन्मीलन्तीत्यन्वयः ।

सुविशिखैः = तीक्ष्णबाणैः, कृत्तानि = छिन्नानि, अस्य = एतस्य, रक्षःपतेः = रावणस्य, एतानि = इमानि, शिरांसि = मूर्धानः दिवौकःपतेः = दिवौकसां ( देवानाम् ) पत्युः ( स्वामिनः ) इन्द्रस्येति भावः । भीतिपुलकैः = भयोत्पन्नरोमाञ्चैः, साकं = समं, यथा यथा = येन येन प्रकारेण, उद्गच्छन्ति = उत्पद्यन्ते, कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः = कण्ठानां ( रावणगलानाम् ) छेदे ( कर्तने ) यो विनोदः ( मनोरञ्जनम् ) तस्मिन् यः कौतुकभरः ( कुतूहलभारः ) तेन व्यग्रीभवत् ( आकुलीभवत् ) चेतः ( चित्तम् ) यस्य, तस्य । तादृशस्य रघुपतेः = रामचन्द्रस्य, अन्तःप्रमोदोर्मयः = अभ्यन्तरहर्षतरङ्गाः, तथा तथा = तेन तेन प्रकारेण, उन्मीलन्ति = आविर्भवन्ति । रावणशिरांसि रामशरैर्यथा यथा छिद्यन्ते तथा तथा शिवप्रसादादुत्पद्यन्ते देवेन्द्रश्च भयभीतो भवति रामश्च शत्रुशिरच्छेदने सधैर्यं व्याकुलो भवतीति भावः । अत्र सहोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥

तीक्ष्ण बाणोंसे काटे गये रावणके ये शिर, इन्द्रके भयसे उत्पन्न रोमाञ्चोंके साथ जैसे जैसे उत्पन्न होते जाते हैं, कण्ठोंके छेदनके मनोरञ्जनमें कुतूहलातिशयसे व्यग्रचित्त वाले रामचन्द्रकी भीतरी हर्षकी तरङ्गें वैसे वैसे उत्पन्न होती जाती हैं ॥ ४७ ॥

विद्याधरी—किस प्रकार आज भी बन्दीकृत देवाङ्गनाओंका दर्शन दुर्लभ हो रहा है, जो कि इसके शिर काटे जाने पर भी बारंबार उत्पन्न होते जा रहे हैं ।

विद्याधर—सन्ताप मत करो । रामचन्द्र रावणके साथ क्रीडा कर रहे हैं । इसीलिए अभी भी क्रोध नहीं कर रहे हैं । ( फिर देखकर, कौतूहलके साथ ) प्रिये ! देखो, देखो ।

अन्तः सान्द्रवसन्महेश्वरशिरःशीतांशुलेखोल्लस-
त्पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजामिव ।
छिन्नानामपि रामचन्द्रविशिखैर्भूयः समुद्गच्छतां
काप्यन्यैव निशाचरेन्द्रशिरसां कान्तिः समुज्जृम्भते ॥४८॥

( पुनः सकौतुकम् । विहस्य ) अहो ! अस्य चित्तवृत्तिः ।

अयं यावद्यावत् पृथु हृदयपीठं रघुपतिः
शिरश्छेदासक्तो न दशवदनस्य व्यथयति ।

---

अन्तः सान्द्रेति । अन्तः सान्द्रवसन्महेश्वरः शिरः शीतांऽशुलेखोल्लसत्पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजाम् इव रामचन्द्रविशिखैः छिन्नानाम् अपि भूयः समुद्गच्छतां निशाचरेन्द्रशिरसां काऽपि अन्यैव कान्तिः समुज्जृम्भते इत्यन्वयः ।

अन्तःसान्द्रेत्यादिः = अन्तः ( हृदये ) रावणस्येति शेषः । सान्द्रं ( निबिडम् ) यथा तथा वसन् ( वासं कुर्वन्, ) यो महेश्वरः ( महादेवः ) तस्य शिरसि ( मस्तके ) या शीतांऽशुलेखा ( चन्द्रकला ) तस्या उल्लसन् ( उद्गच्छन् ) यः पीयूषद्रवः ( अमृतरसः ) तस्य ये शीकराः ( बिन्दवः ) तेषां व्यतिकरः (सम्बन्धः) तस्य प्राग्भारम् ( औन्नत्यम् ) भजन्ति ( आश्रयन्ति ) इति, तेषाम् इव, रामचन्द्रविशिखैः = रामबाणैः, छिन्नानामपि कृत्तानामपि, भूयः = पुनः, समुद्गच्छतां = समुद्यतां, प्ररोहतामिति भावः । निशाचरेन्द्रशिरसां = निशाचरेन्द्रस्य ( रावणस्य ) शिरसां ( मस्तकानाम् ), काऽपि अनिर्वचनीया अतएव—अन्यैव = अपरैव, लोकविलक्षणेवेति भावः । कान्तिः = शोभा, समुज्जृम्भते = प्रकाशते रामबाणैश्छिन्नानामपि हृदयस्थितशिवचन्द्रकलाद्रवदमृतरससम्पर्कात्पुनरुत्पद्यमानानां रावणमस्तकानामनिर्वचनीया कान्तिर्लोचनगोचरीभवतीति भावः उत्प्रेक्षाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

विद्याधरो रावणचित्तवृत्तिं वर्णयति—अयमिति ।

शिरश्छेदासक्तोऽयं रघुपतिः दशवदनस्य पृथु हृदयपीठं यावद्यावत् न व्यथयति

---

रावणके हृदयके भीतर निबिडरूपसे वास करनेवाले महादेवके मस्तकस्थित चन्द्रकलासे प्रसुत अमृतरसोंके सम्पर्कसे जैसे उन्नत हो रहे हैं ऐसे रामबाणोंसे काटे जानेपर भी फिर उत्पन्न होनेवाले रावणमस्तकोंकी अनिर्वचनीय लोकविलक्षण ही कान्ति प्रकाशित हो रही है ॥ ४८ ॥

( फिर कुतूहलपूर्वक हंसकर ) अहो ! इसकी कैसी चित्तवृत्ति है ?

शिरश्छेदनमें आसक्त ये रामचन्द्रजी रावणके विशाल वक्षःस्थलको जब तक पीडित

अयं तावत्तावद्वहति मुदमुच्चैर्दशमुखः
किलैतस्मिन्देवी जनकपुत्री निवसति ॥ ४९ ॥

( नेपथ्ये )

अयि प्रिय, राम,

किं क्रीडसि शरस्तोमैर्ननन्वेकेनैव पत्रिणा ।
परिपूरय नः कामं यशसा च जगत्त्रयम् ॥ ५० ॥

---

अयं दशमुखः 'एतस्मिन् देवी जनकपतिपुत्री निवसति' ( इति ) तावत्तावत् उच्चैर्मुदं वहति किलेत्यन्वयः ।

शिरश्छेदाऽऽसक्तः = शिरसां ( मस्तकानां, रावणस्येति शेषः ) छेदे ( खण्डने ) आसक्तः ( व्यापृतः ), अयं = पुरोवर्ती, रघुपतिः = रामचन्द्रः, दशवदनस्य = रावणस्य, पृथु = विशालं, हृदयपीठं = वक्षःस्थलं, यावद्यावत् = यावत् कालाऽवधि, न व्यथयति = न पीडयति, अयं = निकटवर्ती, दशमुखः = रावणः, एतस्मिन् = हृदयपीठे, देवी = राममहिषी, जनकपतिपुत्री = सीता, निवसति = निवासं करोति, ( इति = अनेन कारणेन ) तावत्तावत् = तत्तत्कालाऽवधि, उच्चैः = साऽतिशयं यथा तथा, मुदं = हर्षं, वहति = धारयति । किलेति निश्चये । रामो रावणस्योरःप्रदेशं वर्जयित्वा यावद्यावत् शिरांस्येव छिनत्ति तावत्तावद्रावणो 'मदीये हृदयप्रदेशे जानकी निवसति, अतस्तस्य रामशराऽनाहतत्वान्मनागपि सा कष्टं नाऽनुभवती'ति मत्वा हर्षप्रकर्षमनुभवतीति भावः । शिखरिणी वृत्तम् ॥ ४९ ॥

किं क्रीडसीति । शरस्तोमैः किं क्रीडसि ? ननु एकेनैव पत्रिणा नः कामं यशसा च जगत्त्रयं परिपूरयेत्यन्वयः ।

शरस्तोमैः—बाणसमूहैः, किं = किमर्थं, निष्प्रयोजनमिति भावः । क्रीडसि = क्रीडां करोषि । ननु = हे राम, एकेनैव = एकसंख्यकेनैव पत्रिणा = बाणेन, रावणप्राणहरणसमर्थेनेति भावः । नः = अस्माकं, कामम् = अभिलाषं, रावणवधात्मकमिति भावः । यशसा च = कीर्त्या च, जगत्त्रयं = लोकत्रितयं, परिपूरय = परिपूर्णं

---

नहीं करते हैं, यह रावण 'इस (वक्षःस्थल) में देवी सीता निवास करती है' ऐसा सोचकर तब तक अतिशय हर्षको धारण कर रहा है ॥ ४९ ॥

( नेपथ्यमें )

प्यारे राम !

बाणोंसे क्यों क्रीडा कर रहे हो । एक ही बाणसे हमलोगोंकी इच्छाको और यशसे लोकत्रयको परिपूर्ण करो ॥ ५० ॥

विद्याधरः—नूनममी दिवौकसस्त्वरयन्ति रामचन्द्रम्। तच्छ्रुत्वा किमधुना वक्ष्यति रावणः ?

( नेपथ्ये )

रे रे मम भुजाः,

मुक्त्वैकां हरशेखरप्रणयिनीं पीयूषभानोः कलां
दिक्पालावलिमौलिमण्डनमणीन् गृह्णीत सर्वानपि।
तैः काञ्चीं रचितां चिराय वहतु श्रोणीतटे जानकी
गायन्ती कमनीयशिञ्जितभरैर्मद्विक्रमाडम्बरम्॥ ५१॥

कुरु। अस्मदीयाऽभिलाषपूरणाय लोकत्रयेऽपि यशोऽभिवृद्धये चैकेन शरेणैव रावणं निष्प्राणं विधेहि शरस्तोमप्रसारणेन कालक्षेपं मा कार्षीरिति भावः। अत्र तुल्ययोगिताऽलङ्कारः। अनुष्टुब्वृत्तम्॥ ५०॥

विद्याधर इति। वक्ष्यति = कथयिष्यति।

देवांस्तर्जयन् रावणोऽभिधत्ते—मुक्त्वैकामिति। हरशेखरप्रणयिनीं पीयूषभानोः एकां कलां मुक्त्वा सर्वानपि दिक्पालावलिमौलिमण्डनमणीन् गृह्णीत। तैः रचितां काञ्चीं कमनीयशिञ्जितभरैः मद्विक्रमाडम्बरं गायन्ती जानकी श्रोणितटे चिराय वहत्वित्यन्वयः।

हरशेखरप्रणयिनीं = शिवशिरःप्रणयवतीं पीयूषभानोः = सुधांशोः, चन्द्रस्येत्यर्थः। एकाम् = एकसंख्यकां, कलां = लेखां, मुक्त्वा = त्यक्त्वा, सर्वानपि = सकलानपि, दिक्पालावलिमौलिमण्डनमणीन् = दिक्पालानाम् ( इन्द्रादीनाम् ) या आवलिः ( पङ्क्तिः ) तस्या मौलिषु ( शिरःसु ) स्थिता ये मण्डनमणयः ( भूषणरत्नानि ), तान्। गृह्णीत = आदत्त। तैः = इन्द्रादिशिरोभूषणरत्नैः, रचितां = निर्मितां, काञ्चीं = मेखलां, कमनीयशिञ्जितभरैः, मनोहरकाञ्चीरत्नशब्दसमूहैः, मद्विक्रमाडम्बरं = मत्पराक्रमतूर्यशब्दं, गायन्ती = गानं कुर्वती, जानकी = सीता, श्रोणीतटे = नितम्ब-

**विद्याधर**—निश्चय ही ये देवगण रामचन्द्रको शीघ्रता करनेके लिए कह रहे हैं। उस वाक्यको सुनकर रावण अभी क्या कहेगा ?

( नेपथ्यमें )

मेरे बाहुओ !

महादेवजीके शिरमें अवस्थित एक चन्द्रकलाको छोड़कर दिक्पालोंकी समस्त मुकुटमणियोंको ग्रहण करो। उनसे रचित मेखलाको मनोहर शिञ्जितशब्दोंसे मेरे पराक्रमके वाद्यशब्दका गान करती हुई सीता अपने नितम्बमें बहुत समय तक धारण करे॥ ५१॥

विद्याधरः—( विहस्य ) लङ्केश्वर ! समयज्ञोऽसि यद्भुजानेव नियुक्तवानसि । अधुना हि भुजमण्डलमेव परिवारवर्गस्ते । ( विलोक्य साकूतम् ) अये ! कथमनेन दशाननवचनेन किंचित्कुपित इव दृश्यते जानकीकान्तः । पुनः सहर्षविषादम् ) हन्त भोः !!

विकचकुसुमस्तोमाकीर्णे परागविभूषितः
शशिमणिशिलातल्पेऽनल्पे सलीलमशेत यः ।
अयमयमसौ रोषारूढे क्षणं रघुनन्दने
भुवि दशमुखः शेते धूलिच्छटापरिधूसरः ॥ ५२ ॥

स्थले, चिराय = बहुकालपर्यन्तं, 'चिराय चिररात्राय चिरस्याद्याश्चिरार्थकाः ।' इत्यमरः । वहतु = धारयतु । हे मद्भुजाः ! हरशिरःस्थितामेकां चन्द्रकलां त्यक्त्वा सर्वाण्यपि दिक्पालशिरोभूषणरत्नान्यपहरत । तै रत्नैर्निर्मितां काञ्चीं च जानकी चिरकालं यावत्स्वनितम्बबिम्बे वहत्विति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

विद्याधर इति । समयज्ञः = कालज्ञः, भुजानेव = स्वबाहूनेव, न त्वन्यान् परिवारानितिभावः, तेषां पूर्वमेव निहतत्वादिति भावः । साकूतं = साऽभिप्रायम् ।

रावणनिधनं वर्णयति—विकचेति । विकचकुसुमस्तोमाकीर्णे अनल्पे शशिमणिशिलातल्पे परागविभूषितो यः सलीलम् अशेत । अयमयमसौ दशमुखो रघुनन्दने क्षणं रोषारूढे धूलिच्छटापरिधूसरः ( सन् ) भुवि शेते इत्यन्वयः । विकचकुसुमस्तोमाकीर्णे = विकचानि ( विकसितानि ) यानि कुसुमानि ( पुष्पाणि ) तेषां स्तोमः ( समूहः ) तेन आकीर्णे ( व्याप्ते ) । अनल्पे = विस्तीर्णे, शशिमणिशिलातल्पे = चन्द्रकान्तमणिरचितपर्यङ्के, परागविभूषितः = परागैः ( सुमनोरजोभिः ) विभूषितः ( समलङ्कृतः ) यः = रावणः, सलीलं = सविलासम् , अशेत = सुप्तः । अयमयम् = निकटवर्ती, संभ्रमे द्विरुक्तिः । असौ = सदा कालविप्रकृष्टः, दशमुखः =

विद्याधर—( हँसकर ) लङ्केश्वर ! तुम समय जानते हो जो कि तुम अपने बाहुओं को ही कार्यमें नियुक्त कर रहे हो । क्योंकि इस समय बाहुमण्डल ही तुम्हारा परिवारवर्ग रहा है । ( देखकर अभिप्रायपूर्वक ) अरे ! कैसे रावणके इस वचनसे सीतापति राम कुछ कुद्धके समान दिखाई दे रहे हैं । ( फिर हर्ष और विषादके साथ ) अरे ! विकसित फूलोंके समूहसे व्याप्त और विस्तीर्ण चन्द्रकान्तमणिनिर्मित पलंगपर परागोंसे अलङ्कृत होकर जो विलासके साथ सोता था । यह वही रावन रामचन्द्रजीके कुछ काल ही क्रुद्ध होनेपर धूलिसमूहसे धूसर वर्णवाला होकर जमीनपर सो रहा है ॥ ५२ ॥

विद्याधरी—तदिदानीमेव जनकनन्दिनी रामचन्द्रेण समं सङ्गस्यते ?
( ता दाणिं जेव्व जणअणन्दिणी रामचन्देण समं संगमिस्सदि। )

विद्याधरः—अथ किम् ?

उद्दामहेतिवलयैः परिदीपिताशं
पश्य प्रविश्य जनकेन्द्रसुता हुताशम्।
प्रत्युद्गता समधिकां द्युतिमावहन्ती
प्रातर्मयूखकलिकेव दिवाकरस्य ॥ ५३ ॥

---

रावणः, रघुनन्दने = रामचन्द्रे, क्षणम् = अल्पकालमेव, रोषान्धे = कोपाकान्ते सति, धूलिच्छटापरिधूसरः = रजःसमूहधूम्रवर्णः सन्, भुवि = भूमौ, शेते = स्वपिति। विकसितकुसुमभूषिते विस्तीर्णे चन्द्रकान्तमणिनिर्मितपर्यङ्के यो रावणः पुरा सविलासमशेत। स एव साम्प्रतं रामबाणनिहतः सन् भूमौ पतितो धूलिधूसरश्च सञ्जात इति भावः। हरिणी वृत्तम् ॥ ५२ ॥

विद्याधरीति। सङ्गस्यते = संगता भविष्यति, 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम्।

विद्याधरो जानकीं वर्णयति = उद्दामेति। उद्दामहेतिवलयैः परिदीपिताशं हुताशं प्रविश्य जनकेन्द्रसुता प्रातः दिवाकरस्य मयूखकलिकेव समधिकां द्युतिम् आवहन्ती प्रत्युद्गता। पश्येत्यन्वयः। उद्दामहेतिवलयैः = उद्दामानाम् ( उज्ज्वलानाम् ) हेतीनां ( ज्वालानाम् ) वलयैः ( मण्डलैः ) परिदीपिताऽऽशं = प्रकाशितदिशं, तादृशं हुताशं = वह्निं, प्रविश्य = प्रवेशं कृत्वा, जनकेन्द्रसुता = जानकी, प्रातः = प्रभातसमये, दिवाकरस्य = सूर्यस्य, मयूखकलिकेव = किरणराजिरिव, समधिकां = प्रचुरतरां, द्युतिं = कान्तिम्, आवहन्ती = धारयन्ती सती, प्रत्युद्गता = निःसृता। पश्य = विलोकय, तामिति शेषः। सीता ज्वालामण्डलेन प्रकाशितदिशं हुताशनं प्रविश्याऽपि स्वकीयपातिव्रत्यप्रतापेनाऽक्षता सती प्राभातिकी तरणिकिरणराजिरिव प्रचुरतरां दर्शनीयां च कान्तिं वहन्ती निर्गतेत्यतस्तां पश्येति भावः। उपमाऽलङ्कारः। वसन्ततिलका वृत्तम् ॥ ५३ ॥

---

विद्याधरी—तब इसी समय सीता रामचन्द्रजीसे मिलेंगी ?

विद्याधर—और क्या ?

उज्ज्वल ज्वालाओंके मण्डलोंसे दिशाओंको प्रकाशित करनेवाले अनलमें प्रवेश कर सीता प्रातःकालके सूर्यकी किरण पङ्क्तिके समान होकर प्रचुरतर कान्तिको धारण करती हुई निकल गईं, देखो ॥ ५३ ॥

विद्याधरी—पश्य पश्य, अयमसमसमरकदर्थितं प्रदेशमवतरति रामचन्द्रः । ( पेक्ख पेक्ख ! इमो असमसमरकअत्थिदं पदेसं अवतरइ रामचन्दो )

विद्याधरः—तदेहि । कर्णामृतं पुलोमजायै निवेदयावः ।

( इति निष्क्रान्तौ )

( ततः प्रविशति रामः सीतालक्ष्मणौ सुग्रीव-विभीषणौ च )

रामः—अये ! कथमुपगत एव भगवानम्बरमणिश्चरमाचलचूडाम् ।

लक्ष्मणः—पश्चिमपयोधिवेलां च । नन्विदानीम्—

उद्दामदिग्द्विरदचञ्चलकर्णपूर-
गण्डस्थलोच्चलदलिस्तबकाकृतीनि ।

---

विद्याधरीति । असमसमरकदर्थितम्=असमः (अनुपमः) यः समरः ( संग्रामः ) तेन कदर्थितम् ( विकृतम् ) ।

विद्याधर इति । कर्णाऽमृतं=श्रोत्रपीयूषोपमं, रामविजयात्मकमुदन्तमिति भावः । पुलोमजायै=शच्यै, क्रियाग्रहणाच्चतुर्थी ।

राम इति । अम्बरमणिः=सूर्यः, चरमाऽचलचूडाम्=अस्तपर्वतशिखरम् ।

लक्ष्मण इति । पश्चिमपयोधिवेलां = पश्चिमस्य पयोधेः ( समुद्रस्य ) वेलाम् ( तीरभूमिम् )॥

सन्ध्यागमनं वर्णयति लक्ष्मण उद्दामेति । उद्दामदिग्द्विरदचञ्चलकर्णपूरगण्डस्थलोच्चलदलिस्तबकाकृतीनि मीलन्नभांसि मृगनाभिसमानभांसि तमांसि विकन्देषु विलसन्तितमामित्यन्वयः ।

उद्दामदिग्द्विरदेत्यादिः=उद्दामाः ( उत्कटमदाः ) ये दिग्द्विरदाः ( दिग्गजाः ) तेषां चञ्चलाः ( चपलाः ) ये कर्णपूराः ( कर्णभूषणानि ) तेभ्यो गण्डस्थलेषु ( कपोलप्रदेशेषु ) उच्चलन्तः ( उद्भ्रमन्तः ) ये अलयः ( भ्रमराः ) तेषां यः स्तबकः

---

विद्याधरी—देखो देखो, ये रामचन्द्रजी अनुपम संग्रामसे विकृत प्रदेशपर उतर रहे हैं।

विद्याधर—इसलिए आओ । इन्द्राणीको कर्णाऽमृतरूप वृत्तान्त ज्ञापित करें ।

( दोनों जाते हैं । )

( तब राम, सीता, लक्ष्मण, सुग्रीव और विभीषण भी प्रवेश करते हैं । )

राम—अरे ! किस प्रकार भगवान् सूर्य अस्ताचलकी चोटी पर पहुँच ही गये ।

लक्ष्मण—और पश्चिम समुद्रकी तीरभूमि पर भी ( पहुंच गये ) । इस समय—
उत्कटमदवाले दिग्गजोंके चञ्चल कर्णभूषणोंसे कपोलप्रदेशोंमें चलनेवाले भ्रमरोंके

मीलन्नभांसि मृगनाभिसमानभांसि
दिक्कन्दरेषु विलसन्तितमां तमांसि ॥ ५४ ॥

रामः—अये ! कथमुज्जृम्भितमेव निशाचरचक्रानुकारिणा तिमिरनिकरेण ।

विभीषणः—नन्वितोऽपि समुन्मीलितमेव रामनाराचानुकारिणा तुहिनकरकिरणप्रकरेण ।

सुग्रीवः—एवमेतत् । अमीहि—

---

( गुच्छः, समूह इति भावः ) तस्येवाऽऽकृतिः ( आकारः ) येषां, तानि । मीलन्नभांसि = मीलत् ( दर्शनमनाप्नुवत् ) नभः ( आकाशम् ) यैस्तानि । मृगनाभिसमानभांसि = मृगनाभिः ( कस्तूरी ) तया समाना ( तुल्या ) भाः ( कान्तिः ) येषां तानि । 'मृगनाभिर्मृगमदः कस्तूरी चे'त्यमरः । एतादृशानि तमांसि = अन्धकाराः, दिक्कन्दरेषु = दिशागुहासु, विलसन्तितमाम् = अतिशयेन प्रादुर्भवन्ति, तमबन्तात् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्याम् प्रत्ययः । भ्रमरसदृशवर्णं व्याप्ताकाशं तिमिरवृन्दं दिशागुहासु प्रादुर्भवतीति भावः । उपमाऽलङ्कारः । वसन्ततिलका वृत्तम् ॥ ५४ ॥

राम इति । निशाचरचक्राऽनुकारिणा = राक्षससमूहसदृशेन, कृष्णवर्णेनेति भावः । निशाचरचक्रमनुकरोति तच्छीलस्तेन ।

विभीषण इति । रामनाराचाऽनुकारिणा = राघवप्रक्षेपणविडम्बकेन । तुहिनकरकिरणप्रकरेण = चन्द्रमयूखसमूहेन । समुन्मीलितमेव = प्रादुर्भूतमेव । राक्षसमूहसदृशं तिमिरसमूहं निवारयितुं रामनाराचशरसदृशेन चन्द्रमयूखसमूहेन प्रादुर्भूतमिति भावः ।

---

समूहके समान आकार वाले, आकाशको आच्छादित करनेवाले और कस्तूरीके समान कान्तिसे युक्त अन्धकार दिशारूप गुहाओंमें अतिशय ही प्रादुर्भूत हो रहे हैं ॥ ५४ ॥

**राम**—अरे ! किस प्रकार राक्षससमूहका अनुकरण करनेवाला अन्धकारसमूह फैल ही गया ।

**विभीषण**—इधर भी रामके नाराचका अनुकरण करनेवाला चन्द्रमाका किरणसमूह फैल ही गया ।

**सुग्रीव**—यह ठीक है । ये—

क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रव-
त्पाथः शीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः ।
उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्चम-
त्कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ ५५ ॥

**विभीषणः**—एवमेतत् । इदानीं हि—

शंकरार्धतनुबद्धपार्वतीकुङ्कुमाङ्ककुचकोरकाकृतिः ।

---

चन्द्रोदयं वर्णयति—क्षीराब्धेरिति । क्षीराब्धेः लहरीषु फेनधवलाः चन्द्रोपलेषु स्रवत्पाथः शीकरिणः विकासिकुमुदक्रोडे रजःपिञ्जराः चकोरचञ्चुगहने छिन्नप्ररूढाः प्रियविप्रयुक्तरमणीगात्रे चमत्कुर्वन्तः सुधांशोः करा उन्मीलन्तीत्यन्वयः ।

क्षीराब्धेः = क्षीरसमुद्रस्य, लहरीषु = तरङ्गेषु, फेनधवलाः = डिण्डीरशुक्लाः, 'डिण्डीरोऽब्धिकफः फेन' इत्यमरः । चन्द्रोपलेषु = चन्द्रकान्तमणिषु, स्रवत्पाथः शीकरिणः = स्रवन्तः ( गलन्तः ) पाथः—शीकराः ( अम्बुकणाः ) येषां ते, 'अत इनिठनौ' इतीनिप्रत्ययः । विकासिकुमुदक्रोडे=विकासिनां ( प्रफुल्लानाम् ) कुमुदानां ( कैरवाणाम् ) क्रोडे ( अभ्यन्तरे ) रजःपिञ्जराः = परागगौराः, चकोरचञ्चुगहने = चकोराणां ( चन्द्रिकापायिनां पक्षिविशेषाणाम् ) चञ्चुगहने ( त्रोटिवने ), छिन्नप्ररूढाः = प्राक् सङ्कोचे छिन्नाः ( लूनाः ) पश्चात् प्रसारणे प्ररूढाः ( उद्गताः ), 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने'ति समासः । प्रियविप्रयुक्तरमणीगात्रे = प्रियेण ( वल्लभेन ) विप्रयुक्ता ( विरहिता ) या रमणी ( नारी ) तस्या गात्रे ( शरीरे ), 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्' इति जातावेकवचनम् । चमत्कुर्वन्तः = चमत्कारं कुर्वन्तः, अतिशयकोमला अप्येते तुहिनकरकराः प्रियवियुक्तानां कृते कथङ्कारं क्लेशातिशयमुत्पादयन्तीति विस्मयरसं विदधत इति भावः । सुधांशोः = चन्द्रमसः, कराः = किरणाः, उन्मीलन्ति = प्रादुर्भवन्ति । आधेयाः पदार्थास्तत्तदाधारेषु बहुरूपतया प्रतीयन्त इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥

शङ्करार्धतन्विति । शङ्करार्धतनुबद्धपार्वतीकुङ्कुमाङ्ककुचकोरकाकृतिः शशी

---

क्षीरसमुद्रकी तरङ्गों पर फेनोंके समान सफेद, चन्द्रकान्तमणियों पर जल प्रकट करनेवाली, विकसित कुमुदोंके भीतर परागके समान गौर, चकोरोंके चञ्चुरूप वनमें पहले सङ्कोचमें छिन्न और पीछे प्रसारणमें उद्गत और प्रियसे बिछुड़ी हुई नारीके शरीरमें चमत्कार करनेवाली चन्द्रकिरणें प्रकट हो रही हैं ॥ ५५ ॥

**विभीषण**—यह ठीक है । अभी—

शङ्करके अर्द्धशरीरमें आश्रय करनेवाली पार्वतीके केसरसे लिप्त स्तनकोरके समान

सूच्यते कमलिनीभिरुन्नमत्पद्मकोशकरलीलया शशी ॥५६॥

लक्ष्मणः—( सकौतुकम् ) एवमेतत् ! अहो !

ध्वान्तौघे शितिकण्ठकण्ठमहसि प्राप्ते प्रतीचीमुखं

प्राचीमञ्चति किञ्च दुग्धलहरीमुग्धे विधोर्धामनि ।

पतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लसद्–

---

कमलिनीभिः उन्नमत्पद्मकोशकरलीलया सूच्यत इत्यन्वयः । शङ्करार्धतनुबद्धपार्वती-कुङ्कुमाङ्ककुचकोरकाकृतिः = शङ्करस्य ( शिवस्य ) अर्धतनौ ( अर्धशरीरे ) बद्धा ( कृताश्रया ) या पार्वती ( उमा ) तस्याः कुङ्कुमाऽङ्कः ( काश्मीरजलिप्तः ) यः कुचकोरकः ( पयोधरकुड्मलः ) तस्येव आकृतिः ( आकारः ) यस्य सः, तादृशः शशी = चन्द्रः, कमलिनीभिः = पद्मिनीभिः, उन्नमत्पद्मकोशकरलीलया = उन्नमन् ( उन्नतो भवन् ) यः पद्मकोशः ( कमलमुकुलः ) तस्मिन्या करलीला ( किरणविलासः ) तया । सूच्यते = बोध्यते । चन्द्रोदये कमलिन्यो निमीलन्ति ताश्च शङ्करवामाङ्गस्थपार्वतीकुचकुड्मलाकारं चन्द्रमसं सूचयन्तीति भावः । अत्रोपमाऽलङ्कारः । रथोद्धतावृत्तम् ॥ ५६ ॥

ध्वान्तौघ इति । शितिकण्ठकण्ठमहसि ध्वान्तौघे प्रतीचीमुखं प्राप्ते, किञ्च दुग्धलहरीमुग्धे विधोः धामनि प्राचीम् अञ्चति, एतत् त्रैलोक्यं कोकचकोरशोकरभसम्लानप्रसन्नोल्लसदपाङ्गोर्मिकदम्बचुम्बितम् इव आभासत इत्यन्वयः ।

शितिकण्ठकण्ठमहसि = शितिकण्ठस्य ( शिवस्य ) कण्ठः ( गलः ) इव महः ( कान्तिः ) यस्य, तस्मिन् । हरकण्ठसदृशे नीलवर्णे इति भावः । तादृशे ध्वान्तौघे= अन्धकारसमूहे, 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः ।' इत्यमरः । प्रतीचीमुखं = पश्चिमदिङ्मुखं प्राप्ते = आसादिते, किञ्च = अथ च, दुग्धलहरीमुग्धे= क्षीरतरङ्गसुन्दरे, गौरवर्णे इति भावः । तादृशे विधोः = चन्द्रमसः, धामनि=प्रकाशे, प्राचीं = पूर्वदिशाम् , अञ्चति = गच्छति सति, प्राच्यां चन्द्रोदये सतीति भावः, उभयत्राऽपि 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । एतत् = पुरोवर्ति, त्रैलो-

---

आकृतिसे युक्त चन्द्रमा कमलिनियोंसे उन्नत कमलमुकुलमें किरणविलाससे सूचित किये जा रहे हैं ॥ ५६ ॥

लक्ष्मण—( कुतूहलके साथ ) यह ठीक है । अहो !

नीलकण्ठके कण्ठके समान कान्तिसे युक्त अन्धकारसमूहके पश्चिम दिशाके अग्रभागमें प्राप्त होने पर और क्षीरतरङ्गके समान सुन्दर चन्द्रप्रकाशके पूर्वदिशाको प्राप्त होने पर यह लोकत्रय चकवाकों और चकोरोंके शोक और हर्षसे खिन्न और प्रफुल्ल दृष्टिपातोंके

दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥ ५७ ॥

रामः—वत्स ! एवमेतत् । इदानीं हि—

शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदी-
वल्लीनूतनपल्लवाञ्चितमिव प्राप्य क्षणं ताम्रताम् ।
चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुत
क्षीरस्यन्दनिरन्तरप्लुतमिव श्वेतं वियद्भासते ॥ ५८ ॥

त्रयं = भुवनत्रितयं, कोकचकोरशोकरभसम्लानप्रसन्नोल्लसद्दृक्पातोर्मिकदम्बचुम्बितम् इव = कोकाः ( चक्रवाकाः ) चकोराः ( चन्द्रिकापायिनः पक्षिविशेषाः ) तेषां क्रमेण शोकरभसाभ्यां ( विषादहर्षाभ्याम् ) म्लानप्रसन्नौ ( खिन्नप्रफुल्लौ ) यौ दृक्पातौ ( दृष्टिपातौ ) तयोरूर्मिकदम्बेन ( तरङ्गसमूहेन ) चुम्बितम् इव ( सम्बद्धम् इव ), आभासते = प्रकाशते । पश्चिमदिशि सूर्येऽस्तमिते पूर्वस्यां च चन्द्रोदये जाते यथाक्रमं चक्रवाकस्य विषादेन चकोरस्य हर्षेण च लोकत्रयमपि संसृष्टं द्योतत इति भावः । अत्रोपमायथासंख्योत्प्रेक्षणामङ्गाङ्गिभावेन सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥

शीतांश्विति । शीतांऽशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदीवल्लीनूतनपल्लवाऽञ्चितम् इव क्षणं ताम्रतां प्राप्य चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाऽग्रकाण्डस्रुतक्षीरस्यन्दनिरन्तराप्लुतम् इव श्वेतं वियत् भासत इत्यन्वयः ।

शीतांऽशुस्फटिकालवालेत्यादिः = शीतांऽशुः ( चन्द्रः ) एव स्फटिकालवालं ( सितोपलावापः ) तस्य वलयः ( मण्डलम् ) तस्मिन् द्राक् ( शीघ्रम् ) उल्लसन्ती ( शोभमाना ) या कौमुदी ( चन्द्रिका ) सैव वल्ली ( लता ) तस्या नूतनानि ( नवीनानि ) यानि ( पल्लवानि ) तैरञ्चितम् इव ( शोभितम् इव ), क्षणं = कञ्चित्कालं ताम्रतां = रक्तवर्णतां, प्राप्य = आसाद्य, चञ्चन्मत्तेत्यादिः = चञ्चन् ( भ्रमन् ) यो मत्तः ( मदयुक्तः ) चकोरः ( चन्द्रिकापायी पक्षी ), तस्य चञ्चुघटनया ( त्रोटिसंयोजनया ) छिन्नः ( खण्डितः ) योऽग्रकाण्डः ( लताग्रभागः ) तस्मात् स्रुतः

तरङ्गसमूहसे सम्बद्धके समान प्रकाशित हो रहा है ॥ ५७ ॥

राम—वत्स ! यह ठीक है । इस समय—

चन्द्ररूप स्फटिकालवालके मण्डलमें शीघ्र शोभमान चन्द्रिकारूप लताके नये पल्लवोंसे शोभितके समान होकर कुछ कालतक लाल होकर भ्रमण करते हुए मत्त चकोरकी चञ्चुयोजनासे खण्डित लताके अग्रभागसे गिरे हुए रसप्रवाहसे निरन्तर व्याप्तके समान होकर सफेद होकर आकाश प्रकाशित हो रहा है ॥ ५८ ॥

( पुनर्विलोक्य ) ( सकौतुकम् ) वत्स लक्ष्मण,

पश्योदेति वियोगिनां दिनमणिः शृङ्गारदीक्षामणिः
प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः ।
तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी-
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ५९ ॥

( गलितः ) यः क्षीरस्यन्दः ( रसप्रस्रवः ) तेन निरन्तरम् ( अनवरतं यथा तथा ) आप्लुतम् इव ( व्याप्तम् इव ), श्वेतं=शुक्लवर्णं, वियत् = आकाशं, भासते द्योतते । सायङ्काल आकाशमण्डलं प्राक् ताम्रवर्णं पश्चाच्च श्वेततामुपगतमिति भावः । अत्र रूपकोत्प्रेक्षयोः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥

पश्योदेतीति । वियोगिनां दिनमणिः शृङ्गारदीक्षामणिः प्रौढाऽनङ्गभुजङ्गमस्तकमणिः चण्डीशचूडामणिः तारामौक्तिकहारनायकमणिः कन्दर्पसीमन्तिनी काञ्चीमध्यमणिः चकोरपरिषच्चिन्तामणिः चन्द्रमाः उदेति । पश्येत्यन्वयः ।

वियोगिनां = कान्ताविमुक्तानां, दिनमणिः=सूर्यः, सूर्यसमतापकारित्वादिति भावः । सिंहो माणवक इति वल्लक्षणिकोऽयं प्रयोगः । शृङ्गारदीक्षामणिः=शृङ्गारस्य ( आदिरसस्य ) दीक्षायां ( नियमे ) मणिः ( रत्नम् ) उद्दीपकत्वादिति भावः । प्रौढाऽनङ्गभुजङ्गमस्तकमणिः=प्रौढः ( प्रगल्भः ) योऽनङ्गः ( कामदेवः ) एव भुजङ्गः ( सर्पः ) तस्य मस्तकमणिः ( शिरोरत्नम् ) । चण्डीशचूडामणिः = चण्डीशः ( शङ्करः ) तस्य चूडामणिः ( शेखरः ), तारामौक्तिकहारनायकमणिः=ताराः ( नक्षत्राणि ) एव मौक्तिकहारः ( मुक्तामाला ) तत्र नायकमणिः ( मेरुनामकं प्रधानरत्नम् ), अत्र हारपदेनैव मुक्तामालारूपाऽर्थद्योतनेऽपि पुनर्मौक्तिकपदमन्यरत्नाऽमिश्रितत्वं द्योतयतीति दर्पणकाराऽनुसृतः पन्थाः । कन्दर्पसीमन्तिनीकाञ्चीमध्यमणिः=कन्दर्पसीमन्तिन्याः ( मदननार्याः, रतेरिति भावः ) काञ्च्यां ( मेखलायाम् ) मध्यमणिः ( प्रधानरत्नम् ) । चकोरपरिषच्चिन्तामणिः=चकोराणां ( चन्द्रिकापायिनां पक्षिविशेषाणाम् ) परिषदि ( सभायां, समूहे इति भावः । 'रमणी'ति पाठान्तरे रमणीनां=वल्लभानां, चकोरीणामिति भावः ) चिन्तामणिः ( चिन्ति-

( फिर देखकर कौतूहलके साथ ) वत्स लक्ष्मण !

वियोगियोंके लिए सूर्य तुल्य, शृङ्गारकी दीक्षामें मणिसमान, प्रगल्भ कामदेवरूप सर्पके मस्तकमणि, शङ्करके चूडामणि, नक्षत्रवर्गरूप मुक्तामालाके मेरुनामक प्रधान रत्न, कामपत्नीकी मेखलामें प्रधानरत्न और चकोरोंकी सभामें चिन्तामणितुल्य चन्द्रमा उदित हो रहे हैं, देखो ॥ ५९ ॥

लक्ष्मणः—एवमेतत् । अयमसौ

स्वैरं कैरवकोरान् विदलयन्यूनां मनः खेदय-
न्नम्भोजानि निमीलयन् मृगदृशां मानं समुन्मीलयन् ।
ज्योत्स्नां कन्दलयन् दिशो धवलयन्नुद्वेलयन् वारिधीन्
कोकानाकुलयंस्तमः कवलयन्निन्दुः समुज्जृम्भते ॥ ६० ॥

ताऽर्थपूरकरत्नम् ) । एतादृश गुणगणविशिष्टः चन्द्रमाः = चन्द्रः, उदेति = उज्ज्वलति । पश्य = विलोकय, तमिति शेषः । अत्र रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

स्वैरमिति । कैरवकोरकान् स्वैरं विदलयन् यूनां मनः खेदयन् अम्भोजानि निमीलयन् मृगदृशां मानं समुन्मीलयन् ज्योत्स्नां कन्दलयन् दिशो धवलयन् वारिधीन् उद्वेलयन् कोकान् आकुलयन् तमः कवलयन् इन्दुः समुज्जृम्भत इत्यन्वयः । कैरवकोरकान् = कुमुदकुड्मलान् , स्वैरं = यथेष्टं, विदलयन् = विकासयन् , यूनां = तरुणीनां तरुणानां च, युवतयश्च युवानश्चेति युवानस्तेषां, 'पुमान्स्त्रिया'इत्येकशेषः । मनः = चित्तं, खेदयन् = पीडयन् , कामोद्दीपनादिति भावः । अम्भोजानि = कमलानि, निमीलयन् = मुद्रयन् , मृगदृशां = हरिणाक्षीणां सुन्दरीणां, मानं = संमानम् समुन्मीलयन् = विकासयन् , प्रसारयन्नित्यर्थः । चन्द्रोदये कामोद्दीपनाद्युवानः खेदविगमाऽर्थं हरिणेक्षणानां सम्मानं कुर्वन्तीति भावः । अत्र 'समुन्मीलय'न्नित्यस्य 'निमिलय'न्निति पूर्वव्याख्यानं चिन्त्यं सोपसर्गधात्वर्थविरोधात् । एवं च ज्योत्स्नां = चन्द्रिकां, कन्दलयन् = अङ्कुरयन् , उत्पादयन्निति भावः । दिशः = आशाः धवलयन् = धवलाः कुर्वन् , 'तत्करोति तदाचष्ट' इति णिजन्ताल्लटः शतृप्रत्ययः । वारिधीन् = समुद्रान् , उद्वेलयन् = तीरातिक्रामकान् विदधत् , चन्द्रोदये समुद्रजलवृद्धिर्भवतीति लोकप्रसिद्धिः । वेलाम् ( तीरभूमिम् ) उत्क्रान्ताः, उद्वेलाः, 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'ति समासः । उद्वेलान् कुर्वन् उद्वेलयन्नित्यत्र पूर्वसूत्रेण णिजन्ताल्लट् । कोकान् = चक्रवाकान् , चक्रवाकीश्चक्रवाकांश्चेति भावः । कोक्यश्च कोकाश्च कोकास्तान् , 'पुमान्स्त्रिये'त्येक शेषः । 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ।'

लक्ष्मण—यह ठीक है । ये—

कुमुदोंके कुड्मलोंको यथेष्टरूपसे विकसित करते हुए, तरुणी और तरुणोंके मनको पीड़ित करते हुए, कमलोंको निमीलित करते हुए, सुन्दरियोंके सम्मानको बढ़ाते हुए, दिशाओंको उज्ज्वल करते हुए, समुद्रोंको उद्वेलित करते हुए, चक्रवाकोंको आकुल करते हुए और अन्धकारको हटाते हुए चन्द्रमा प्रादुर्भूत हो रहे हैं ॥ ६० ॥

विभीषणः—सखे सुग्रीव ! पश्य ।

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाकपटकीर्णमुक्तागणः ।
पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥ ६१ ॥

सुग्रीवः—सखे विभीषण, पश्य ।

---

इत्यमरः । आकुलयन् = आकुलान्कुर्वन् , चन्द्रोदयकाले कोकाः स्वभार्यया विप्रुज्य शोकाकुला भवन्तीति लोकप्रसिद्धिः । तमः = अन्धकारं, कवलयन् = ग्रासं कुर्वन् , निवारयन्निति भावः । इन्दुः = चन्द्रः, समुज्जृम्भते = प्रादुर्भवति । विदलनादिष्वनेकक्रियास्वेककारकत्वेन्दोः सच्चारीपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

मयूखेति । मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलोच्छलत्तरलतारकाकपटकीर्णमुक्तागणः पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थितः तुषारकरकेसरी गगनकाननं गाहत इत्यन्वयः ।

मयूखनखरेत्यादिः = मयूखाः ( किरणाः ) एव नखराः ( नखाः ) तत्त्रुटत् ( छिन्दत् ) तिमिरम् ( अन्धकारम् ) एव कुम्भी ( हस्ती ) तस्य यत्कुम्भस्थलं ( मस्तकपिण्डः ) तस्मात् उच्छलन् ( उद्गच्छन् ) तरलानां ( चञ्चलानाम् ) तारकाणां ( नक्षत्राणाम् ) कपटेन ( छलेन ) कीर्णः ( प्रक्षिप्तः ) मुक्तागणः ( मौक्तिकपटलम् ) येन सः । पुनः पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थितः = पुरन्दरस्य ( इन्द्रस्य ) या हरित् ( दिशा, प्राचीति भावः ) सैव दरी ( गुहा ) तस्याः कुहरगर्भे ( समीपाऽभ्यन्तरभागे ) सुप्तोत्थितः ( प्राक् सुप्तः = निद्राणः, पश्चात् उत्थितः = कृतोत्थानः ) । पूर्वकालसमासः । एतादृशः तुषारकरकेसरी = तुषारकरः ( हिमांशुः, चन्द्र इति भावः ) एव केसरी ( सिंहः ), गगनकाननं = गगनम् ( आकाशम् ) एव काननं ( वनम् ) गाहते = प्रविशति । चन्द्र एव सिंहः मयूखैरेव नखैः तिमिरस्यैव हस्तिनो मस्तिकं विदार्य ततस्तारकाच्छलेन मुक्तागणं प्रसार्य प्राचीदिश एव दर्याः अभ्यन्तर भागे सुप्तोत्थितः सन् आकाशमेव वनं प्रविशतीति भावः । अत्र कैतवाऽपह्नुतिसाङ्गरूपकयोरङ्गाङ्गिभावेनसङ्करः । पृथ्वीवृत्तम् ॥ ६१ ॥

---

विभीषण—मित्र सुग्रीव ! देखो—

किरणरूप नाखूनोंसे छिन्न होते हुए अन्धकाररूप हाथीके मस्तकपिण्डसे ताराओंके बहानेसे मोतियोंको विकीर्णकर पूर्वदिशारूप गुफाके समीप अभ्यन्तर भागमें सोकर उठा हुआ चन्द्ररूप सिंह आकाशरूप वनमें प्रवेश कर रहा है ॥ ६१ ॥

सुग्रीव—मित्र विभीषण ! देखो ।

यः श्रीखण्डतमालपत्रति दिशः प्राच्याः, स्मरक्ष्मापतेः
पाण्डुच्छत्रति, दन्तपत्रति वियल्लक्ष्मीकुरङ्गीदृशः ।
केलिश्वेतसहस्रपत्रति रतेः, किञ्च क्षपायोषितः
क्रीडाराजतसीधुपात्रति शशी सोऽयं जगन्नेत्रति ॥ ६२ ॥

रामः—( निर्वर्ण्य )

सितकिरणकपोलामालिमालोकयन्ती
तिमिरविरहतापव्याकुलां व्योमलक्ष्मीम् ।

---

य इति । यः प्राच्या दिशः श्रीखण्डतमालपत्रति, स्मरक्ष्मापतेः पाण्डुच्छत्रति, वियल्लक्ष्मीकुरङ्गीदृशो दन्तपत्रति; रतेः केलिश्वेतसहस्रपत्रति, किञ्च क्षपायोषितः क्रीडाराजतसीधुपात्रति, सोऽयं शशी जगन्नेत्रतीत्यन्वयः ।

यः = शशी, प्राच्याः = पूर्वस्याः, दिशः = आशायाः, नायिकारूपाया इति भावः । श्रीखण्डतमालपत्रति=श्रीखण्डस्य ( मलयजस्य ) तमालपत्रति ( तिलकवदाचरति ), 'तमालपत्रतिलकचित्रकाणि विशेषकम् । द्वितीयं च तुरीयं च न स्त्रियाम्' इत्यमरः । स्मरक्ष्मापतेः = स्मरः ( कामदेवः ) एव क्ष्मापतिः ( राजा ), तस्य । पाण्डुच्छत्रति= श्वेतच्छत्रमिवाचरति । वियल्लक्ष्मीकुरङ्गीदृशः = वियतः ( आकाशस्य ) लक्ष्मीः ( शोभा ) एव कुरङ्गीदृक् ( मृगीनयना, नायिका ) तस्याः, दन्तपत्रति=कर्णाऽलङ्कारमिवाचरति । रतेः = कामवल्लभायाः, केलिश्वेतसहस्रपत्रति = केल्यर्थं ( क्रीडार्थम् ) यत् श्वेतसहस्रपत्रं ( शुक्लकमलम् ) तद्वदाचरति । किंच = अपरं च, क्षपायोषितः = क्षपा ( रात्रिः ) एव योषित् ( स्त्री ) तस्याः । क्रीडाराजतसीधुपात्रति = क्रीडायां ( केलौ ) यद्राजतं ( रजतनिर्मितम् ) सीधुपात्रं ( सुरापानभाजनम् ) तद्वदाचरति, कामोद्दीपकत्वादिति भावः । सः = तादृशः, अयं = संप्रति प्राच्यामुदितः, शशी = चन्द्रः, जगन्नेत्रति = जगतः ( लोकस्य ) नेत्रति ( नेत्रवदाचरति ), प्रकाशकत्वादिति भावः । रूपकोपमयोः सङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

सितकिरणेति । तिमिरविरहतापव्याकुलां सितकिरणकपोलां व्योमलक्ष्मीम्

---

जो पूर्वदिशाके चन्दनतिलकके समान, कामदेवरूप राजाके सफेद छत्रके समान, आकाशकी शोभारूप सुन्दरीके कर्णाऽलङ्कारके समान, रतिकी क्रीडाके लिए शुक्ल कमलके समान और रात्रिरूप स्त्रीकी क्रीडामें रजतनिर्मित सुरापात्रके समान आचरण करते हैं, वैसे ये चन्द्रमा लोकके नेत्रके समान हो रहे हैं ॥ ६२ ॥

राम—( देखकर )

अन्धकारसे वियोगके सन्तापसे अतिशय आकुल और चन्द्ररूप कपोलसे युक्त आकाश

रजनिरमलताराशीकरैः सिक्तमस्याः
परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥ ६३ ॥
( पुनर्विमृश्य, स्वगतम् )
इन्दुरिन्दुरिति किं दुराशया, विन्दुरेष पयसो विलोक्यते।

आलिम् आलोकयन्ती रजनिः अमलताराशीकरैः सिक्तम् अस्याः गात्रं चन्द्रिकाचन्दनेन परिमलयतीत्यन्वयः।

तिमिरविरहतापव्याकुलां = तिमिरात् ( अन्धकारात् ) यो विरहः ( वियोगः ) तेन यस्तापः ( सन्तापः ) तेन व्याकुलाम् ( अतिशयाकुलाम् )। सितकिरणकपोलां = सितकिरणः ( शुभ्रांशुः, चन्द्र इति भावः ) एव कपोलः ( गण्डः ) यस्यास्ताम्। अत्र कपोलस्याऽङ्गत्वेऽपि बह्वच्त्वात् 'न क्रोडादिबह्वचः' इति ङीषभावः। अतः 'सितकिरणकपोली'मिति पाठान्तरमसाधु। तादृशीं व्योमलक्ष्मीम् = आकाशशोभाम्, आलिं = सखीम्, आलोकयन्ती = पश्यन्ती, रजनिः = रात्रिः, अमलताराशीकरैः = अमलताराः ( निर्मलतारकाः ) एव शीकराः ( अम्बुकणाः ), तैः। सिक्तम् = उक्षितम्। अस्याः = व्योमलक्ष्म्याः सख्याः, गात्रं = शरीरं, चन्द्रिकाचन्दनेन = चन्द्रिका ( ज्योत्स्ना ) एव यच्चन्दनं ( श्रीखण्डरसः ), तेन। परिमलयति = परिमलयुक्तं करोतीति भावः। पतिविरहसन्तप्तां सखीं यथा तस्याः सखी तापापनोदाय जलसेकेन मलयजद्रवेण च तदङ्गं लिम्पति तथैव रात्रिरपि निजसखीं व्योमलक्ष्मीं ताराऽम्बुकणैः सिक्त्वा चन्द्रिकाचन्दनेन योजयतीति भावः। अत्र रूपकमलङ्कारः। मालिनीवृत्तम् ॥ ६३ ॥

इन्दुरिति। इन्दुः इन्दुः इति दुराशया किम् ? एष पयसो विन्दुः विलोक्यते। ननु मृगीदृशः इदं श्यामकोमलकपोलम् आननं विजयत इत्यन्वयः।

इन्दुरिन्दुरिति = चन्द्रश्चन्द्र इति, दुराशया = असत्यतृष्णया किं = किं प्रयोजनम्। एषः = पुरो दृश्यमानः, पयसः = जलस्य, विन्दु = पृषतः, विलोक्यते = दृश्यते। योऽयं गगनमण्डलाऽवस्थितः प्रकाशपुञ्जश्चन्द्रत्वेन संभाव्यते नाऽयं चन्द्रः प्रत्युत जलविन्दुरेवाऽयमाह्लादकत्वादिधर्माणामयोगादिति भावः। तर्हि कश्चन्द्र इति

---

शोभारूप सखीको देखती हुई रात्रि निर्मलतारारूप जलकणोंसे सिक्त इस ( आकाशशोभा) शरीरको ज्योत्स्नारूप चन्दनरससे सुगन्धित कर रही है ॥ ६३ ॥

( फिर विचार कर मन ही मन )

'चन्द्र चन्द्र' इस प्रकार असत्यतृष्णासे क्या होता है ? यह तो पानीकी बूँद ही देखी जा रही है। यह सुन्दरी ( सीता ) का श्याम और कोमल कपोलवाला मुख ही

नन्विदं विजयते मृगीदृशः, श्यामकोमलकपोलमाननम् ॥ ६४ ॥

( पुनः सीतां प्रत्यभवार्यं )

तन्वि ! त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधे-
रिन्दुः सुन्दरि ! दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु ?
उत्कल्लोलविलोचने ! क्षणमयं शीतांशुरालम्बता-
मुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥ ६५ ॥

---

प्रतिपादयति—नन्विति । ननु=यतः, मृगीदृशः=हरिणीनयनायाः, सीताया इति भावः । इदं=पुरतो दृश्यमानं, श्यामकोमलकपोलं=श्यामः ( कृष्णः, अलकसंयोगेनेति भावः ) कोमलः ( मृदुः ) कपोलः ( गण्डः ) यस्मिंस्तत् । तादृशम् आननं=मुखं, विजयते=सर्वोत्कर्षेण वर्तते । आह्लादकत्वादिधर्मयोगित्वात्सीतामुखमेव चन्द्रः, आकाशमण्डलस्थः प्रकाशपुञ्जस्तु पयोबिन्दुरेवेति भावः । अत्र प्रतीपमलङ्कारस्तल्लक्षणं यथा साहित्यदर्पणे:—'प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् । निष्फलत्वाऽभिधानं वा प्रतीपमिति कथ्यते ॥' इति । रथोद्धतावृत्तम् ॥ ६४ ॥

पूर्वोक्तमेवाऽर्थं प्रकारान्तरेण समर्थयते—तन्वीति । हे तन्वि ! हे सुन्दरि ! दुग्धसिन्धुलहरीबिन्दुः इन्दुः लावण्यवारांनिधेः त्वद्वदनस्य विभ्रमलवं कथं विन्दतु ? हे उत्कल्लोलविलोचने ! अयं शीतांशुः क्षणम् उन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् आलम्बतामित्यन्वयः ।

हे तन्वि=हे कृशोदरि !, हे सुन्दरि=हे लावण्यवति सीते !, दुग्धसिन्धुलहरीबिन्दुः=दुग्धसिन्धुः ( क्षीरसमुद्रः ) तस्य लहरी ( तरङ्गः ) तस्या बिन्दुः ( पृषतः, क्षुद्रांश इति भावः ), तादृश इन्दुः=चन्द्रः, लावण्यवारान्निधेः=सौन्दर्यसिन्धोः, त्वद्वदनस्य = त्वन्मुखस्य, विभ्रमलवं = विलासलेशमपि, कथं=केन प्रकारेण, विन्दतु=लभतां, 'विद्लृ लाभे' इति धातोर्लोट् । क्षीरसागरतरङ्गस्य क्षुद्रांशरूपश्चन्द्रः सौन्दर्यसागरस्य त्वन्मुखस्य विलासलेशमपि कथङ्कारं प्राप्तुं समर्थः स्यादिति भावः । हे उत्कल्लोलविलोचने=उद्गतौ कल्लोलौ ( महातरङ्गौ ) इव विलोचने

---

( चन्द्ररूपसे ) सर्वोत्कर्षसे बढ़ रहा है ॥ ६४ ॥

( फिर केवल सीताको सुनाकर )

हे कृशोदरि ! हे सुन्दरि ! क्षीरसमुद्रकी तरङ्गके बिन्दुरूप इन्दु सौन्दर्यके समुद्ररूप तुम्हारे मुखके विलासके लेशको भी कैसे प्राप्त करे ? महातरङ्गोंके समान विशाल नेत्रोंसे सम्पन्न हे सीते ! यह चन्द्र कुछ समयतक विकसित नये नीलकमलोंके उपवनमें खेलते हुए राजहंसकी शोभाका आलम्बन करे ॥ ६५ ॥

सीता—( लज्जां नाटयति ) ( विलोक्य, हर्षेण ) अहो, कथमयमुन्मीलित एव। ( अहो, कहमिमो उम्मीलिदो जेव्व ? )

मुकुलीकृतारविन्दो मानवतीमानवारणमृगेन्द्रः।
त्रिभुवननयनानन्दो रजनीमुखचन्दनश्चन्द्रः॥ ६६॥

[ मुउलीकिदारविन्दो माणवईमाणवारणमइन्दो।
तिहुअणणअणारविन्दो रअणीमुहचन्दणो चन्दा॥ ]

---

( नेत्रे, विशाले इति भावः ) यस्याः सा तत्सम्बुद्धौ। अयं=पुरो दृश्यमानः, शीतांशुः = चन्द्रः, क्षणं=कंचित्कालं यावत्, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया। उन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम्=उन्मीलन्ति ( विकसन्ति ) नवानि ( नूतनानि ) नीलानि ( असितानि ) यानि नीरजानि ( कमलानि ) तेषां या वनी ( अल्पं वनम्, उपवनमिति भावः। अवयवाऽपचयविवक्षायां' 'षिद्गौरादिभ्यश्चे'ति ङीष्। ) तस्यां खेलन् (क्रीडन्) यो मरालः ( राजहंसः ) तस्य श्रियम् ( शोभाम् ), आलम्बताम् = आश्रयतु, प्राप्नोत्विति भावः। हे सुन्दरि ! त्वन्नेत्रवृत्तिभिः नूतननीलकमलवनोपमे नभसि क्रीडश्चन्द्रो राजहंसशोभां लभतामिति भावः। अत्रोपमाऽतिशयोक्त्योः संसृष्टिः। शार्दूलविक्रीडितं वृत्तम्॥ ६५॥

सीतेति। अयं=चन्द्रः, उन्मीलितः=विकसितः, उदित इति भावः।

मुकुलीकृताऽरविन्द इति। मुकुलीकृताऽरविन्दो मानवतीमानवारणमृगेन्द्रः त्रिभुवनयनानन्दो रजनीमुखचन्दनः चन्द्र इत्यन्वयः। मुकुलीकृतारविन्दः=मुकुलीकृतम् ( निमीलितं, स्वोदयेनेति भावः ) अरविन्दं ( कमलम् ) येन सः। मानवतीमानवारणमृगेन्द्रः=मानवत्याः ( प्रणयकोपशालिन्याः कामिन्याः ) यो मानः (अभिमानः ) स एव वारणः ( गजः ) तस्य मृगेन्द्रः ( सिंहः ) चन्द्रोदये सति मदनोद्दीपनेन मानवत्या मानो निवर्तत इति भावः त्रिभुवननयनाऽऽनन्दः=त्रिभुवनस्य ( लोकत्रयस्य ) नयनानाम् ( नेत्राणाम् ) आनन्दः ( आनन्दकारकः, तत्कर्म्यालक्षणा )। रजनीमुखचन्दनः=रजनी (रात्रिरूपा या नायिका) तस्या मुखे (वदने) चन्दनः (मलयजलेपः), रात्रिरूपाया नायिकायास्तिलकस्थानीय इति भावः। तादृशश्चन्द्रः=इन्दुः' उन्मीलित एवेति पूर्वेण पदद्वयेन सम्बन्धः। आर्या वृत्तम्॥ ६६॥

---

सीता—( लज्जाका अभिनय करती हैं। ) (देखकर हर्षसे) कैसे ये उदित ही हो गये !
कमलको मुकुलित करनेवाले अभिमानिनी स्त्रीके अभिमानरूप हाथीको हटानेमें सिंहके समान, त्रिभुवनके नेत्रोंके आनन्दकारक, रात्रिरूप नायिकाके मुखमें चन्दनके सदृश चन्द्र उदित ही हो गये॥ ६६॥

रामः—सखे सुग्रीव, पश्य पश्य ।

इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य,
व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य ।
कंदर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा-
नासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः ॥

सुग्रीवः—अये रघुनाथ ! पुनरुक्तमिदमाचष्टे चन्द्रमसः किरणविलासः ।

---

इन्दोरिति । त्रियामायुवतिकुचतटीचन्दनस्थासकस्य व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य कन्दर्पक्षोणिपालस्फटिकमणिगृहस्य एतदाखण्डलाऽऽशा नासामुक्ताफलस्य अस्य इन्दोः कोऽपि भासां विलासो जगतीं स्थगयतीत्यन्वयः ।

त्रियामेत्यादिः = त्रियामा ( रात्रिः ) एव युवतिः ( तरुणी ) तस्याः कुचतटी ( स्तनप्रदेशः ) तस्यां चन्दनस्थासकस्य ( मलयजविलेपनस्य ), व्योमश्रीचामरस्य = व्योमश्रियः ( आकाशशोभायाः ) चामरस्य ( प्रकीर्णकस्य ), त्रिपुरहरजटावल्लरीकोरकस्य = त्रिपुरहरस्य ( शङ्करस्य ) या जटा ( सटा ) सैव वल्लरी ( लता ) तस्याः कोरकस्य ( मुकुलस्य ) । कन्दर्पक्षोणिपालस्फटिकमणिगृहस्य = कन्दर्पः ( कामदेवः ) एव क्षोणिपालः ( राजा ) तस्य स्फटिकमणिगृहस्य ( सितोपलभवनस्य ), एतदाखण्डलाशानासामुक्ताफलस्य = एषा ( पुरोदृश्यमाना ) या आखण्डलाऽऽशा ( इन्द्रदिशा, प्राचीति भावः ) तस्या नासायाः ( नासिकायाः ) मुक्ताफलस्य ( मौक्तिकरूपस्य भूषणस्य ), अस्य = पुरो दृश्यमानस्य, इन्दोः = चन्द्रमसः, कोऽपि = अनिर्वचनीयः, भासां = कान्तीनां, विलासः = विलसनं, जगतीं = भुवनं, स्थगयति = आच्छादयति, व्याप्नोतीति भावः । पूर्वोक्तलक्षणलक्षितस्य चन्द्रस्य प्रकाशो भुवनमण्डलं व्याप्नोतीति भावः । अत्र रूपकमलङ्कारः । स्रग्धरा वृत्तम् ॥

सुग्रीव इति । पुनरुक्तम् = पौनरुक्त्यदोषयुक्तम् । आचष्टे = कथयति । स्वकीर्त्यैव धवलिते जगति चन्द्रमसः किरणविलासस्य धवलीकरणं व्यर्थप्रायमिति भावः ।

---

राम—मित्र सुग्रीव ! देखो, देखो ।

रात्रिरूप युवतिके स्तनप्रदेशमें चन्दनलेपरूप, आकाशशोभाके चामररूप, शङ्करकी जटारूप लताके कोरकरूप, कामरूप राजाके स्फटिकमणिरचित भवनरूप और पूर्वदिशाकी नासिकाके मुक्ताफलरूप इस चन्द्रका अनिर्वचनीय कान्तिविलास लोकको आच्छादित कर रहा है ॥ ६७ ॥

सुग्रीव—रघुपते ! चन्द्रमाका किरणविलास पुनरुक्त कहनेके तुल्य है ।

रामः—कथमिव ?

सुग्रीवः—नन्वत एव।

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि केतकादपि चलत्कान्तादगन्तादपि।
दूरोन्मुक्तकलङ्कशंकरशिरः शीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी॥९८॥

कर्पूरादपीति। कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि केतकादपि चलत्कान्तादगन्तादपि दूरोन्मुक्तकलङ्कशङ्करशिरः शीतांऽशुखण्डादपि श्वेताभिः तव कीर्तिभिः सप्ताऽर्णवा मेदिनी धवलितेत्यन्वयः।

कर्पूरादपि = घनसारादपि, 'घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका।' इत्यमरः। श्वेताभिस्तवकीर्तिभिरिति सम्बन्धः। एवं परत्राऽपि। कैरवादपि = कुमुदादपि, दलत्कुन्दादपि = दलत् (विकसत्) यत् कुन्दं (माध्यपुष्पम्), तस्मादपि, स्वर्णदीकल्लोलादपि = स्वर्णदी (आकाशगङ्गा), तस्याः कल्लोलादपि (महातरङ्गादपि), 'महत्सूल्लोलकल्लोलौ' इत्यमरः। केतकादपि = केतकीपुष्पादपि, चलत्कान्तादगन्तादपि = चलन्ती (भ्रमन्ती) या कान्तादृक् (ललनादृष्टिः) तस्याः अन्तादपि (प्रान्तभागादपि), दूरोन्मुक्तकलङ्कशङ्करशिरःशीतांऽशुखण्डादपि = दूरात् (विप्रकृष्टात्) उन्मुक्तः (परित्यक्तः) कलङ्कः (लाञ्छनम्) येन सः, शङ्करशिरसि (शिवमस्तके) यः शीतांशुः (चन्द्रः), तत्खण्डादपि (तद्भागादपि, शिवशिरोऽवस्थितार्धचन्द्रादपीति भावः), श्वेताभिः = अधिकतरशुक्लाभिः, तव = भवतो रामचन्द्रस्य, कीर्तिभिः = यशोभिः, दुष्टनिग्रहशिष्टाऽनुग्रहजनिताभिर्लोकोत्तराभिः ख्यातिभिरिति भावः। सप्तार्णवा = सप्तसमुद्रयुक्ता, मेदिनी = पृथिवी धवलिता = शुक्लीकृता, अतस्त्वद्यशोभिरेव धवलितायाः मेदिन्याः चन्द्रेण स्वकिरणैर्धवलीकरणं पिष्टपेषणमिव व्यर्थप्रायमिति भावः। अत्रोपमेयस्य रामयशस उपमानेभ्यः कर्पूरादिभ्य आधिक्यस्य प्रतीतेर्व्यतिरेकाऽलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ९८॥

राम—कैसे ?

सुग्रीव—इसीसे—

कर्पूर, कुमुद, विकसित माध्यपुष्प, आकाशगङ्गाकी महातरङ्ग, केतकीपुष्प, चञ्चल कान्ताका कटाक्ष और दूरसे कलङ्क छोड़नेवाले शिवमस्तकके अर्धचन्द्र इन सभोंसे भी अधिक सफेद आपके यशोंसे ही सात समुद्रोंसे युक्त पृथिवी सफेद बनाई गई है॥ ९८॥

रामः—अलं तुच्छप्रायजल्पितेन ।

विभीषणः—देव ! तुच्छप्रायमेव जल्पितं सुग्रीवेण । यदुक्तं मेदिनी धवलितेति । ननु त्रिलोकीतलमेव धवलितमिति वक्तव्यम् । सम्प्रति हि—

समुन्नतघनस्तनस्तबकचुम्बितुम्बीफल-
कणन्मधुरवीणया विबुधलोकवामभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर-
त्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ ६६ ॥

राम इति । रामः स्वयशोवर्णनमाक्षिपन्निजशालीनतां व्यनक्ति—अलमिति । विभीषणो व्याघाताऽलङ्कारेण रामवच आक्षिपति—समुन्नतेति । समुन्नतघनस्तनस्तबकचुम्बितुम्बीफलकणन्मधुरवीणया विबुधलोकवामभ्रुवा हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं त्वदीयं यश उपगीयत इत्यन्वयः ।

समुन्नतघनेत्यादिः = समुन्नतः ( समुद्गतः ) यो घनस्तनस्तबकः ( निबिडकुचगुच्छः ) तं चुम्बतीति ( स्पृशतीति ) इति समुन्नतघनस्तनस्तबकचुम्बि तादृशं तुम्बीफलं ( वीणाऽवयवः ) यस्याः सा, तादृशी कणन्ती ( शब्दायमाना ) मधुरा ( मधुरस्वरोपेता ) वीणा ( वल्लकी ) यस्याः सा, तया । तादृश्या विबुधलोकवामभ्रुवा = विबुधानां ( देवानाम् ) लोके ( भुवने, स्वर्ग इति भावः ) वामे ( सुन्दरे ) भ्रुवौ ( नयनोपरिरोमराजी ) यस्याः सा, सुन्दरीति भावः । तया । देवललनयेति तात्पर्यम् । हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौरं = हरकिरीटस्य ( शिवमुकुटस्य ) या कोटिः ( अग्रभागः ) तत्र स्फुरन् ( प्रकाशमानः ) यस्तुषारकरः ( हिमांशुः, चन्द्र इत्यर्थः ) तस्य या कन्दली ( अङ्कुरः ) तस्याः यः किरणपूरः ( मयूखसमूहः ) तत्समं गौरं ( शुक्लवर्णम् ), तादृशं त्वदीयं = भवदीयं, यशः = कीर्तिः, उपगीयते = गानेन वर्ण्यते । यस्य ते चन्द्रकिरणधवलं यशः सुरललनाऽपि पुष्पस्तबकोपमे स्वपयोधरमण्डले वीणा प्रवालं विधाय गायति, तेन मेदिन्येव धव-

राम—तुच्छप्राय वचन कहनेकी आवश्यकता नहीं है ।

विभीषण—महाराज ! सुग्रीवजीने तुच्छप्राय वचन ही कहा है, जो कि 'पृथिवी सफेद बनाई गई है' ऐसा कहा । आपके यशने तीनों लोकोंको सफेद बना डाला ऐसा कहना चाहिए था । इस समय—समुन्नत गाढस्तनगुच्छको स्पर्श करनेवाले तुम्बीफलसे युक्त वीणाको बजानेवाली देवलोककी सुन्दरी शिवमुकुटके अग्रभागमें स्थित चन्द्रमाके किरणसमूहके सदृश शुक्ल आपके यशका गान करती है ॥ ६९ ॥

राम:—अयि! लङ्केश्वर! भवानपि किष्किन्धानाथमतमेवानुगतः
( पुनर्विलोक्य, सहर्षं सुग्रीवं प्रति )

संरम्भोद्रिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेला-
कैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः।
लोलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः
पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥७०॥

---

ईलेति सुग्रीवकथनं तुच्छप्रायमेव, स्वयशसा त्रिलोकीतलस्य धवलितत्वादिति भावः। अत्रोपमाऽलङ्कारः। पृथ्वी वृत्तम् ॥ ६९ ॥

राम इति। किष्किन्धानाथमतं=सुग्रीवाऽभिमतं, मयङ्कोवर्णनपरत्वमिति भावः।

संरम्भोद्रिक्तेति। संरम्भोद्रिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेलाकैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खो लोलाक्षीगण्डपालीलवणिमजलधेः उद्गतः फेनपिण्डो विरहिणां दत्तशङ्कः शशाङ्कः व्योमाऽवकाशं विशति। पश्येत्यन्वयः।

संरम्भोद्रिक्तेत्यादिः=संरम्भे (आरम्भे) उद्रिक्तः (स्पष्टः) यो नक्तंसमयः (रात्रिकालः) एव दशमुखः (रावणः), तस्योच्चण्डाः (प्रचण्डाः) ये दोर्दण्डाः (बाहुदण्डाः) तेषां हेलायाः (लीलायाः) कैलासः (कैलासपर्वतः)। रात्रिसमयरूपरावणबाहुदण्डोद्धृतकैलासपर्वतोपमश्चन्द्र इति भावः। सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः=सप्तलोक्याः) भुवनसप्तकस्य, भूरादिरूपस्येति भावः) जयेन (विजयेन) मुदितः (हृष्टः) यो मनोजन्मा (मनसिजः, कामदेव इत्यर्थः) तस्य वादित्रशङ्खः (वाद्यकम्बुः) कामोद्दीपकत्वात्कामदेवविजयसूचकवाद्यशङ्खरूपश्चन्द्र इति भावः। लोलाक्षीगण्डपालीलवणिमजलधेः=लोलाक्षीणां (चञ्चलनयनानां, सुन्दरीणाम्) या गण्डपाली (कपोलप्रदेशः) तस्या यो लवणिमा (लावण्यं, सौन्दर्यमित्यर्थः) स एव जलधिः (समुद्रः) तस्मात् उद्गतः=उत्पन्नः, फेनपिण्डः=डिण्डीरपिण्डः एवं च विरहिणां=वियोगिनां, दत्तशङ्कः=दत्तातङ्कः, जीवनाशङ्कां कुर्वन्निति भावः। एतादृशः शशाङ्कः=चन्द्रः, व्योमाऽवकाशम्=आकाश-

---

राम—लङ्कानाथ! आपनेभी किष्किन्धानाथ (सुग्रीव) का ही मत ले लिया।

( फिर देखकर हर्षपूर्वक सुग्रीवसे )

आरम्भमें स्पष्ट रात्रिकालरूप रावणके प्रचण्ड बाहुदण्डोंकी लीलाके कैलासपर्वत, सात लोगोंकी विजयसे प्रसन्न कामदेवके वाद्यशङ्ख, सुन्दरियोंके कपोल प्रदेशके सौन्दर्य समुद्रसे उत्पन्न फेनपिण्डके समान और वियोगियोंको शङ्कित करनेवाले चन्द्रमा आकाशप्रदेशमें प्रवेश कर रहे हैं। देखो ॥ ७० ॥

( निर्वर्ण्य । स्वगतम् )

अयं नेत्रादत्रेरजनि रजनीवल्लभ इति
भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम् ।
सुधानामाधारः स खलु रतिबिम्बाधरसुधा-
रसासेकस्निग्धादजनि नयनात्पुष्पधनुषः ॥ ७१ ॥

लक्ष्मणः—आर्ये जानकि ! पश्य पश्य ।

---

प्रदेशं, विशति = प्रविशति । पश्य = विलोकय, तमिति शेषः । अत्र रूपकमलङ्कारः । स्रग्धरा वृत्तम् ॥ ७० ॥

अयं नेत्रादिति । अयं रजनीवल्लभः अत्रेः नेत्रात् अजनि प्रज्ञापरिचयपराऽधीन-मनसां अयं कः भ्रमः । सुधानाम् आधारः सः रतिबिम्बाऽधरसुधारसासेकस्निग्धात् पुष्पधनुषो नयनात् अजनि खल्वित्यन्वयः ।

अयं = पुरोदृश्यमानः, रजनीवल्लभः = निशापतिः, चन्द्र इति भावः । अत्रेः = अत्रिनामकर्षेः, नेत्रात् = नयनात्, अजनि = उत्पन्नः, 'जनी प्रादुर्भावे' इति धातो-र्लुङि च्लेः 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति चिण्, तस्य 'चिणो लुक्' इति लुक्। प्रज्ञापरिचयपराऽधीनमनसां = प्रज्ञायाः ( बुद्धेः ) यः परिचयः ( संस्तवः ) तस्मिन् पराऽधीनं ( परतन्त्रम् ) मनः ( चित्तम् ) येषां, तेषाम् । अयम् = एतादृशः, कः = कीदृशः, भ्रमः = भ्रान्तिः, मिथ्यामतिरिति भावः । व्योम-मण्डलाऽवस्थितोऽयं चन्द्रोऽत्रेर्नयनसमुत्थं ज्योतिरिति मिथ्यामतिरेवेति भावः। एत-मेवाऽर्थमुपपादयति—सुधानामिति । सुधानाम् = अमृतानाम्, आधारः = आश्रयः, सः = चन्द्रः, रतिबिम्बाऽधरसुधारसासेकस्निग्धात् = रतेः ( कामप्रियायाः ) बिम्बम् ( बिम्बफलम् ) इव अधरः ( ओष्ठः ) तस्य सुधा ( अमृतम् ) तस्याः रसः ( मधु-रिमा ), तेन य आसेकः ( आसेचनम् ), तेन स्निग्धात् ( मसृणात् ), पुष्पधनुषः = कामदेवस्य, 'वा संज्ञायाम्' इत्यनङोऽभावपक्षे रूपम् । नयनात् = नेत्रात्, अजनि = जातः । रतिबिम्बाधरचुम्बितात्कामनयनादेव चन्द्रोऽयं संजातः, नोचेदस्य कथ-मेवं विधं कामोद्दीपकत्वमिति भावः । अत्राऽपह्नुतिरलङ्कारः । शिखरिणीवृत्तम् ॥७१॥

---

( देखकर मन ही मन )

ये चन्द्रमा अत्रिके नयनसे उत्पन्न हुए हैं । यह ज्ञानके परिचयमें पराऽधीन मनवालोंका कैसा भ्रम है ? निश्चय ही अमृताऽऽधार वे रतिदेवीके बिम्बफलके सदृश अधरके रससे स्निग्ध कामदेवके नेत्रसे उत्पन्न हुए हैं ॥ ७१ ॥

लक्ष्मण—आर्ये जानकी ! देखिए, देखिए ।

आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम्।
लङ्घयत्यम्बराभोगं हनूमानिव सागरम्॥ ७२॥

**सीता**—अये सुलक्षण लक्ष्मण, स पुनरिदानीं क्व रघुकुलकुटुम्ब-सन्तापशमनचन्दनः पवननन्दनः। (अये सुलक्खण लक्खण! सो उण दाणीं कहिं रहुउलकुडुम्बसन्तावसमणचन्दणो पवणणन्दणो)

**लक्ष्मणः**—आर्ये! स एष रामचन्द्रेण बन्धुमानन्दयितुमयोध्यां प्रहितः।

**सीता**—तदस्माभिः किमिति विलम्ब्यते। (ता अह्मेहिं किंति विलम्बीअदि।)

(रामो विभीषणमुखमालोकते)

**विभीषणः**—(निर्गत्य, प्रविश्य च) इदं तत्पुष्पकाभिधानं विमानरत्न-मारुह्यताम्।

---

आनन्दमिति। अयम् इन्दुः कुमुदादीनाम् आनन्दं कन्दलयन् हनूमान् सागर-मिव अम्बराभोगं लङ्घयतीत्यन्वयः।

अयं=पुरोदृश्यमानः, इन्दुः=चन्द्रः, कुमुदादीनां = कैरवचकोरप्रभृतीनाम्, आनन्दं=हर्षं, कन्दलयन्=जनयन्, हनूमान्=आञ्जनेयः, सागरमिव=समुद्र-मिव, अम्बराऽऽभोगम्=आकाशमण्डलं, लङ्घयति=अतिक्रामति। एतेन लङ्काया आयोध्यागमनाऽर्थं हनूमतो गगनमण्डललङ्घनं सूच्यते। उपमाऽलङ्कारः। अनु-ष्टुब्वृत्तम्॥ ७२॥

सीतेति। सुलक्षण = शोभनानि (शुभसूचकानि) लक्षणानि (चिह्नानि) यस्य, तत्सम्बुद्धौ। पवननन्दनः=हनूमान्।

लक्ष्मण इति। बन्धुं=बान्धवं, भरतादिमित्यर्थः। प्रहितः=प्रेषितः।

---

ये चन्द्रमा, कुमुद चकोर आदियोंके आनन्दको उत्पन्न करते हुए समुद्रको हनूमान्‌के समान आकाशमण्डलको लङ्घित कर रहे हैं॥ ७२॥

**सीता**—शुभ लक्षणवाले लक्ष्मणजी। रघुवंशके कुटुम्बके सन्तापको शमन करनेमें चन्दनके समान पवननन्दन हनूमान्‌जी इस समय कहाँ हैं?

**लक्ष्मण**—आर्ये! भैयाने उन्हें बन्धु (भरतादि) को आनन्दित करनेके लिए अयोध्यामें भेजा है।

**सीता**—तब हमलोग किसलिए विलम्ब (देरी) कर रहे हैं?

(राम विभीषणका मुख देखते हैं।)

**विभीषण**—(बाहर निकलकर और फिर प्रवेशकर) इस पुष्पक नामके श्रेष्ठ विमान-पर आरोहण कीजिए।

( सर्वे विमानारोहणं नाटयन्ति )

**रामः**—( सकौतुकम् ) अये ! तदिदं विमानरत्नं यत्किल त्रिभुवनैकवीरः कुबेरानुजः कुबेरादाजहार ।

**लक्ष्मणः**—( सामर्षम् ) कथमयं किष्किन्धामाहिष्मतीपतिभ्यः समभागविभक्तलक्ष्मीकोऽपि त्रिभुवनैकवीर इति व्यपदिश्यते ।

**रामः**—( विहस्य ) एवमेतत् ।

> तादृक्कठोरभुजयन्त्रनिपीडनेन
> निश्शब्दतामुपगतैर्दशकण्ठकण्ठैः ।

---

राम इति । त्रिभुवनैकवीरः = लोकत्रयमुख्यशूरः । कुबेराऽनुजः=रावण इत्यर्थः ।

लक्ष्मण इति । किष्किन्धामाहिष्मतीपतिभ्यः = किष्किन्धापतिः ( वाली ), माहिष्मतीपतिः ( कार्तवीर्यः ), आदराऽर्थं बहुवचनम् , तेभ्यः । समभागविभक्तलक्ष्मीकः = समभागेन ( तुल्यांशेन ) विभक्ता ( कृतविभागा ) लक्ष्मीः ( सम्पत्तिः ) यस्य सः । वालिकार्तवीर्याभ्यां वीर्याऽभिभूतोऽपि रावणः कथङ्कारं त्रिभुवनैकवीर इत्युच्यत इति भावः ।

तादृगिति । तादृक्कठोरभुजयन्त्रनिपीडनेन निःशब्दताम् उपगतैः दशकण्ठकण्ठैः चतुःसमुद्रवेलासु यत्कीर्तिघोषणम् अकारि । स कपीन्द्रः किं वचसां विषय इत्यन्वयः । तादृक्कठोरभुजयन्त्रनिपीडनेन = तादृशौ ( तथाविधौ ) कठोरौ ( कर्कशौ ) यौ भुजौ ( बाहू ) ताभ्यां यो यन्त्रः ( सङ्कोचनम् ) तेन यन्निपीडनं ( व्यथनम् ) तेन । निःशब्दतां = शब्दशून्यतां, मूकतामिति भावः । उपगतैः = प्राप्तैः, दशकण्ठकण्ठैः = दशकण्ठस्य ( रावणस्य ) कण्ठैः ( गलैः ), चतुःसमुद्रवेलासु = चतुर्णां ( चतुःसंख्यकानाम् ) समुद्राणां ( सागराणाम् ) वेलासु ( तीरभूमिषु ), 'तद्धिताऽर्थो-

---

( सब विमानपर चढ़नेका अभिनय करते हैं । )

**राम**—( कुतूहलपूर्वक ) अरे ! यह वह विमानरत्न है जिसे त्रिभुवनके एक वीर रावणने कुबेरसे छिन लिया था ।

**लक्ष्मण**—( असहिष्णुतापूर्वक ) किष्किन्धा और माहिष्मतीके स्वामियों—(बाली और कीर्तवीर्यसे ) तुल्य भागमें सम्पत्तिका विभाग होने पर भी इसे क्यों त्रिभुवनका एक वीर कह रहे हैं ?

**राम**—( हंसकर ) यह ठीक है ।

वैसे कर्कश बाहुओंसे सङ्कोचनपूर्वक निपीडनसे शब्दहीन होनेवाले रावणके कण्ठोंसे

यत्कीर्तिघोषणमकारि चतुः समुद्र-
वेलासु किं स वचसां विषयः कपीन्द्रः ॥ ७३ ॥

अपि च,

कोपप्रदीप्तनिजलोचनदीपवह्नि-
निर्भिन्नसान्द्रतिमिरे स दशाननोऽपि।
काराकुटीरकुहरे वसति स्म यस्य
सोऽप्येष हैहयपतिर्विषयो न वाचाम् ॥ ७४ ॥

किन्तु परिभावय वत्स !

---

त्तरपदसमाहारे चे'त्युत्तरपदसमासः। यत्कीर्तिघोषणं = यस्य (वालिनः) कीर्तेः (वीर्ययशसः) घोषणम् (ख्यापनम्), अकारि = कृतं, कर्मवाच्यप्रयोगः। सः = लोकविश्रुतः, कपीन्द्रः = वानरेन्द्रः, वालीति भावः। किं वचसां = वचनानां, विषयः = गोचरः। वालिना भुजाभ्यां सङ्कोचनेन व्यथोत्पादनेन वाक्शक्तिविकलैः रावणकण्ठैः सागरचतुष्टयतीरभूमिषु यस्य वालिनो यशो विख्यापितम्। तादृशं महाबलं वालिनं को वर्णयितुं समर्थः, न कोपीति' भावः। अत्र निःशब्दतामुपगतैः कीर्तिघोषणमकारीत्यनेन विरोधाऽऽभासाऽलङ्कारः। वसन्ततिलकावृत्तम् ॥ ७३ ॥

कोपेति। कोपप्रदीप्तनिजलोचनदीपवह्निनिर्भिन्नसान्द्रतिमिरे यस्य काराकुटीरकुहरे स दशाननोऽपि वसति स्म। सोऽपि एष हैहयपतिः वाचां विषयो नेत्यन्वयः।

कोपप्रदीप्तेत्यादिः = कोपेन (क्रोधेन) प्रदीप्तानि (प्रज्वलितनिजलोचनानि) स्वनेत्रे एव दीपाः (प्रदीपाः) तेषां सो वह्निः (अग्निः) तेन निर्भिन्नं (निवारितम्) सान्द्रं (निबिडम्) तिमिरं (तमः) यस्मिंस्तत्, तस्मिन्। यस्य = हैहयपतेः, काराकुटीरकुहरे = बन्धनाऽऽलयकुटीगह्वरे, सः = लोकविश्रुतः, दशाननोऽपि, वसति स्म = अवसत्, सोऽपि = तादृशोऽपि, एषः = अस्मद्बुद्धिस्थः, हैहयपतिः = कार्तवीर्यः, वाचां = वाणीनां, विषयो न = गोचरो न, रावणविजेता कार्तवीर्योऽपि लोकोत्तरवीर्येण वर्णयितुमशक्य इति भावः। अतिशयोक्तिरलङ्कारः। वसन्ततिलकावृत्तम् ॥ ७४ ॥

किन्त्विति। परिभावय = विचारय।

---

चारों समुद्रोंकी तीरभूमियोंमें जिसकी कीर्तिकी घोषणाकी थी, वह महाबल वाली क्या वचनका विषय हो सकता है ? ॥ ७३ ॥

और भी—क्रोधसे प्रज्वलित स्वनेत्ररूप प्रदीपोंकी आगके कारण गाढ अन्धकारसे रहित जिनके बन्धनकुटीरके भीतर उस रावणने भी वास किया था। वैसे कीर्तवीर्य भी वर्णनके विषय नहीं हैं ॥ ७४ ॥

परन्तु हे वत्स ! विचार करो—

यस्य द्राकरवालकृत्तशिरसः कण्ठालवालस्थलीं
चूडाचन्द्रमसं निपीड्य निबिडं सिञ्चन् सुधानिर्झरैः ।
स्वां मेने शशिखण्डमण्डन इति ख्यातिं कृतार्थां हरः
पन्थानं दशकन्धरः स च कथङ्कारं गिरां गाहते ॥ ७५ ॥

( निर्वर्ण्य ) अये ! किमुच्यतेऽस्य खलु त्रिकूटगिरिशिखरकण्ठीरवस्य दशकण्ठस्य लोकोत्तराणि चरितानि ।

---

यस्य द्रागिति । द्राक् करवालकृत्तशिरसो यस्य कण्ठालवालस्थलीं चूडा चन्द्रमसं निबिडं निपीड्य सुधानिर्झरैः सिञ्चन् हरः स्वां शशिखण्डमण्डन इति ख्यातिं कृतार्थां मेने । स दशकन्धरश्च गिरां पन्थानं कथङ्कारं गाहत इत्यन्वयः ।

द्राक् = सत्वरं, करवालकृत्तशिरसः = करवालेन ( खड्गेन ) कृत्तं ( छिन्नम् ) शिरः ( मूर्धा ) यस्य, तस्य । यस्य = रावणस्य, कण्ठालवालस्थलीं = कण्ठः ( गलः ) एव आलवालम् ( आवापः ) तस्य स्थलीं ( स्थानम् ), चूडाचन्द्रमसं = स्वमस्तकस्थचन्द्रं, निबिडं = गाढं, निपीड्य = निष्पीडितं कृत्वा, तद्गलितैः सुधानिर्झरैः = अमृतरसप्रवाहैः, सिञ्चन् = उक्षन्, हरः = शङ्करः, स्वां = स्वकीयां, शशिखण्डमण्डनः = शशिखण्डम् ( अर्धचन्द्रः ) एव मण्डनं ( भूषणम् ) यस्य सः, चन्द्रशेखर इति भावः । इति = एतादृशीं, ख्यातिं = प्रसिद्धिं, कृतार्थां = सफलामिति भावः । मेने = बुबुधे सः = तादृशः, स्वशिरश्छेदनेन शिवप्रसादक इति भावः । दशकन्धरश्च = रावणश्च, गिरां = वाणीनां, पन्थानं = मार्गं, कथङ्कारं = केन प्रकारेण, गाहते = प्रविशति । स्वमस्तकच्छेदनेनाशुतोषतोषकः शिवाद् स्वभालस्थितचन्द्रसुधाधारया प्राप्तजीवनो राक्षसराजो रावणः शौर्यचमत्कारे वाचामगोचर इति भावः । अत्र रूपकमलङ्कारः । 'शशिखण्डमण्डन' इत्यत्र निरुक्तं नाम लक्षणम् । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

निर्वर्ण्येति । त्रिकूटगिरिशिखरकण्ठीरवस्य = त्रिकूटगिरेः ( त्रिककुत्पर्वतस्य ), लङ्कासमीपस्थस्येति शेषः ), यच्छिखरं ( शृङ्गम् ) तस्य कण्ठीरवस्य ( सिंहस्य ) ।

---

शीघ्र तलवारसे शिर काटने वाले जिसके कण्ठरूप आवापके स्थान पर अपने शिरःस्थित चन्द्रको दृढरूपसे निष्पीडित कर अमृतनिर्झरोंसे सेचन करते हुए शङ्करने 'चन्द्रशेखर' इस अपनी प्रसिद्धिको सफल मान लिया था । वैसा रावण भी कैसे वर्णन किया जा सकता है ? ॥ ७५ ॥

( देखकर ) त्रिकूटपर्वतकी चोटीके सिंह इस रावणके लोकोत्तरचरित्रका कैसे वर्णन किया जाय ?

यद्दोःशायिनि चन्द्रशेखरगिरौ भारावतारोन्नम-
:न्नागाधीशफणावलीमणिरुचां पूरे समुन्मीलति ।
जातास्तुल्यमकालबालतपनाताम्राश्चतस्रो दिशो
देवस्यापि रुषा तुषारकिरणोत्तंसस्य तिस्रो दृशः ॥७६॥

लक्ष्मणः—आर्य,

---

लोकोत्तराणि = लोकात् ( भुवनात् ) उत्तराणि ( उत्कृष्टानि ) ।

यद्दोःशायिनीति । चन्द्रशेखरगिरौ यद्दोःशायिनि सति भाराऽवतारोन्नमन्नागाऽधीशफणावलीमणिरुचां पूरे समुन्मीलति चतस्रो दिशो देवस्य तुषारकिरणोत्तंसस्य तिस्रो दृशो रुषा तुल्यम् अकालबालतपनाताम्रा जाता इत्यन्वयः । चन्द्रशेखरगिरौ शिवपर्वते, कैलास इति भावः ।

यद्दोःशायिनि = यस्य ( रावणस्य ) दोःशायिनि ( करतलवर्तिनि ) सति, भाराऽवतारोन्नमन्नागाऽधीशफणावलीमणिरुचां = भारस्य ( कैलासपर्वतभरस्य ) अवतारेण ( अपसारणेन ) उन्नमन्ती ( उत्तिष्ठन्ती ) या नागाऽधीशस्य ( शेषस्य, भूमण्डलधारकस्येति शेषः ) फणाऽऽवली ( स्फटापङ्क्तिः ) तस्यां ये मणयः (रत्नानि) तेषां रुचां ( कान्तीनाम् ), पूरे = समूहे, समुन्मीलति = दीप्यमाने सति, 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । चतस्रः = चतुःसंख्यकाः, दिशः = आशाः, प्राच्यादय इति भावः । देवस्य = द्योतनशीलस्य, तुषारकिरणोत्तंसस्य = तुषारकिरणः ( हिमांशुः, चन्द्र इत्यर्थः ) उत्तंसः ( शिरोभूषणम् ) यस्य, तस्य, शङ्करस्येत्यर्थः । तिस्रः = त्रिसंख्यकाः दृशः = नेत्राणि, तुल्यं = समकालमेव, अकालबालतपनाताम्राः = अकाले ( अकाण्डे ) ये बालतपनाः ( नवोदितसूर्याः ) त इव आ ( समन्तात् ) ताम्राः ( रक्तवर्णाः ), जाताः = सम्पन्नाः । रावणेन कैलासपर्वते धृते कैलासधृतभूभारराहित्येनोन्नतशेषफणावस्थितमणिकान्तौ विततायां दिक्चतुष्टयं कोपाक्रान्तस्य शङ्करस्य नेत्रत्रितयं च युगपदेव बालार्करक्तवर्णं संजातमिति भावः । अत्राऽतिशयोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥

---

जिसके हाथोंमें शिवपर्वत कैलासके रहने पर भार उतरनेसे उठने वाली शेषनागकी फणाओंकी पङ्क्तिमें स्थित रत्नोंके कान्तिसमूहके दीप्यमान होने पर चारों दिशाएँ और भगवान् चन्द्रशेखरके तीनों नेत्र भी क्रोधसे समानभावसे असमयमें उदित बालसूर्यके समान आरक्त वर्ण हो गये ॥ ७६ ॥

लक्ष्मण—आर्य !

एष मे मनसि भासतेऽधुना मूर्तिमानिव मनोरथो रथः ।
नास्ति नो यदधिरोहलीलया दूरमागतवतामपि श्रमः ॥ ७७ ॥

रामः—एवमेतत् । तथाहि—

उल्लङ्घ्य नीरधिमतीत्य च दण्डकानि
नद्यौ च मेकलकलिन्दसुते व्यतीत्य ।
प्राप्ताः शिखण्डिशतखण्डितशाखिखण्ड-
मेते वयं शिखरिणं ननु चित्रकूटम् ॥ ७८ ॥

---

लक्ष्मणो विमानवेगं प्रशंसति—एष म इति । अधुना एष रथो मे मनसि मूर्तिमान् मनोरथ इव भासते । यदधिरोहलीलया दूरम् आगतवतामपि नः श्रमो नाऽस्तीत्यन्वयः ।

अधुना = सम्प्रति, एषः = अयं, रथः = स्यन्दनः, यानमित्यर्थः । पुष्पकाऽभिधानं विमानमिति भावः । मे = मम, मनसि = चित्ते, मूर्तिमान् = शरीरवान्, मनोरथ इव = अभिलाष इव, भासते = प्रतिभाति । यदधिरोहलीलया = यदाधिरोहणविलासेन, दूरं = विप्रकृष्टप्रदेशम्, आगतवतामपि = प्राप्तवतामपि, नः = अस्माकं, श्रमः = परिश्रमः, नाऽस्ति = न विद्यते । अत्रोत्प्रेक्षाऽलङ्कारः । रथोद्धता वृत्तम् ॥७७॥

रामो लक्ष्मणोक्तिं समर्थयत उल्लङ्घ्येति । ननु नीरधिम् उल्लङ्घ्य दण्डकानि च अतीत्य मेकलकलिन्दसुते नद्यौ च व्यतीत्य एते वयं शिखण्डिशतखण्डितशाखिखण्डं चित्रकूटं शिखरिणं प्राप्ता इत्यन्वयः ।

ननु = हे लक्ष्मण, नीरधिं = समुद्रम्, उल्लङ्घ्य = अतिक्रम्य, दण्डकानि च = दण्डकाऽभिधानानि अरण्यानि च, अतीत्य = अतिक्रम्य मेकलकलिन्दसुते च = नर्मदायमुने च, 'रेवा तु नर्मदा सोमोद्भवा मेकलकन्यका ।' इति 'कालिन्दी सूर्यतनया यमुना शमनस्वसा ।' इति चाऽमरः । व्यतीत्य = उत्तीर्य, एते = इमे, वयं = रामादयः, शिखण्डिशतखण्डितशाखिखण्डं = शिखण्डिनां ( मयूराणाम् ) शतैः ( समूहैः ) खण्डितः ( दलितः ) शाखिखण्डः ( वृक्षसमूहः ) यस्मिंस्तं, तादृशं, चित्रकूटं = चित्रकूटाख्यं, शिखरिणं = पर्वतं, प्राप्ताः = आगताः । पुष्पकाऽभिधानं विमान-

---

इस समय यह रथ ( विमान ) मेरे मनमें शरीरधारी मनोरथके समान प्रतीत हो रहा है। जिस पर आरोहणके विलाससे दूर आने पर भी हमलोगोंको परिश्रम नहीं हो रहा है ॥ ७७ ॥

राम—यह ठीक है। जैसे कि—

हे लक्ष्मण ! समुद्र, दण्डकारण्य, नर्मदा और यमुनाको भी अतिक्रमण कर हमलोग सैकड़ों मयूरोंसे दलित वृक्षोंसे युक्त चित्रकूटपर्वतको प्राप्त हो गये हैं ॥ ७८ ॥

सीता—( तिर्यग् विलोक्य ) अहह कलिन्दनन्दिनि, सत्यप्रसादासि, यत्पुनरपि निजकुटुम्बस्य दत्तदर्शनासि। ( अहह कलिन्दणन्दिणि! सच्चप्पसादासि जं पुणोवि णिअकुडुम्बस्स दिण्णदंसणासि। )

रामः—अयि! तदिदं निर्मुक्तविरोधश्वापदं भगवतो भारद्वाजस्याश्रमपदम्।

लक्ष्मणः—एवमेतत्। अत्र हि—

> व्याजृम्भमाणवदनस्य हरेः करेण
> कर्षन्ति केसरसटाः कलभाः किलैके।
> अन्ये च केसरिकिशोरकपीतमुक्तं
> दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ ७९ ॥

---

मारुह्य वयं समुद्रमुत्तीर्य दण्डकारण्यान्यनेकानि वनान्यतिक्रम्य नर्मदायमुने चोल्लङ्घ्य सपद्येव चित्रकूटपर्वतं प्राप्ता इति भावः। अत्रौजो नाम गुणः। वसन्ततिलकावृत्तम् ॥

राम इति। निर्मुक्तविरोधश्वापदं=निर्मुक्तः ( परित्यक्तः ) विरोधः ( विद्वेषः ) यैस्ते, तादृशाः श्वापदाः ( हिंस्रजन्तवः ) यस्मिंस्तत्। अहिंसाप्रतिष्ठायां जन्तवः परस्परविरोधमपि परित्यजन्तीत्येतमर्थं भगवान् पतञ्जलिरित्थं सूचितवान्—'अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः' इति।

लक्ष्मणः श्वापदानां निर्मुक्तविरोधत्वं प्रदर्शयति—व्याजृम्भमाणेति। व्याजृम्भमाणवदनस्य हरेः केसरसटाः एके कलभाः कर्षन्ति किल। अन्ये च। केसरिकिशोरकपीतमुक्तं मृगेन्द्रवनितास्तनजं दुग्धं पिबन्तीत्यन्वयः।

व्याजृम्भमाणवदनस्य=व्याजृम्भमाणं विवृतं भवत् वदनं ( मुखम् ) यस्य सः, तस्य। हरेः=सिंहस्य, 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः।' इत्यमरः। केसरसटाः=स्कन्धवालजटाः, एके=केचित्, कलभाः=करिशावकाः, करेण=शुण्डादण्डेन, कर्षन्ति=आकर्षन्ति। तथाऽपि निर्मुक्तविरोधत्वेन सिंहा न कुप्यन्तीति भावः। किलेति निश्चये। अन्ये च=अपरे च, कलभा इति शेषः। केसरिकिशोरकपीतमुक्तं=

---

सीता—( तिरछी नजरसे देखकर ) अहा! कालिन्दि! सत्य अनुग्रहवाली हो जो कि तुमने फिर भी अपने कुटुम्बको दर्शन दिया है।

राम—सीते! परस्परमें विरोध छोड़नेवाले हिंस्रजन्तुओंसे युक्त यह वह भारद्वाज ऋषिका आश्रमस्थान है।

लक्ष्मण—यह ठीक है। यहाँ—

जंभुहाई लेने वाले सिंहकी जटाओंको कुछ गजशावक अपने सूंड़से खींच रहे हैं। दूसरे गजशावक सिंहके बच्चेसे पीकर छोड़े गये सिंहीके स्तनजन्य दूधको पी रहे हैं ॥ ७९ ॥

अपि च—

क्रीडन्माणवकाङ्घ्रिताडनशतैरुज्जागरस्य क्षणं
शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः ।
चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः
किं चाऽयं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥ ८० ॥

केसरिणां ( सिंहानाम् ) किशोरकैः ( बालैः ) प्राक् पीतम् ( आस्वादितम् ) पश्चात् मुक्तं ( त्यक्तम् ), सिंहशावकपीताऽवशिष्टमिति भावः । मृगेन्द्रवनितास्तनजं = मृगेन्द्रवनिता ( सिंही ) तस्याः स्तनजं ( कुचजातम् ), दुग्धं = पयः, पिबन्ति = धयन्ति । एतेन ऋषेरहिंसाप्रतिष्ठया हिंस्रजन्तूनामपि सहिष्णुतातिशयो द्योत्यते । वसन्ततिलकावृत्तम् ॥ ७९ ॥

क्रीडन्माणवकेति । मृगः क्रीडन्माणवकाऽङ्घ्रिताडनशतैः उज्जागरस्य शार्दूलस्य नखाऽङ्कुरेषु क्षणं कण्डूविनोदं कुरुते । किं च चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः अयं पन्नगः प्रसुप्तनकुलश्वासाऽनिलं पिबतीत्यन्वयः ।

मृगः = हरिणः क्रीडन्माणवकाऽङ्घ्रिताडनशतैः = क्रीडतां ( खेलताम् ) माणवकानाम् ( मुनिबालकानाम् ) अङ्घ्रिताडनशतैः (बहुभिश्चरणप्रहारैः), उज्जागरस्य = उद्गता जागरा ( जागर्या ) यस्य, तस्य, जागरितस्येत्यर्थः । 'जागर्या जागरा द्वयोः' इत्यमरः । तादृशस्य शार्दूलस्य = व्याघ्रस्य, नखाऽङ्कुरेषु = नखराऽग्रभागेषु, क्षणं = कञ्चित्कालं, 'कालाऽध्वनोरत्यन्तसंयोगे' इति द्वितीया । कण्डूविनोदं = खर्जूनिवारणं, कुरुते = विधत्ते । हरिणो मुनिबटुचरणप्रहारैर्जागरितस्य व्याघ्रस्य नखाग्रेषु संजातकण्डूतिं स्वकायाऽवयवं निक्षिप्य कण्डूनिवारणं विदधातीति भावः । किं च = अपरं च, चञ्चच्चन्द्रशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः = चञ्चन् ( चलन् ) चन्द्रः (चन्द्राकारो मेचकः येषां, ते, तादृशा ये शिखण्डिनः ( मयूराः ) तेषां तुण्डघटनया ( मुखसंयोजनया, चञ्चुसंयोगेनेति भावः ) निर्मोकात् ( कञ्चुकात् ) निर्मोचितः ( पृथक्कृतः ), अयम् = एषः, पन्नगः = सर्पः, प्रसुप्तनकुलश्वासाऽनिलं = प्रसुप्तः ( निद्राणः ) यो नकुलः ( बभ्रुः ), तस्य श्वासाऽनिलं ( निःश्वासवातम् ), पिबति = धयति । मयूरचञ्चुसंयोगात् कञ्चुकाद्बहिर्भूतोऽयं सर्पो निद्राणस्य नकुलस्य निर्भीकतया निःश्वास-

और भी—

मृग खेलते हुए मुनि बालकोंके चरणप्रहारोंसे जागरित व्याघ्रके नखाङ्कुरोंमें कुछ समय तक खुजली मिटाता है । इसी प्रकार चञ्चल मेचकवाले मयूरके चञ्चुसंयोगसे केंचुलीसे पृथक्कृत यह सर्प सोए हुए न्योलेके श्वासवायुका पान कर रहा है ॥ ८० ॥

रामः—अये ! कथमयं सम्प्राप्त एव चक्रवाकरमणीसंरम्भमयः प्रभात-समयः । तथाहि—

एते केतकधूलिधूसररुचः शीतद्युतेरंशवः
प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः ।
अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः
प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ८१ ॥

---

वातं पिबति, तपः प्रभावाऽतिशयेन हिंस्रजन्तूनामपि वैरत्यागस्य सूचकमेतत्तपोवन-मिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥

राम इति । चक्रवाकरमणीसंरम्भमयः = चक्रवाकरमणीनां ( कोकवधूनाम् ) संरम्भमयः ( उत्साहप्रचुरः ), चक्रवाकीनां प्रभातकालस्य पतिसमागमाऽवसरत्वा-दिति भावः ।

एत इति । केतकधूलिधूसररुच एते शीतद्युतेरंशवः सम्प्रति जराजर्जराः (सन्तः) पश्चिमस्य जलधेस्तीरं प्राप्ताः । विकसत्सरोरुहवनीदृक्पातसंभाविता एते तारुण्यभाज-स्तरणेः कराः प्राचीरागमुदीरयन्तीत्यन्वयः ।

केतकधूलिधूसररुचः = केतकधूलिरिव ( केतकपुष्पपराग इव ) धूसरा ( ईषत्पा-ण्डुः ) रुक् ( कान्तिः ) येषां ते । एते = इमे, शीतद्युतेः = हिमांऽशोः, चन्द्रमस इत्यर्थः । अंशवः = किरणाः, सम्प्रति = अधुना जराजर्जराः = जरसा: ( वार्धक्येन स्वनियतसमयाऽतिपातेनेति भावः ) जर्जराः ( जीर्णाः ) सन्तः, पश्चिमदिग्भवस्य, जलधेः = समुद्रस्य, तीरं = तटं, प्राप्ताः = आसादिताः, चन्द्रकरा अस्ताऽचलोन्मुखा इति भावः । विकसत्सरोरुहवनीदृक्पातसंभाविताः = विकसन्ति ( प्रफुल्लन्ति ) यानि सरोरुहाणि ( कमलानि ) तेषां या वनी ( संहतिः ) तस्या दृक्पातेन ( दृष्टि-प्रदानेन, कटाक्षेणेति भावः ) संभाविताः ( संमानिताः ), एते = इमे, तारुण्यभाजः= नवीनाः, तरणेः = सूर्यस्य, कराः = किरणाः, प्राचीरागं = प्राच्याः ( पूर्वदिशः ) रागं ( लौहित्यम् , अनुरागं च ) उदीरयन्ति = प्रदर्शयन्ति । जराजीर्णकलेवरः कश्चिज्जनो

---

राम—अरे ! चकवाकियोंके उत्साहपूर्ण यह प्रातः समय किस प्रकार आ ही गया । जैसे कि—

केतकपुष्पके परागके समान धूसर कान्तिसे युक्त ये चन्द्रमाके मयूख, इस समय जरासे जर्जर होकर पश्चिम समुद्रके तटको प्राप्त हो गये हैं । प्रफुल्ल कमलिनीके दृष्टिपातसे संमानित नवीन ये सूर्यके मयूख, पूर्वदिशाके राग ( लौहित्य और अनुराग ) को प्रदर्शित कर रहे हैं ॥ ८१ ॥

लक्ष्मणः—( सकौतुकम् )

सद्यः संघटमानकोकमिथुनव्याजेन पीनस्तन-
द्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः ।
दुर्दैवाक्षरमालिकामिव झगित्याकृष्य भृङ्गावलीं
लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥ ८२ ॥

यथा पश्चिमां स्थितिमासादयति तथैव तरुण्याः कटाक्षवीक्षितः कोऽपि युवा यथा तस्या अनुरागं लभते तादृशो व्यवहारोऽत्र चन्द्रस्य प्रतीचीगमनेन सूर्यस्य च प्राचीप्रापणेन प्रवर्तते । अत एवाऽत्र समासोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥८१॥

सद्य इति । देवः त्विषाम् ईश्वरः सद्यः संघटमानकोकमिथुनव्याजेन पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो दिक्कन्यका निर्माय दुर्दैवाऽक्षरमालिकाम् इव भृङ्गावलीं झगिति आकृष्य अम्बुजिनीजनस्य लक्ष्मीं तनुते इत्यन्वयः ।

देवः = द्योतनशीलः त्विषाम् = कान्तीनाम् , ईश्वरः = स्वामी, सूर्य इत्यर्थः । सद्यः = सपदि, संघटमानकोकमिथुनव्याजेन = संघटमानं ( संयुज्यमानम् ) यत् कोकमिथुनं ( चक्रवाकद्वन्द्वं, चक्रवाकीचक्रवाकयुगलमित्यर्थः ), तस्य व्याजेन ( छलेन )। पीनस्तनद्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचः = पीनस्तनयोः ( स्थूलपयोधरयोः ) द्वन्द्वेन ( युग्मेन ) व्यञ्जितं ( प्रकाशितम् ) यद्यौवनम् ( तारुण्यम् ) तेनोज्ज्वला ( विशदा ) रुक् ( कान्तिः ) यासां, तास्तादृशीः । दिक्कन्यकाः = दिशः ( आशाः ) एव कन्यकाः ( कुमारीः ), निर्माय = विधाय । दुर्दैवाऽक्षरमालिकाम् इव = दुर्दैवस्य ( दुर्भाग्यस्य ) अक्षरमालिकाम् इव ( वर्णमालाम् इव ), भृङ्गावलीं= भ्रमरपङ्क्तिं, झगिति = झटिति, आकृष्य = अपसार्य, अम्बुजिनीजनस्य = कमलिनीगणस्य, लक्ष्मीं = शोभां, तनुते = विस्तारयति । सूर्यो रात्रौ विघटमानं कोकमिथुनं मिथः स्वोदयेन संयोज्य तद्व्याजेन पीनपयोधरयुता दिक्कुमारीर्विधाय रजन्यां मुद्रितकमलिनीमिलीनां दुर्भाग्यसूचिकामक्षरमालामिव भ्रमरावलीमपसार्य विकासनेन कमलिनीशोभां विस्तारयतीति भावः । अत्र कैतवाऽपह्नुतेरुत्प्रेक्षायाश्च मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥

लक्ष्मण—( कुतूहलपूर्वक )

प्रकाशशील सूर्य तत्क्षण ही मिलनेवाले चक्रवाकमिथुनके बहानेसे स्थूल पयोधरयुग्मसे प्रकाशित तारुण्यसे उज्ज्वल कान्तिसे सम्पन्न दिशारूप कुमारियोंका निर्माण कर दुर्भाग्यकी वर्णमालाके समान भ्रमरपङ्क्तिको झटपट हटाकर कमलिनीगणकी शोभाका विस्तार कर रहे हैं ॥ ८२ ॥

सुग्रीवः—विभीषण, पश्य पश्य ।

उन्मीलन्ति निशानिशाचरवधूनिर्वासनामान्त्रिकाः
सायं सालससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः ।
फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावली-
झाङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशवः ॥ ८३ ॥

विभीषणः—एवमेतत् । तथाहि—

---

उन्मीलन्तीति । निशानिशाचरवधूनिर्वासनामान्त्रिकाः सायं साऽलससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावलीझाङ्कारप्रणवोपदेशगुरवः तीव्रद्युतेरंशव उन्मीलन्तीत्यन्वयः ।

निशानिशाचरवधूनिर्वासनामान्त्रिकाः = निशा ( रात्रिः ) एव या निशाचरवधूः ( राक्षसी ) तस्या निर्वासनायाम् ( अपसारणे ) मान्त्रिकाः ( मन्त्रप्रयोजकाः ), तीव्रद्युतेरंशव इत्यत्र सम्बन्धः । एवं परत्राऽपि । मन्त्रप्रयोजका जना यथा राक्षसीं दूरीकुर्वन्ति तथैव सूर्यकिरणा अपि रात्रिमपसारयन्तीति भावः । सायं = सन्ध्यासमये । सालससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः = सालसम् ( आलस्यपूर्णं ) यथा तथा सुप्तं ( निद्राणम् , मुद्रितमिति भावः ) यत् पङ्कजवनं ( कमलसमूहः ) तस्य प्रोद्बोधे ( जागरणे, विकासन इति प्रकृते ) वैतालिकाः ( बोधकराः ), यथा वैतालिकाः सुप्तं जनं प्रबोधयन्ति तथैव सूर्यकिरणा अपि निमीलितं कमलवृन्दं विकासयन्तीति भावः । फुल्लत्पङ्कजकोशेत्यादिः = फुल्लन्ति ( विकसन्ति ) यानि पङ्कजानि ( कमलानि ) तेषां कोशगर्भाः ( अभ्यन्तरभागाः ) एव कुहराणि ( गह्वराणि ) तेभ्य प्रोद्भूता ( निर्गता ) या भृङ्गावली ( भ्रमरपङ्क्तिः ) तस्या झाङ्कारः ( गुञ्जितशब्दः ) एव प्रणवः ( ओङ्कारः ) तस्योपदेशे ( शिक्षणे ) गुरवः ( शिक्षकाः ) तादृशाः । तीव्रद्युतेः = उष्णांशोः, सूर्यस्येत्यर्थः । अंशवः = किरणाः, उन्मीलन्ति = प्रादुर्भवन्ति । रजन्यां निमीलितानि कमलानि यदा विकसन्ति तदा तदभ्यन्तरभागाद्ये भ्रमरा गुञ्जन्ति तदुपदेष्टारः सूर्यकिरणा इति भावः । अत्र रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

---

सुग्रीव—विभीषण ! देखो देखो ।

रात्रिरूप राक्षसीके अपसारणमें मान्त्रिक, सायङ्कालमें आलस्य पूर्ण होकर सोये हुए कमलवनको जगानेमें वैतालिक और विकसित होने वाले कमलोंके अभ्यन्तर भागरूप गह्वरोंसे निकली हुई भ्रमरपङ्क्तिके गुञ्जित शब्दरूप ओङ्कारके उपदेशमें गुरु सूर्यमयूख प्रकट हो रहे हैं ॥ ८३ ॥

विभीषण—यह ठीक है । जैसे कि—

आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव
व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भते ।
आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशा-
मुन्मीलत्तरुणप्रभाकरकरस्तोमः समुद्भासते ॥ ८४ ॥

रामः—प्रिये,

एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिनः
प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः ।

---

आयान्त्या इति । आयान्त्या दिवसश्रियः पदतलस्पर्शाऽनुभावात् इव व्योमाऽशोकतरोः नवीनकलिकागुच्छः समुज्जृम्भते । असौ उन्मीलत्तरुणप्रभाकरस्तोमः आशाकुरङ्गीदृशाम् अवतंसविभ्रमम् आतन्वन् समुद्भासत इत्यन्वयः । आयान्त्याः = आगच्छन्त्याः, दिवसश्रियः = दिनलक्ष्म्याः, पदतलस्पर्शाऽनुभावात् इव = पदतलेन ( चरणतलेन ) स्पर्शः ( आमर्शनम् ) तस्याऽनुभावात् इव ( प्रभावात् इव ), सुन्दरीपादाघातादशोकं विकसतीति कविसमयमनुरुध्येयमुक्तिः । व्योमाऽशोकतरोः = व्योम ( आकाशम् ) एव अशोकतरुः ( अशोकवृक्षः ) तस्य । नवीनकलिकागुच्छः = प्रत्यग्रकोरकस्तबकः, तद्रूपः सूर्यं इति भावः । समुज्जृम्भते = प्रादुर्भवति । दिनलक्ष्मीरूपाया नायिकायाः चरणस्पर्शादाकाशरूपस्याऽशोकवृक्षस्य नूतनकोरकस्तबकरूपः सूर्य आविर्भवतीति भावः । असौ = व्योमाऽशोकतरोर्नवीनकलिगुच्छरूपसूर्यकिरणः । उन्मीलत्तरुणप्रभाकरकरस्तोमः = उन्मीलन् ( प्रकाशमानः ) तरुणः ( नवीनः, नवोदित इति भावः ), यः प्रभाकरः ( सूर्यः ) तस्य करस्तोमः ( किरणसमूहः ), आशाकुरङ्गीदृशाम्=आशाः ( दिशः ) एव या कुरङ्गीदृशः ( मृगीनयनाः, दिगङ्गना इत्यर्थः ), तासाम् । अवतंसविभ्रमं = कर्णभूषणविलासम् , आतन्वन् = सम्पादयन् , दिगङ्गनानां कर्णालङ्काररूपः सन्निति भावः । समुद्भासते = प्रकाशते । अत्रोत्प्रेक्षारूपकयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ८४ ॥

एतत्तर्कयेति । चक्रवाकसुदृशाम् आश्वासनादायिनः प्रौढध्वान्तपयोधिमग्नजग-

---

आनेवाली दिनलक्ष्मीके मानो चरणस्पर्शके प्रभावसे आकाशरूप अशोकवृक्षका नवीन कोरक गुच्छ ( सूर्य ) प्रादुर्भूत हो रहा है । यह प्रकाशमान नवीन सूर्यका किरणसमूह, दिशारूप सुन्दरियोंके कर्णभूषणके विलासको सम्पादित करता हुआ उद्भासित हो रहा है ॥

राम—प्रिये !

चक्रवाकियोंको आश्वासन ( दिलासा ) देने वाले, निबिड अन्धकाररूप समुद्रमें डूबे हुये लोकको अवलम्बनरूप उत्सव देनेवाले, दिशारूप सुन्दरियोंके केसरके चूर्णसे मिश्रित

दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदक-
व्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥ ८५ ॥

( अपवार्य ) पश्य पश्य,

शिथिलयति सरागो यावदर्को नलिन्याः
कमलमुकुलनीवीग्रन्थिमुद्रां करेण ।

---

तीदत्ताऽवलम्बोत्सवाः दिङ्मृगदृशां काश्मीरपङ्कोदकव्यात्युक्षीचतुराः सरोरुहवन-श्रीकेलिकाराः दीप्तांऽशोः करा विकसन्ति । एतत्तर्कयेत्यन्वयः ।

चक्रवाकसुदृशां = चक्रवाकानां ( कोकानां पक्षिणाम् ) सुदृशां ( सुलोचनानां, रात्रौ पतिविरहितानां चक्रवाकीनामित्यर्थः ), आश्वासनादायिनः = पतिसंयोगाशा-प्रदानकारिणः, प्रौढध्वान्तपयोधिमग्नजगतीदत्ताऽवलम्बोत्सवाः = प्रौढध्वान्तं ( निबि-डाऽन्धकारः ) एव पयोधिः ( समुद्रः ) तस्मिन्मग्ना ( निमग्ना ) या जगती (लोकः) तस्यै दत्तः ( वितीर्णः ) अवलम्बः ( आलम्बः ) एव उत्सवः ( क्षणः ) यैस्ते । दिङ्-मृगदृशां = दिशः ( आशाः ) एव मृगदृशः ( हरिणाक्ष्यः ) दिग्वध्व इति भावः ) तासां, काश्मीरपङ्कोदकव्यात्युक्षीचतुराः = काश्मीरं ( कुङ्कुमम् ) तस्य पङ्कोदकेन ( चूर्णमिश्रितजलेन ) व्यात्युक्षी ( जलक्रीडा ), तस्यां चतुराः ( प्रवीणाः ) 'काश्मीरं कुङ्कुमेऽपि स्याट्टङ्कपुष्करमूलयोः ।' इति मेदिनी । सरोरुहवनश्रीकेलिकाराः = सरो-रुहवनस्य ( कमलवनस्य ) या श्रीः ( शोभा ) तया केलिं ( क्रीडाम् ) कुर्वन्ति ( विदधति ) इति तादृशाः । दीप्तांऽशोः उष्णांऽशोः, सूर्यस्येत्यर्थः । कराः=किरणाः, विकसन्ति = प्रकाशन्ते एतत् = वृत्तं, तर्कय = विचारय । हे सीते ! प्राभातिकाः सूर्यकिरणा रात्रौ पतिवियुक्तानां चक्रवाकवधूनामाश्वासनविधायकाः = लोकाऽन्ध-कारनिवारकाः सन्ति । रक्तवर्णैस्तैर्दिग्वध्वः कुङ्कुममिश्रजलेन क्रीडां कुर्वन्तीवेति प्रतीयते । एवं च ते कमलवनश्रिया केलिं कुर्वन्तीति भावः । अत्र प्रतीयमानोत्प्रेक्षा-रूपकयोर्मिथोऽनपेक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

शिथिलयतीति । सरागः अर्को यावत् करेण नलिन्याः कमलमुकुलनीवीग्रन्थि-मुद्रां शिथिलयति ( तावत् ) मञ्जुशब्दा प्रविकसदलिमाला गुञ्जितैः कामिनी कामि-

---

जलसे जलक्रीडामें चतुर और कमलवनकी शोभाके साथ क्रीडा करने वाले सूर्यके मयूख प्रकाशित हो रहे हैं । तुम इस बातका विचार करो ॥ ८५ ॥

( केवल सीताको सुनाकर ) देखो, देखो ।

लाल ( अथवा अनुरक्त ) सूर्य ( अथवा कोई नायक ) जब तक किरणसे (अथवा हाथसे) कमलिनीकी ( अथवा किसी नायिकाकी ) कमलमुकुलरूप वस्त्रग्रन्थिको विकसित करता है

प्रविकसदलिमाला गुञ्जितैर्मञ्जुशब्दा
जनयति मुदमुच्चैः कामिनां कामिनीव ॥ ८६ ॥

सीता—( विहस्य, विलोक्य च ) कथमयमुन्मीलित एव । ( कहं इमो उम्मीलिद् जेव्व )

पूर्वगिरिपद्मरागः प्रकटीकृतनयनशीतलस्वभावः ।

---

नामिव उच्चैः मुदं जनयतीत्यन्वयः । सरागः रक्तवर्णः, पक्षान्तरे साऽनुरागः, अर्कः सूर्यः, कश्चिन्नायकः,यावत्, करेण=किरणेन, पक्षान्तरे हस्तेन, नलिन्याः=कमलिन्याः कस्याश्चिन्नायिकायाः । कमलमुकुलनीवीग्रन्थिमुद्रां = कमलमुकुलमेव (पद्मकुड्मलम् एव ) नीवीग्रन्थिः ( स्त्रीकटीवस्त्रबन्धः ), स एव मुद्रा ( स्वरूपम् ), ताम् । शिथिलयति=श्लथयति, विकासयति, पक्षान्तरे मोचयतीति भावः । तावदेव मञ्जुशब्दा= मनोहरध्वनिः, प्रविकसदलिमाला = प्रविकसन्ती विकासं भजन्ती अलिमाला (भ्रमरपङ्क्तिः) यस्याः सा तादृशी, नलिनीति भावः । गुञ्जितैः =झङ्कारैः, कामिनी = रमणी, कामिनामिव = कामुकानामिव उच्चैः = सातिशयं, मुदं = हर्षं, जनयति = उत्पादयति । यथा साऽनुरागो नायको यदा करेण नायिकाया वसनग्रन्थिं च मोचयति तदा सा मधुरालापेन यथा तं आनन्दयति तथैव सूर्योऽपि रक्तवर्णः सन् स्वकिरणेन कमलिन्याः कमलमुकुलरूपनीवीग्रन्थिमुद्रां विकासयति तदा सा भ्रमरमधुरशब्दैस्तं प्रमोदयतीति भावः । अत्रोपमारूपकसमासोक्तीनामङ्गाङ्गिभावेन सङ्करः । मालिनी वृत्तम् ॥ ८६ ॥

पूर्वगिरिपद्मराग इति । पूर्वगिरिपद्मरागः प्रकटीकृतनयनशीतलस्वभावः कुङ्कुमकृताऽङ्गरागो नलिनीजनवल्लभो देवः ( उन्मीलितः ) इत्यन्वयः ।

पूर्वगिरिपद्मरागः = पूर्वगिरेः ( उदयपर्वतस्य ) पद्मरागः ( शोणरत्नम् ), पद्मरागमणितुल्य इति भावः । 'शोणरत्नं लोहितकः पद्मराग' इत्यमरः । प्रकटीकृतनयनशीतलस्वभावः = प्रकटीकृतः ( प्रकाशितः ) नयनयोः ( नेत्रयोः ) शीतलः (शीतः) स्वभावः ( शीलम् ) येन सः । प्रत्यग्रोदितसूर्यस्य दाहाऽजनकत्वादियमुक्तिः ।

---

तब तक मनोहरध्वनिसे युक्त तथा विस्तारको प्राप्त करने वाली भ्रमरपङ्क्तिसे युक्त कमलिनी झङ्कारोंसे कामुकोंको कामिनीकी तरह अतिशय प्रसन्न करती है ॥ ८६ ॥

सीता—( हंसकर और देखकर ) कैसे ये उदित हो हो गये । उदयपर्वतके पद्मरागरत्न, नेत्रोंमें शीतल स्वभाव प्रकट करनेवाले और केसरसे अङ्गोंमें विलेपन करनेवाले कमलिनी

कुङ्कुमकृताङ्गरागो नलिनीजनवल्लभो देवः ॥ ८७ ॥

( पुव्वगिरिपम्मराओ पअडीकिदणअणशीअलसहाओ।
कुङ्कुमकिअङ्गराओ णलिणीजणवल्लहो देवो ॥ )

रामः—( प्रकाशम् ) अये जानकि ! पश्य।

तरलतरतरङ्गभङ्गहेलावहलविलासविलोलहंसमाला।
अमरपुरतरङ्गिणीयमम्बा सुरनरमङ्गलकारिणी न दूरे ॥ ८८ ॥

( सहर्षं सीता तदेव पठति संस्कृतं प्राकृतं च )

रामः—( सहर्षम् ) वत्स लक्ष्मण ! इयमदूरे रघुकुलमङ्गलाङ्कुरप्ररोह-

---

कुङ्कुमकृताङ्गरागः = कुङ्कुमेन ( काश्मीरेण ) कृतः ( विहितः ) अङ्गरागः ( शरीररञ्जनम् ) येन सः प्रत्यग्रोदितसूर्यस्य रक्तवर्णत्वादेषोक्तिः। तादृशो नलिनीजनवल्लभः = कमलिनीजनप्रियः, देवः = द्योतनशीलः, सूर्य इति भावः। उन्मीलितः = आविर्भूतः। आर्या वृत्तम् ॥ ८७ ॥

श्रीरामो गङ्गामुद्दिश्य कथयति = तरलतरेति। तरलतरतरङ्गभङ्गहेलावहलविलासविलोलहंसमाला सुरनरमङ्गलकारिणी अम्बा इयम् अमरपुरतरङ्गिणी दूरे नेत्यन्वयः।

तरलतरेत्यादिः = तरलतराः ( चञ्चलतराः ) ये तरङ्गाः ( ऊर्मयः ) तेषां या भङ्गहेला ( चलनक्रीडा ), तस्यां बहलः ( प्रचुरः ) यो विलासः ( विलसनम् ) तस्मिन् विलोला ( अतिशयचञ्चला ) हंसमाला ( चक्राङ्गपङ्क्तिः ) यस्यां सा। पुनः सुरनरमङ्गलकारिणी = देवमानवकल्याणविधायिनी, अत एव अम्बा = माता, मातेव हितकारिणीति भावः। इयम् = एषा, अमरपुरतरङ्गिणी = देवनगरीनदी, गङ्गेति भावः। दूरे = विप्रकृष्टदेशे, न = न वर्तते। तरलतरतरङ्गवती हंसशालिनीयं भागीरथी निकट एव वहतीति भावः। पुष्पिताग्रा वृत्तम् ॥ ८८ ॥

राम इति। रघुकुलमङ्गलाऽङ्कुरप्ररोहकेदारधरणीतरङ्गिणी = रघुकुलमङ्गलस्य ( रघुवंशकल्याणस्य ) योऽङ्कुरः ( नवाविर्भावः ) तस्य प्ररोहे ( उत्पत्तौ ) या

---

कान्त सूर्यदेव ( उदित हो हो गये ) ॥ ८७ ॥

राम—( सुनाकर ) मैथिलि ! देखो।

अतिशय चञ्चल तरङ्गोंकी चलनक्रीडामें प्रचुरविलासमें बहुत ही चञ्चल हंसोंकी पङ्क्तिसे युक्त देवता और मनुष्योंकी कल्याणविधायिनी माता ये देवनदी गङ्गा दूर नहीं ( निकटमें ही हैं। ) ॥ ८८ ॥

( सीता रामकथित उसी पद्यको तथा स्वकथित प्राकृतपद्यको भी हर्षपूर्वक पढ़ती हैं। )

राम—( हर्षपूर्वक ) वत्स लक्ष्मण ! रघुवंशके कल्याणाऽङ्कुरकी उत्पत्तिमें क्षेत्रभूमिकी

केदारधरणीतरङ्गिणी सरयूः, इयं च सरयूतरङ्गशीकरशीतलीकृतपरिसरा नगरीसीमन्तमणिरयोध्या ।

लक्ष्मणः—( सहर्षम् ) अयमसौ भरतानुयातस्त्वदभिषेककृतमतिर्भगवानरुन्धतीपतिः ।

दिलीपकुलमाणिक्यं सकलाशाविकासकम् ।
आविर्भवन्तं भास्वन्तं भवन्तं संप्रतीक्षते ॥ ८९ ॥

---

केदारधरणी ( क्षेत्रभूमिः ), तस्यास्तरङ्गिणी ( नदी, जलसेचनोपयुक्तेति भावः )। सरयूतरङ्गशीकरशीतलीकृतपरिसरा = सरय्वाः ( सरयूनद्याः ) तरङ्गशीकरैः ( ऊर्मिजलकणैः ) शीतलीकृतः ( शीतीकृतः ) परिसरः ( पर्यन्तभूः ) यस्यां सा । नगरीसीमन्तमणिः = नगरीणां ( पुरीणाम् ) सीमन्ते ( केशवेशे ) मणिः (रत्नम्), सर्वनगरीश्रेष्ठेति भावः ।

लक्ष्मण इति । भरताऽनुयातः = भरताऽनुगतः । अरुन्धतीपतिः = वशिष्ठः । दिलीपकुलमाणिक्यमिति । दिलीपकुलमाणिक्यं सकलाऽऽशाविकासकम् आविर्भवन्तं भास्वन्तं भवन्तं संप्रतीक्षत इत्यन्वयः ।

दिलीपकुलमाणिक्यं = दिलीपकुलस्य ( दिलीपनृपवंशस्य ) माणिक्यं ( शोणरत्नम् ), दिलीपकुले सर्वश्रेष्ठमिति भावः । सकलाऽऽशाविकासकं = सकलानाम् ( सर्वासाम् ) आशानां ( दिशाम् ) विकासकं ( प्रकाशकम् ), रामपक्षे यशसा, सूर्यपक्षे किरणैरिति भावः । यद्वा सकलानाम् ( सर्वेषामर्थिनाम् ) आशानाम् ( अभिलाषाणाम् ) विकासकं ( पूरकमित्यर्थः ), समस्तार्थिकामपूरकमिति भावः । आविर्भवन्तं = प्रादुर्भवन्तं, भास्वन्तं = प्रकाशमानं, रामपक्षे, सूर्यं चेति पक्षान्तरम् । भासः सन्त्यस्येति भास्वांस्तम्, 'तदस्यास्त्यस्मिन्निति मतुप्' इति मतुप् 'तसौ मत्वर्थे' इति भत्वाज्जुत्वाभावः । तादृशं भवन्तं = त्वां, सम्प्रतीक्षते = प्रतीक्षां करोति समागमार्थमिति शेषः । अत्र श्लेषोऽलङ्कारः । अनुष्टुब्वृत्तम् ॥ ८९ ॥

---

नदी यह सरयू और सरयूके तरङ्गजलकणोंसे शीतल पर्यन्त भूमिसे युक्त एवम् पुरियोंके केशवेशमें मणिके समान यह अयोध्या भी निकट है ।

लक्ष्मण—( हर्षपूर्वक ) भरतसे अनुगत और आपके राज्याऽभिषेकमें बुद्धि रखनेवाले ये भगवान् अरुन्धतीपति वसिष्ठजी हैं । ये—

दिलीपवंशके माणिक्य, समस्त दिशाओंको प्रकाशित करनेवाले, प्रादुर्भूत होनेवाले सूर्यके समान आपकी प्रतीक्षा कर रहे हैं ॥ ८९ ॥

तेन पुष्पकादवतरामः।

**रामः**—वत्स ! प्रतीक्षस्वेहैव तावत्सुलभसकलमण्डलालोकमाखण्डलाशामण्डनं भगवन्तं चण्डमरीचिं नमस्यामः। ( अञ्जलिं बद्ध्वा )

प्राचीकुङ्कुमतिलकं पूर्वाचलशेखरैकमाणिक्यम्।
त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ९० ॥

( नेपथ्ये )

अये रामभद्र !

---

राम इति। सुलभसकलमण्डलाऽऽलोकं=सुलभः ( सुप्राप्यः ) सकलमण्डलस्य ( संपूर्णाऽशस्य ) आलोकः ( दर्शनम् ) यस्य, तम्। आखण्डलाऽऽशामण्डनम्=आखण्डलस्य ( इन्द्रस्य ) आशायाः ( दिशः, प्राच्या इत्यर्थः ) मण्डनं ( भूषणम् ), पूर्वदिशाया भूषणसदृशमिति भावः। चण्डमरीचिं=सूर्यम्। वयं विमानस्थ एव भगवन्तं भास्वन्तं नमस्यामः, अतः सम्प्रति कृतमवतारणेनेति भावः।

रामः सूर्यमभिवादयते—प्राचीकुङ्कुमतिलकमिति। प्राचीकुङ्कुमतिलकं पूर्वाऽचलशेखरैकमाणिक्यं त्रिभुवनगृहैकदीपं लोकैकलोचनं देवं वन्द इत्यन्वयः।

प्राचीकुङ्कुमतिलकं = प्राच्याः ( पूर्वदिशः ) कुङ्कुमतिलकं=काश्मीरविशेषकं, काश्मीरतिलकसदृशमिति भावः। पूर्वाऽचलशेखरैकमाणिक्यं=पूर्वाऽचलस्य ( उदयपर्वतस्य ) शेखरस्य ( शिरोभूषणस्य, शिरोभूषणस्थानीयस्य शिखरस्येति भावः ) एकं ( प्रधानम् ) माणिक्यम् ( शोणरत्नसदृशमित्यर्थः )। त्रिभुवनगृहैकदीपं=त्रिभुवनम् ( लोकत्रयी, स्वर्गमर्त्यपातालात्मिकेति भावः ) एव गृहं ( भवनम् ) तस्य एकम् ( अनुपमम् ) दीपं ( प्रदीपम् ), तादृशं लोकैकलोचनं=लोकस्य ( भुवनस्य ) एकम् ( अद्वितीयम् ) लोचनं ( नेत्रम् ), सति सूर्ये एव लोचनस्य दर्शनयोग्यता, अतो लोकस्याऽनुपमानं लोचनरूपमिति भावः। एतादृशं देवं=भगवन्तं, सूर्यं, वन्दे=अभिवादये। अत्र रूपकमलङ्कारः। गीतिर्वृत्तम् ॥ ९० ॥

---

इस कारण हमलोग पुष्पकविमानसे उतरें।

**राम**—वत्स ! ठहरो। यहां ही संपूर्णमण्डलका सुलभ दर्शनवाले, इन्द्रदिशा (प्राची) के भूषण भगवान् सूर्यको हमलोग प्रणाम करते हैं। ( अञ्जलि बांधकर )

पूर्वदिशाके केसरके तिलक, उदयपर्वतके शिखरके अद्वितीय माणिक्य, त्रिभुवनरूप गृहके अनुपमान प्रदीप और लोकोंके असाधारण नेत्र भगवान् सूर्यको अभिवादन करता हूँ ॥ ९० ॥

( नेपथ्यमें )

रामभद्र !

रामः—अहो अद्भुतम् !

विकासयन्ती नितरां पद्मानीव मनांसि नः ।
प्रभेव भारती कापि भानुबिम्बाद्विजृम्भते ॥ ९१ ॥

( नेपथ्ये )

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्रा-चण्डातप ! तप ! सहस्राणि शरदाम् ।

---

विकासयन्तीति । पद्मानीव नो मनांसि नितरां विकासयन्ती काऽपि भारती प्रभा इव भानुबिम्बात् विजृम्भत इत्यन्वयः ।

पद्मानीव = कमलानीव, नः = अस्माकं, मनांसि = चित्तानि, नितरां = सुतरां, विकासयन्ती = आह्लादयन्ती, काऽपि = अनिर्वचनीया, भारती = वाणी, प्रभा इव = सूर्यद्युतिरिव, भानुबिम्बात् = सूर्यमण्डलात् , विजृम्भते = प्रादुर्भवति । सूर्यमण्डलाद्विर्गता दीप्तिर्यथा कमलानि विकासयति संप्रति तथैवेयं वाण्यपि नो मनांसि विकासयतीति भावः । उपमाऽलङ्कारः । अनुष्टब्वृत्तम् ॥ ९१ ॥

यशः पूरमिति । हे सुतनुनेत्रोत्पलवनीतमस्तन्द्राचण्डातप ! यशः पूरं दूरं तनु, शरदां सहस्राणि तप । इयं त्रिजगती च युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गाः नन्दत्सुरनरभुजङ्गा आस्तामित्यन्वयः । श्लोकोऽयं चतुर्थाऽङ्काऽवसाने व्याख्यातपूर्वोऽपि मनाक्पाठभेदत्वात्पुनर्व्याख्यायते ।

हे सुतनुनेत्रोत्पलवनीतमस्तन्द्राचण्डातप = सुतनूनां ( सुन्दरीणाम् ) नेत्राणि ( नयनानि ) एव उत्पलानि ( नीलकमलानि ) तेषां वनी ( संहतिः ) तस्याः तमस्तन्द्रा ( निमीलितत्वम् ) तत्र हे चण्डातप ( हे सूर्य ! ), भयापनोदनेन सुन्दरीनयनविकासहेतो सूर्यसमप्रभ हे रामभद्रेति भावः । यशः पूरं = कीर्तिसमूहं, दूरं = विप्रकृष्टदेशपर्यन्तं, तनु = विस्तारय । एवं च शरदां = वर्षाणां, 'हायनोऽस्त्री शरत्समाः ।' इत्यमरः । सहस्राणि = दश शतानि, अपरिमितकालपर्यन्तमिति भावः ।

---

राम—अहो ! आश्चर्य है ।

कमलके समान हमारे मनको अतिशय विकासित करनेवाली अनिर्वचनीय वाणी प्रभाकी तरह सूर्यमण्डलसे प्रादुर्भूत हो रही है ॥ ९१ ॥

( नेपथ्यमें )

सुन्दरियोंके नेत्रकमलोंके विकासमें हे सूर्यरूप रामभद्र ! कीर्तिसमूहको दूर तक फैलाओ और हजारों वर्षों तक उज्ज्वलरूपवाले बनो । यह लोकत्रयी तुम्हारे गुण

इयं चास्तां युष्मद्गुणकथनपीयूषपटल-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ६२ ॥

रामः—अनुगृहीतोऽस्मि ।

( पुनर्नेपथ्ये )

अन्यच्च ते किमाशास्महे ।

सुग्रीवः—अये तात दिनकर ! परिपूर्णमनोरथ एव रामचन्द्रः । अनेन हि—

प्राप्ता निर्भरमुन्नतिर्निजगुणैराज्ञा पितुः पालिताः
सुग्रीवश्च विभीषणश्च परमां राज्यश्रियं प्रापितौ ।

---

तप = उज्ज्वलरूपो भव । इयम् = एषा, त्रिजगती च = लोकत्रयी च, स्वर्गमर्त्यपातालात्मिका चेत्यर्थः । युष्मद्गुणकथनपीयूषपटलश्रितोत्सङ्गा चतुर्थाऽङ्क एतत्पदस्थाने 'युष्मच्छरशमितलङ्केश्वरशिरःश्रितोत्सङ्गे'ति पदान्तरम् । युष्माकं ( भवताम् ) ये गुणाः ( लोकोत्तरशौर्यदाक्षिण्यलोकाऽनुरागप्रभृतयः ) तेषां कथनानि ( प्रतिपादनानि ) एव पीयूषाणि ( अमृतानि, अमृतोपमानीति भावः ) तेषां पटलं ( समूहः ) तेन आश्रितः ( संश्रितः ) उत्सङ्गः ( मध्यभागः ) यस्याः सा तादृशी अत एव नन्दत्सुरनरभुजङ्गा = नन्दन्तः ( हृष्यन्तः ) सुरनरभुजङ्गाः ( देवमनुष्यसर्पाः स्वर्गमर्त्यपाताललोकवासिन इति भावः ) यस्यां सा, तादृशी आस्ताम् = तिष्ठतु । अत्र रूपकमलङ्कारः । वृत्त्यनुप्रासश्च । शिखरिणी वृत्तम् ॥ ९२ ॥

अन्यच्चेति । आशास्महे = इच्छामः । 'आङः शासु इच्छायाम्' इति धातोर्लट् ।

सुग्रीवो रामचन्द्रस्य परिपूर्णमनोरथतां ज्ञापयति—प्राप्तेति । ( अनेन ) पितुः आज्ञा पालिता, निजगुणैः निर्भरम् उन्नतिः प्राप्ता, सुग्रीवो विभीषणश्च परमां राज्यश्रियं प्रापितौ । सुररिपुः दशकन्धरः संग्रामे यशःशेषतां नीतः । हर्षविगलद्बाष्पोल्लसल्लोचनो बन्धुगणश्च दृष्ट इत्यन्वयः ।

---

कथनरूप अमृतसमूहसे युक्त और समृद्धिका अनुभव करनेवाले देवों, मनुष्यों और सर्पोंसे सम्पन्न हो ॥ ९२ ॥

राम—मैं अनुगृहीत हूँ ।

( फिर नेपथ्यमें )

आपके लिए और क्या इच्छा करें ?

सुग्रीव—पिताजी ! दिनकर ! रामचन्द्रजी पूर्णाऽभिलाष हो हैं । इन्होंने पिताकी आज्ञाका पालन किया, अपने गुणोंसे अतिशय अभ्युदय पाया, सुग्रीव और विभीषणको

सङ्ग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुगणश्च हर्षविगलद्बाष्पोल्लसल्लोचनः ॥ ९३ ॥
तथाऽपीदमस्तु ।
आबालाद् वदनाम्बुजे तनुभृतां सारस्वतं जृम्भतां
देवे कौस्तुभधाम्नि चन्द्रमुकुटेऽद्वैता मतिः खेलतु ।

(अनेन=रामचन्द्रेण), पितुः=जनकस्य, दशरथस्येत्यर्थः, आज्ञा=आदेशः, पालिता=पूरिता, निजगुणैः=लोकोत्तरशौर्यादिस्वकीयगुणैः, निर्भरं=साऽतिशयं यथा तथा, उन्नतिः=अभ्युदयः, प्राप्ता=आसादिता । सुग्रीवः=आत्मसखः कपीश्वरः, विभीषणश्च=शरणार्थी राक्षसेश्वरश्च, परमाम्=उत्कृष्टां, राज्यश्रियं=राजलक्ष्मीं, प्रापितौ=गमितौ । सुररिपुः=देवशत्रुः, दशकन्धरः=रावणः, संग्रामे=युद्धे, यशःशेषतां=कीर्तिमात्राऽवशिष्टतां, नीतः=प्रापितः, व्यापादित इति भावः । एवमेव हर्षविगलद्बाष्पोल्लसल्लोचनः=हर्षेण (आनन्देन) विगलत् (प्रस्रवत्) यद्बाष्पम् (अश्रु), तेन उल्लसती (दीप्यमाने) लोचने (नेत्रे) यस्य सः, तादृशो बन्धुगणश्च=कुटुम्बसमूहश्च, भरतादिरिति भावः । दृष्टः=अवलोकितः । पूर्णरूपेण कृताऽर्थताद्यामस्याऽन्यत्किमाशास्यं, न किमपीति भावः । अत्र 'यशःशेषतां नीत' इत्यत्र पर्यायपरिवर्तनेन पारुष्याऽभावात्सौकुमार्यं नाम गुणः, सोदाहरणं तल्लक्षणं यथा चन्द्रालोके—'सौकुमार्यमपारुष्यं पर्यायपरिवर्तनात् । स कथाशेषतां यातः समालिङ्ग्य मरुत्सखम् ॥' इति । शार्दूलविक्रीडितं वृत्तम् ॥ ९३ ॥

आबालादिति । आ बालात् तनुभृतां वदनाऽम्बुजे सारस्वतं जृम्भताम् । देवे कौस्तुभधाम्नि चन्द्रमुकुटे च अद्वैता मतिः खेलतु । वाग्देव्या सह मुक्तवैरसरसा इयं लक्ष्मीः शेषस्य फणाञ्चलेषु देवीव सतां सद्मसु सततं दीप्यादित्यन्वयः ।

आबालात्=शिशोरारभ्य, शिशुपर्यन्तं वा, यद्वा आ बालादित्यत्र भावप्रधानो-निर्देशः । बाल्यावस्थात आरभ्येति भावः । तनुभृतां=शरीरिणां, मनुष्याणामि-त्यर्थः । वदनाऽम्बुजे=मुखकमले, सारस्वतं=शास्त्रं, सरस्वत्या इदमिति 'तस्येदम्' इत्यण् । जृम्भतां=वर्द्धताम् । देवे=द्योतनशीले, कौस्तुभधाम्नि=कौस्तुभाख्यम-णिधारके, विष्णावित्यर्थः । चन्द्रमुकुटे च=चन्द्रशेखरे च, शङ्करे चेति भावः ।

महाराज बनाया, देवशत्रु रावणको युद्धमें कीर्तिशेष बना डाला और हर्षाऽश्रुपूर्ण नेत्रोंसे युक्त भरत आदि बन्धुओंका साक्षात्कार भी कर लिया ॥ ९३ ॥

तो भी यह हो—

बालकसे लेकर सब लोगोंके मुखकमलमें शास्त्रका संवर्द्धन हो । भगवान् विष्णु और शङ्करमें अभेदबुद्धि क्रीडा करती रहे । सरस्वतीके साथ द्रोह का परित्याग कर लक्ष्मी

वाग्देव्या सह मुक्तवैशसरसा देवीव दीव्यादियं
शेषस्येव फणाञ्चलेषु सततं लक्ष्मीः सतां सद्मसु ॥ ९४ ॥

रामः—तदागच्छत, पुष्पकादवतीर्य गुरुं बन्धुजनं पौरांश्चानन्दयामः ।

( इति सर्वे पुष्पकादवतरन्ति )

जायन्तामविरामरामचरितक्रीडाभिरामाः सता-
मुन्मीलन्नवमल्लिकाविरचितस्रग्दामरम्या गिरः ।

---

अद्वैता = द्वैतरहिता, भेदवर्जिता, एकात्मिकेति भावः । मतिः = बुद्धिः, खेलतु = क्रीडतु । हरिहरैक्यरूपा मतिर्हृदयफलके विलसत्विति भावः । वाग्देव्या = सरस्वत्या, सह = समं, मुक्तवैशसरसा = मुक्तः ( त्यक्तः ) वैशसे ( द्रोहे, लक्षणयैषोऽर्थः ) रसः ( अनुरागः ) यया सा । तादृशी सती, इयम् = एषा, बुद्धिस्था, लक्ष्मीः = कमला, शेषस्य = अनन्तस्य नागराजस्य, फणाञ्चलेषु = स्फटाप्रान्तेषु, विद्यमानेति शेषः । देवी इव = द्योतनशीला पृथिवी इव, सतां = सज्जनानां, सद्मसु = भवनेषु, सततं = नित्यं, दीव्यात् = शोभमाना भूयात् । बालादीनां सर्वेषामपि जनानां शास्त्राभ्यासङ्गो भवतु ॥ वैष्णवाः शैवाश्च हरिहरयोर्भेदभावनां परिहृत्योपासनापरायणा भवन्तु । लक्ष्मीश्च सरस्वत्या समं विद्वेषं वर्जयित्वा शेषफणामण्डले धरणीव सज्जनभवनेषु नित्यं भासमाना भूयादिति भरतवाक्यत्वेनैका शुभाशंसा अत्रोपमाऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९४ ॥

जायन्तामिति । उन्मीलन्नवमल्लिकाविरचितस्रग्दामरम्याः सतां गिरः अविरामरामचरितक्रीडाऽभिरामा जायन्ताम् । पेशलधियो याः कण्ठे निवेश्याऽपि रोमाञ्चलीलाऽञ्चिताः (सन्तः) कान्ताबाहुलताविलासमहिमाश्लेषात् तृणं मन्वत इत्यन्वयः ।

उन्मीलन्नवमल्लिकाविरचितस्रग्दामरम्याः = उन्मीलन्त्यः ( विकसन्त्यः ) या नवमल्लिकाः ( सप्तलाः, नवमालिकापुष्पाणि, हिन्दीभाषायां नेवारीतिनाम्ना विख्यातानि ) ताभिर्विरचितानि ( निर्मितानि ) यानि स्रग्दामानि ( पुष्पमालाः ) तानीव रम्याः ( मनोहराः ) । सतां = सज्जनानां, गिरः = वाण्यः, अविरामरामचरितक्रीडाऽभिरामाः = अविरामा ( अवसानरहिता, अनन्तेति भावः ) रामचरिते ( रामचन्द्रचरित्रे ) या क्रीडा ( विलासः ), तया अभिरामाः ( मनोरमाः ), जाय-

---

सज्जनोंके भवनोंमें, जैसे पृथिवी शेषनागके फणाञ्चलोंमें रहती हैं वैसी तरह निरन्तर शोभित होकर रहें ॥ ९४ ॥

राम—तब आओ, पुष्पकसे उतरकर, गुरुजी, बन्धुजन और नागरिकोंको आनन्दित करें ।

( सब पुष्पकसे उतरते हैं )

विकसित नवमल्लिका पुष्पोंसे रचित मालाओंके समान सज्जनोंकी वाणियां रामचरित्रमें

याः कण्ठेऽपि निवेश्य पेशलधियो रोमाञ्चलीलाञ्चिताः
कान्तावाहुलताविलासमहिमाश्लेषांस्तृणं मन्वते ॥ ९५ ॥

( इति निष्क्रान्ताः सर्वे )

इति श्रीपीयूषवर्षापरनामक-श्रीजयदेवकविविरचिते प्रसन्न-
राघवे नाम नाटकरत्ने सप्तमोऽङ्कः ।

---

न्तां = भवन्तु । पेशलधियः = पटुबुद्धयो जनाः, 'चारौ दक्षे च पेशल' इत्यमरः । याः = सतां गिरः, कण्ठे = गले, निवेश्याऽपि = निधायाऽपि, अर्थमननुसन्धायाऽपि, निगदपाठमात्रेणाऽपीति भावः । रोमाञ्चलीलाञ्चिताः = हर्षपुलकिताः सन्तः इति भावः, कान्तावाहुलताविलासमहिमाश्लेषान् = कान्तायाः ( प्रियायाः ) यो बाहुलताविलासः ( भुजवल्लीविलसनम् ) तस्य ये महिमाश्लेषाः ( गाढालिङ्गनानि ), तान् । तृणं = तृणसमानुपेक्षणीयानिति भावः । मन्वते = विचारयन्ति । सज्जना अतिरमणीयाः स्वगिरो रामकथावर्णन उपयुञ्जन्तु । निपुणबुद्धयो जना अर्थानुसन्धानमन्तरेणाऽपि रामकथाप्रतिपादनात्मिका गिरोऽभ्यस्य हर्षप्रकर्षेण पुलकिताः सन्तः प्रियतमागाढालिङ्गनमपि न बहु मन्यत इति भावः । इतीदं भरतवाक्यत्वेनोपन्यस्तं द्वितीयं पद्यम् ।

अत्रोपमाऽलङ्कारः । कण्ठे निवेश्यापीत्यत्र किमुताऽर्थाऽनुसन्धानेनेति कैमुतिकन्यायेनाऽर्थापत्त्यलङ्कारश्चेति द्वयोरलङ्कारयोर्मिथोऽनेपक्षया स्थितेः संसृष्टिः । शार्दूलविक्रीडितं वृत्तम् ॥ ९५ ॥

सम्भ्रमभ्रमनिबन्धनं कृतौ जातमत्र मम दूषणं भवेत् ।
तद्विहाय गुणमात्रदर्शका मर्षयन्तु विबुधा दयालवः ॥ १ ॥

इति श्रीशेषराजशर्मप्रणीतायां चन्द्रकलाऽभिख्यायां प्रसन्नराघव-
व्याख्यायां सप्तमोऽङ्कः ।

दामोदराऽङ्घ्रिसरसीरुहभक्तिभाजं वाराणसीपुररतिं पशुपाशमुक्तम् ।
शेषप्रसादितपदं द्विजराजभालं गङ्गाधरं गुरुवरं च नमामि नित्यम् ॥

---

अनन्त विलाससे मनोरम हों । निपुण बुद्धिसे सम्पन्न जन जिन वाणियोंको कण्ठमें रखकर भी हर्षसे रोमाञ्चयुक्त होते हुए प्रियाके गाढ आलिङ्गनोंको भी तृणतुल्य विचार करते हैं ॥

( सब जाते हैं । )

इति सप्तम अङ्क ।

# टिप्पणी ( नोट्स )

## प्रथम अङ्क

पृ. १—प्रसन्नराघवम् = प्रसन्नो राघवो यस्मिंस्तत् प्रसन्नराघवं नाम नाटकम्। शत्रुहननपूर्वक सीताप्राप्तिसे प्रसन्न होनेवाले रामचन्द्रजीका चरित्र जिस नाटकमें वर्णित है उसका नाम 'प्रसन्नराघव नाटक' है।

पृ. २—आकल्पमित्यादि—'आकल्पम्' इत्यादि तीन श्लोक मङ्गलाचरणके लिए प्रयुक्त नान्दीके रूपमें लिखे गये हैं। इनमें देवता, ब्राह्मण और राजा आदिकी स्तुति की गई है। इनमें बारह वा आठ पद हैं। यहाँपर पदसे श्लोकपाद वा विभक्त्यन्त पदका ग्रहण किया जाता है। प्रस्तुत ग्रन्थमें तीन श्लोकोंमें बारह पाद होनेसे यह द्वादशपदा नान्दी हुई है।

पृ. ११—प्रत्यङ्गम्। इस श्लोकमें कविने अपनी चित्रकाव्यपटुताका प्रदर्शन किया है। इसमें आद्यक्षरको लेकर छः छः अक्षरोंको छोड़कर सप्तम सप्तम अक्षरका संकलन करते जानेपर 'प्रसन्नराघव' नाम प्रकाशित होता है।

पृ. २२-२३—दो श्लोकोंके द्वारा कविका गोत्र कौण्डिन्य, उनके पिताका नाम महादेव और माताका नाम सुमित्रा था इस बातका पता चलता है। अतएव चन्द्रालोककार पीयूषवर्ष जयदेव और प्रसन्नराघवकार एक ही व्यक्ति हैं ऐसा प्रतीत होता है। गीतगोविन्दकार जयदेवकी माताका नाम रामा वा राधादेवी और पिताका नाम भोजदेव था और वे उत्कल ब्राह्मण थे। वे वङ्गदेशाधीश्वर लक्ष्मणसेनके सभासद् थे। उनका समय विक्रमका द्वादश शतक माना गया है। प्रसन्नराघवकार विक्रमकी तेरहवीं शताब्दीके अन्त में और चौदहवीं शताब्दीके प्रारम्भमें हुए हैं ऐसा प्रतीत होता है।

प्रसन्नराघवकार और तत्त्वचिन्तामणिके आलोकव्याख्याकार एक ही जयदेव हैं यह मत भ्रमपूर्ण है। आलोककार 'पक्षधर' पदवीवाले जयदेव विक्रमकी सोलहवीं शताब्दीमें हुए थे। विशेष बात संस्कृतके 'उपोद्घात' में देखिए।

प्रसन्नराघवकार जयदेव मैथिल विद्वानोंके मतसे मैथिल थे। कोई कहते हैं कि वे विदर्भके कुण्डिनपुरमें रहनेवाले दाक्षिणात्य ब्राह्मण थे।

पृ. २४—यस्याश्चोरश्चिकुरनिकरः यह श्लोक संस्कृत साहित्यमें बहुत प्रसिद्ध है। इसमें महाकविने कवितामें कामिनीका आरोप कर भूषणोंके तौरपर बहुतेरे

प्राचीन कवियोंका उल्लेख किया है। 'चोर' कहनेसे 'चौरपञ्चाशिका' और 'विक्रमाङ्क-चरित' के कर्ता बिह्लण कविका बोध होता है। ये विक्रमकी बारहवीं शताब्दीमें काश्मीर देशमें उत्पन्न हुए थे। 'मयूर' कहनेसे सूर्यशतककर्ता मयूर कविका बोध होता है। ये बाणभट्टके साले ( किसी के मतमें ससुर ) थे। ये विक्रमकी आठवीं शताब्दीमें विद्यमान थे।

'भास' कवि स्वप्नवासवदत्त आदि १३ नाटकोंके कर्ता थे इनका समय विक्रमपूर्व पञ्चमशतक माना जाता है।

'कालिदास' 'अभिज्ञानशाकुन्तल, मेघदूत और रघुवंश' आदि नाटक और काव्यादि ग्रन्थोंके कर्ता, संस्कृतभाषाके सर्वश्रेष्ठ कवि थे। ये शकाराति भूपाल-चूडामणि विक्रमादित्यके नवरत्नोंमें अन्यतम उज्ज्वल रत्न थे, अतः इनका दो हजार सालसे पूर्व ही स्थितिकाल माना जा सकता है।

'हर्ष' पदसे नैषधीयचरित महाकाव्यके कर्ता श्रीहर्षका बोध होता है। ये विक्रमकी तेरहवीं शताब्दीमें हुए थे।

'बाण' पदसे 'हर्षचरित' और 'कादम्बरी' के रचयिता महाकवि बाणभट्टका निर्देश होता है। ये मयूर कविके समसामयिक थे।

पृ. ३३—दाल्भ्यायनः = दल्भस्य गोत्राऽपत्यं पुमान् दाल्भ्यः। दल्भऋषिके गोत्राऽपत्य अर्थमें 'गर्गादिभ्यो यञ्' इस सूत्रसे यञ् प्रत्यय होनेसे 'दाल्भ्य' पद बनता है। गर्गादि गणमें दल्भ शब्दका पाठ है। 'दल्भस्य युवाऽपत्यं पुमान्' ऐसा विग्रह कर दाल्भ्यसे युवाऽपत्य अर्थमें 'यञिञोश्च' इस सूत्रसे फक् प्रत्यय होकर 'दाल्भ्यायन' पद सिद्ध होता है। फलतः 'जीवति तु वंश्ये युवा' इस सूत्रके अनुसार दल्भऋषिकी जीविताऽवस्थामें उनके पौत्रके अपत्य 'दाल्भ्यायन' कहे जाते हैं। ये याज्ञवल्क्य ऋषिके छात्र थे।

पृ. ३४—ब्रह्मविद्यायाम्='ब्रह्मप्रतिपादिका विद्या ब्रह्मविद्या' इस विग्रहसे मध्यम-पदलोपी समास होनेपर 'ब्रह्मविद्या' पदकी सिद्धि होती है, अर्थात् शुद्ध चैतन्यरूप ब्रह्मका प्रतिपादन करनेवाली विद्या 'ब्रह्मविद्या' कही जाती है। इसे वेदान्त भी कहते हैं।

पृ. ३९—घुणाक्षरन्यायः='घुण' ( घुन ) नामका एक कीड़ा होता है। वह काष्ठको काटता है। संयोगवश उस काष्ठमें अक्षरका आकार देखा जाता है। संयोगवश किसी कार्यके होनेपर उसमें इस न्याय ( कहावत ) का प्रयोग किया जाता है।

पृ. ६०—'अयेऽलङ्केश' यहाँपर 'अये! ते केशविग्रस्तशेखरालोकनेन अलम्' इस प्रकार अन्वय करनेपर 'अरे! केशोंसे गिरे हुए शिरोभूषणको देखनेसे तुम्हारा साध्य सिद्ध नहीं होता है और 'अये लङ्केश! विग्रस्तशेखरालोकनेन ते समयो

याति' इस प्रकार पदच्छेदपूर्वक अन्वय करने पर 'अरे लङ्कापते! गिरे हुए शिरोभूषणको देखनेसे तुम्हारा समय जा रहा है' इस प्रकार अर्थ निकलता है। इसी अर्थकी संभावना कर अपने पहचाने जानेकी संभावनासे पहले रावण सिटपिटा जाता है। यहाँपर कविने चमत्कार दिखलाया है।

पृ. ७५—तारतम्यम्। दोनोंके बीचमें एकका उत्कर्ष दिखलानेके लिए 'द्विवचनविभज्योपपदे तरबीयसुनौ' इस पाणिनिसूत्रसे तरप् और ईयसुन् प्रत्यय होता है, और बहुतोंके बीचमें एकका उत्कर्ष दिखलानेके लिए 'अतिशायने तमबिष्ठनौ' इस सूत्रसे तमप् और इष्ठन् प्रत्यय होता है; सो यहाँपर 'तरश्च तमश्च तरतमौ, तयोर्भावः तारतम्यम्' अर्थात् तर और तमका द्वन्द्व समास करके भाव अर्थमें 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इस सूत्रसे ष्यञ् प्रत्यय करनेपर 'तारतम्य' पद बनता है। इसका अर्थ हुआ न्यूनाऽधिक भाव।

पृ. ८५—जनकराजस्य निवेदयावः। निवेदन क्रियाके योगमें जनकराज शब्दको सम्प्रदान संज्ञा होकर चतुर्थीकी प्राप्ति थी, पर 'कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव' इस नियमसे षष्ठी हो गई।

## द्वितीय अङ्क

पृ. ८८—कौशिकः='कुशिकस्य गोत्राऽपत्यं पुमान्' इस विग्रहसे 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इस सूत्रसे अण् प्रत्यय होकर 'कौशिक' पद बना है। कुशिक वंशमें उत्पन्न होनेके कारण विश्वामित्र ऋषिको 'कौशिक' कहते हैं।

पृ. ९६—विश्वामित्रः='विश्वस्य मित्रम्' ऐसा विग्रह कर षष्ठी तत्पुरुष समास करनेपर 'मित्रे चर्षौ' इस सूत्रसे दीर्घ होकर ऋषिके अर्थमें विश्वामित्र पद निष्पन्न हुआ है। ऋषि भिन्न अर्थमें विश्वमित्र होता है।

पृ. ९७—याज्ञवल्क्यस्य='यज्ञवल्कस्य गोत्राऽपत्यं पुमान्' ऐसा विग्रह कर यज्ञवल्क शब्द से 'गर्गादिभ्यो यञ्' इस सूत्रसे यञ् प्रत्यय होकर याज्ञवल्क्य पद बनता है। यज्ञवल्क ऋषिके वंशमें उत्पन्न ऋषिको 'याज्ञवल्क्य' कहते हैं। ये उपनिषत्प्रसिद्ध याज्ञवल्क्य ऋषि ब्रह्मविद्या तथा योगशास्त्रके आचार्य थे। इन्होंने धर्मशास्त्रमें 'याज्ञवल्क्यस्मृति' नामक ग्रन्थका भी प्रणयन किया है, जिसमें विज्ञानेश्वरकी सुप्रसिद्ध 'मिताक्षरा' नामकी टीका मिलती है।

पृ. १२२—ख्लपयति='ष्णा शौचे' इस धातुसे णिच् होकर लट्के प्रथम पुरुषके एक वचनका यह रूप है। उपसर्गरहित 'स्ना' धातुका 'ग्लास्नावनुवमां च' इससे वैकल्पिक मित्व होकर यहाँपर 'मितां ह्रस्वः' इससे ह्रस्व हुआ है। एक पक्षमें 'स्नापयति' ऐसा रूप भी होता है।

## तृतीय अङ्क

पृ. १४१—महयामि=चुरादिके 'मह पूजायाम्' इस धातुसे लट्के उत्तम पुरुषके एकवचनका प्रयोग है। अदन्त धातु होनेसे अल्लोपका स्थानिवद्भाव होकर उपधावृद्धि नहीं हुई है।

पृ. १५४—राजर्षे=ऋषति वेदं जानाति पश्यतीति वा ऋषिः। इस प्रकार 'ऋषि गतौ' धातुसे औणादिक इन् प्रत्यय होकर ऋषि पद बनता है। वेदमन्त्रद्रष्टाको 'ऋषि' कहनेकी प्राचीन परिपाटी है। यहाँ पर 'राजा चाऽसौ ऋषिः राजर्षिः' जनक राजा होकर वेदमन्त्रके द्रष्टा थे इसलिए उन्हें राजर्षि पदसे व्यवहार किया गया है। सात प्रकारके ऋषि होते हैं, जैसे कि—

१ महर्षि—व्यास आदि।
२ परमर्षि—भेल आदि।
३ देवर्षि—कण्व आदि।
४ ब्रह्मर्षि—वसिष्ठ आदि।
५ श्रुतर्षि—सुश्रुत आदि।
६ राजर्षि—ऋतुपर्ण आदि।
७ काण्डर्षि—जैमिनि आदि।

पृ. १५४—प्रतीहारी=द्वारपालिका स्त्री। 'प्रतिह्रियतेऽनया' इस विग्रहसे 'अकर्तरि च कारके संज्ञायाम्' इस सूत्रसे घञ् प्रत्यय, 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इससे दीर्घ और गौरादिगणमें पठित होनेसे 'षिद्गौरादिभ्यश्च' इस सूत्रसे ङीष् होकर 'प्रतीहारी' शब्द बनता है।

## चतुर्थ अङ्क

पृ. १९७—ताण्ड्यायनः=तण्डस्य गोत्रापत्यं पुमान् ताण्ड्यः, युवाऽपत्यं पुमान् ताण्ड्यायनः। 'दाल्भ्यायन' के समान यञन्त ताण्ड्यसे फक् प्रत्यय होकर 'ताण्ड्यायन' शब्द बना है।

भृगुमार्तण्ड=‘भृगोरपत्यानि पुमांसो भृगवः’ भृगुशब्दसे ‘ऋष्यन्धकवृष्णिकुरुभ्यश्च’ इस सूत्रसे गोत्राऽपत्यमें जो अण् प्रत्यय हुआ था, बहुत्वविवक्षामें उसका ‘अत्रिभृगुकुत्सवसिष्ठगोतमाऽङ्गिरोभ्यश्च’ इस सूत्रसे लुक् होता है।

भृगुषु मार्तण्डस्तत्सम्बुद्धौ। भृगुवंशमें उत्पन्न ऋषियोंमें सूर्य के समान हे तेजस्विन् यह इसका अर्थ हुआ।

पृ. १९९—भुजा=यहां महाकविने स्त्रीलिङ्ग 'भुजा' शब्द लिखा है। यद्यपि अमरसिंहने 'भुजबाहू प्रवेष्टो दोः' इसमें पुंलिङ्ग भुजशब्द ही लिखा है, और 'भुजन्युब्जौ पाण्युपतापयोः' इस सूत्रमें भी पुंलिङ्ग भुजशब्दका ही निपातन किया गया है। परन्तु शिष्टोंने पुंलिङ्ग और स्त्रीलिङ्ग दोनोंमें इसका प्रयोग किया है, इसलिए 'भुज पालनाऽभ्यवहारयोः' इस धातुसे 'भुजतीति' ऐसा विग्रह कर

'इगुपधज्ञाप्रीकिरः कः' इस सूत्रसे क प्रत्यय होकर टाप् प्रत्ययद्वारा 'भुजा' पदकी सिद्धि होती है। अतएव मेदिनीकोशमें भी 'अथो भुजा। द्वयोर्बाहौ करे।' ऐसा लिखा गया है।

पृ. २०१—स्वस्तिवाचनिकाः = 'स्वस्तिवाचनमस्ति एषां ते' ऐसा विग्रह कर 'अत इनिठनौ' इस सूत्रसे ठन् प्रत्यय होकर स्वस्तिवाचनिक शब्द बनता है। जो स्वस्तिवाचन करते हैं उन्हें 'स्वस्तिवाचनिक' कहते हैं।

पृ. २०२—मारीचदमनः = मारीचस्य दमनः मारीचको दमन करनेवाला। यहां-पर णिजन्त 'दमु उपशमने' इस धातुसे नन्द्यादि होनेसे 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इस सूत्रसे ल्युप्रत्यय होकर 'दमन' शब्द बना है। कृदन्त दमन शब्दके योगमें 'कर्तृकर्मणोः कृति' इस सूत्रसे कर्ममें षष्ठी होकर षष्ठीतत्पुरुष समास हुआ है।

पृ. २२१—भगवन्तम् = भगवच्छब्दकी निरुक्ति इस प्रकारसे की गई है—

'उत्पत्तिं च स्थितिं चैव लोकानामगतिं गतिम्।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति॥'

अर्थात् लोकोंकी उत्पत्ति, स्थिति, अगति, गति, विद्या और अविद्याको जो जानता है उसे 'भगवान्' कहना चाहिए।

अथवा 'भग' शब्दके छः अर्थ हैं—समग्र, ऐश्वर्य, वीर्य, यश, श्री, ज्ञान और वैराग्य। भगानि सन्ति यस्मिन् स भगवान्, जिसमें ये छः रहते हैं उसे 'भगवान्' कहते हैं। यहां भग शब्दसे मतुप् प्रत्यय हुआ है।

## पञ्चम अङ्क

पृ. २५०—कैकेय्याः। केकयस्याऽपत्यं स्त्री कैकेयी। केकय देशके राजाकी पुत्री कैकेयी हुई। यहाँ पर 'जनपदशब्दात्क्षत्रियादञ्' इससे अञ् प्रत्यय होकर 'केकयमित्रयुप्रलयानां यादेरियः' इस सूत्रसे इय् आदेश होकर 'टिड्ढाणञ्' इत्यादि सूत्रसे ङीप् होकर 'कैकेयी' शब्द निष्पन्न होता है।

पृ. २७८—त्रिचतुरैः = त्रीणि चत्वारि वा त्रिचतुराणि तैः। यहाँ पर त्रि और चतुर् शब्दका 'संख्ययाऽव्ययासन्नादूराऽधिकसंख्याः संख्येये' इस सूत्रसे बहुव्रीहि समास और 'बहुव्रीहौ संख्येये डजबहुगणात्' इससे समासाऽन्त डच् प्रत्यय होकर 'त्रिचतुर' शब्दकी सिद्धि होती है। त्रिचतुरैरेवाऽहोभिः = तीन चार दिनोंसे ही, 'अपवर्गे तृतीया' इस सूत्रसे कालके अत्यन्त संयोगमें तृतीया विभक्ति हुई है।

पृ. २८१—सौमित्रिणा। सुमित्राया अपत्यं पुमान् सौमित्रिस्तेन। सुमित्राके पुमपत्यको सौमित्रि कहते हैं। यहाँपर 'स्त्रीभ्यो ढक्' इस सूत्रसे ढक् प्रत्ययकी प्राप्ति थी, पर उसे बाधित कर 'बाह्वादिभ्यश्च' इस सूत्रसे इञ् प्रत्यय हो गया है।

पृ. २८९—कल्लोलिनीकान्तः=कल्लोलाः सन्ति यासां ताः कल्लोलिन्यः। जिसमें कल्लोल ( महातरङ्ग ) रहते हैं उसे कल्लोलिनी ( नदी ) कहते हैं। 'कल्लोलिनीनां कान्तः' कहनेसे नदियोंके पति समुद्र समझे जाते हैं। 'अत इनिठनौ' इस सूत्रसे इनिप्रत्यय और 'ऋन्नेभ्यो ङीप्' इससे ङीप् होकर कल्लोलिनी शब्द बनता है।

पृ. १९२—राक्षसपतिः=रक्षांसि एव राक्षसाः, क्लीबलिङ्गी 'रक्षस्' शब्दसे 'प्रज्ञादिभ्यश्च' इस सूत्रसे स्वार्थ ( प्रकृत्यर्थ ) में अण् प्रत्यय होकर राक्षस शब्द बनता है। 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेऽपि' इस परिभाषासे यह पुंलिङ्गी हुआ है। राक्षसानां पतिः, अभिप्राय रावणमें है।

पृ. २९३—जटायुना=जटायु शब्द उकारान्त और सान्त दोनों प्रकारका है।

पृ. ३००—हनूमत्संयुक्ता=प्रशस्तौ हनू यस्य स हनूमान्। उत्तम जबड़ेवाले, तात्पर्य वायुपुत्र सुग्रीवसचिवमें है। हनुशब्दसे मतुप् प्रत्यय होकर 'शरादीनां च' इस सूत्रसे दीर्घ होकर हनूमत्पदकी सिद्धि होती है। हनूमता संयुक्ताः।

नेदीयसी=अतिशयेन निकटवर्तिनी। बहुत निकट ( नजदीक ) पर रहनेवाली। अन्तिक शब्दसे ईयसुन् प्रत्यय होकर 'अन्तिकबाढयोर्नेदसाधौ' इस सूत्रसे नेद आदेश होकर स्त्रीत्वविवक्षामें 'नेदीयसी' शब्दकी सिद्धि होती है।

## षष्ठ अङ्क

पृ. ३०६—कृशिमानम्=कृशस्य भावः कृशिमा तम्। दुर्बलताको कृशिमा कहते हैं। 'पृथ्वादिभ्य इमनिज्वा' इस सूत्रसे इमनिच्प्रत्यय होकर 'र ऋतो हलादेर्लघोः' इस सूत्रसे ऋके स्थानमें र आदेश होकर 'कृशिमन्' शब्दकी सिद्धि हुई है।

पृ. ३१०—रत्नगर्भा=रत्नानि गर्भे यस्याः सा ऐसा विग्रह कर बहुव्रीहि समास करनेपर 'रत्नगर्भा' पद बनता है। 'रत्नगर्भा' पृथिवीको कहते हैं। 'सप्तमी विशेषणे बहुव्रीहौ' इस सूत्रसे ज्ञापित कहीं कहीं पर व्यधिकरण बहुव्रीहि भी होता है, सो यहाँपर व्यधिकरण बहुव्रीहि समास हुआ है।

पृ. ३२३—आर्यपुत्रः=रामको उद्देश्य कर सीताका आर्यपुत्र कहना 'पत्नी चार्येति संभाष्या आर्यपुत्रेति यौवने।' इत्यादि भरताचार्यकी उक्तिके अनुसार है। 'आर्यस्य पुत्रः' यहांपर आर्यपदसे श्वशुर अभिप्रेत हैं।

पृ. ३३२—'मन्दोदरीमपि विमुञ्चति राज्यमेतत्...' यह श्लोक निम्नलिखित श्लोकसे कुछ मिलता जुलता है—

> 'युष्मत्कृते खञ्जनमञ्जुलाक्षि! शिरो मदीयं यदि याति, यातु।
> छिन्नानि नूनं जनकात्मजार्थे दशाननेनाऽपि दशाननानि॥'

पृ. ३३८—वैदग्धी=रचनानैपुण्यम्। विदग्धस्य भावः कर्म वा वैदग्ध्यं वा वैदग्धी, विदग्ध शब्द से 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इस सूत्रसे ष्यञ

प्रत्यय होकर 'हलस्तद्धितस्य' इससे यकारका लोप कर 'षिद्गौरादिभ्यश्च' इससे ङीष् प्रत्यय होकर 'वैदग्धी' पद बनता है। संविधानस्य वैदग्धी।

पृ. ३४१—विधिवैधुरी=विधुरस्य भावो वैधुर्यं वा वैधुरी, वैदग्धी शब्दके सदृश इसकी व्युत्पत्ति जाननी चाहिए। विधेर्वैधुरी।

पृ. ३४२—पद्मरागशकलखण्डकम्='मानिक' नामके रत्नका टुकड़ा।

पृ. ३४६—मन्दभागिन्याः=मन्दभागोऽस्या अस्तीति मन्दभागिनी, तस्याः। मन्दभागिन्या मम कृते=मन्दभाग्यवाली मेरे लिए। यहाँपर मन्दश्चाऽसौ भागो मन्दभागः, इस प्रकार कर्मधारय समास कर फिर इनि प्रत्यय करनेपर दो वृत्तियाँ करनी पड़ती हैं, यह गौरव होता है, अतएव कहा गया है—'न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः।' अर्थात् बहुव्रीहि समाससे उस अर्थका बोध हो तो कर्मधारय करके मत्वर्थीय प्रत्यय नहीं करना चाहिए। परन्तु यहाँ अपने मन्दभाग्यका नित्ययोग दिखानेके लिए गौरवपक्षका ग्रहण करनेमें भी दोष नहीं समझना चाहिए।

पृ. ३५२—मेघनादेन=मेघस्येव नादो यस्य, तेन। मेघके समान शब्द करनेके कारण 'मेघनाद' शब्द इन्द्रजित्‌का वाचक हुआ है, यह योगरूढ शब्द है।

पृ. ३५५—दधिमुखम्=दधिमुख सुग्रीवके श्वशुरका नाम था। ये मधुवनके रक्षक थे।

## सप्तम अङ्क

पृ. ३५७—पुलस्त्यशिष्यः=पुलस्त्यस्य शिष्यः। पुलस्त्य रावणके पितामह थे और उनके पुत्र 'विश्रवा' रावणके पिता थे।

पृ. ३६४—प्रहस्तः=प्रहस्तको रामायणमें रावणका सेनापति कहा है।

पृ. ३७८—नाकपतेः=सुखको 'क' कहते हैं, उसका विरोधी दुःख 'अक' कहलाता है। 'न विद्यते अकं यस्मिन्' ऐसा विग्रह कर नञ् बहुव्रीहि समास होकर नाकपदकी सिद्धि होती है। स्वर्गको नाक कहते हैं। यहाँपर 'न लोपो नञः' इस सूत्रसे नकारका लोप प्राप्त था पर 'नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या' इस सूत्रसे नकारका प्रकृतिभाव हो गया है। नाकस्य पतेः।

पृ. ३९०—मैवं वादीः=एवं मा वादीः=ऐसा मत कहो। यहाँपर माङ्‌का योग होनेसे 'माङि लुङ्' इस सूत्रसे सर्वलकाराऽपवादी लुङ् हुआ है। 'न माङ्योगे' इससे अट् आगम नहीं हुआ।

पृ. ४०७—दिवौकसः='द्यौरोको येषां ते' ऐसा विग्रहकर बहुव्रीहि समाससे 'दिवौकस्' शब्द बनता है, परन्तु दिव्‌शब्द होनेसे 'दिवोकस्' होना था 'पृषोदरा-

दीनि यथोपदिष्टम्' इस सूत्रसे औकारका निपातन कर इस शब्दकी साधुता होती है। मुग्धबोधकारके मतानुसार 'दिव'शब्द अकारान्त भी माना गया है। अतः उनके मतमें 'दिवम् ओको येषां ते' ऐसा विग्रह बनता है, इसमें निपातन-द्वारा साधुता सिद्ध करनेकी झंझट नहीं पड़ती है।

पृ. ४२५—किष्किन्धानाथमतन् = किमपि ( वानरसैन्यम् ) धत्ते ऐसा विग्रह कर 'आतोऽनुपसर्गे कः' इससे कप्रत्यय, 'अजाद्यतष्टाप्' इससे टाप्, और पारस्करगणमें पाठ होनेके कारण निपातनसे किम् शब्दका द्वित्व, मकारका लोप, सुट् और षत्व होकर किष्किन्धाशब्दकी साधुता होती है।

पृ. ४४६—अद्वैता = द्वैतभावरहिता। हरि और हरमें अभेदबुद्धि रहे यह तात्पर्य है। इस विषयमें किसीने कहा है—

'उभयोरेका प्रकृतिः, प्रत्ययभेदाच्च भिन्नवद्भाति।
कल्पयति कश्चिन्मूढो हरिहरभेदं विना शास्त्रम् ॥'

हरि और हर दोनों शब्दोंमें प्रकृति हृञ् धातु एक ही है, परन्तु हरिमें इ प्रत्यय और हरमें अच् प्रत्ययके भेदसे ये दो, भिन्नके समान प्रतीत होते हैं, वास्तवमें ये दोनों एक ही हैं। कोई मूढ ही शास्त्रविरुद्ध प्रकारसे इन दोनोंमें भेदकी कल्पना करता है। द्वयोर्भावो द्विता। द्विता एव द्वैतं, भेदभाव इत्यर्थः। अविद्यमानं द्वैतं यस्यां सा अद्वैता, इस प्रकारसे यह पद मतिका विशेषण हो जाता है।

अन्तमें 'आबालाद्' और 'जायन्ताम्' ये दोनों श्लोक मङ्गलके लिए 'प्रशस्ति' के रूपमें लिखे गये हैं।



# नाटकनायकादिलक्षणम्

तत्र नाटकलक्षणं यथा साहित्यदर्पणे—

नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।
विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः ॥
सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।
पञ्चादिका दशपरास्तत्राऽङ्काः परिकीर्त्तिताः ॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्यं निर्वहणेऽद्भुतम् ॥
चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः ।
गोपुच्छाऽग्रसमाऽग्रं तु बन्धनं तस्य कीर्तितम् ॥ इत्यादि ।

प्रसन्नराघवस्य नायकः श्रीरामचन्द्रो दिव्याऽदिव्यो ( दिव्योऽप्यात्मनि नराऽभिमानी ) धीरोदात्तस्तल्लक्षणं यथा—

'अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥' इति ।

नायिका—सीतादेवी स्वीया मुग्धा च । तल्लक्षणं यथा—
'विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।' इति ।
'प्रथमाऽवतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥' इति ।

एतौ चाऽऽलम्बनविभावौ—
'आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात् ।'

इति तल्लक्षणम् । पञ्चवटीचन्द्रवृक्षादिदर्शनादीन्युद्दीपनविभावाः—
'उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ।'

इति तल्लक्षणम् । विलापमोहादयोऽनुभावाः—
'उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।
लोके यः कार्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥'

इति तल्लक्षणम् । विषादादयो व्यभिचारिणः । रतिश्च स्थायी भावः । करुणविप्रलम्भाख्यः शृङ्गारोऽङ्गी । तल्लक्षणं यथा—
'यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।
विमनायते यदैकस्तदा भवेत्करुणविप्रलम्भाख्यः ॥' इति ।

वीराद्भुतरौद्रादयोऽङ्गरसाः। रीतिश्च प्रायेण पाञ्चालिकी। अन्तरान्तरा वैदर्भ्यादयोऽपि संलक्ष्यन्ते। रीतिलक्षणानि यथा चन्द्रालोके—

'आतुर्यमासहमं च यथेष्टैरष्टमादिभिः।
समासः स्यात्पदैर्न स्यात्समासः सर्वथाऽपि च॥
पाञ्चालिकी च लाटीया गौडीया च यथारसम्।
वदर्भी च यथासंख्यं चतस्रो रीतयः स्मृताः॥' इति।

गुणश्च प्रायेण प्रसादस्तल्लक्षणं यथा—
'यस्मादन्तःस्थितः सर्वः स्पष्टमर्थोऽवभासते।
सलिलस्येव सूक्तस्य स प्रसाद इति स्मृतः॥' इति।
प्रतिनायको रावणः, पीठमर्दः सुग्रीव इति।



## सुभाषित-पद्य-संग्रहः

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम्।
गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः॥ १–४॥
गुणग्रामाऽभिसंवादि नामाऽपि हि महात्मनाम्।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः॥ १–५॥
चन्द्रे च रामचन्द्रे च नारीणां च दृगञ्चले।
नीलोत्पलसुहृत्कान्तौ कस्य नाऽऽमोदते मनः॥ १–१०॥
सुललितवदनामुदारवृत्तां, कृतिमथवा युवतिं परस्य हृत्वा।
तदमपि परमर्णवस्य गत्वा, वद कतरः सुखभाजनं जनः स्यात्॥ १–१७॥
अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः।
निजघनमकरन्दस्यन्दपूर्णाऽऽलवालः
कलशसलिलसेकं नेहते किं रसालः॥ १–१९॥
निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः।
तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम्॥ १–२०॥

न ब्रह्मविद्या न च राजलक्ष्मीस्तथा यथेयं कविता कवीनाम् ।
लोकोत्तरे पुंसि निवेश्यमाना, पुत्रीव हर्षं हृदये करोति ॥ १-२३ ॥
वार्ता च कौतुकवती, विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ २-२ ॥
मुग्धस्य केलिविजितस्मरचापयष्टे-
रातन्वती रुचिमतीव सुधाकरस्य ।
रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः
सन्ध्याऽऽविरस्ति ननु काऽपि पतिंवरेव ॥ २-३१ ॥
कृत्वा प्रबुद्धकमलामखिलां त्रिलोकी-
मम्भोनिधेर्विशति गर्भमसाविदानीम् ।
अन्तःप्रसुप्तहरिनाभिसरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥ २-३२ ॥
यावत्क्षीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयी-
माणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति ।
तावत्कर्तुमिवाऽस्य मूल्यमुचितं पद्माकरेण स्वयं
लक्ष्मीर्लब्धविकासपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ ३-५ ॥
हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ ४-२३ ॥
न ज्ञातुं नाऽप्यनुज्ञातुं नेषितुं नाऽप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते ॥ ५-२ ॥
प्रोषितवति रजनिकरे, बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किन्तु सहसा, भुवनान्यपि तमसि मज्जन्ति ॥ ५-५ ॥
प्रायो दुरन्तपर्यन्ताः सम्पदोऽपि दुरात्मनाम् ।
भवन्ति हि सुखोदर्का विपदोऽपि महात्मनाम् ॥ ५-७९ ॥
उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ ७-१ ॥
आचान्तकान्तिरच्छिद्रैर्मयूखैरहिमत्विषः ।
धूसराऽपि कला चान्द्री किं न बध्नाति लोचनम् ॥ ७-९ ॥

# श्लोकानुक्रमणिका

